(तत्त्वसुबोधिनी)

॥ विरोधोऽसिद्धः इत्याशङ्क्य निषेधति ॥ **न च देशकालेति** ॥ **अन्यार्थत्वमप्रामाण्यं चेति** ॥ 'औदुम्बरीं स्पृष्ट्वा उद्गायेत्' इति श्रुतिविरोधेन औदुम्बरीं वा सर्वा वेष्टयितव्या' इति स्मृतेर्भाट्टैः स्मार्तत्वस्य प्राभाकरैरप्रामाण्यस्य चोक्तत्वात् इति भावः ॥ **विरोधे त्विति** ॥ श्रुतिस्मृत्योरविरोधे सति स्मृतिरनुमां, स्वमूलश्रुत्यनुमापिका स्यात् । तयोर्विरोधे तु अपौरुषेयतया मूलानपेक्षं श्रुतिवचनमेव मानमित्युदाहृतजैमिनिसूत्रार्थः । स्मृत्यपेक्षया श्रुतेरप्राबल्यमुपपादयति ॥ **स्मृतीनामिति** ॥ ननु रुद्रादीनां सर्वज्ञत्वात् तत्प्रणीतस्मृत्यादिकमप्रमाणमित्यत आह ॥ **रुद्रादीनामिति** ॥ ननु श्रुतिरप्यपौरुषेयत्वेन प्रबला इत्यतः आह ॥ **श्रुतेश्चेति** ॥

नन्वेवं स्मृतीनामेव प्राबल्ये कथं सर्ववेष्टनस्मृतेः श्रुतिविरोधेन स्पर्शनार्थं द्वित्राङ्गुलं हित्वा तदितरसर्ववेष्टनरूपार्थान्तरकल्पनमप्रामाण्यं वेत्यतः आह ॥ **कचिदिति** ॥ मूलत्वेऽपि स्मृति-विरोधेन श्रुतेरेवाप्रामाण्यमस्त्वित्यत आह ॥ **मूलेति** ॥ **अतदर्थत्वमिति** ॥ जगत्कारणत्व-रूपार्थाभाववत्वमित्यर्थः ॥ श्रुतेः आधिक्यमिति भाष्यं सोपस्करं व्याचष्टे ॥ **पञ्चरात्रादिति** ॥ **तदुक्तस्येति** ॥ विष्ण्वादिभिरुक्तस्येत्यर्थः । रुद्राद्युक्तस्यापि संवाददर्शनात्तेषामप्याप्तत्वमत आह ॥ **रुद्रादीति** ॥ सूत्राक्षराणि योजयन्नुपसंहरति ॥ **अत इति** ॥

## श्रीनिवासतीर्थविरचितं
## वाक्यार्थविवरणम्

**जगद्धितोपदेष्टृत्वस्येति** ॥ अनेनाविप्रलिप्सोपपादितेति ध्येयम् ॥ **भागान्तरवदिति** । तथा च सत्प्रतिपक्षतया न निर्णय इत्याशयः ।

## शर्करा श्रीनिवासाचार्यविरचिता
## वाक्यार्थमञ्जरी

यत्पादसेवया सन्तो जाता दुःखादिवर्जिताः ।
तं रामं सर्वदोषघ्नं प्रणमामि निरन्तरम् ॥

**पूर्वाध्यायेति** ॥ **अशेषशास्त्रप्रामाण्येनेति** ॥ स्वरवर्णपदवाक्यात्मकाशेषशास्त्रस्य जग-ज्जन्मादिकारणत्वादिना विष्णुप्रमापकत्वेनेत्यर्थः प्रतिपादितः ॥ **तस्य युक्त्यादिविरुद्धत्वे इति** ॥

(वाक्यार्थमञ्जरी)

तथा च विरोधे परिहृत एव समन्वयसिद्धिः । पूर्वाध्यायार्थसमन्वयस्य कार्यत्वमेतदध्यायार्थाविरोधस्य कारणत्वमिति पूर्वोत्तराध्याययोः कार्यकारणभावलक्षणा सङ्गतिरिति भावः ॥ **उपादित्सा** उपादातुमिच्छा । **समयः** सिद्धान्तः । ननु स्मृत्यविरोधप्रतिपादकत्वेऽस्य नैतत्पादान्तर्भावः । कथञ्चिदन्तर्भावेऽपि न प्राथम्ये बीजमित्याशङ्क्य निराकरोति ॥ **यद्यपीत्यादिना** ॥ **स्मृतीनामिति** ॥ पाशुपतादिस्मृतयो हि स्वयमात्माभिमतवाक्यतया समयरूपा अपि **स्वोक्तार्थे** युक्त्यादींश्च संवादयन्त्यो युक्त्यादिविरोधिचतुष्टयरूपा इत्यर्थः ॥ **प्राथम्योपपत्तेरिति** ॥ एकैकविरोधापेक्षया विरोधचतुष्टयात्मकस्मृतिविरोधस्य प्रबलतया प्रथमं निरसनीयत्वादिति भावः । दोषः सङ्गत्यभावरूपः ॥ **अनेनेति** ॥ विष्णोर्जगत्कारणत्वे युक्त्यादिरूपस्मृत्यविरोधं दर्शयतीत्यर्थकभाष्येणेत्यर्थः । **विगानं** विवादः ॥ ॐ **स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्** ॐ ॥ स्मृतीनां पाशुपतादीनां रुद्रादिसर्वज्ञप्रणीतत्वान्निरवकाशत्वेन एतद्विरोधे विष्णुजगत्कारणत्वप्रतिपादकश्रुतेरप्रामाण्याख्यदोषप्रसङ्ग इति चेन्न । अन्यासां पञ्चरात्रस्मृतीनामत्याप्तविष्ण्वादिप्रणीतत्वेन श्रुतिसंवादेन च नितरां निरवकाशेन तद्विरुद्धपाशुपतादिस्मृतिनामप्रामाण्याख्यदोषस्य प्रकर्षेण सङ्गात् सम्बन्धात् अत्यन्ताप्राम्माण्यादित्यर्थः । विरोधं व्यनक्ति ॥ **पाशुपतेति** ॥ **वस्तुनिर्विकल्पेति** ॥ उभयोरपि प्रामाण्ये तदुभयानुसारेण एकस्मिञ्जगति विष्णुमात्रजन्यत्वशिवमात्रजन्यत्वरूपविरुद्धधर्मवत्त्वप्रसङ्गादित्यर्थः ॥ **देशकालेति** ॥ श्रुतिर्यद्देशकालीनं विष्णोर्जगत्कारणत्वं प्रतिपादयति तद्भिन्नदेशकालीनं रुद्रस्य जगत्कारणत्वं स्मृतिः प्रतिपादयतीत्यविरोध इत्यर्थः ॥ **सकलेति** ॥ सकलदेशकालीनेत्यर्थः ॥ **विरोधे त्विति** ॥ प्रथमे प्रथमाध्याये स्मृतिपादे चिन्तितम् । ज्योतिष्टोमे 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति श्रुत्या औदुम्बरीं यज्ञसदस्थूणां स्पृष्ट्वा उद्गात्रा गानं कर्तव्यमिति विहितं स्मृतिकारास्तु तत्स्पर्शविरुद्धं तस्याः कात्स्न्र्येन वाससा वेष्टनं स्मरन्ति । औदुम्बरी सर्वा वेष्टयितव्येति तत्स्मरणं प्रमाणमप्रमाणं वेति संशये स्मृत्यधिकरणे स्मृतीनां मूलश्रुत्यनुमापकतया श्रुतिमूलत्वेन प्रामाण्यसमर्थनादियमपि स्मृतिः मूलश्रुतिमनुमापयन्ती प्रमाणमिति पूर्वपक्षः । सर्वथाऽप्रामाण्यस्यान्याय्यत्वात्स्पर्शार्थं द्वित्राङ्गुलं हित्वा तदितरसर्ववेष्टनरूपार्थान्तरपरत्वं स्मृतेरिति भाट्टरीत्या सिद्धान्तः । प्रभाकररीत्या तु स्पर्शनसर्ववेष्टनयोर्विरुद्धतया तत्कर्तव्यताबोधकयोरपि विरुद्धत्वादग्रावौष्ण्यग्राहिप्रत्यक्षेण तच्छैत्यानुमानस्येव स्पर्शनश्रुतिप्रत्यक्षेण सर्ववेष्टनस्मृत्यनुमानस्य बाधान्मूलश्रुत्यभावेनाप्रामाण्यमिति सिद्धान्तः । सूत्रार्थश्च श्रुतिस्मृतिविरोधेऽसति स्मृतिः

(वाक्यार्थमञ्जरी)
अनुमानं स्वमूलभूतश्रुत्यनुमापिका । तयोर्विरोधे तु अपौरुषेयतया मूलानपेक्षं श्रुतिवचनमेव मानं स्यादिति तथा च तद्वदेव प्रकृतेऽन्यार्थत्वमप्रामाण्यं वा स्यादित्यर्थः ॥ **सार्वज्ञ्यस्येति** ॥ तथा च विवक्षितार्थतत्त्वज्ञानकरणपाटवयोर्हितोपदेष्टृत्वेनाविप्रलम्भकत्वविवक्षयोर्लाभ इति भावः ॥ **श्रुतेश्चेति** ॥ यदबुद्धिपूर्वकं तदप्रमाणं यथा पिपीलिकालिपिः अबुद्धिपूर्वकश्च वेदोऽपौरुषेयत्वाङ्गीकारादतो अप्रमाणमेवेति भावः । तदुदाहृतजैमिनिसूत्रविरोध इत्यत आह ॥ **क्वचिदिति** ॥ सर्ववेष्टनविषय इत्यर्थः । तदपि कुत इत्यत आह ॥ **मूलमूलिनोरिति** ॥ उपजीव्योपजीवकयोरित्यर्थः । अतदर्थत्वं विष्णुजगत्कारणार्थत्वाभावः । **नितरां** निरतिशयम् ।

## सूत्रभाष्यम्

**॥ ॐ इतरेषां चानुपलब्धेः ॐ ॥ २ ॥**

इतरेषां तासु स्मृतिषूक्तानां फलादीनां प्रत्यक्षतोऽनुपलब्धेरप्रामाण्यं तासां युक्तम् । च शब्देन भागोपलब्धिरङ्गीकृता ।

## सत्तर्कदीपावली

क्वचिदर्थे प्रत्यक्षसंवादिपशुपतिवाक्यदृष्टान्तेन पशुपतिर्जगत्कारणमित्यागमोऽपि प्रमाणम् । पशुपतिवाक्यत्वादित्येतदनुमानानुकूलत्वेन तदागमस्यापि प्रामाण्यं किं न स्यादिति न वाच्यम् । प्रत्यक्षविसंवादिपशुपतिवाक्यदृष्टान्तेन पाशुपतागमाप्रामाण्यस्यापि अनुमातुं शक्यत्वात्तदाह– **इतरेषामित्यादिना ॥**

## तत्त्वप्रदीपिका

इतरेषां दृष्टोक्तानां फलानां प्रत्यक्षतोऽनुपलब्धेरदृष्टोक्तानां चानुदयनिर्णयः स्यात् । यद्यपि यत्र क्वापि यथोदितं तदुपलभ्यते । तथापि नादृष्टार्थप्रवृत्तिः स्यात् । व्यभिचारदर्शनात् ।

## तत्त्वप्रकाशिका

यदुदितं वैष्णवस्मृतीनां परमाप्तप्रणीतत्वेन तत्साहाय्ययुक्तश्रुत्या विष्णोर्जगत्कारणत्वसिद्धिरिति न तद्युक्तम् । तथा सति पाशुपतादिस्मृतीनामप्रामाण्यप्रसङ्गात् न चाप्तोक्तानां तासामप्रामाण्यं युज्यत

(तत्त्वप्रकाशिका)

**इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ इतरेषां चेति ॥** यदुक्तं श्रुत्या विष्णोर्जगत्कारण-त्वाभ्युपगमेऽन्यस्मृतीनामप्रामाण्यं प्रसज्जत इति तत्र युक्तमेव तासामप्रामाण्यमिति वक्तव्यम् । आप्तप्रणीतानां कथं तदिति चेन्मैवम् । तासु स्मृतिपूक्तानामदृष्टादितरेषां फलानर्थानामुक्तानुष्ठान-परित्यागयोः कृतयोरपि प्रत्यक्षतोऽनुपलब्धेराप्तोक्तत्वानिश्चयादिति भावः । प्रत्यक्षयोग्यत्वमितरेषा-मित्यनेनोच्यते । ननु पाशुपतादिस्मृतिविहितनिषिद्धाचरणे फलानर्थयोरुपलम्भात्कथं तदनुपलब्धिमसूत्रयदित्यत आह ॥ **च शब्देनेति** ॥ न सूत्रकृता सर्वात्मनाऽनुपलब्धिरभ्युपगता यथा प्रत्यक्षविरोधः किन्तु भागेनोपलब्धिरप्यङ्गीकृता । चशब्देन तस्याः सूचनात् । न च तथा सत्युप-लब्धार्थभागवत्सर्वस्याप्तोक्तत्वम् । भागान्तरवदनाप्तोक्तत्वसम्भवादिति भावः ।

## गुर्वर्थदीपिका

प्रत्यक्षयोग्यत्वमितरेषामित्यनेनोच्यत इति वदता इतरेषां वैष्णवस्मृत्युक्तफलादितरेषां पाशुपतादिस्मृत्युक्तफलानामितरेषां तत्रैवोक्तादृष्टफलादितरेषामित्यावृत्त्या योजना सूचिता । भागान्तरवदनाप्तोक्तत्वसम्भवादित्यत्र फलोपलब्धिस्तु यादृच्छिकीत्युपस्कर्तव्यम् ।

## भावबोधः

नन्वयोग्यानां प्रत्यक्षानुपलब्धेरभावनिश्चयायोगाद्भाष्ये कथं फलादीनां प्रत्यक्षतोऽनुपलब्धे-रित्युक्तमित्यत आह– **प्रत्यक्षयोग्यत्वमिति** ॥ पूर्वसूत्रसन्निधापितरुद्रादिजगत्कारणत्वाद्यतीन्द्रिय-स्येतरत्वप्रतियोगित्वेन विवक्षितत्वादिति भावः । अत एव प्रागदृष्टादितरेषामित्युक्तम् ॥ **चशब्देन तस्या इति** ॥ अनेनानुपलब्धेश्चेति सौत्रचशब्दसम्बन्ध उक्तो भवति ।

## भावदीपः

भाष्ये प्रतिज्ञांशं तावद्व्याचष्टे ॥ **यदुदितमित्यादिना** ॥ हेत्वंशं व्यनक्ति ॥ **तास्विति** ॥ अयोग्यानामनुपलब्धिरदोषायेत्यतोऽदृष्टादितरेषामिति फलादीनामित्यस्यार्थः **फलानर्थानामिति** ॥ पुमर्थापुमर्थानामित्यर्थः । ततश्च किमित्यतो भावमाह ॥ **आप्तेति** ॥ अनुपलब्धिमात्रेण कथम-सत्त्वनिर्णय इत्यत आह ॥ **प्रत्यक्षेति** ॥ एतेन सूत्रे न विद्यते उपलब्धिर्यस्य तदनुपलब्धि उपलब्ध्ययोग्यं तस्माददृष्टादितरेषां प्रत्यक्षयोग्यानां फलानामनुपलब्धेरनुपलम्भादित्येवमनुपलब्धि-शब्दः काकाक्षिवदुभयत्रान्वेतीत्युक्तं भवति ।

## अभिनवचन्द्रिका

ननु श्रुतेः प्राबल्यसिद्धौ पाशुपतादिस्मृतिबाधाभावेन जगत्कारणत्वादौ प्रामाण्यं, तस्मिंश्च सिद्धे प्रमाणसंवादिस्मृतिकर्तृत्वेन विष्ण्वादीनां नितरां सार्वज्ञ्यं, तत्सिद्धौ च अतिसर्वज्ञप्रणीत-स्मृतिसाहित्येन श्रुतेः प्राबल्यसिद्धिरित्यन्योन्याश्रय इति चेत्, न ब्रूमो वयं विष्ण्वाद्युक्तेर्विष्णो-र्जगत्कारणत्वांशे श्रुतिसंवादेन तेषामाप्ततमत्वं सिध्यतीति, किं नाम निर्णेतव्यप्रमेयातिरिक्त-प्रमेयमात्रे श्रुतिसंवादेन विष्ण्वादीनामाप्ततमत्वेन सिद्धिरिति । न चैवं सत्यन्योन्याश्रयो भवति ॥ **न सूत्रकृतेति** ॥ यया स्वीकृतया सर्वात्मनाऽनुपलब्ध्या प्रत्यक्षविरोधो भवति, यत्स्वीकारे प्रत्यक्षविरोधो भवतीति यावत्, सा सर्वात्मनाऽनुपलब्धिः, सूत्रकृता नाभ्युपगतेत्यर्थः ।

## वाक्यार्थमुक्तावली

**तथा सतीति** ॥ ननु पूर्वसूत्रे पाशुपतादेरप्रामाण्यस्य स्पष्टमुक्तत्वादिह पूर्वपक्षिणा तदापादनमयुक्तम् । इदं तु वैय्यर्थम् । यदुक्तं पाशुपतादेरप्रामाण्यं तदयुक्तमाप्तोक्तत्वादिति चेन्न । सिद्धान्त्युक्तं पाशुपतादेरप्रामाण्यं स्वस्यैवानिष्टमाप्तोक्तत्वात् । आप्तोक्तस्याप्यप्रामाण्ये पञ्चरात्रा-देरपि तत्प्रसङ्गादिति तदेवानिष्टप्रसञ्जनमुखेनाक्षिप्यत इत्यदोषः । सूत्रे पूर्वसूत्रात् पाशुपतादी-नामप्रामाण्याख्यदोषः प्रसज्यत एवेत्यनुवर्तनीयमिति भावेनाप्रामाण्यं तासां युक्तमिति भाष्ये प्रयुक्तमिति भावेन सूत्रार्थमाह ॥ **युक्तमेवेत्यादिना** ॥ नन्वितरेषामित्यस्य पूर्वसूत्रसन्निधापित-रुद्रादिजगत्कारणत्वाद्यतीन्द्रियस्येतरत्वं प्रति योग्येन विवक्षित्वा अदृष्टादितरेषामित्यर्थोक्त्या अदृष्टादितरत्वं दृष्टमेवेत्यनुपलब्धेरित्ययुक्तमित्यत आह ॥ **प्रत्यक्षेति** ॥ तथा च योग्यानुपलब्धेर-भावनिश्चायकत्वमिति भावः ॥ **सूचनादिति** ॥ 'समुच्चये तथाधिक्ये न्यूनत्वे च प्रयुज्यते' इति वचनान्न्यूनत्वार्थकचशब्दस्य यथा श्रुतान्वयेनैव प्रत्यक्षयोग्यानां केषाञ्चिदित्यर्थलाभेन भागोप-लब्धेः सूचनादित्यर्थः ॥ **भागान्तरवदिति** ॥ क्वचित्संवादस्तु काकतालीयो लोकव्यामोहना गुडजिह्विका वा श्रुतेस्तदनुसारिस्मृतेश्चापौरुषेयत्वादिना प्रामाण्ये सिद्धे विसंवादो वैगुण्यादि-नेत्युत्तराधिकरणे वक्ष्यत इति भावः ।

## तत्त्वसुबोधिनी

अस्त्वप्रामाण्यमित्यत आह ॥ **न चेति** ॥ न च योग्यानां प्रत्यक्षानुपलब्धेनाभावनिश्चय-

(तत्त्वप्रबोधिनी)
योगात्तद्भाष्ये कथं फलादीनां प्रत्यक्षतोऽनुपलब्धेरित्युक्तमित्यत आह ॥ **प्रत्यक्षयोग्यत्वमितरेषामित्यनेनोच्यत इति** ॥ न विद्यते उपलब्धिर्यस्यासावनुपलब्धिः उपलब्ध्ययोग्यः तस्मादितरेषां उपलब्धियोग्यानां फलानामनुपलब्धेरनुपलम्भादित्येवं सौत्रानुपलब्धिशब्दः, काकाक्षिवदुभयत्रान्वेतीति भावः । अथवा पूर्वसूत्रे यस्मिन् प्रत्यक्षायोग्ये जगत्कारणत्वादौ स्मृतिविरोधः शङ्कितः तदितरेषां प्रत्यक्षयोग्यानामनुपलब्धेरिति सूत्रार्थ इति भावः । कथमन्यथानुलब्धिमात्रेणासत्वसिद्धिः इति भावः । चशब्देन तस्मादिति अनेन अनुपलब्धेश्चेति सौत्रचशब्दसम्बन्धः उक्तो भवति ।

## वाक्यार्थमञ्जरी

अयोग्यजगत्कर्तृत्वाद्यपेक्षया इतरेषां प्रत्यक्षयोग्यानां फलानां तदुक्तानुष्ठानेऽपि प्रत्यक्षतोऽनुपलब्धेश्च तद्विसंवादेन नाप्तोक्तत्वमितरस्मृतीनामित्यर्थः । ननु योग्यानुपलब्धेरेवाभावग्राहकत्वेनायोग्यानां प्रत्यक्षानुपलब्ध्याभावनिश्चयायोगात्कथं फलादीनामिति भाष्यमित्यत आह ॥ **प्रत्यक्षयोग्यत्वमिति** ॥ पूर्वसूत्रसन्निधापितरुद्रादिजगत्कारणत्वाद्यतीन्द्रियस्येतरेत्यत्र प्रतियोगित्वेन विवक्षितत्वादिति भावः । अत एव प्रागदृष्टादितरेषामित्युक्तम् । यया स्वीकृतया सर्वात्मनाऽनुपलब्ध्या ॥ **सूचनादिति** ॥ तस्यानुक्तोपलब्धिसमुच्चायकत्वादिति भावः ॥ **उपलब्धार्थेति** ॥ उपलब्धः फलानर्थरूपोऽर्थो यस्य स तथा । **सर्वस्य** रुद्रकारणत्वप्रतिपादकभागस्य ।

## सूत्रभाष्यम्

**॥ ॐ एतेन योगः प्रत्युक्तः ॐ ॥ ३ ॥**

**योगफलं प्रत्यक्षत उपलभ्यत इति न मन्तव्यम् । उक्ताभ्यासे तत्काल एव फलादृष्टेः ॥**

## सत्तर्कदीपावली

**श्रुतिस्मृतिविहितैहिककर्मणोऽनुष्ठानेऽपि कचित्फलाभावदर्शनादन्यागमवत् श्रुत्यादेरप्रामाण्यं किं न स्यादिति न वाच्यम् । 'वाचा विरूप नित्यया' इत्यादिप्रमाणसिद्धत्वेन वेदानां नित्यत्वान्निर्दोषत्वेन तत्प्रामाण्यस्यापरिहार्यत्वाद्वेदमूलत्वेन पञ्चरात्रादेरपि प्रामाण्यसिद्धेः । यद्वेदाद्युक्तस्यैहिक काम्यकर्मणोऽनुष्ठानेऽपि फलादर्शनं तत्कर्तृवैगुण्यात् प्रतिबन्धककर्मवशाद्वेति मन्तव्यम् ॥**

## तत्त्वप्रदीपिका

एवमपि योगशास्त्रोदितानां प्रस्वेदकम्पादिदृष्टफलानामुपलभ्यत्वात्तत्प्रमाणमित्यत आह– **ॐ एतेन योगः प्रत्युक्तः ॐ** ॥ योगशास्त्रोदितयोगाभ्यासफलं प्रत्यक्षोपलभ्यमिति न मन्तव्यम् । यथोक्ताभ्यासे कृते यथोक्तकाल एव तत्तत्फलादृष्टेः ।

## तत्त्वप्रकाशिका

न तथापि सर्वासामवैष्णवस्मृतीनामप्रामाण्यं योगस्मृत्युक्तफलादीनामव्यभिचारेणोपलम्भादाप्त-प्रणीतत्वनिश्चयोपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **एतेनेति** ॥ योगस्मृत्युक्तफलादीना-मव्यभिचारेणोपलम्भादाप्तोक्तत्वनिश्चयोपपत्तेरप्रामाण्यायोग इति न मन्तव्यम् । तदुक्तफलानां स्वेदनगात्रभञ्जनादीनां प्रत्यक्षोपलब्धावपि प्रथमं स्वेदनं द्वितीयं गात्रभञ्जनमित्याद्युक्ताभ्यासाव-स्थोत्कर्षसम्पत्तिकाल एव स्वेदनादीनामदृष्टेराप्तोक्तत्वानिश्चयादिति भावः । अतोऽवैदिकस्मृतीना-मप्रमाणत्वान्न श्रुत्युक्तस्य विष्णोर्जगत्कारणत्वस्य तद्विरोध इति सिद्धम् ।

## गुर्वर्थदीपिका

कामदहनाद्यासनेषु पादोर्ध्वभागादेरधोभागादौ प्रापणं गात्रभञ्जनमित्युच्यते ।

## भावबोधः

सौत्रातिदेशोपयुक्तामप्यधिकाशङ्कामाह– **न तथापीति** ॥ अत्राद्ये विष्णोर्जगत्कारणत्वादौ स्मृतिविरोधमाशङ्क्य तत्परिहारोक्तिः । द्वितीये आप्तोक्तानां पाशुपतादिस्मृतीनां कथमप्रामाण्य-मित्याशङ्कापरिहारायाप्तोक्तत्वाभावसिद्ध्यर्थं तदुक्तार्थे संवादाभावोक्तिः । तृतीये योगादि-स्मृत्युक्तार्थे द्वितीयसूत्रोक्तसंवादाभावातिदेशेनाप्तोक्तत्वनिरास इति सूत्रक्रमः ।

## भावदीपः

पररीत्याधिकरणान्तरत्वशङ्काव्युदासाय पूर्वसूत्रोक्तस्योपर्यभ्यधिकाशङ्कामेतेनेत्यतिदेशोपयुक्ता-माह ॥ **न तथापीति** ॥ **अत इति** ॥ प्रबलश्रुतिविरोधात् फलादृष्ट्या आप्तोक्तत्वानिश्चया-च्चेत्यर्थः । फलं त्वाद्यसूत्रार्थोपसंहार एवोक्तमिति भावः ।

## अभिनवचन्द्रिका

अत्र गुणसूत्रम् – **'ॐ एतेन योगः प्रत्युक्त ॐ:'** इति । नन्विदं सूत्रमधिकरणान्तरं न पूर्वशेषः । योगशास्त्रोपलब्धानां स्वेदगात्रभञ्जनादीनां नियमेनोपलम्भरूपाभ्यधिकाशङ्कासद्भावात्, 'एतेन' इत्यतिदेशाच्चेति चेत्, मैवम् । भवेदिदमधिकरणान्तरं यदि 'अन्यस्मृत्यनकाशदोषप्रसङ्गात्' इति उक्ताप्रामण्यप्रसङ्गसाम्यस्य परिहारोऽभ्यधिकाशङ्काया भवेत् । न चासौ भवति तस्मान्नेद-मधिकरणान्तरम् । नापि 'इतरेषां चानुपलब्धेः' इति वत् पूर्वाधिकरणशेषः । अभ्यधिका-शङ्कासद्भावात् । तस्मादिदमन्तर्भेदाधिकरणमभ्युपेयमिति ।

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कारणत्वं युक्तं, प्रमाणाभावात् । न च 'यतो वा' इत्यादिश्रुतिः प्रमाणमिति वाच्यम् । अस्याः श्रुतेः यदि विष्णुकारणत्वे तात्पर्यं स्यात् । तर्हि सर्वज्ञप्रणीत-शैवाद्यागमविरोधेनाऽप्रामाण्यं स्यादिति तर्कविरोधेन विष्णुकारणत्वे तात्पर्याऽयोगात् । तथा च न विष्णोर्जगत्कारणत्वमिति ।

**सिद्धान्तस्तु** – युक्तं विष्णोर्जगत्कारणत्वं 'यतो वा' इत्यादिश्रुतेः । न चाऽप्रामाण्यप्रसङ्गेन न श्रुतेस्तत्र तात्पर्यमिति वाच्यम् । विष्णौ तात्पर्यमपहाय, शिवे तात्पर्याङ्गीकारेऽपि नितरामाप्तैः विष्ण्वादिभिः प्रणीतस्मृतिविरोधेन श्रुत्यप्रामाण्यापत्तिसम्भवात् । नन्वेवं स्मृतिद्वयप्रामाण्येनाऽनिर्णय एवेति चेत्, न श्रुतिविरुद्धायाः पाशुपतादिस्मृतेरप्रमाणत्वात् । न चाविस्पष्टवादित्वेन श्रुतेर्दौर्बल्य-मिति वाच्यम् । वैष्णवस्मृतियुक्तत्वेन प्राबल्योपपत्तेः । कुतो विष्ण्वादीनां रुद्रादिभ्योऽप्याप्तत्वमिति चेत्, तदुक्तस्य संवाददर्शनात् । नन्वाप्तप्रणीतत्वेन पाशुपतादिस्मृतीनामप्रामाण्यमयुक्तमिति चेत्, न । शैवागमोक्तस्योपलब्धियोग्यस्य फलस्य तदुक्तानुष्ठाने कदाचिदुपलम्भेऽपि नियमेनाऽनुप-लम्भेनाप्तत्वाऽनिश्चयात् । ननु अथापि न सर्वस्मृतीनामप्रामाण्यं युक्तम् । योगस्मृत्युक्तस्वेदगात्र-भञ्जनादीनां नियमेनोपलम्भादिति चेत् न प्रथमं, स्वेदनं द्वितीयं गात्रभञ्जनमित्याद्युक्ताभ्यासा-वस्थोत्कर्षसंपत्तिकाल एव स्वेदादीनामदृष्टेः आप्तोक्तत्वानिश्चयात् । अतोऽवैदिकस्मृतीना-मप्रमाणत्वात् न विष्णोः श्रुत्युक्तजगत्कारणत्वस्य तद्विरोध इति सिद्धम् ।

## वाक्यार्थमुक्तावली

योगस्मृत्युक्तफलानां कालविलम्बेनापि सद्भावादधिकत्वमित्याशयेन शङ्कते ॥ **न तथापीति** ॥

(वाक्यार्थमुक्तावली)

अत्र आद्ये विष्णोर्जगत्कारणत्वे स्मृतिविरोधमाशङ्क्य तदप्रामाण्योक्तिः । द्वितीये तु आप्तोक्तत्वेन तदनुपपत्तिमाशङ्क्य हेतोरसिद्ध्युक्तिः । तृतीये स्मृत्येकदेशे अभ्यधिकाशङ्कायामतिदेशोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

सौत्रातिदेशोपयुक्तामभ्यधिकाशङ्कामाह ॥ **न तथापि इति** ॥ अत्राद्ये सूत्रे विष्णोर्जगत्कारणत्वादौ स्मृतिविरोधमाशङ्क्य तत्परिहारोक्तिः । अस्य च सूत्रस्य विष्णोर्जगज्जन्मादिकारणत्वप्रतिपादकत्वे साङ्ख्यादिस्मृतेरनवकाशत्वेन तद्विरोधेऽप्रामाण्याख्यदोषप्रसङ्गादिति परिहारांशार्थः । अथवा शिवादीनां जगत्कारणत्वादिभावे पाशुपतादिस्मृतीनामवकाशाभावेनाप्रामाण्याख्यदोषप्रसङ्गादित्याक्षेपांशस्य विष्णोर्जगत्कारणत्वादिभावे पाशुपतादिभ्योऽन्यासां पञ्चरात्रादिस्मृतीनामवकाशान्तराभावेनाप्रामाण्याख्यदोषप्रसङ्गादिति परिहारांशार्थः । द्वितीये शिवादीनामाप्तोक्तत्वाभावसिद्ध्यर्थं तदुक्तार्थे संवादाभावोक्तिः । तृतीये योगादिस्मृत्युक्तार्थसंवादाभावोऽतिदेशेनाप्तोक्तत्वनिरास इति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

एतेन प्रागुक्तफलानुपलम्भेन योगशास्त्रमपि निरस्तमित्यर्थः ॥ **अभ्यासावस्थेति** ॥ अभ्यासावस्थाया उत्कर्षः सम्पत्तिर्यस्मिन्काले तस्मिन्नेवेत्यर्थः । तथा च कालान्तरे फलदर्शनेऽपि तदुक्तकाले अदर्शनादप्रामाण्यमिति भावः ।

॥ इति स्मृत्यधिकरणम् ॥ १ ॥

## २. अथ न विलक्षणत्वाधिकरणम्

**॥ ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ ॥ ४ ॥**

नैवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यम् । विलक्षणत्वात् । नित्यत्वात्तदनुसारित्वाच्च । न हि नित्ये दोषाः कल्प्याः । स्वतश्च प्रामाण्यम् । अन्यथाऽनवस्थितेः । 'न चक्षुर्न श्रोत्रं न तर्को न स्मृतिर्वेदा ह्येवैनं वेदयन्ति' इति भाल्लवेयश्रुतेश्च । नित्यत्वं च शब्दादेव प्रतीयते 'वाचा विरूप नित्यया' (ऋ.मं.८-६४-६) इत्यादेः । 'अनादिनिधना नित्या' इति च स्मृतिः ।

## सत्तर्कदीपावली

पशुपत्यादिकृतागमस्य तु विप्रलम्भादिकर्तृदोषसम्भवेनापि यथोक्तफलादर्शनोपपत्तेः । स प्रतिबन्धककर्मादिनेवेति निश्चेतुं शक्यत्वात् । तदाह न विलक्षणत्वादित्यादिना । ननु जगज्जन्मादिकारणे नारायणे नित्यस्यापि निखिलवेदस्य प्रामाण्यं न युज्यते । प्रमाणान्तरसंवादाभावादित्यत आह **स्वतश्चेत्यादिना ॥** प्रमाणस्य प्रमाणान्तरसंवादेनैव प्रामाण्ये संवादकप्रामाण्यस्यापि प्रमाणान्तरसंवादेनैव प्रामाण्यम् । तस्यापि प्रमाणान्तरसंवादेनैव प्रामाण्यमित्यनवस्था स्यात् । अतः प्रामाण्यं स्वत एवेत्यङ्गीकर्तव्यमित्यर्थः । संवादनिरपेक्षाणामेव वेदानां विष्णुबोधकत्वं श्रुत्या साधयति **॥ न चक्षुरिति ॥**

## तत्त्वप्रदीपिका

परसमयसाधारणसमीरितमेतमेव दोषं स्वसमयेऽपि समानं समाशङ्क्यमानमपनोनुद्यते । ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ । न चेतरस्मृतिवद्वेदस्योक्तफलोपलम्भ एव प्रामाण्यम् । नित्यत्वात् । पुंवाक्ये विप्रलम्भादिदोषाः सम्भवन्ति । न नित्यवाक्ये ते कल्प्याः । प्राप्त्यभावात् । नित्यवाक्यप्रामाण्यानङ्गीकारे धर्माधर्माद्यसिद्धिरिति चावादिष्म । **स्वतश्च प्रामाण्यमङ्गीकर्तव्यम्** । परतश्चेत्तस्यापि परत इत्यनवस्था । न च नित्यप्रमाणस्य प्रामाण्यं परतो भवितुमर्हति । कदाचिदप्रामाण्ये सदा तथात्वप्रसङ्गात् । ननु स्वतः प्रामाण्यवादिनामपि वेदे दोषाभावः प्रमाणान्तराज्ज्ञायते । तदप्यदोषमेव दोषाभावे प्रमाणम् । तददोषत्वमन्यसाध्यमित्यनवस्था तत्रापि तुल्येति । नायं दोषः । साक्ष्यवधित्वाद्दोषशङ्कायाः । यत्र हि साक्षी निर्दोषत्वं निश्चिनोति, न तत्र दोषशङ्का स्यात् । न च

(तत्त्वप्रदीपिका)
साक्षिणो दोषः कल्प्यः । तदनुभूतस्यानन्यथात्वनियमा । **अन्यथा** प्रमाणाप्रमाणविवेकाभावप्रसङ्गात् । न च साक्षिनिर्दोषत्वज्ञानं मानान्तरापेक्षम् । स्वसंवेद्यत्वात्तस्य । तस्मान्नास्मत्पक्षेऽनवस्था ।

नन्वस्मत्पक्षेऽपि प्रामाण्यशङ्कानुत्पत्तौ न मानान्तरापेक्षेति नानवस्थेति चेत्किमाशङ्कानिवारकम् ? यथा शङ्क्या व्याहतिः स्यात्सा नैवोत्पद्यते, तस्माद्व्याघातो निवारकः, तदवधिरेवाऽशङ्का स्यात्, अतः परतः प्रामाण्येऽपि नानवस्थेति चेदेवं तर्हि व्याघातानुभवस्य स्वतः प्रामाण्यमिष्टम् । अतस्तस्य साक्षिणः स्वप्रामाण्य एव सर्वव्यवहारावस्थितिः तद्वद्वेदस्यापि स्वप्रामाण्यं स्थितम् । स्वतःप्रामाण्यं च शब्दात्प्रतीयते न चक्षुरित्यादेः । नित्यत्वं च 'तस्मै नूनम्' इत्यादेः । हे विरूप तस्मा अभिद्यवे सुष्टुतिं चोदस्व । अभितो द्योतत इत्यभिधुः । वृपा श्रेष्ठः । सुष्ठु स्तुतिं प्रति प्रेरयेति प्रार्थनं विरूपस्य ऋषेरन्तर्यामिविषयं भवति । 'ऋचः सामानि जज्ञिर' इत्यादिशब्दादुत्पत्तिमत्त्वमाशङ्क्याह ।। **अनादिनिधनेत्यादि** ।। अनादिनिधनत्वेन नित्या, नत्वनिधनत्वमात्रेण ।

## तत्त्वप्रकाशिका

अत्र विष्णोर्जगत्कारणत्वे प्रमाणत्वेनोक्तवेदादिप्रामाण्यस्य युक्तिविरोधपरिहारादस्ति शास्त्रादि सङ्गतिः । श्रुत्यादिप्रामाण्याद्विष्णोर्जगत्कारणत्वं सिध्यतीत्युक्तम् । श्रुत्यादिप्रामाण्यस्य च युक्तिविरोधे न ब्रह्मणो जगत्कारणत्वसिद्धिः । अतोऽसौ परिहर्तव्य एव । श्रुत्याद्येव विषयः । प्रमाणं न वेति सन्देहः । उभयविधवाक्योपलब्धिः सन्देहबीजम् । श्रुत्यादिकं न प्रमाणमिति पूर्वः पक्षः । 'कारीर्या यजेत वृष्टिकामः' इत्यादिश्रुतेः कारीर्याद्यनुष्ठानेऽपि वृष्ट्याद्यदृष्ट्याऽविद्यमानार्थाभिधायकत्वात् । तथा स्मृतीनामप्यनुपलभ्यमानफलाभिधायकत्वेनाविद्यमानार्थत्वात् । अविद्यमानाभिधायकानां च पाशुपतादिस्मृतिवदप्रामाण्यनियमात् । अविद्यमानाभिधात्रीणामपि श्रुतिस्मृतीनां प्रामाण्ये अन्य-स्मृतीनामपि तत्प्रसङ्गात् । न ह्यविद्यमानाभिधायकत्वसाम्येऽपि श्रुत्यादेरेव प्रामाण्यं नान्यस्येति विभागे हेतुरस्ति । एवं च वेदाद्येकदेशस्याप्रामाण्येऽन्यदेशप्रमाणतायामनाश्वासान्न विष्णो-र्जगत्कारणत्वसिद्धिरिति । सिद्धान्तयत्सूत्रमुपन्यस्य प्रतिज्ञांशं तावद्व्याचष्टे ।। **नेति** ।। अस्य श्रुत्यादेस्तथात्वं पाशुपतादिस्मृतिवदुक्तानुपलब्धिहेतुना नाप्रामाण्यं कल्प्यमिति भावः । तत्र हेत्वा-काङ्क्षायां सौत्रं हेतुमुपन्यस्य व्याचष्टे ।। **विलक्षणत्वादिति** ।। श्रुतेः पाशुपतादिस्मृतितो नित्यत्वाख्यवैलक्षण्यात्स्मृतेस्तदनुसारित्वाख्यवैलक्षण्यान्न पाशुपतादिस्मृतिवत् श्रुत्यादेरप्रामाण्य-मित्यर्थः ।

(तत्त्वप्रकाशिका)

ननु नित्यत्वादिसद्भावेऽपि कुतोऽप्रामाण्याभाव इत्यत आह ॥ **न हीति** ॥ वाक्याप्रामाण्यं तावद्वक्तृदोषनिबन्धनम् । न हि नित्ये वेदे ते दोषाः कल्पयितुं शक्यन्ते । यतो नित्यत्वाददोषत्वं ततोऽप्रामाण्याभावः श्रुतेः सिध्यति । प्रमाणानुकूलत्वात्स्मृतेरपि तत्सिद्धिरिति भावः । फलव्यभिचारेऽपि न पाशुपतादिस्मृतिवद्वेदादेरप्रामाण्यमित्यत्रोक्तवैलक्षण्याख्यं हेतुं प्रकारान्तरेण व्याचष्टे ॥ **स्वतश्चेति** ॥ भवेदुक्तानुपलब्ध्या वेदाद्यप्रामाण्यकल्पनं यदि पाशुपतादिस्मृतिवत्फलोपलब्ध्यादि संवादाधीनज्ञानं तत्प्रामाण्यं स्यात् । नैतदस्ति । वेदादिप्रामाण्यस्य संवादनिरपेक्षतज्ज्ञानादेव सिध्यङ्गीकारात् । न हि निर्दोषतदनुसारितत्स्वरूपग्रहे पुनः प्रामाण्योपलब्ध्यै संवादसापेक्षताऽनुभूयते । न च पाशुपतादिस्मृतीनामपि तथात्वं वाच्यम् । निर्दोषत्वाद्यनिश्चयादिति भावः । प्रामाण्यं संवादाधीनज्ञानमेव किं न स्यादित्यत आह ॥ **अन्यथेति** ॥ यदि प्रामाण्यं संवादादेव ज्ञायते तर्हि संवादकप्रामाण्यमपि संवादान्तरेण ज्ञायते स्वत एव वा । आद्ये तदप्येवमित्यनवस्था स्यात् । द्वितीये परम्पराकल्पनं व्यर्थं स्यात् । आद्यप्रामाण्यस्यैव स्वतस्त्वाभ्युपगमोपपत्तेरिति भावः । कदाचित्प्रामाण्य-जिज्ञासायामेव संवादापेक्षणान्नानवस्थेति चेन्मैवम् । प्रामाण्याध्यवसायं विना प्रवृत्त्यनुपपत्त्या तज्जिज्ञासाध्रौव्यात् । फलसन्देहेऽपि कृष्यादौ प्रवृत्तिर्दृश्यत इति चेत्सत्यम् । सापि न निःशङ्का । यावच्छङ्कमेव संवादापेक्षणान्नानवस्थेति चेत्तत्र वक्तव्यम् । किं शङ्का सर्वत्रानुवर्तते क्वचिन्नोत्पद्यत एव वा । आद्ये कथमनवस्थाऽभावः । द्वितीयो निरस्तप्रायः । अपि च संवादकमप्रामाण्यशङ्कां निवर्तयति प्रामाण्यं ज्ञापयति वा । आद्ये प्रामाण्यस्य स्वतस्त्वप्राप्तिः । द्वितीये शङ्काभावेऽपि संवादापेक्षा स्यात् । संवादकमुभयत्रापि प्रवर्तत इति चेन्न । कल्पकाभावात् । बाधकवदुभयत्र व्यापारः किं न स्यादिति चेन्न । अप्रामाण्यशङ्काशून्यस्य प्रामाण्यज्ञाने संवादनिरपेक्षत्वात् । बाधकेन विना निवृत्ताप्रामाण्यशङ्कस्याप्यप्रामाण्यबुध्यनुदयानुभवात् । यदपि प्रामाण्यं परतो ज्ञायते अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवदिति । तदप्युक्तप्रतिकूलतर्कपराहतमनुकूलतर्कपराहतमनुकूलतर्कशून्यं च । संशयस्य च दोषादेवोपपत्तेः । स्वतस्त्वेनाभ्युपगतोपमानानुमानप्रामाण्येऽपि संशयदर्शनाच्च । अनभ्यासदशायामपि सन्देहाभावस्यापि दर्शनाच्चेत्यलम् ।

वेदस्य स्वतःप्रामाण्ये सूत्रसूचितां श्रुतिं चाह ॥ **नेति** ॥ अत्र चक्षुरादीनां परमात्मा-प्रमापकत्वमुक्त्वा वेदस्यैव तत्प्रमापकत्वोक्तेः संवादानपेक्षतया प्रामाण्यमित्युक्तं भवति । वेदस्य नित्यत्वं कुत इत्यत आह ॥ **नित्यत्वं चेति** ॥ अनेन तथात्वमित्युभयतः सम्बध्यत इत्युक्तं भवति । **तस्मै** सर्वतः प्रकाशायातिसमर्थाय विष्णवे **नित्यया** वेदवाचा साध्वीं स्तुतिं प्रेरय कुर्वित्यर्थः । विरूपेति स्वात्मानं प्रतिसम्बोधनम् । बहुकालीनत्वमात्रेण नित्यत्वोपचारः किं न स्यादित्यत आह

(तत्त्वप्रकाशिका)

**॥ अनादीति ॥** अनादिनिधनतया नित्या न तु बहुकालीनतामात्रेण नित्यत्वोपचार इत्यर्थः । न च वाच्यं वेदप्रामाण्ये विवदमानं प्रति कथं तत्प्रामाण्योपपादनायोपन्यस्तयोर्नित्यत्वस्वतःप्रामाण्ययोः साक्षितया श्रुत्युपादानं युक्तमिति । परेणापि फलव्यभिचारेणाप्रामाण्ये वेदस्यापि तत्प्रसङ्ग इत्यापादन-मात्रस्य क्रियमाणत्वात् । युक्तेश्चोपन्यस्तत्वात् ।

## गुर्वर्थदीपिका

संवादनिरपेक्षतज्ज्ञानादेवेत्यत्र तज्ज्ञानपदेन निर्दोषतया वेदस्वरूपज्ञानं निर्दोषवेदानुसारितया स्मृतिस्वरूपज्ञानं चोच्यते । शङ्काभावेऽपि संवादापेक्षा स्यादित्यत्र न चेष्टापत्तिः स्वकरतल-स्थितरेखाज्ञानप्रामाण्यग्रहणे तदनपेक्षणस्य सर्वानुभवसिद्धत्वादित्युपस्कर्तव्यम् । संवादकमुभय-त्रापि प्रवर्तत इत्यत्रोभयत्र शङ्कानिवृत्तौ तदुत्तरकालीनप्रामाण्यज्ञाने चेत्यर्थः । परस्याभिमत-शङ्कारहितस्थले तु निःशङ्कार्थनिश्चयादेव प्रवृत्त्युपपत्तेः प्रामाण्यज्ञानमपेक्षितमेव न । अतो नानवस्था । नापि प्रामाण्यस्य स्वतस्त्वमिति भावः । कल्पकाभावादित्यस्येदृशस्थलेऽपि लाघवादप्रामाण्यशङ्कानिवृत्तिकारणत्वेनैव चरितार्थत्वे प्रामाण्यज्ञानं प्रत्यपि कारणत्वे कल्पका-भावादित्यर्थः । बाधकवदुभयत्र व्यापार इत्यत्र बाधकवत् नेदं रजतमिति बाधकज्ञानवत् । यथा नेदं रजतमिति बाधकज्ञानं रजतज्ञाने प्रामाण्यशङ्कां निवर्तयति, अप्रामाण्यज्ञानं च जनयति । तथोभयत्र प्रामाण्यशङ्कानिवृत्तौ प्रामाण्यज्ञाने च । बाधकं विनाऽप्रामाण्यबुद्धेः क्वाप्यनुदयस्य सर्वानुभवसिद्धत्वात् । अस्तु वा बाधकज्ञानस्योभयत्र कारणता, बाधकज्ञानं विना रजतत्वा-भावोपनायकाभावेन बहिरस्वतन्त्रेऽप्रामाण्यग्राहके साक्षिणि बाधकान्वयव्यतिरेकयोः सत्त्वात् । अत एवाप्रामाण्यग्रहस्य परतस्त्वम् । बाधकज्ञानात्प्राक् साक्षिणा रजतज्ञानग्राहिणाऽपि तदप्रामाण्याग्रहणात् । यदि च दोषप्रतिरुद्धः साक्षी प्राक् न गृह्णातीति वदसि तर्हि दोषशङ्का-निवृत्त्युत्तरकालं अप्रामाण्याश्रयेण तेनैव ज्ञानेनोपनीतमप्रामाण्यं गृह्णीयात् । न च तद्युक्तम् । रजतत्वाभावघटिताप्रामाण्यस्योपनायकान्तरं विना ग्रहणासम्भवात् । स्वकरतलस्थितामलक-ज्ञानप्रामाण्यस्य तेनैव व्यवसायेनोपनीतत्वात् विनैव संवादं सर्वैरनुभूयमानत्वेन तद्व्यतिरेके तद्व्यतिरेकादर्शनात् नात्रापि कारणतेत्याह ॥ **अप्रामाण्यशङ्काशून्यस्येत्यादि** ॥ अनभ्यास-दशायामपि सन्देहाभावस्येत्यत्र तदानीं कुम्भकारानीतघटे इत्युपस्कर्तव्यम् । 'दिवु क्रीडा-विजिगीषा' इति धातोरभितः द्यवे इत्यस्य फलितार्थकथनं **अतिसमर्थायेति** ॥ तस्यैवार्थान्तर-

(गुर्वर्थदीपिका)
कथनं सर्वतः प्रकाशायेति । **वृष्णे इत्यस्यार्थकथनं विष्णव इति ॥** पूष्णे इतिवदयं शब्दो ज्ञातव्यः । आपादनमात्रस्येत्यत्र कापिलपाशुपतादिभिरपि वेदप्रामाण्यस्याङ्गीकृतत्वात्तान्प्रति तदुपन्यासस्यादोषत्वादिति भावः । 'स्वतश्च प्रामाण्यम्' इत्यत्र स्वतः आप्तोक्तत्वगुणरूप-परमुखनिरीक्षणं विना नित्यत्वाख्यस्वभावादेव वेदस्य प्रामाण्यम् । अन्यथाऽनवस्थानात् । धर्माधर्मव्यवस्थानादिति भाष्यवाक्यस्यार्थान्तरमभिप्रेत्योक्तम् ॥ **युक्तेश्चोपन्यस्तत्वादिति** ॥ अन्यत्र स्वकृतग्रन्थान्तरे उपन्यस्तत्वादित्यर्थः । ग्राहकपरम्परयाऽनवस्थानस्य स्वतस्त्वसम्पादक-त्वेऽपि नित्यत्वे इयमेव युक्तिरनुसन्धेयेति भावः ।

## भावबोधः

'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः' इत्यनुव्याख्यानानुसारेणाधिकरणोपाधिमाह– **युक्ति-विरोधपरिहारादिति ॥ श्रुत्यादिप्रामाण्यस्य च युक्तिविरोध इति ॥** अनेन 'इतरेषामनुपलब्धेः' इत्युक्तसिद्धान्तन्यायेनात्र पूर्वपक्षोत्थानादनन्तरसङ्गतिः सूचिता भवति ॥ **प्रमाणं न वेति** ॥ अत्र श्रुत्यादिप्रामाण्याद्विष्णोर्जगत्कारणत्वं सिध्यतीति वाक्यसूचितश्रुत्यादिसमन्वयेनोक्तं विष्णोः कारणत्वादि न युक्तमुत युक्तमिति प्रधानचिन्ता द्रष्टव्या । तदर्थं श्रुत्यादिकमप्रमाणमुत प्रमाण-मिति । तदर्थं 'वृष्टिकामः कारीर्या यजेत' इत्यादिवेदवाक्यं किं युक्तिविरुद्धं भवत्युत नेति । तदर्थं वेदाद्युक्तकारीर्याद्यनुष्ठानेऽपि वृष्ट्यादिफलानुपलब्धिर्वेदाद्यप्रामाण्यनिबन्धनोत कर्तृवैगुण्यादि-निबन्धन इति । तदर्थं वेदादिप्रामाण्यं किं पाशुपतादिस्मृतिवत् फलसंवादाधीनज्ञानमुत स्वत इति । तदर्थं वेदादेर्निर्दोषप्रमा न सम्भवत्युत सम्भवतीति । तदर्थं वेदापौरुषेयत्वादौ प्रमाणं नास्त्युतास्तीति । एवं श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यमिति भाष्याभिप्रायमाह ॥ **कारीर्येत्यादिना** ॥ भाष्यगतैवंशब्दार्थः पाशुपतादिस्मृतिवदिति । अनेन रुद्रादिस्मृतिसाम्यमिति न्यायविवरणमपि व्याख्यातं भवति । नैवमित्यादिभाष्यस्यास्य न तथात्वमिति सौत्रप्रतिज्ञा-व्याख्यानरूपत्वं दर्शयति अस्य श्रुतेरित्यादिना । अनेनान्यस्मृतीत्युक्तश्रुत्यनुसारिपञ्चरात्रादि-स्मृतिस्तत्सन्निधापिता श्रुतिश्च सूत्रेऽस्येति परामृश्यते । 'इतरेषां चानुपलब्धेः' इति सूत्रोक्तं 'तथात्वम्' इत्यनेन परामृश्यत इत्युक्तं भवति । 'नित्यत्वात् पुरुषोद्भवैः । वर्जितं सर्वदोषैश्च कथं नो मानतां व्रजेत् ।' इत्यनुव्याख्यानानुसारेण भाष्याभिप्रायमाह ॥ **वाक्यप्रामाण्यमिति** ॥ **प्रमाणानुकूलत्वादिति** ॥ अनेन भाष्ये 'नित्यः' इत्यनन्तरं 'तदनुसारिणि च' इति पूरितं

भवति । किन्तु साक्षिप्रत्यक्षसाम्यमेव निरपेक्षत्वादिति न्यायविवरणानुसारेण भाष्याभिप्रायमाह- **वेदादिप्रामाण्यस्येत्यादिना ॥**

ननु यथार्थज्ञानजनकत्वरूपवेदप्रामाण्यस्य ज्ञानादेव सिद्धिः कथमित्यत आह ॥ **न हीति** ॥ करणानां तु ज्ञप्तौ स्वतस्त्वं नाङ्गीक्रियत इति सुधोक्तरीत्या करणप्रामाण्यस्य परतस्त्वपक्षे निर्दोषत्व तदनुसारित्वाभ्यामेव यथार्थज्ञानजनकत्वरूपप्रामाण्यानुमानं न संवादेनेत्यर्थः । तेषामपि ज्ञान-जनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वमिति सुधोक्तरीत्या स्वतस्त्वे तु निर्दोषतदनुसारिज्ञानजनकस्वरूपग्रहे यथार्थज्ञानजनकत्वरूपप्रामाण्योपलब्धौ संवादा-पेक्षा नास्तीत्यर्थः ॥ **सापि न निश्शङ्केति** ॥ तथा च प्रामाण्याध्यवसायस्य निःशङ्कप्रवृत्तिं प्रत्येव हेतुत्वेन न व्यभिचार इति भावः ॥ **क्वचिन्नोत्पद्यत एवेति** ॥ व्यासङ्गकोटिस्मरणाभावादिनेति शेषः ॥ **द्वितीयो निरस्तप्राय इति** ॥ ज्ञानस्याबुभुत्सितग्राह्यतया तीव्रसंवेदनत्वेन ज्ञाते च तस्मिन् प्रामाण्याप्रामाण्यानुपलब्धौ निःशङ्कप्रवृत्तेः प्रामाण्याध्यवसायसाध्यत्वेन तदर्थं प्रामाण्यरूपविशेष-जिज्ञासाध्रौव्ये तत एव व्यासङ्गकोटिस्मरणाद्यसम्भवेन शङ्काया आवश्यकत्वादिति भावः ॥ **बाधकवदुभयत्रेति** ॥ यथा बाधकस्य प्रामाण्यशङ्कानिरासा प्रामाण्यज्ञापनयोर्व्यापारस्तथा संवादस्याप्रामाण्यशङ्कानिरासप्रामाण्यज्ञापनयोर्व्यापारः किं न स्यादित्यर्थः ॥ **अप्रामाण्यशङ्का-शून्यस्येति** ॥ सुखादिज्ञानेऽप्रामाण्यशङ्काशून्यस्य संवादाभावेऽपि प्रामाण्यस्यानुभूयमानत्वेन व्यतिरेकव्यभिचारान्न संवादस्य प्रामाण्यज्ञापने व्यापार इत्यर्थः । बाधकेन विनेति । तथा चानन्यथासिद्धान्वयव्यतिरेकाभ्यां बाधकस्याप्रामाण्यज्ञापने व्यापार इति भावः । प्रामाण्यस्य स्वतस्त्वे तत्संशयानुपपत्तेर्बाधकस्य सत्त्वात् कथमनुकूलतर्कशून्यत्वमित्यत आह ॥ **संशयस्य च दोषादेवेति** ॥ **संशयदर्शनाच्चेति** ॥ तथा चानुभवसिद्धतत्संशयोपपत्तिवदत्रापि तदुपपत्तिरिति भावः ॥ **अनभ्यासदशायामपीति** ॥ प्रत्यग्रोत्पन्नसुखादिस्थल इत्यर्थः । तथा च भागासिद्धो हेतुरिति भावः ॥ **स्वतःप्रामाण्ये सूत्रसूचितामिति** ॥ अनेन 'तथा त्वं' च स्वतःप्रामाण्यलक्षणवैलक्षण्यं 'च' शब्दान्न चक्षुरिति श्रुतेरिति सूत्रांशो भाष्येण व्याख्यात इत्युक्तं भवति ॥ **अनेनेति** ॥ नैवं तदुक्तानुपलब्धेरप्रामाण्यमिति व्याख्याय नित्यत्वरूपविलक्षणत्वं 'च'शब्दादिव्याख्यानेनेत्यर्थः । 'अभिद्यव' इत्यस्यार्थः **सर्वतः प्रकाशायेति** ॥ 'वृष्ण' इत्यस्यार्थो **अतिसमर्थायेति** ॥ **अनादि-निधनतयेति** ॥ अन्यथा पुनरुक्तिः स्यादिति भावः ॥ **श्रुत्युपादानमिति** ॥ स्वतःप्रामाण्य-

(भावबोधः)

नित्यत्वयोः सिद्धौ वेदप्रामाण्यसिद्धिः । तत्सिद्धौ च प्रमाणभूतवेदेन तत्सिद्धिरित्यन्योन्याश्रय इत्यर्थः । प्रकारान्तरेणान्योन्याश्रयं परिहरति ॥ युक्तेश्चेति ॥ भाष्ये आप्यनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्येति देवताधिकरणे वेदनित्यत्वेऽन्यथानवस्थितेरित्यत्र प्रामाण्यस्वतस्त्वे च युक्तिश्चोपन्यस्तत्वादित्यर्थः । तथा च युक्तिसिद्धार्थे श्रुतेः संवादित्वेनोपन्यासान्नान्योन्याश्रय इति भावः ।

यद्वा वेदाप्रामाण्यवादिनोऽप्यत्र पूर्वपक्षित्वे तं प्रत्याह– युक्तेश्चेति ॥ तथा च तं प्रत्युपन्यस्तयुक्त्यैव वेदे नित्यत्वादिप्रसाधनं न श्रुत्येति नान्योन्याश्रयप्रसङ्ग इति भावः ।

## भावदीपः

उक्तेति ॥ शास्त्रयोनिसूत्र इत्यर्थः ॥ युक्तीति ॥ तदुक्तानुपलब्धेरप्रामाण्यमिति भाष्ये वक्ष्यमाणयुक्तीत्यर्थः । अत्र विष्णोरित्युक्त्या शास्त्रे युक्तीत्युक्त्या पादे विरोधेत्याद्युक्त्याऽध्याये च सङ्गतिरुपपादिता बोध्या । एवमग्रेऽपि । पूर्वसङ्गतिमाह ॥ श्रुत्यादीति ॥ न ब्रह्मण इति विच्छेदः । सौत्रतथात्वपदेन प्राक्तनसाध्यहेत्वोरपि स्मृत्यप्रामाण्यरूपदृष्टान्तस्य च परामर्श इति भावेन प्रवृत्तमेवमित्याद्यप्रामाण्यमित्यन्तभाष्यमाकाङ्क्षाक्रमेण व्यनक्ति ॥ श्रुत्यादिकमिति ॥ श्रुतेरित्येतद्व्यनक्ति ॥ कारीर्येति ॥ तदनुसारिस्मृतेश्चेत्येतद्व्याचष्टे ॥ तथेति ॥ पाशुपतादिस्मृतिवदित्यर्थकैवंशब्दार्थं व्यनक्ति ॥ अविद्यमानेति ॥ अप्रयोजकत्वनिरासाय विलक्षणत्वादिति हेतुव्यावर्त्यं श्रुतेः रुद्रादिस्मृतिसाम्यमित्यन्यत्रोक्तं व्यनक्ति ॥ अविद्यमानेति ॥ श्रुतेरित्युपलक्षणं मत्वा श्रुतिस्मृतीनामित्युक्तम् । अस्त्वेवं दृष्टार्थकभागस्य, 'यतो वा' इत्याद्यदृष्टार्थकभागस्य किमायातमित्यत आह ॥ एवं चेति ॥ तत्सामान्यादितरेषु तथात्वमिति जैमिनीयन्यायादिति भावः । व्याख्येयसौत्रपदानि दर्शयन् भाष्यं व्याचष्टे ॥ अस्येति ॥ श्रुत्यादेरित्युक्त्या भाष्यदिशा अस्या इत्युक्तिः स्यादिति प्रत्युक्तम् । एवमित्यस्यार्थः पाशुपतादिस्मृतिवदिति । श्रुतेरित्यनेन भाष्ये श्रुतिस्मृतिपदे यथायोगमत्राप्यन्वीयेते इति दर्शितम् । एतेन किन्तु साक्षिप्रत्यक्षसाम्यमेव निरपेक्षत्वादिति न्यायविवरणस्थवाक्यशेषः । कर्तृनिरपेक्षत्वान्नित्यत्वेन साक्षिसाम्यमिति विवृतो भवति ॥ वक्तृदोषेति ॥ 'नित्यत्वात्पुरुषोद्भवैः । उज्झितं सर्वदोषैश्च कथं नो मानतां व्रजेत्' इत्यनुभाष्योक्तेरिति भावः । एतेन वेदा 'नित्यत्वान्मानमुत्तमम्' इत्यणुभाष्यमपि स्मृत्युपलक्षणतया व्याख्यातं ध्येयम् । श्रुतेरित्यादिन्यायविवरणस्थमाद्यं साम्यपदं संवादाधीन-

(भावदीपः)

ज्ञानप्रामाण्यरूपसाम्यपरम् । द्वितीयं तु तदनधीनसिद्धिकप्रामाण्यरूपसाम्यपरमिति प्रकारान्तरेण तद्वाक्यं विवृण्वानो भाष्यं व्याचष्टे ॥ **भवेदिति** ॥ स्वतःशब्दार्थः ॥ **संवादनिरपेक्षतज्ज्ञानादेवेति** ॥ वेदादिस्वरूपज्ञानादेवेत्यर्थः । एतेन निरपेक्षत्वादित्यन्यत्रोक्तो हेतुः संवादनिरपेक्षत्वादिति विवृतः ॥ **तत्तत्स्वरूपेति** ॥ वेदादिस्वरूपेत्यर्थः । उत्पत्तौ प्रामाण्यस्वतस्त्वस्य देवतानये स्वतः प्रामाण्यप्रसिद्धेश्चेति भाष्ये व्युत्पादितत्वादुत्तरहेत्वनुरोधेन ज्ञप्तौ स्वतस्त्वपरत्वेनैव भाष्यं व्याख्यातम् । न चैवं करणप्रामाण्यज्ञप्तिस्तु परत एवेन्द्रियलिङ्गशब्दानां यथायथमनुमानप्रत्यक्षादिवेद्यत्वात् यथार्थज्ञानसाधनत्वस्य त्वनुमानवेद्यत्वादिति पद्धतिवाक्येन 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इत्यनुव्याख्यानव्याख्यावसरोक्तेन करणानां तु ज्ञप्तौ स्वतस्त्वं नाङ्गीक्रियत एवेत्यादिसुधावाक्येन च विरोध इति वाच्यम् । इहापि प्रामाण्यग्रहे संवादानपेक्षतायामेव तात्पर्येण करणस्वरूपग्राहकेणैव तत्प्रामाण्यग्रह इत्यत्र तात्पर्याभावात् ।

यद्वा अन्यत्र शक्तिशक्तिमतोर्भेदमुपेत्य स्वरूपग्राहकाग्राह्यत्वरूपपरतस्त्वोक्तावपि इहाभेदमुपेत्य स्वरूपग्राहकमेव ज्ञानजनकशक्तिग्राहकम् । तदेव च प्रमाजनकशक्तिरूपप्रामाण्यग्राहकमिति भावेन संवादनिरपेक्षतज्ज्ञानादेवेत्याद्युक्तम् । ज्ञानजनकशक्तिग्राहकमात्रग्राह्यत्वरूपप्रमाजननशक्तिरूपप्रामाण्यस्वतस्त्वं तु ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वरूपप्रामाण्यस्य तदीयस्य ग्राह्यत्वरूपं स्वतस्त्वमिति सुधोक्त्यानुमतमेवेति भावः । प्रामाण्यनिश्चयं विनापि प्रवृत्तिदृष्ट्या प्रामाण्यजिज्ञासोपपत्तौ नानवस्थेति भावेन शङ्कते ॥ **फलेति** ॥ **सापीति** ॥ तथा च बह्वायाससाध्ये कर्मणि निश्शङ्कं प्रवृत्तये निश्चयोऽपेक्षित एवेत्यनवस्थैवेति भावः ॥ **निरस्तप्राय इति** ॥ प्रामाण्याग्रहणे शङ्काया आवश्यकत्वादिति शेषः ॥ **स्वतस्त्वेति** ॥ बुद्धिदोषनिरासमात्रकारणत्वाद्युक्तीनामिति तत्वनिर्णयोक्त्या संवादकस्यान्यत्रोपयोगे तदनपेक्षज्ञानग्राह्यत्वस्य प्राप्तेः स्वतस्त्वप्राप्तिरित्यर्थः ॥ **शङ्काभावेऽपीति** ॥ अप्रामाण्यशङ्कानिवृत्तावपीत्यर्थः ।

ननु यथा विसंवादादिरूपबाधकस्य प्रामाण्यशङ्कानिरासाप्रामाण्यज्ञानयोः व्यापारस्तदन्वयव्यतिरेकानुविधायित्वहेतुना कल्प्यते । तथेहापि तेनैव हेतुना कल्प्यतामिति शङ्कते ॥ **बाधकवदिति** ॥ बाधकेऽव्यभिचरितान्वयव्यतिरेकाभ्यां तथा कल्पनेऽपि नेह तथा । सुखादिज्ञाने स्वत एव निवृत्ताप्रामाण्यशङ्कस्य प्रामाण्यज्ञानोदयेन व्यतिरेकव्यभिचारादिति भावेनाह– **अप्रामाण्येति** ॥

(भावदीपः)
अप्रामाण्यज्ञप्तौ बाधकस्य व्यतिरेकव्यभिचारो नेत्याह ॥ **बाधकेनेति** ॥ **उक्तेति** ॥ अनवस्था-रूपेत्यर्थः ॥ **अनुकूलेति** ॥ अस्तु संशयविषयत्वं मास्तु परतो ज्ञेयत्वमित्यत्र बाधकाभावादिति भावः । धर्मिग्राहकेण तत्प्रामाण्याग्रहणे स्वतस्त्वभङ्गापत्त्या प्रामाण्यग्रहणावश्यम्भावे विशेष-दर्शनात्संशयानुपपत्तिरेवानुकूलतर्क इत्यत आह ॥ **संशयस्य चेति** ॥ यथा परमते जाति-व्यक्त्योरेकवित्तिवेद्यत्वनियमेऽपि इदमिति शुक्तिज्ञाने सत्यपि सादृश्यादिदोषवशाच्छुक्तित्वाज्ञाने-नेदं रूप्यमित्यादिभ्रमस्तथेहापि धर्मिज्ञाने सत्यपि तत्र तात्पर्यभ्रमादिजन्यत्वादिशङ्कारूपदोष-वशात्प्रामाण्याग्रहणोपपत्त्या संशयोपपत्तेरित्यर्थः । प्राचीनतार्किकमतावष्टम्भेनाह ॥ **स्वत-स्त्वेनेति** ॥ बौद्धचार्वाकादिविप्रतिपत्त्याऽनुमानप्रामाण्येऽपि संशयदर्शनादित्यर्थः ।

यद्वा लिङ्गादिज्ञानप्रामाण्यसन्देहे न तज्जन्यानुमितिसंशयदर्शनादित्यर्थः । हेतोर्भागासिद्धिं चाह ॥ **अनभ्यासेति** ॥ **इत्यलमिति** ॥ विस्तरस्तु तर्कताण्डवे । भाष्ये श्रुतेश्चेत्यस्य स्वतश्च प्रामाण्यमिति साध्येनान्वयं दर्शयन्नाह ॥ **वेदस्येति** ॥ स्वतः संवादानपेक्षज्ञानग्राह्येत्यर्थः ॥ **श्रुतिं चेति** ॥ तेन भाष्ये श्रुतेश्चेति चशब्देनानवस्थितेरित्युक्तहेतुसमुच्चय इति सूचितम् । तथात्वं च शब्दादिति सूत्रखण्डस्यैकमर्थमुक्त्वार्थान्तरोक्तिपरं भाष्यं नित्यत्वं चेत्यादि । तद्व्याचष्टे ॥ **वेदस्य नित्यत्वमिति** ॥ ननु पूर्वं तथात्वमित्यस्याप्रामाण्यमित्यर्थं मत्वा पूर्वान्वितत्वेन भाषित-त्वात्स्वतश्च प्रामाण्यमिति नित्यत्वं चेति च कस्यार्थ इत्यत आह ॥ **अनेनेति** ॥ स्वत-श्चेत्यादिभाष्येणेत्यर्थः । 'तस्मै नूनमभिद्यवे वाचा विरूपनित्यया' । 'वृष्णे चोदस्व सुष्टुतिम्' इति समग्रमन्त्रार्थमाह ॥ **तस्मा इति** ॥ अभिद्यवे सर्वतः प्रकाशाय । वृष्णे अतिसमर्थाय । चोदस्व प्रेरय । स्वात्मनोऽन्यस्याभावादाह ॥ **कुर्वित्यर्थ इति** ॥ कस्यचिदृषेर्नाम विरूपेति । अपौनरुक्त्याय हेतुहेतुमद्भावेन व्याचष्टे ॥ **अनादिनिधनतयेति** ॥ आद्यन्तशून्यतयेत्यर्थः । भाष्ये यथासूत्रं न चक्षुरित्यादिशब्दमात्रे वाच्येऽनवस्थितेरित्युपलक्षणतया युक्तेरप्युक्तेरुपयोगं वक्तुं शङ्कामाह ॥ **न च वाच्यमिति** ॥ विवदमानमितिपाठः साधुः । भासनोपसम्भाषाज्ञान-यत्नविमत्युपमन्त्रणेषु वद इत्यात्मनेपदविधानात् । विवदन्तमितिपाठे तु 'चान्द्रादयस्तु मन्यन्ते सर्वस्मादुभयं पदम्' इत्युक्तेः परस्मैपदं समाधेयम् ॥ **आपादनेति** ॥ अन्यहेतुकस्याप्रामाण्यस्या-भावं स्वीकृत्य विसंवादहेतुकाप्रामाण्यशङ्कामात्रस्य क्रियमाणत्वादित्यर्थः । सूत्रे शब्दादित्युप-लक्षणमिति भावेनाह ॥ **युक्तेश्चेति** ॥ वेदस्य नित्यत्वे देवतानयभाष्ये स्वतः प्रामाण्ये चात्र

(भावदीपः)
युक्तेरुपन्यस्तत्वादित्यर्थः । तथा च श्रुतौ विवादेत्युक्त्या तयोः साधनमस्त्विति भावः । यद्वा युक्त्या वेदस्य नित्यत्वस्वतःप्रामाण्ययोः सिद्धिं मत्वा सूत्रेऽभ्युच्चयत्वेन शब्दादित्युक्तिरिति भावः ।

## अभिनवचन्द्रिका

नन्विन्दमधिकरणम् 'एतेन योगः प्रयुक्त' इति पूर्वसूत्रेण सहैकाधिकरणम् । तथा हि वेदप्रामाण्यमाक्षिपति – **एतेन योगः प्रत्युक्त इति ॥ एतेन** पाशुपतादिस्मृत्यप्रामाण्याय भवदुपन्यस्तेन उक्तफलानुपलम्भेन, **योगः** श्रुतिप्रामाण्ययोगः, **प्रत्युक्तः** निराकृतो वेदितव्यः । एवं प्राप्तं पूर्वपक्षं प्रतिक्षिपति । 'न विलक्षणत्वादस्य तथात्वं च शब्दात्' इति । उक्त-फलानुपलम्भेऽपि पाशुपतादिस्मृतिवदप्रामाण्यं न मन्तव्यम् । नित्यत्वेन ततो विलक्षणत्वात् । न हि नित्ये दोषाः कल्प्याः । अस्य तथात्वं च 'वाचा विरूपनित्यया' इति शब्दात् । फलानुपलम्भोऽसिद्ध इत्याह– दृश्यते तु, अधिकारिणां फलम् । अतस्तदनुपलम्भो वैगुण्यनिमित्त इति । अवश्यं च एतदेवं विज्ञेयम्, न विलक्षणत्वादिति निषेधसौकर्यात् । पूर्वपक्षमनूद्य निषेधे हि सौकर्यं भवति । अन्यथा नेत्युक्ते कस्य पुनर्निषेधो विज्ञायेतेति । तस्मादिदमधिकरणं प्राचीनसूत्रेणैकाधिकरणमिति चेत्, सत्यम्, एवं योजनायां सौलभ्यं भवतीति, तथापि नैकाधिकरणत्वं सूत्रकृद्विवक्षितम्, यदयं योगविभागं करोति तत् ज्ञापयत्याचार्यः 'एतेन योगः प्रत्युक्त' इति सूत्रं योगशास्त्राभ्यधिकाशङ्कानिरासाय पूर्वाधिकरणशेषः, पाशुपताद्यागमा-प्रामाण्याभिधानेन तन्न्यायसाम्यात् बुद्धौ परिवर्तमानाया वेदाप्रामाण्यशङ्काया निरासाय 'न विलक्षणत्वात्' इत्यादि पृथगाधिकरणम्' इति । अन्यथा 'विकारशब्दान्नेति चेत् इत्यादिवत् एकं सूत्रं विदध्यात्, योगशास्त्राभ्याधिकाशङ्कानिरासश्च न कृतः स्यादिति । हेतोरप्रयोजकता-माशङ्क्य परिहरति – **अविद्यमानाभिधात्रीणामिति ॥ नित्यत्वाख्यवैलक्षण्यादिति ॥** यत्फलविसंवादि तदप्रमाणमित्युत्सर्गः । वेदे नित्यत्वेन, स्मृतौ तदनुसारित्वेन, निर्दोषत्वावगमाद-प्रामाण्याभावः सिद्ध इति पाशुपतादिस्मृतिवत् फलविसंवादेन नाप्रामाण्यमिति कल्प्यम् । उत्सर्गस्य बाधकैकापवाद्यत्वादिति भावः । एतेन फलविसंवादस्य श्रुतौ व्यभिचारान्न तेन पाशुपतादि-स्मृत्यप्रामाण्यसाधनं युक्तमिति परास्तम् ॥ **फलव्यभिचारेऽपीति ॥** अङ्गीकारवादोऽयमिति बोध्यम् । एतेन फलादर्शनस्य कर्तृवैगुण्यादिसहकारिविरहप्रयुक्तत्वस्य वक्ष्यमाणत्वात् सहकारि-विरहप्रयुक्तफलादर्शनस्य चाव्यभिचारात् 'फलव्यभिचारेऽपीत्युक्तमयुक्तमिति परास्तम् ॥

(अभिनवचन्द्रिका)

**प्रकारान्तरेण व्याचष्ट इति** ॥ पूर्वं नित्यत्वेन वैलक्षण्यादिति व्याख्यातम्, अधुना तु संवादनिरपेक्षप्रामाण्यकत्वादिति व्याख्यायते । तात्पर्यन्तु पूर्ववदिति बोध्यम् । एतेन अधुनापि पूर्ववदेव 'वेदादिप्रामाण्यस्य संवादनिरपेक्षतज्ज्ञानादेव सिध्यङ्गीकारात्' इत्यादिना प्रामाण्यसिद्धि-रूपबाधकसद्भावात् न फलविसंवादेनाऽप्रामाण्यसिद्धिरिति वक्ष्यमाणत्वान्नेदं व्याख्यानान्तरमिति परास्तम् । तात्पर्यस्यैकत्वेऽपि वैलक्षण्यप्रयोजकधर्मनिरूपणमात्रे व्याख्यानान्तरमित्यङ्गीकारात् ॥ **प्रामाण्यमिति** ॥ करणप्रामाण्यमात्रमित्यर्थः ।

ननु करणप्रामाण्यस्य संवादाधीनज्ञानत्वाङ्गीकारेऽनवस्थाऽभिधानमयुक्तम् । संवादस्योपलब्धि-रूपत्वेन तत्प्रामाण्यस्य स्वतस्त्वादित्यतः संवादकप्रामाण्यमपि संवादकात् गृह्यते, उत स्वत इति विकल्प्य द्वितीयदूषणं शिष्यैरेवोह्यमिति भावेन प्रथमपक्षे भाष्यकृताऽनवस्थोक्तेति न किञ्चिदनुपपन्नमित्याशयेनाह– **यदीत्यादिना** ॥ **स्वत एवेति** ॥ संवादाभावेऽपि साक्ष्यादि-प्रमाणान्तरेणेत्यर्थः । आद्यकल्पे 'अन्यथाऽनवस्थितेः' इति मूलमुपतिष्ठत इत्याह ॥ **आद्ये तदप्येवमिति** ॥ **आद्यप्रामाण्यस्यैवेति** ॥ संवादातिरिक्तनिर्दोषत्वादिलिङ्गवेद्यत्वोपपत्तेरित्यर्थः । उपलब्धिरूपसंवादकप्रामाण्यस्यापि संवादवेद्यत्वमङ्गीकृत्याऽनवस्थां परिहारति – **कथञ्चिदिति** ॥ **प्रामाण्याध्यवसायं विनेति** ॥ संवादकप्रामाण्याध्यवसायं विना वेदप्रामाण्यनिश्चयायोगेन प्रवृत्त्यसम्भवात् प्रवृत्त्यर्थं संवादकप्रामाण्यजिज्ञासाध्रौव्यादित्यर्थः ॥ **यावच्छङ्कमिति** ॥ यद्यपि संवादकानुभवप्रामाण्यनिश्चये संवादकान्तरापेक्षा, तथापि नाऽनवस्था यावच्छङ्कमेव संवादापेक्षाङ्गीकारादित्यर्थः ॥ **द्वितीयोऽपि निरस्तप्राय इति** ॥ 'प्रामाण्याध्यवसायं विना प्रवृत्त्यनुपपत्या' इति पूर्वोक्तदिशा निरस्तप्राय इत्यर्थः । 'शङ्का सर्वत्र नाऽनुवर्तत' इति द्वितीयपक्षे विकल्पमुखेन दूषणान्तरमाह– **अपि चेति** ॥ **आद्ये प्रामाण्यस्येति** ॥ पुरुषेण गोक्षुरकाद्यपसरणे कृते गतिसमर्थो गजो यथा स्वयमेव गच्छति, तथा संवादेनाऽप्रामाण्य-शङ्कानिवृत्तौ निर्दोषत्वादिना स्वरूपग्रहे प्रामाण्यनिश्चये न किञ्चिदपेक्षितमिति भावः ॥ **संवादकमुभयत्रापीति** ॥ अप्रामाण्यशङ्का सर्वत्र नानुवर्तते, यत्राऽप्रामाण्यशङ्का, तत्र संवादकमप्रामाण्यशङ्कां निवर्तयित्वा प्रामाण्यं ज्ञापयति । एवं च प्रामाण्यज्ञानेऽपि संवादक-प्रवृत्त्यङ्गीकारान्तरत्वापत्तिः । अप्रामाण्यशङ्काभावस्थले प्रामाण्यग्रहस्यैवाऽभावात् शङ्काभावेऽपि संवादकापेक्षा स्यादिति दोषोऽपि नेति भावः । कल्पकं शङ्कते – **बाधकवदिति** ॥

(अभिनवचन्द्रिका)

अप्रामाण्यशङ्कानिवृत्तिप्रामाण्यज्ञानयोरेतदन्वयव्यतिरेकाऽनुविधानमेव कल्पकमिति भावः । प्रामाण्यग्रहस्य संवादान्वयव्यतिरेकानुविधायित्वमेव नास्तीत्याह– **अप्रामाण्यशङ्केति** ॥ संवादकानुभवप्रामाण्यस्य परतस्त्वसाधकमनुमानमनूद्य दूषयति – **यदपीत्यादिना** ॥

ननु अनुकूलतर्कशून्यं चेत्ययुक्तं यदि प्रामाण्यं स्वतो गृह्येत तर्हि संशयो न स्यादित्यनुकूलतर्कसद्भावादित्यत आह– **संशयस्येति** ॥ एवशब्देन संशयस्य प्रामाण्याग्रहणप्रयुक्तत्वं नेत्याचष्टे । कुतः संशयस्य प्रामाण्याग्रहणप्रयुक्तत्वं नेत्यत आह– **स्वतस्त्वेनेति** ॥ वक्ष्यमाणसमुच्चये चशब्दः । प्रामाण्यग्रहणेऽपि संशयदर्शनात् प्रामाण्यग्रहणस्य संशयं प्रति व्यतिरेकव्यभिचार इति भावः । अन्वयव्यभिचारमप्याह– **अनभ्यासदशायामपीति** ॥ अनभ्यासदशायामपीत्यनेन प्रामाण्यग्रहणं सूचयति । ततश्च प्रामाण्यग्रहणेऽपि कदाचित्संशयाभावस्यापि दर्शनादन्वयव्यभिचार इति भावः । एतेन 'संशयाभावस्यापि दर्शनाच्च' इति वाक्यस्याऽनन्वय इति परास्तम् ॥ **उभयतः सम्बध्यत इति** ॥ अनेन तथात्वमित्यस्याऽप्रामाण्यमिति पूर्वं व्याख्याय नित्यत्वं चेति पुनर्व्याख्यानेन तथात्वमित्यस्य न तथात्वमिति नञा 'तथात्वं चशब्दात्' इति शब्दपदेनापि सम्बन्ध इत्युक्तं भवतीत्यर्थः । 'तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्' इति ऋचं व्याचष्टे – **तस्मै सर्वत इति** ॥ **स्वात्मानं प्रतीति** ॥ विरूपेति सम्बोधनमिति वक्तव्ये स्वात्मानं प्रतीति वचनं विरूपस्य यमावतारत्वद्योतनार्थम् । एतेन विष्णुतत्वनिर्णयटीकायां पद्मनाभतीर्थैः 'धर्मेण विरूप ऋषिं प्रत्युच्यत' इति उक्तत्वात् 'स्वात्मानं प्रति' इति वचनं विरुद्धमिति परास्तम् ॥ **न च वाच्यमिति** ॥ वेदस्य पाशुपताद्यागमवैलक्षण्यसिद्धौ प्रामाण्यसिद्धिः, तत्सिद्धौ तत्सिद्धिरिति अन्योन्याश्रयात् कथं श्रुत्युपादनमिति न वाच्यमित्यर्थः । अत्र टीकायां 'श्रुत्यापादनं युक्तमित्यतः परं' युक्तेरुपन्यस्तत्वादित्यतः पूर्वं 'परेणापि फलव्यभिचारेणाप्रामाण्ये वेदस्यापि तत्प्रसङ्ग इत्यापादनमात्रस्य क्रियमाणत्वात्' इति प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् वेदाप्रामाण्यस्यापादनमात्रमेव न तु साधनमित्यस्याऽर्थस्य 'वेदादिप्रामाण्यस्य युक्तिविरोधपरिहारात्' इति पूर्ववाक्येन 'प्रमाणं न वेति सन्देह' इति वाक्येन, 'श्रुत्यादिकं न प्रमाणम्' इति पूर्वपक्षवाक्येन, 'एवं च वेदाद्येकदेशस्याप्रामाण्ये अन्यदेशप्रमाणताया मानाश्वासात्' इति वाक्येन च, विरुद्धत्वात् । पूर्वपक्षे वेदप्रामाण्याक्षेपाभावेन सिद्धान्ते तत्साधनवैय्यर्थ्याच्चेति ॥ **युक्तेश्चोपन्यस्तत्वादिति** ॥

(अभिनवचन्द्रिका)
देवताधिकरणे वेदप्रामाण्ये युक्तेरुपन्यस्तत्वादित्यर्थः । देवताधिकरणोक्तयुक्त्या सिद्धेन नित्यत्वेन वेदप्रामाण्यस्येह साधितत्वात् अभ्युच्चयेन श्रुत्युपन्यासो नानुपपन्न इति भावः ।

**पूर्वपक्षस्तु** – वेदः, वैष्णवस्मृतिश्च न प्रमाणं, तदुक्तानुष्ठानेऽपि फलानुपलम्भात् । यदि फलानुपलम्भे प्रामाण्यं तर्हि पाशुपतादिस्मृतीनामपि तत्प्रसङ्गः । न हि फलानुपलम्भसाम्येऽपि वेदादेरेव प्रामाण्यं न पाशुपतादिस्मृतीनामिति विभागे हेतुरस्ति । एवं च फलानुपलम्भेन वेदाद्येकदेशस्याप्रामाण्ये तदेकदेशान्तरप्रामाण्येऽनाश्वासात् न विष्णोर्जगत्कारणत्वसिद्धिरिति ।

**सिद्धान्तस्तु** – प्रमाणमेव वेदादि । अपौरुषेयत्वतदनुसारित्वाभ्याम् । न च अपौरुषेयत्वमेव कुत इति वाच्यम् । प्रागेव सामान्यसिद्धिपरिशेषाभ्यां तस्य साधितत्वात् । 'वाचा विरूप नित्यया' इत्यादि श्रुतेश्च । न च फलविसंवादादप्रामाण्यम् । अधिकारिणां फलोपलम्भेन फलाऽनुपलम्भस्य कर्तृवैगुण्यादिनोपपत्तेः । अतो वेदप्रामाण्यस्य युक्तिविरोधाभावात् तेन जगत्कारणत्वं हरेर्युक्तमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रमाणत्वेनोक्तेति** ॥ शास्त्रयोनित्वसूत्रे इत्यर्थः । अत्र पूर्वसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेरनन्तरसङ्गतिः ॥ **प्रमाणं न वेति** ॥ श्रुत्यादिकं पाशुपतादिव दृष्टफलानुपलम्भादप्रमाणं उत श्रुतिसिद्धादपौरुषेयत्वस्वतःप्रामाण्याख्यतद्वैलक्षण्यात् प्रमाणमिति चिन्ता । तदर्थं फलानुपलम्भदोषापवादादौत्सर्गिकस्वतः प्रामाण्यत्यागः उत अधिकारिणां फलदर्शनेन क्वचिदनुपलम्भस्य कर्त्रादिवैगुण्यनिमित्तकत्वेनापौरुषेयतया निर्दोषस्य वेदस्य निरपवादमेव स्वतः प्रामाण्यमित्येवं श्रुतेरित्युक्तभाष्यानुसारेण पूर्वपक्षमाह ॥ **श्रुत्यादिकमिति** ॥ तदुक्तानुपलब्धेरित्यस्य विवरणं **कारीर्येत्यादि** ॥ एवमित्यस्य पाशुपतादिवदिति । तदुक्तानुपलब्धेः श्रुतेः स्मृतेस्तदेकदेशस्य यथा प्रामाण्यमेवं श्रुतेः स्मृतेस्तदेकदेशान्तरस्याप्यप्रामाण्यमाश्वासकारणाभावादिति भाष्यस्यार्थान्तरं मत्वा व्याचष्टे ॥ **एवं चेति** ॥ नैवमित्यादिभाष्यस्य सूत्रपदारोहं दर्शयति ॥ **अस्य श्रुत्यादेरिति** ॥ अन्यस्मृत्यनवकाशेत्यत्र पञ्चरात्रादिस्मृतितत्साहाय्यवच्छ्रुत्योः प्रकृतत्वादस्येति परामर्शः । पाशुपतादेरितरेषां चेति सूत्रोक्तमिति भावेन फलानुपलम्भहेतुकमप्रामाण्यं तथात्वमित्यनेन परामृश्यत इति भाष्ये एवं पाशुपतवत्तदुक्तानुपलब्धेरप्रामाण्यमिति भावः । 'नित्यत्वा-

(वाक्यार्थमुक्तावली)
त्पुरुषोद्भवैः । वर्जितं सर्वदोषैश्च कथं नो मानतां व्रजेत्' इत्यनुव्याख्यानानुसारेण भाष्यभावमाह ॥ **वाक्यप्रामाण्यमिति** ॥ प्रमाणानुकूलत्वादित्यनेन नित्ये' इत्यनन्तरं तदनुसारेण च इति पूरितं भवति । यत्फलव्यभिचारि तदप्रामाण्यमित्युत्सर्गः । वेदे नित्यत्वेन स्मृतौ तदनुसारित्वेन निर्दोषत्वावगमादप्रामाण्याभावः सिद्ध इति न पाशुपतादिवत्फलविसंवादेनाप्रामाण्यं कल्प्यम् । उत्सर्गतः प्राप्तस्य बाधने अपवादौचित्यादिति भावः । फलव्यभिचारेऽप्यङ्गीकारवादोऽयम् । तदुक्तरीत्या साङ्गानुष्ठाने तद्व्यभिचाराभावात् प्रकारान्तरेणेति । पूर्वं वैलक्षण्यं नित्यत्व-रूपमित्युक्तम् अधुना संवादनिरपेक्षत्वमिति भावः ।

ननु तज्ज्ञानादेव सिद्धिर्नाम प्रामाण्यस्य किं स्वरूपज्ञानमेव परामर्शरूपं सत् प्रामाण्य-मनुमापयति । उत स्वरूपज्ञान एव तत्प्रामाण्यं भासत इति । नाद्यः धर्मिमात्रज्ञानस्य परामर्शा-रूपत्वात् । न द्वितीयः करणप्रामाण्यस्य ज्ञप्तौ स्वतस्त्वप्राप्तेः । तथात्वे करणानां तु ज्ञप्तौ स्वतस्त्वं नाङ्गीक्रियत इत्यादि सुधाविरोधादित्यतश्चाद्यपक्षमभ्युपगम्य तत्रोक्तदोषमुद्धरति ॥ **न हीति** ॥ नास्माभिः केवलधर्मिज्ञानपरामर्शरूपं सत् प्रामाण्यमनुमापयतीत्युच्यते । किन्तु निर्दोषितया तदनुसारितया च अपौरुषेयत्वाद्यनुमानेन तत्स्वरूपग्रहे वेदोऽयं निर्दोष इति ज्ञानं परामर्शरूपं सत् प्रामाण्यमनुमापयतीति निर्दोषित्वादिप्रतीत्याकारकतज्ज्ञानादेव प्रामाण्य-सिद्ध्यङ्गीकारान्न संवादापेक्षेत्युच्यते । न चैवं निर्दोषत्वमपौरुषेयत्वानुमानेन प्रामाण्यं निर्दोष-त्वानुमानेनेति वक्ष्यमाणस्वतस्त्वभङ्ग इति चेदुत्तरत्र स्वतस्त्ववचनं संवादानपेक्षत्वविवक्षये-त्यनुपपत्तेरिति भावः । अथवा द्वितीयं पक्षमभ्युपगम्य तत्रोक्तदोषमुद्धरति ॥ **न हीति** ॥ वाक्यदोषा हि अबोधकत्वविपरीतबोधकत्वादयः । तद्राहित्येन वेदादिस्वरूपग्रहे प्रामाण्य-स्फुरणादेतादृशं स्वतस्त्वं नानिष्टमिति सर्वथा संवादस्योपयोग इति भावः ।

न च स्वतस्त्वे ग्रन्थान्तरविरोध इति वाच्यम् । तत्र वेदधर्मिणः श्रोत्रग्राह्यत्वं याथार्थ्य-स्यानुमेयत्वमिति परतस्त्वमुक्तम् । इह तु ज्ञानजननशक्तिमत्वस्य विपरीतबोधनशक्त्यभावस्य चातीन्द्रियत्वात् । ज्ञानजननशक्तिमत्वेन विपरीतज्ञानजननशक्त्यभाववत्वेन च वेदवादिग्राहकमेव यथार्थज्ञानजनकत्वलक्षणशक्तिग्राहकम् । तयोः शक्त्योरैक्यादन्यथोत्पत्तौ स्वतस्त्वहानेरिति शक्त्यैक्यमादाय ज्ञप्तौ स्वतस्त्वाङ्गीकारे न विरोधः । तदुक्तं सुधायाम् । तेषामपि ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयग्राह्यत्वमिति ॥ **प्रामाण्यमिति** ॥ करण-प्रामाण्यं फलोपलब्धिसंवादाधीनं किं न स्यादित्यर्थः ।

(वाक्यार्थमुक्तावली)

ननु उपलब्धेः स्वतःप्रामाण्यस्य व्यवस्थापितत्वान्नानवस्थेत्यतस्तदुपलम्भकविवक्षा नानवस्थेह विवक्षितेति भावेन व्याचष्टे ॥ **यदीति** ॥ आद्यप्रामाण्यस्येति वेदादिप्रामाण्यस्यैवोक्तरीत्या ज्ञानादिजनकत्वग्राहकादेव ग्रहणोपपत्तेः । अथवा संवादनिरपेक्षत्वोपपत्तेरित्यर्थः । संवादकप्रामाण्यस्यापि संवादवेद्यत्वमङ्गीकृत्यापि अनवस्थाभावमाशङ्कते ॥ **कदाचिदिति** ॥ **प्रामाण्याध्यवसायं विनेति** । संवादकप्रामाण्याध्यवसायं विना वेदप्रामाण्यनिश्चयायोगेन फलसन्देहेन तदुक्तफलार्थिनस्तत्र प्रवृत्यसम्भवात् प्रवृत्यर्थं संवादकप्रामाण्यजिज्ञासाया आवश्यकत्वादित्यर्थः । प्रवृत्तेः फलनिश्चयाधीनत्वव्याप्तेर्व्यभिचारमाशङ्कते ॥ **फलसन्देहेऽपीति** ॥ **सापीति** ॥ निःशङ्काप्रवृत्तेः फलनिश्चयाधीनत्वमस्माभिरुच्यते । कृष्यादिप्रवृत्तिस्तु न निःशङ्का । पारत्रिकी प्रवृत्तिस्तु न तथा भवितुमर्हतीति भावः । प्रकारान्तरेणानवस्थाभावमाशङ्कते ॥ **यावच्छङ्कमिति** ॥ यावत्पर्यन्तं प्रामाण्यसंशय इत्यर्थः ॥ **कचिदिति** ॥ व्यासङ्गकोटिस्मरणाभावादिनेत्यर्थः ॥ **द्वितीयो निरस्तप्रायेति** ॥ अबुभुत्सितग्राह्ये ज्ञाने गृहीते तत्प्रामाण्यानुपलब्धेः निःशङ्कप्रवृत्यनुपपत्या तदर्थं प्रामाण्येऽवश्यं ज्ञातव्ये तत एव कोटिस्मरणभावेन शङ्कायाः आवश्यकत्वादिति भावः । शङ्कायाः कचिदनुत्पत्यङ्गीकारेऽपि अनवस्था दुर्वारेति भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायमनुस्मृत्य विकल्पमुखेन दूषयति ॥ **अपि चेति** ॥ **स्वतस्त्वेति** ॥ पुरुषेण गोक्षुरकापसरणे गजस्य स्वयमेव गतिवत् संवादकानामप्रामाण्यशङ्कां निवर्तयित्वा प्रामाण्यं ज्ञापयति । एवं च प्रामाण्यज्ञानेऽपि संवादकप्रवृत्यङ्गीकारादप्रामाण्यशङ्कानिवृत्तौ स्वत एव प्रामाण्यनिश्चयोपपत्तिरिति भावः ॥ **संवादकमुभयत्रेति** ॥ न स्वतस्त्वापत्तिः । अप्रामाण्यशङ्काभावस्थले प्रामाण्यग्रहस्यैवाभावाच्छङ्काभावेऽपि संवादकापेक्षा स्यादिति दोषोऽपि नेति भावः । कल्पकमाशङ्कते **बाधकादिति** ॥ रजतज्ञानान्तरमिदं प्रमाणं न वेति शङ्कायां बाधकज्ञानोत्पत्तौ शङ्कानिवृत्यप्रामाण्यग्रहणयोस्तदन्वयव्यतिरेकानुविधायित्वानुभवात् यथा तस्योभयत्र व्यापारः । तथाऽत्राप्यप्रामाण्यशङ्कानिवृत्तिप्रामाण्यज्ञानयोरेतदन्वयव्यतिरेकानुविधानमेव कल्पकमिति भावः ।

बाधकेऽव्यभिचारितान्वयव्यतिरेकाभ्याम् । तथाकल्पनेऽपि नेह तथा सुखादिज्ञाने साक्षिरूपे स्वत एवाप्रामाण्यशङ्काशून्यस्य संवादाभावेऽपि प्रामाण्यज्ञानोदयेन व्यतिरेकव्यभिचारादिति भावेनाह ॥ **अप्रामाण्यमिति** ॥ अप्रामाण्यज्ञप्तौ तु बाधकस्य व्यतिरेकव्यभिचारो नेत्याह ॥

(वाक्यार्थमुक्तावली)
**बाधकेनेति** ॥ निवृत्तप्रामाण्यशङ्कस्य पुरुषस्य बाधकेन विना प्रामाण्यनिश्चयानुदयानुभवा-दित्यन्वयः ॥ **उक्तप्रतिकूलेति** ॥ अन्यथाऽनवस्थितेरित्युक्तेत्यर्थः ।

ननु यदि प्रामाण्यं यदि स्वतो गृह्येत तर्हि संशयो न स्यादित्यनुकूलतर्कसद्भावात्कथं तद्राहित्यमित्यत आह ॥ **संशयस्येति** ॥ जातिभानसामग्र्याः व्यक्तिभानसामग्रीनियतत्वेऽपि दोषवशादिदमिति शुक्तिशकले भासमानेऽपि शुक्तित्वाप्रतीत्या संशयदर्शनादिति भावः । एवं परकीयानुकूलतर्कस्याप्रयोजकत्वमुक्त्वा जरन्नैय्यायिकरीत्या अन्वयव्यभिचारमाह ॥ **स्वतस्त्वे-नेति** ॥ बौद्धचार्वाकादिविप्रतिपत्या अनुमानप्रामाण्येऽपि संशयदर्शनादित्यर्थः । यद्वाऽनु-मानस्यानुकूलतर्काभावमुक्त्वा व्यभिचारमाह ॥ **स्वतस्त्वेनेति** ॥ भागासिद्धिमप्याह ॥ **अनभ्यासेति** ॥ प्रत्यग्रोत्पन्नसुखादिस्थल इत्यर्थः । श्रुतिं चाहेत्यर्थः । अत्र चक्षुरादीनामिति साक्षात्स्वविषयविषयकमानान्तरसंवादो हि सजातीयसंवादः । अत्र वेदविषये ब्रह्मणि मानान्तर-प्रवृत्युक्त्या तदभावः उक्त इति भावः । अनेन तथात्वं संवादानपेक्षत्वरूपं स्वतस्त्वं केवलं विपक्षे बाधकयुक्त्या शब्दाच्चेति योजितं भवति ॥ **अनेनेति** ॥ तथात्वमित्यस्याप्रामाण्यमिति पूर्वं व्याख्याय भाल्लवेयश्रुतेश्च नित्यत्वं च शब्दादेवेत्यनेन तथात्वमित्यस्य न तथात्वमिति नञा तथात्वं च शब्दादेवेति शब्दपदेनेत्युभयत्र सम्बध्यत इत्युक्तं भवतीत्यर्थः । ततश्चायं सूत्रार्थः । अस्य श्रुत्यादेस्तथात्वं शैवादिस्मृतिवत्फलानुपलब्ध्याऽप्रामाण्यं न । कुतः विलक्षणत्वाद-पौरुषेयत्वादनुसारित्वाख्यवैलक्षण्यात् । संवादानपेक्षत्वरूपं तु न चक्षुर्न श्रोत्रमित्यादिशब्दात् विपक्षे बाधकतर्काश्चेति । 'तस्मै नूनमभिद्यवे वाचा विरूपनित्यया । वृष्ण्ये चोदस्व सुष्टुतिम्' इति, ऋचं व्याचष्टे ॥ **तस्मात् इति** ॥ **स्वात्मानं प्रतीति** ॥ अस्य मन्त्रस्य विरूपो ऋषिरित्यनुक्रमिणोक्तेरिति भावः । स्वस्य आत्मान्तर्यामी तं प्रतीति वा सुष्टुतिं शोभनां स्तुतिं चोदस्व प्रेरयस्वेति विरूपस्य ऋषेरन्तर्यामिविषयमिति तत्त्वप्रदीपोक्तेरिति भावः । विष्णुतत्त्व-निर्णयटीकायां श्रीमत्पद्मनाभतीर्थभट्टारकविरचितायां न्यायरत्नावल्यां धर्मेण विरूपं ऋषिं प्रत्युच्यत इति वचनाद्विरोध इति चेन्न । उभयऋषिकत्वोपपत्तेः । प्रथमं धर्मदृष्टस्य विरूपेण दर्शनं तदा स्वात्मसम्बोधनं पुनर्धर्मोपदेश इत्युपपत्तेः । अत एव तत्त्वनिर्णयटीकायां विरूपमृषिं प्रत्युच्यत इति सामान्येनोक्तम् ॥ **अनादिनिधनतयेति** ॥ अन्यथा पुनरुक्तिः स्यादिति भावः ॥ **श्रुत्युपपादनमिति** ॥ स्वतः प्रामाण्यनित्यत्वयोः सिद्धौ वेदप्रामाण्यसिद्धिः तत्सिद्धौ च वेदेन

(वाक्यार्थमुक्तावली)
तत्सिद्धिरित्यन्योन्याश्रयप्रसङ्गादिति भावः ॥ **आपादनमात्रस्येति** ॥ तथा च वेदप्रामाण्यस्य पूर्वपक्षिणाप्यङ्गीकृतत्वान्नान्योन्याश्रयत्वमिति भावः ।

नन्वेतत्पूर्वग्रन्थविरुद्धम् । तत्र वेदादिप्रामाण्यस्य युक्तिपरिहारादिति सङ्गतिवाक्ये प्रमाणं न वेति सन्देह इति वाक्येन प्रमाणमिति पूर्वः पक्ष इति वाक्ये वेदाद्येकदेशस्याप्रामाण्ये अन्यदेश-प्रमाणतायामनाश्वासादित्युपसंहारवाक्ये चाप्रामाण्येन पूर्वपक्षप्रतीतेरिति चेन्न । युक्तिविरोध-परिहारादित्यस्य पाशुपतादेः फलव्यभिचारेणाप्रामाण्ये वेदस्यापि तत्प्रसङ्ग इति तर्कविरोध-परिहारादिति प्रमाणं न वेत्यस्य प्रमाणं वा न वेति प्रसज्येत वेति न प्रमाणमित्यस्य न प्रमाणं प्रसज्येत इति वेदाद्येकदेशस्याप्रामाण्यप्रसक्तावन्यदेशस्यापि तथात्वप्रसङ्गादिति तद्वाक्यार्थाङ्गी-कारादिति ज्ञेयम् ॥ **युक्तेश्चेति** ॥ देवताधिकरणभाष्ये नित्यत्वे अनवस्थितेरित्यत्र प्रामाण्य-स्वतस्त्वे च युक्तेरुपन्यासात् युक्तिसिद्धार्थे श्रुत्युपन्यासान्नान्योन्याश्रयत्वमिति भावः । यद्वा वेदप्रामाण्यवादिनाप्यत्र पूर्वपक्षत्वे तं प्रत्याह ॥ **युक्तेश्चेति** ॥ तथा च तं प्रति नित्यत्वादिबोधन-युक्त्यैवेति नान्योन्याश्रयत्वम् । अत एव पूर्वग्रन्थस्याप्रामाण्यवादिविवक्षया प्रवृत्तत्वादापादन-मात्रस्येत्यस्य तत्प्रामाण्याभ्युपगमगन्तृविवक्षया प्रवृत्तत्वादिति वाऽविरोध इति ज्ञेयम् ।

## तत्त्वसुबोधिनी

एतदधिकरणोपाधिमाह ॥ **युक्तिविरोधपरिहारादिति** ॥ अनेनात्र पूर्वपक्षसिद्धान्तन्यायेन पूर्वपक्षप्रवृत्तेः, अनन्तरसङ्गतिरिति सूचितं भवति । अस्त्वविद्यमानाभिधायकत्वं, ततः किमित्यत आह ॥ **अविद्यमानेति** ॥ अविद्यमानाभिधायकत्वेऽपि प्रामाण्यमङ्गीक्रियतामित्यतः आह ॥ **अविद्यमानाभिधात्रीणामिति** ॥ तथापि श्रुत्यादिकमेव प्रमाणं न स्मृत्यादिकमत आह ॥ **न हीति** ॥ नैवमित्यादिभाष्यस्थस्य न तथात्वमिति सौत्रप्रतिज्ञाव्याख्यानरूपत्वं दर्शयति ॥ **अस्येति** ॥ अप्रामाण्यप्रयोजकदोषाभावान्नाप्रामाण्यं इत्यत आह ॥ **वाक्येति** ॥ तथापि स्मृतेः कथं प्रामाण्यमित्यत आह ॥ **प्रमाणानुकूलत्वादिति** ॥ वेदानुसारित्वादित्यर्थः । ननु वेद-प्रामाण्यं संवादाधीनं चेत् न, तर्हि कस्मात्तत्सिद्ध्यतीत्यतः आह ॥ **वेदादिप्रामाण्यस्येति** ॥ ननु यथार्थज्ञानजनकत्वरूपवेदप्रामाण्यस्य वेदज्ञानादेव सिद्धिः । कथमित्यत आह ॥ **न हीति** ॥ अत्र हि करणानां ज्ञप्तौ परतस्त्वमित्येकः पक्षः । स्वतस्त्वमित्यपरः । तत्राद्ये पक्षे निर्दोषत्व-

(तत्त्वसुबोधिनी)

तदनुसारित्वाभ्यामेव यथार्थज्ञानजनकत्वरूपप्रामाण्यानुमानं, न संवादेनेति भावः । द्वितीये तु निर्दोषवेदतदनुसारिस्मृत्यादिग्रहे यथार्थज्ञानजनकत्वरूपप्रामाण्योपलब्धौ संवादापेक्षा नास्ति इत्यर्थः । ज्ञानजनकत्वं येन गम्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयत्वस्य ग्राह्यत्वमित्ये- तदेव स्वतस्त्वमिति भावः ॥ **कदाचिदिति** ॥ जिज्ञासा च न सर्वत्रेति नानवस्था इति भावः । सन्देहादपि प्रवृत्तेः दृष्टत्वेन न प्रामाण्यनिश्चयस्य प्रवृत्तिकारणत्वमित्याशङ्कते **फलेति** ॥ **सापीति** ॥ तथा च प्रामाण्यावधारणस्य निःशङ्कप्रवृत्तिं प्रति हेतुत्वेन न व्यभिचार इति भावः ।

**क्वचिन्नोत्पद्यत एवेति** ॥ व्यासङ्गकोटिस्मरणाभावादिना इति शेषः ॥ **द्वितीयो निरस्तप्रायः इति** ॥ ज्ञानस्य बुभुत्सितग्राह्यतया तीव्रसंवेदनत्वेन तद्धानमावश्यकं ज्ञाते च तस्मिन् प्रामाण्यानुपलब्धौ निःशङ्कप्रवृत्तेः प्रामाण्यावधारणसाध्यत्वेन तदर्थं प्रामाण्यरूपविशेष- जिज्ञासा तत एव व्यासङ्गकोटिस्मरणाभावाद्यसम्भवेन शङ्कायाः अवश्यकत्वादिति भावः ॥ **आद्य इति** ॥ संवादस्याप्रामाण्यशङ्कामात्रनिवर्तकत्वेन प्रामाण्यज्ञाने ज्ञानग्राहकातिरिक्तानपेक्ष- णादिति भावः ॥ **शङ्काभावेऽपीति** ॥ संवादस्य तत्र कारणत्वादिति भावः ॥ **उभयत्रेति** ॥ अप्रामाण्यशङ्कानिवर्तने प्रामाण्यज्ञाने ज्ञानग्राहकातिरिक्तानपेक्षणादिति भावः (वेत्यर्थः) ॥ **बाधकवदिति** ॥ यथा बाधकस्य प्रामाण्यशङ्कानिरासाप्रामाण्यज्ञानयोः व्यापारः तथा संवादस्य अप्रामाण्यशङ्कानिरासप्रामाण्यज्ञानयोः व्यापारोऽस्त्वित्यर्थः । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येण परिहरति ॥ **अप्रामाण्यशङ्काशून्यस्येति** ॥ मुखादिप्रज्ञाने प्रामाण्यशङ्काशून्यस्य संवादाभावेऽपि प्रामाण्यस्यानुभूयमानत्वेन व्यतिरेकव्यभिचारान्न संवादकस्य प्रामाण्यज्ञानव्यापारः इत्यर्थः ॥ **बाधकेन विना इति** ॥ तथा च क्वचिदपि निवृत्तप्रामाण्यशङ्काया अप्रामाण्यबुद्ध्युदयो नानुभूयते प्रत्युत तदनुदय एवानुभूयते इत्यन्यथा सिद्धान्वयव्यतिरेकाभ्यां बाधकस्य अप्रामाण्यज्ञापने व्यापारः इति भावः ॥ **उक्तप्रतिकूलतर्केति** ॥ अनवस्थालक्षणप्रतिकूलतर्कपराहतमित्यर्थः ।

ननु प्रामाण्यस्य स्वतस्त्वे संशयानुपपत्तिरूपबाधकस्य सत्वात् कथमनुकूलतर्कशून्यमित्यत आह ॥ **संशयस्येति** ॥ एकदेशिमतेन आह ॥ **स्वतस्त्वेनेति** ॥ **अनुमानप्रामाण्येऽपि संशयदर्शनाच्चेति** ॥ बौद्धचार्वाकादिविप्रतिपत्त्यानुमानाप्रामाण्येऽपि संशयदर्शनाच्च इत्यर्थः ॥ **अनभ्यासदशायामपीति** ॥ प्रसङ्गायत्तसुखादिस्थले इत्यर्थः । तथा च भागासिद्धो हेतुरिति भावः ॥ **अनेनेति** ॥ नैवं तदुक्तानुपलब्धेः अप्रामाण्यमिति व्याख्याय नित्यत्वरूपविलक्षणत्वं

(तत्त्वसुबोधिनी)

च शब्दादिति व्याख्यानेनेत्यर्थः । अभिद्यव इत्यस्यार्थः **सर्वतः प्रकाशयेति** ॥ वृष्णे इत्यस्यार्थः **अतिसमर्थयेति** ॥ **अनादिनिधना इति** ॥ अन्यथा पुनरुक्तिः स्यादिति भावः ॥ **श्रुत्युपादानमिति** ॥ तथा च स्वतः प्रामाण्यनित्यत्वयोः सिद्धौ वेदप्रामाण्यसिद्धिः । तत्सिद्धौ च प्रमाणभूतवेदेन तत्सिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥ **आपादनमात्रस्य क्रियमाणत्वादिति** ॥ अन्यहेतुकस्याप्रामाण्यस्याभावं स्वीकृत्य संवादे हेतुकप्रामाण्यशङ्कामात्रस्य क्रियमाणत्वान्नान्योन्याश्रयः इत्यर्थः ॥ **श्रुतेश्चेति** ॥ भाष्येऽनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्येति । देवताधिकरणे वेदनित्यत्वेऽन्यथानवस्थितेरित्यत्र प्रामाण्यस्वतस्त्वे(च) युक्तेश्चोपन्यस्तत्वाच्चेत्यर्थः। तथा च युक्तिसिद्धेऽर्थे श्रुतेः संवादित्वेनोपन्यासान्नान्योन्याश्रय इति भावः । यद्वा वेदाप्रामाण्यवादिनोऽत्र पूर्वपक्षित्वे तं प्रत्याह ॥ **युक्तेश्चेति** ॥ तथा च तं प्रति उक्तयुक्त्यैव वेदनित्यत्वादिप्रसाधनं न श्रुत्येति नान्योन्याश्रयः इति भावः ।

## वाक्यार्थविवरणम्

न विलक्षणाधिकरणे ॥ **जिज्ञासायामेवेति** ॥ न सार्वत्रिकीति भावः ॥ **यावच्छङ्कमिति** ॥ शङ्काऽपि न सार्वत्रिकीत्याशयः ॥ **उभयत्रापीति** ॥ अप्रामाण्यशङ्कानिवर्तने प्रामाण्यज्ञापने चेत्यर्थः । कल्पकमाशङ्कते ॥ **बाधकवदिति** ॥ विसंवादवदित्यर्थः ॥ **उभयत्रेति** ॥ प्रामाण्यशङ्कानिवर्तनेऽप्रामाण्यज्ञप्तौ चेत्यर्थः । **प्रामाण्यज्ञाने** सुखादिज्ञाननिष्ठप्रामाण्यज्ञाने । तथा चान्वयव्यतिरेकाभावादुभयत्र व्यापारोऽसिद्ध इति भावः । तर्हि प्रामाण्यशङ्काशून्यस्य अप्रामाण्यज्ञाने विसंवादनिरपेक्षत्वादप्रामाण्यस्यापि स्वतस्त्वं किं न स्यादिति चेत्तत्राह ॥ **बाधकेन विनेति** ॥ बुद्ध्यनुदयस्य बुद्ध्यनुत्पत्तेरनुभवसिद्धत्वादित्यर्थः । तथा च बाधकवदित्युक्तं कल्पकमसिद्धमिति हृदयम् । प्रामाण्योत्पत्त्यपवादको दोषः । तद्‌ज्ञप्त्यपवादको विसंवादो बाधकमित्युच्यत इति द्रष्टव्यम् । स्वतस्त्वे ज्ञानग्रहणसमय एव प्रामाण्यस्य निश्चितत्वेन संशयो न स्यादिति हेतूच्छित्तिरेव बाधिकेत्यत आह ॥ **संशयस्येति** ॥ दोषात् अप्रामाण्यशङ्कारूपमानसदोषात् । तथा च ज्ञाने गृहीतेऽपि प्रामाण्यमगृहीतमेव । न च स्वतस्त्वभङ्गः । अप्रामाण्यशङ्काशून्यज्ञानग्राहकसामग्रीग्राह्यत्वस्यैव स्वतस्त्वेन तदा तदनपायादित्याशयात् ॥ **स्वतस्त्वेनेति** ॥ अयं भावः । अनुमितिप्रामाण्यं स्वत एव । तथा हि । परतस्त्वे साशयिकत्वं हि युक्तिः । लिङ्गोपहितलिङ्गिकभानपक्षे धूमवान् पर्वतोऽग्निमानिति ह्यनुमित्याकारः । तत्र धूमवान् पर्वतोऽग्निमानिति

(वाक्यार्थविवरणम्)
ज्ञानं प्रमाणं न वेति संशयो न स्यात् । कुतः । वह्निमति वह्निप्रकारकज्ञानत्वं हि प्रामाण्यम् । न ह्येतत्प्रामाण्ये संशयो युक्तः । एतद्व्याप्यस्य धूमवति वह्निप्रकारकत्वस्य गृहीतत्वात् । न हि लोके पुरुषत्वव्याप्यशिरःपाण्यादिदर्शने पुरुषत्वे कस्यचित् संशयः । तस्मादनुमितिप्रामाण्यं स्वत एव । एवं गोसादृश्यवानयं गवयशब्दवाच्य इति ज्ञानं प्रमाणं न वेति संशयो न युक्तः । वाच्यत्ववति वाच्यत्वप्रकारकत्वज्ञानत्वरूपप्रामाण्यव्याप्यस्य सादृश्यवति वाच्यत्वरूपधर्मस्य गृहीतत्वेन संशयायोगादुपमितिप्रामाण्यमपि स्वत एवेत्याहुः । एवं चानुमित्युपमितिप्रामाण्ये तद्ग्राहकप्रामाण्यसंशयाहितसंशयदर्शनेन सांशयिकहेतुसद्भावेऽपि परतस्त्वाभावाद्व्यभिचार इत्यर्थः । उपलक्षणमेतत् । धर्मिज्ञानानुव्यवसायौ च ग्राह्यौ । स्वतस्त्वेनाभ्युपगतानुमित्युपमिति धर्मिप्रत्यक्षानुव्यवसायेष्विति सुधोक्तेः । सर्वं ज्ञानं धर्मिण्यभ्रान्तमित्यङ्गीकारेण धर्मिज्ञानप्रामाण्ये कदापि संशयाभावेन तत्प्रामाण्य स्वत एव । तथानुव्यवसायप्रामाण्यमपि । न ह्यजानन् जानामीति प्रत्येति न वा घटे ज्ञाते पटं जानामीति । अतोऽनुव्यवसायत्वस्य प्रामाण्यनियतत्वात् । तत्प्रामाण्यमपि स्वत एवेत्यङ्गीकृतम् । तत्र व्यभिचारः । निरधिष्ठानवादिशून्यवाद्युत्प्रेक्षितप्रमाणाभासदर्शनेन धर्मिज्ञानेऽपि प्रामाण्यसंशयदर्शनात् । एवमनुव्यवसायस्यापि त्वमन्ते मानसत्वेनाप्रामाण्यादौ प्रामाण्यग्राहिणो भ्रमत्वसम्भवेन संशयास्पदत्वादिति । अनुमित्यादिप्रामाण्ये स्वतस्त्वेनाभ्युपगते आदितः संशय इत्युक्तम् । वस्तुतस्त्वत्र सर्वत्रापि स्वारसिक एव संशय इति सुधाटीकायां गुरुचरणैः । यद्वा स्वारगिक एवात्र सर्वत्र संशयः । संशयकारणस्य ज्ञानत्वरूपसाधारणधर्मदर्शनादेः सम्भवादित्यादिनोपपादितमनुसन्धेयम् । अत्रानुमित्युपमितिप्रामाण्यस्वतस्त्वोपपादनं कृतम् । व्यापकवति व्यापकप्रकारकज्ञानत्वरूपप्रामाण्यव्याप्यस्य व्याप्यवति व्यापकप्रकारकज्ञानत्वस्य गृहीतत्वान्न संशयो युक्त इति परतस्त्वसाधकसांशयिकयुक्त्यभावादेवमुपमानेऽपीति तत्तुच्छम् । अत्र प्रष्टव्यम् । व्याप्यदर्शनमात्रस्यैव संशयविरोधित्वम्, उत व्याप्यत्वप्रकारकव्याप्यदर्शनमात्रस्य । नाद्यः । तैलं पृथिवी न वेति संशयो न स्यात् । तत्रापि वस्तुगत्या पृथिवीत्वव्याप्यस्य तैलत्वादेर्ग्रहणात् । अतो द्वितीयोऽङ्गीकार्यः । वस्तुगत्या प्रामाण्यव्याप्यस्य हेतुमति साध्यप्रकारकत्वस्य गृहीतत्वेऽपि तत्र प्रामाण्यव्याप्यत्वं न गृहीतमेव । न हि करादिमत्त्वं पुरुषत्वव्याप्यमितिवदत्र व्याप्यत्वं प्रकारीभूय भासत इति । अत एतां युक्तिं विहाय पुनर्यया कयाचिद्युक्त्या तत्प्रामाण्यस्य स्वतस्त्वमङ्गीक्रियताम् । तथापि तत्र संशयदर्शनात् व्यभिचार इत्याशयात् । अत एव त्वदभ्युपगतेत्युक्तम् ॥ **उभयत इति** ॥ विलक्षणत्वान्नित्यत्वात्तथात्वं न तद्व्याप्तं नित्यत्वं च । शब्दादेवेति विलक्षणत्वात् शब्दादिति उभयत इत्यर्थः ।

## वाक्यार्थमञ्जरी

अप्रयोजकत्वमाशङ्क्याह ॥ **अविद्यमानाभिधात्रीणामिति** ॥ नन्वेवमेकदेशाप्रामाण्येऽपि जगत्कारणत्वप्रतिपादकभागप्रामाण्यं किं न स्यादित्यत आह ॥ **एवं चेति** ॥ एतद्दृष्टान्तेन तस्याप्यप्रामाण्यसाधनसौलभ्यादिति भावः ॥ **ॐ न विलक्षणत्वादस्य तथात्वं च शब्दात् ॐ** ॥ अस्य श्रुतिपञ्चरात्रस्मृतिरूपशास्त्रस्य तथात्वम् । पाशुपतादिवदप्रामाण्यं नास्ति । श्रुतेरपौरुषेयत्वेन स्मृतेस्तदनुसारित्वेन ततो विलक्षणत्वात् । तथात्वं च श्रुतेरपौरुषेयत्वम् । स्मृतेस्तदनुसारित्वं चशब्दात् । वाचा विरूप' इति श्रुतेः 'भारतं पञ्चरात्रम्' इति स्मृतेश्च सिद्धमित्यर्थः । नित्ये अपौरुषेये । ततः अदोषत्वात् ॥ **वेदादिप्रामाण्यस्येति** ॥ यथार्थज्ञानजनकरूपत्वस्येत्यर्थः । तज्ज्ञानात् वेदादिज्ञानात् । कुत इत्यत आह ॥ **न हि निर्दोषेति** ॥ निर्दोषश्रुतिरूपग्रहे तदनुसारिस्मृतिस्वरूपग्रहे चेत्यर्थः । श्रुतिस्मृत्योः ज्ञानजनकत्वे तावन्न विवादः । निर्दोषत्वतदनुसारित्वग्रहे यथार्थत्वशङ्कानवकाशत्वेन यथार्थज्ञानजनकत्वरूपप्रामाण्यग्रहे न किञ्चिदपेक्षेति भावः । तथात्वं स्वतः प्रामाण्यम् । स्वत एव संवादस्वरूपग्राहकेणैव । एवं संवादान्तरग्राह्यं प्रामाण्यम् ॥ **नानवस्थेति** ॥ यत्र जिज्ञासाविरहस्तत्र संवादानपेक्षणादिति भावः ॥ **ध्रौव्यादिति** ॥ तत्र संवादापेक्षायामनवस्थैवेति भावः ॥ **फलसन्देहेति** ॥ फलज्ञानप्रामाण्यसन्देह इत्यर्थः । तथा चात्र व्यभिचारान्न प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वमिति भावः ॥ **सापि न निःशङ्केति** ॥ तथा च प्रामाण्यनिश्चयस्य निःशङ्काप्रवृत्तिं प्रत्येव हेतुत्वोक्तेर्न व्यभिचार इति भावः । यावच्छङ्कमित्यव्ययं सर्वत्र संवादकप्रमाणेषु ॥ **क्वचिन्नोत्पद्यत इति** ॥ व्यासङ्गकोटिस्मरणाभावादि नेति शेषः ॥ **कथमिति** ॥ शङ्कानिवृत्त्यर्थं संवादपरम्पराया आश्रयणीयत्वादिति भावः ॥ **द्वितीयो निरस्तप्राय इति** ॥ ज्ञानस्य बुभुत्सितग्राह्यतया ज्ञाते च तस्मिन्नप्रामाण्यानुपलब्धौ निःशङ्कप्रवृत्तेः तस्याश्च प्रामाण्याध्यवसायाधीनत्वेन तदर्थं विशेषप्रमाणरूपजिज्ञासाध्रौव्ये तत एव व्यासङ्गकोटिस्मरणाभावाद्यसम्भवेन शङ्काया आवश्यकत्वादिति भावः ॥ **स्वतस्त्वप्राप्तिरिति** ॥ संवादेनाप्रामाण्यशङ्कानिवृत्तौ स्वरूपग्राहकेणैव प्रामाण्यनिश्चयादिति भावः ॥ **शङ्काभावेऽपीति** ॥ अप्रामाण्यशङ्काशून्यसुखादिज्ञानप्रामाण्यज्ञानेऽपीत्यर्थः ॥ **संवादकमुभयत्रापीति** ॥ अप्रामाण्य शङ्कानिरसने प्रामाण्यग्रहणे चेत्यर्थः । कुत इत्यत आह ॥ **कल्पकेति** ॥ कल्पकं शङ्कते ॥ **बाधकवदिति** ॥ विसंवादवदित्यर्थः । तथा च तत्र यथाविसंवादकस्य प्रामाण्यशङ्कानिरासा-

(वाक्यार्थमञ्जरी)

प्रामाण्यज्ञापनयोर्व्यापारस्तथात्र किं न स्यादित्यर्थः । तथा च तद्वदेवात्राप्यन्वयव्यतिरेकयोः प्रयोजकत्वमिति भावः । वैषम्यमाह ॥ **अप्रामाण्यशङ्काशून्यस्येति** ॥ सुखादिज्ञानेऽप्रामाण्य-शङ्काशून्यस्य संवादाभावेऽपि प्रामाण्यस्यानुभूयमानत्वेन व्यतिरेकव्यभिचारान्न संवादस्य प्रामाण्य-ज्ञापने व्यापार इत्यर्थः ॥ **बाधकेन विनेति** ॥ तथा चानन्यथासिद्धान्वयव्यतिरेकाभ्यां बाधकस्याप्रामाण्यज्ञापने व्यापार इति भावः । परतः संवादतः । अभ्यासदशापन्नज्ञानप्रामाण्य सिद्धिवारणायाभ्यासदशायामित्युक्तम् ॥ **प्रतिकूलतर्केति** ॥ अनवस्थारूपेत्यर्थः । स्वतस्त्वे स्वरूपग्राहकेणैव प्रामाण्यनिश्चयेन तत्संशयो न स्यादिति बाधकसत्वात्कथमनुकूलतर्काभाव इत्यत आह ॥ **संशयस्येति** ॥ **दोषात्** प्रामाण्यशङ्कारूपात् । तथा च तर्कस्यान्यथासिद्धिरिति भावः । प्राचीनतार्किकमतावष्टम्भेनाह ॥ **स्वतस्त्वेनेति** ॥ बौद्धचार्वाकादिविप्रतिपत्त्या अनुमानादिप्रामाण्येऽपि संशयदर्शनादित्यर्थः । यद्वा लिङ्गादिज्ञानप्रामाण्यसंशयेन तज्जन्यानु-मित्यादिप्रामाण्यसंशयदर्शनादित्यर्थः । यद्वा लिङ्गोपहितलैङ्गिकभानपक्षे अनुमितिप्रामाण्यस्य सादृशाद्यतिदेशवाक्यार्थोपहितवाच्यत्वभानपक्षे उपमितिप्रामाण्यस्य स्वतस्त्वाङ्गीकारात्तयोः प्रामाण्ययोः स्वग्राहकज्ञानप्रामाण्यसंशयाहितसंशयदर्शनादित्यर्थः । तथा चानुभवसिद्धतत्संशयो-पपत्तिवदत्रापि तदुपपत्तिरिति भावः । भागासिद्धिं चाह ॥ **अनभ्यासेति** ॥ प्रत्यग्रोत्पन्न-सुखादिस्थल इत्यर्थः । नन्वथापि प्रामाण्यं परतो ज्ञायते प्रामाण्याप्रामाण्यान्यतरमात्रकोटिक-संशयकोटित्वादप्रामाण्यवदित्याद्यनुमानेन परतस्त्वसिद्धिरिति चेन्न । अस्यापि प्रतिकूलतर्क-पराहत्याद्युक्तदोषलङ्घनाजङ्घालुत्वादित्याशयेनाह ॥ **अलमिति** ॥ प्रकृतोपयोगाप्रतीतेराह ॥ **अत्रेति** ॥ **अनेनेति** ॥ मैवं तदुक्तानुपलब्धेरप्रामाण्यमिति व्याख्याय नित्यत्वरूपविलक्षणत्वं च शब्दादेवेति व्याख्यानेनेत्यर्थः ॥ **उभयत इति** ॥ नैवशब्दादित्यनेन चेत्यर्थः । तस्मै नूनमभि-द्यवे, वाचा विरूप नित्यया वृष्णे चोदस्व सुष्टुतिं इति श्रुतिं व्याचष्टे ॥ **तस्मा इति** ॥ अभिद्यव इत्यस्यार्थः **सर्वतः प्रकाशायेति** ॥ वृष्णे इत्यस्य **अतिसमर्थायेति** ॥ **स्वात्मानमिति** ॥ अनेन विरूपवाक्यमेवेदमिति सूचयति ॥ **अनादिनिधनतयेति** ॥ अन्यथा पौनरुक्त्यमिति भावः । **साक्षितया** प्रामाण्यतया ॥ **श्रुत्युपादनमिति** ॥ स्वतः प्रामाण्यनित्यत्वयोः सिद्धौ वेदप्रामाण्य-सिद्धिः तत्सिद्धौ च प्रमाणभूतवेदेन तत्सिद्धिरित्यन्योन्याश्रयप्रसङ्गादिति भावः ॥ **अप्रामाण्येति** ॥ पाशुपतादेरङ्गीकृते ॥ **आपादनमात्रस्य क्रियमाणत्वादिति** ॥ तथा च वेदप्रामाण्यस्य एतदधि-करणपूर्वपक्षिणाङ्गीकृतत्वान्नान्योन्याश्रय इत्यर्थः । प्रकारान्तरेण अन्योन्याश्रयं परिहरति

(वाक्यार्थमञ्जरी)
॥ युक्तेश्चेति ॥ भाष्ये आप्तनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्येति दैवतानये वेदनित्यत्वे अन्यथानवस्थितेरित्यत्र प्रामाण्यस्य स्वतस्त्वे च युक्तेश्चोपन्यस्तत्वादित्यर्थः । तथा च युक्ति-सिद्धार्थे श्रुतेः संवादित्वेनोपन्यासान्नान्योन्याश्रय इति भावः ।

## सूत्रभाष्यम्

॥ ॐ दृश्यते तु ॐ ॥ ५ ॥

अधिकारिणां फलम् । भविष्यत्पुराणे च–

'ऋग्यजुःसामाथर्वाश्च मूलरामायणं तथा ।
भारतं पञ्चरात्रं च वेदा इत्येव शब्दिताः ॥
पुराणानि च यानीह वैष्णवानि विदो विदुः ।
स्वतः प्रामाण्यमेतेषां नात्र किञ्चिद्विचार्यते ॥
यत्तेषूक्तं न दृश्येत पूर्वकर्मात्र कारणम् ।
नाप्रामाण्यं भवेत्तेषां दृश्यते ह्यधिकारतः ॥
इतः प्रामाण्यमन्येषां न स्वतस्तु कथञ्चन ।
अदृश्योक्तौ ततस्तेषामप्रामाण्यं न संशय' इति ॥

## सत्तर्कदीपावली

अधिकारसम्पत्तौ दृष्टार्थस्य कर्मणो वैदिकस्य फलदर्शनात् । क्वचित् फलादर्शनं प्रतिबन्धक-कर्मनिबन्धनमेव । नान्यथा । ऋग्यजुःसामादीनां स्वत एव प्रामाण्यनियमः । यत्र तु तदनुसारित्वं तत्रान्यागमानामपि प्रामाण्यात् क्वचित्तदुक्तैहिककर्मफलदर्शनं युज्यते । तदाह ॥ दृश्यत इत्यादिना ॥

## तत्त्वप्रकाशिका

यदुदितं नित्यत्वेन निर्दोषस्य वेदस्य नाप्रामाण्यमिति न तद्युक्तम् । तदुक्तफलस्यादर्शनात् । यावता तदेवाप्रामाण्यं न च प्रामाण्यस्य स्वतस्त्वेन संवादानपेक्षितेत्युक्तमिति वाच्यम् । स्वतः-प्रामाण्यवादिनाऽपि दोषदर्शनेऽप्रामाण्यस्यावश्यं ग्राह्यत्वात् । अयमेव हि दोषो यदुक्तस्यादर्शन-मित्याशङ्कां परिहरत्सूत्रमुपन्यस्य तच्छेषं पूरयति ॥ दृश्यते त्विति ॥ न फलादर्शनेन श्रुत्यादेरप्रामाण्यं

(तत्त्वप्रकाशिका)

वक्तव्यम् । फलादर्शनस्य कर्तुरयोग्यतयोपपत्तेः । तत्कुतः कल्प्यते । योग्यानां फलदर्शनात् । न च शङ्कनीयं पाशुपतादिस्मृत्युक्तफलव्यभिचारस्यापि कर्तुरयोग्यतानिबन्धनतोपपत्तेर्नाप्रामाण्यं योग्यानां फलदर्शनादिति । कल्पकाभावात् । वेदस्य तु निर्दोषतया स्वतःप्रामाण्ये सिद्धेऽवश्यं व्यभिचारस्य गत्यन्तरं कल्पनीयम् । पाशुपतादीनां तु फलदर्शनमन्तरेण प्रामाण्यसाधकाभावात् । तस्यापि स्वतः प्रामाण्यमिति चेत् । सत्यम् । निर्दोषत्वानिर्णये फलविसंवाददर्शनेनाप्रामाण्यप्राप्तेरेवोक्तत्वादिति भावः । तुशब्दः कर्तृविशेषद्योतकः । अधिकारित्वं नाम तत्फलयोग्यत्वं कर्मवैगुण्यप्रतिबन्धादिशून्यत्वं वा । आधिकरणार्थे स्मृतिं चाह ॥ **भविष्यत्पुराणे चेति** ॥ स्वतः फलसंवादादिरहितनिर्दोषतयैव । पूर्वकर्मान्योपलक्षणम् । इतः फलदर्शनतः । अदृश्योक्तौ अनुपलभ्यमानवचने । अतो वेदादिप्रामाण्यस्य युक्तिविरुद्धत्वाभावायुक्तं तेन हरेर्जगत्कारणत्वमिति सिद्धम् ।

## गुर्वर्थदीपिका

निर्दोषत्वानिर्णय इत्यत्रायमभिसन्धिः टीकाकारस्य । नित्यतया भ्रमप्रमादकरणापाटव विप्रलिप्सादिवक्तृदोषनिबन्धनविपरीतबोधकत्वाख्यशब्ददोषरहितानां वाक्यत्वादेवार्थबोधकानां च वेदानां फलसंवादमनपेक्ष्यैव प्रामाण्यसिद्धेः । क्वापि तदुक्तफलविसंवादस्य कृष्यादाविवाङ्गवैकल्यनिबन्धनतैव वक्तव्या न त्वप्रामाण्यम् । कारणाभावेऽपि कार्यस्य प्रेक्षावता वक्तुमशक्यत्वात् । पशुपत्यादिभिः कृतत्वेनाङ्गीकृतपाशुपताद्यागमानां तु बुद्धाद्यागमवद्विप्रलिप्सामूलत्वेन प्रामाण्यस्यैवासिद्धौ विप्रलम्भकवाक्येष्विव दृष्टफलविसंवादस्य वाक्याप्रामाण्यमूलकत्वेनैव सम्भवेऽङ्गवैकल्यमूलकत्वकल्पकाभावात् । बहुशः फलविसंवादे च क्वचित्फलसंवादस्य बाष्पारोपितधूमज्ञानात् क्वाचित्कवह्निप्रमितेरिव यादृच्छिकत्वेनैवोपपत्तौ न तत्प्रामाण्यसाधकत्वमिति ।

## भावबोधः

**योग्यानामिति** ॥ फले इति शेषः । तत्तत्कर्मवैगुण्यादिप्रतिबन्धकशून्यानां चेति ग्राह्यम् । प्रतिबन्धकसत्त्वे योग्यानामपि फलादर्शनात् । अत एव भाष्यस्थाधिकारित्वनिर्वचनमेव करिष्यते । तुशब्दः कर्तृविशेषद्योतक इति । दृश्यते ह्यधिकारत इति स्मृत्यनुसारेण भाष्ये 'तु' शब्दार्थतयाऽधिकारिणामित्युक्तम् । तथा चाधिकारिणामित्येतन्नोत्सूत्रितमिति भावः । **अन्योपलक्षणमिति** ॥ अयोग्यत्वोपलक्षणमित्यर्थः । अत्राद्ये स्वपक्षसाधनम् । द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## भावदीपः

सूत्रे फलदृष्ट्युक्तिर्न प्रामाण्यज्ञप्त्यै स्वतस्त्वभङ्गापत्तेः । किन्तु कचिददृष्टेर्गतिं वक्तुं स्मृत्यनुरोधादिति भावेनोक्तशङ्कां निरस्यन्व्याचष्टे ॥ **न फलेति** ॥ **योग्यानां** फलाधिकारिणां प्रतिबन्धकशून्यानामित्यर्थः । भाष्येऽधिकारिणामिति सौत्रतुशब्दार्थ इत्याह ॥ **तु शब्द इति** ॥ **अधिकारित्वं नामेति** ॥ कर्मवैगुण्यप्रतिबन्धादिशून्यत्वरूपयोग्यत्वमधिकारित्वमित्यर्थः ॥ **अधिकरणार्थ इति** ॥ भाष्ये सार्धश्लोकेन स्मृतेः श्रुत्यनुसारित्वोक्तिरित्याह ॥ **अन्येति** ॥ कर्मवैगुण्योपलक्षणमित्यर्थः ॥ **अत इति** ॥ शैवादिस्मृतिप्रामाण्यवैलक्षण्यात् विसंवादस्य वैगुण्यादिहेतुकत्वाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

**यावतेति** ॥ यावतो यस्मात् तदेव फलादर्शनमेव । अप्रामाण्यमप्रामाण्ये लिङ्गमित्यर्थः ॥ **स्वतः प्रामाण्येति** ॥ स्वतः प्रामाण्यस्यौत्सर्गिकत्वादिति भावः ॥ **तुशब्द इति** ॥ तथा चाधिकारिणामित्येतत् सूत्रमिति भावः ॥ **अधिकारित्वं नामेति** ॥ कर्मवैगुण्यप्रतिबन्धादिशून्यात्मरूपं तत्फलयोग्यत्वमित्यर्थः ॥ **अन्योपलक्षणमिति** ॥ कर्मवैलक्षण्यादन्योपलक्षणमित्यर्थः । सूत्रे इतरेषां चानुपलब्धेरित्यत्रानुपलभ्यतया प्रकृतं फलमन्वेति । तथात्वे तु कर्तृविशेषाणां फलं दृश्यत इति सूत्रार्थः । अत्राद्ये स्वपक्षसाधनम् । द्वितीये बाधकोद्धार इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अस्तु फलादर्शनं तथाप्यप्रामाण्यं कुतः इत्यतः आह ॥ **यावतेति** ॥ तदेव फलादर्शनमेव ॥ **योग्यानामिति** ॥ फल इति शेषः । तत्तत्कार्यवैगुण्यादिप्रतिबन्धकशून्यानां चेति ग्राह्यम् । प्रतिबन्धके सति योग्यानामपि फलादर्शनात् । कथं कर्तृत्वविशेषद्योतनमित्यत आह ॥ **अधिकारित्वं नामेति** ॥ कर्मवैगुण्यादिप्रतिबन्धादिशून्यत्वरूपयोग्यत्वं अधिकारित्वमित्यर्थः ॥ **अन्योपलक्षणमिति** ॥ अयोग्यत्वोपलक्षणमित्यर्थः । अत्राद्ये सूत्रे स्वपक्षसाधनम् । अस्य श्रुत्यादेः तथात्वं शैवादिस्मृतिवदप्रामाण्यं न श्रुतौ अपौरुषेयत्वस्य श्रौतस्मृतौ तदनुसारित्वरूपवैलक्षण्यस्य सत्त्वात् । तथात्वं च वैलक्षण्ये चापौरुषेयत्वरूपम् । वाचा विरूप नित्ययेत्यादिशब्दात् संवादानपेक्षत्वरूपं तु न चक्षुर्न श्रोत्रमित्यादिश्रुतेरित्यक्षरार्थः । द्वितीये बाधकोद्धारः इति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

तदेवाविद्यमानाभिधायकत्वमेव । अत्र दोष एव नेत्यत आह ॥ **अयमेवेति** ॥ उक्तस्यादर्शनमिति यदयमेवेत्यर्थः ॥ अधिकारिणां वेदोक्तफलं दृश्यते उपलभ्यत इत्यर्थः ॥ **योग्यानामिति** ॥ तत्फल इति शेषः । उपलक्षणमेतत् । तत्कर्मवैगुण्यादिप्रतिबन्धकशून्यानामित्यपि द्रष्टव्यम् ॥ **अप्रामाण्यप्राप्तेरेवेति** ॥ अन्यथा विप्रलम्भकवाक्यस्याप्येवं प्रामाण्यं स्यादिति भावः । कोऽयमधिकारो यद्वतां फलदर्शनमितरेषां तदभाव इत्यपेक्षायामाह ॥ **अधिकारित्वमिति** ॥ **अन्योपलक्षणमिति** ॥ अयोग्यत्वोपलक्षणमित्यर्थः ।

॥ इति न विलक्षणत्वाधिकरणम् ॥ २ ॥

## ३. अथ अभिमान्यधिकरणम्

'मृदब्रवीत्' (श.ब्रा.६-२-३) 'आपोऽब्रुवन्' (श.ब्रा.६-१-३) इत्यादिवचनाद्युक्तिविरुद्धो वेद इत्यतोऽब्रवीत्

॥ ॐ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॐ ॥ ६ ॥

मृदाद्यभिमानिदेवता तत्र व्यपदिश्यते । तासां चेतरेभ्यो विशिष्टं सामर्थ्यमनुगतिश्च सर्वत्र । अतस्तासां सर्वमुक्तं युज्यते ।

## सत्तर्कदीपावली

यन्मृदादिकं तन्न ब्रवीतीति युक्त्या विरुद्धत्वात् मृदब्रवीदित्यादिवेदैकदेशस्याप्रामाण्यात् । तद्वज्जगत्कर्तृप्रतिपादकस्य वेदस्य नाप्रामाण्यं शङ्कनीयम् । मृदादिशब्दानां पृथिव्याद्यनुमतवक्तृत्वादिविशेषशक्तियुक्ततत्तद्देवतावाचित्वेनाविरुद्धत्वात् । तदाह– **मृदित्यादिना** ॥

## तत्त्वप्रदीपिका

'मृदब्रवीत्' 'तत्तेज ऐक्षत' इत्यादावचेतनानां वक्तृत्वाद्युक्तेर्युक्तिविरुद्धोऽयं वेदः । प्रत्यक्षमूला च सा न चालयितुं शक्यत इत्यतोऽब्रवीत् ॥ **अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्** ॥ मृदाद्यभिमानिन्यो देवतास्तत्र वक्त्र्यादयो व्यपदिश्यन्ते । नत्वभिमन्यमानाः । मृदादिशब्दाश्च तासु मुख्याः । तासामितरेभ्यः सामर्थ्याधिक्यात्सर्वगतत्वाच्च सर्वमुक्तिदृष्ट्यादिकं तत्र तत्र उक्तं युज्यते ।

## तत्त्वप्रकाशिका

अत्र पुनर्विष्णोः सर्वकर्तृत्वादिप्रतिपादकवेदप्रामाण्ये युक्तिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । वेदप्रामाण्यात्सर्वकारणत्वं विष्णोरित्युक्तम् । तत्प्रामाण्यस्य च युक्तिविरोधे न विष्णोर्जगत्कारणत्वं सिध्यतीत्यतोऽसौ परिहार्य एव । स वेदो विषयः । प्रमाणं न वेति सन्देहः । पूर्वोक्तमेवात्र सन्देहबीजम् । पूर्वपक्षयति ॥ **मृदिति** ॥ न वेदः प्रमाणम् । 'मृदब्रवीत्' 'आपोऽब्रुवंस्ता आप ऐक्षन्तन्' 'तत्तेज ऐक्षत' 'ओषधयः संवदन्त' इत्यादिना मृदादीनां वचनदर्शनाद्यभिधायकत्वात् । तथात्वेऽपि कुतोऽप्रामाण्यम् । मृन्न वदति जडत्वादित्यादियुक्तिविरुद्धत्वेन मृदादिवचनादेरसत्त्वात् । असदभि-

(तत्त्वप्रकाशिका)
धायकत्वमेवाप्रामाण्यम् । एवं च युक्तिविरुद्धार्थत्वेन वेदैकदेशस्याप्रामाण्येऽन्यस्याप्यप्रामाण्यमिति न विष्णोस्तेन जगत्कारणत्वसिद्धिरिति भावः ।

ननु मृदादिवचनाद्यभिधायकवाक्यस्य प्रत्यक्षविरोध एव प्रथमं स्फुरत्यतो न पादसङ्गतिः । मैवम् । आदिसृष्टावेव पृथिव्यादीनां तदभिधानात् । तदानीन्तनवचनाद्यभावस्यास्मदाद्यप्रत्यक्षत्वेन युक्तेरेवाश्रयणीयत्वात् । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ तुशब्दोऽवधारणे । भवेदेतदुक्तं यद्यत्र मृदाद्येवोच्येत नैतदस्ति । मृदाद्यभिमानिनीनां देवतानामेव तत्र व्यपदेशादित्यर्थः । स्यान्मतम् । श्रुतियुक्त्योः श्रुतेरेव प्राबल्यात्तद्विरुद्धयुक्तेरेवाप्रामाण्यं वक्तव्यं किं युक्तिविरोधपरिहाराय श्रुतेरन्यार्थकल्पनया । न चोपजीव्यप्रत्यक्षविरोध इत्युक्तमिति । मैवम् । अन्यार्थकल्पने मुख्यार्थलाभात् ।

नाभिमानिदेवता नाम सन्ति । तथा हि । किं ता अभिमन्यमानव्यापिन्यः किं वा तदेक-देशवर्तिन्यः । आद्येऽपि विग्रहवत्यो न वा । न प्रथमः । उपलम्भप्रसङ्गात् । न द्वितीयः वचनाद्य-योगात् । नान्त्यः । तद्रहितदेशवद्देशान्तरावस्थानोपपत्तौ तद्वैयर्थ्यादित्यत आह ॥ **तासां चेति** ॥ न चाभिमानिदेवताभावो वाच्यः । यत्प्रागुक्तं तत्रास्त्येव तासां सर्वत्रानुगतिर्विग्रहश्चेति ब्रूमः । न च दर्शनप्रसङ्गः सर्वगतानां विग्रहवतीनामपि तासामितरपदार्थेभ्यो विशेषसामर्थ्येनादर्शन-सम्भवादिति भावः । सन्तु देवताः प्रकृते किमायातमित्यत आह ॥ **अत इति** ॥ यतोऽत्र मृदादिशब्दैर्देवता व्यपदिश्यन्तेऽतस्तासां चेतनत्वेन श्रुत्युक्तं सर्वं वचनादिकं युक्तमतो न युक्तिविरुद्धं वेदवाक्यमिति भावः । अत्रैकवचनस्य सूत्रगतत्वादभिमानिदेवतेत्युक्तम् । तच्च समुदायविवक्षयेति भावेन तासामित्यादि दृश्यते चेत्युत्तरसूत्रानुगुण्येनात्र विग्रहस्य ग्राह्यत्वात् । दृश्यन्ते मुनिभिरिति स्मृत्यानुकूल्यान्न तत्र शक्तिमात्रमुच्यते ।

## गुर्वर्थदीपिका

आदिसृष्टावेवेत्यनेनाब्रवीदित्यतीतार्थकलङ्प्रयोगबलादादिकालीनमृद्वचनमेवेति सूचयति । एवं एवमेवेति वदता श्रुतिविरोधाद्युक्तेरेवाप्रामाण्यमिति यदुक्तं तदपि न । धूमं दृष्ट्वा वह्न्यर्थिनः प्रवृत्तेः । जडमृद एव वचनप्रसङ्गाच्च लौकिकविषयाः इमाः श्रुतयः । आदिकालीनमृदोऽपि लौकिकतया जडत्वयुक्त्या च वचनस्य बाधितत्वात्तत्सजातीयेदानीन्तनमृ(न)दो वचनस्य प्रत्यक्षबाधितत्वाच्च श्रुतेरन्यार्थकल्पनमेव न्याय्यमिति सूचितम् । तर्हि प्रत्यक्षविरोधादद्वैतश्रुतेरिव

(गुर्वर्थदीपिका)
प्रकृतश्रुतीनामपि उपचरितार्थता कुतो नोच्यत इति चेदेवमपि मा । मुख्यार्थलाभेऽमुख्यार्थ-ग्रहणायोगादिति भावेनाह **अन्यार्थेति** ॥ मृदादिशब्दैरभिमानिदेवताया एव मुख्यवाच्यत्वा-न्मुख्यार्थत्वमिति भावः । अत्रैकवचनस्य सूत्रगतत्वादित्यनेनाभिमानिनामिति समासकरणेऽपि तत्तद्व्यपदेशानां बहुत्वाद्व्यपदेशा इति प्रयोगः स्यात् । एकवचनान्तव्यपदेशपदप्रयोगबला-दभिमानिन इत्येकवचनान्तमेव सौत्रमभिमानिपदमिति सूचयति । दृश्यते चेत्युत्तरसूत्रानु-गुण्येनेत्यत्र यद्यपि भाष्ये सामर्थ्ये एव एकवचनप्रयोगो न देवतायामिति भाति तथाऽपि 'दृश्यन्ते मुनिभिश्च ताः' इति भाष्यकृतोद्धृतस्मृतावेव देवतानामपि दृश्यत्वकथनात् सा देवता दृश्यत इति भाष्यकृतोऽभिसन्धिः । एवं चोत्तरसूत्रे देवतायामप्येकवचनप्रयोगात् पूर्वसूत्रेऽभिमानिनो व्यपदेश इत्येव विग्रह इत्यर्थः ।

## भावबोधः

नन्विदमधिकरणं व्यर्थम् । अतीताधिकरण एवोपलक्षणत्वेन सकलयुक्तिविरोधानां परिहृत-त्वादिति चेन्न; 'तथापि मृज्जलादीनां बुद्धिवागादिवाचकः । दृष्टव्याप्तिविरुद्धत्वात्' इत्यनु-व्याख्यानोक्तरीत्याभ्यधिकाशङ्कयेतदधिकरणोत्थानादित्याशयेनोक्तम् **अत्र पुनरिति** ॥ अनेना-नन्तरसङ्गतिरपि लब्धेति ज्ञातव्यम् ।

यद्वा न पूर्वाधिकरणे सकलयुक्तिविरोधानामुपलक्ष्यत्वं किन्तु युक्तिमात्रविरोधपरिहारः पूर्वाधिकरणोपाधिः । दृढयुक्तिपरिहारोऽत्रोपाधिरिति न वैयर्थ्यम् । तदुक्तमनुव्याख्याने–

'दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृशः'

इति । युक्तिमात्रविरोधे निरस्त एव दृढयुक्तिविरोधनिरासावसर इत्येवमप्यनन्तरसङ्गतिरिति ज्ञातव्यम् ॥ **प्रमाणं न वेति** ॥ अत्र श्रुतिसमन्वयेन जगत्कारणत्वं विष्णोर्न युक्तमुत युक्तमिति प्रधानचिन्ता पूर्ववदेव द्रष्टव्या । तदर्थं वेदः किमप्रमाणमुत प्रमाणमिति । तदर्थं 'मृदब्रवीत्' इत्यादिवेदः किं युक्त्यादिविरुद्ध उत नेति । तदर्थं मृदादिशब्दः किं जडपरः किं वाऽभिमानि-चेतनपर इति । तदर्थमभिमानिचेतनाः किं न सन्त्युत सन्तीति । तदर्थमभिमन्यमानमृदाद्यनु-गतानां विग्रहवतामभिमानिनामनुपलब्धिः किं तदभावनिबन्धनोतान्तर्धानादिसामर्थ्यनिबन्धनेति । तदर्थं सामर्थ्यविशिष्टदेवतासत्त्वे प्रमाणं नास्त्युतास्तीति । 'मृन्न वदति' इत्यादिना मृदादीनां

(भावबोधः)
वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणमिति न्यायविवरणमपि उक्ततात्पर्यं भवति । युक्तेरेवाश्रयणीयत्वादिति ।

नन्वादिकालीनमृदादिपक्षीकारे सिद्धसाधनत्वाभावेऽपि तेषां 'मृदब्रवीत्' इत्यादि श्रुत्येकसमधिगम्यत्वेन धर्मिग्राहकमानबाधो जडत्वहेतोरसिद्धिश्चेति चेत्, न आदिकालीनमृदादि स्वरूपपरेण 'अग्नेरापः' इत्यादि वाक्यान्तरेण दृश्यमानकार्यलिङ्गेन वा धर्मिग्रहोपपत्तेः । मृत्वादिना जडत्वानुमानाच्चेति भावः ॥ **मृदाद्यभिमानिनीनां देवतानामेवेति** ॥ भाष्ये मृदादीत्यादिपदानुरोधेनाभिमानिदेवतेत्येकवचनान्तप्रयोगः समुदायविवक्षयेति भावेन बहुवचनान्तप्रयोगः कृतः । न तु सूत्रे विग्रहप्रदर्शनार्थम् । वक्ष्यमाणविरोधादिति ज्ञातव्यम् । तथा चाभिमानिदेवतापक्षीकारे हेतोरसिद्धिः । अभिमन्यमानपक्षीकारे प्रकृतविरोध इति भावः । न युक्तिविरोधमात्रेण श्रुतेरन्यार्थत्वं कल्प्यते । किन्तूपजीव्यप्रत्यक्षविरोधादित्यत आह– **न चोपजीव्येति** ॥ आदिकालीनमृदादीनामेव श्रुत्या वक्तृत्वादिकमुच्यते । तेषाञ्च नास्मदादिप्रत्यक्षत्वमिति न प्रत्यक्षं श्रुत्युपजीव्यमिति प्रागेवोक्तमित्यर्थः ॥ **अन्यार्थकल्पने मुख्यार्थलाभादिति** ॥ 'तदधीनत्वात्' इति न्यायेन मृदादिशब्दानामभिमन्यमानापेक्षयाभिमानिष्वेव मुख्यत्वेन मृदादिशब्दानां मुख्यार्थत्वलाभादित्यर्थः । अनेन चेतनविषयतामात्रेण प्रकृतविरोधशान्तावपि वस्तुस्थितिं ज्ञापयिष्यता सूत्रकारेण व्यपदेशस्त्विति 'तु' शब्देन मुख्यवृत्तिः सूचिता। तत्रोपपत्तिज्ञापनायाभिमानीति चोक्तम् । अन्यथा चेतनव्यपदेश इत्यवक्ष्यदिति सुधोक्तरीत्या सूत्रेऽभिमानिशब्दप्रयोगस्य विशेषार्थक 'तु' शब्दस्य चाभिप्राय उक्तो भवति । उपलक्षणमेतत् । व्याप्तिपक्षधर्मतोपेतत्वेन युक्तेर्निरवकाशत्वाच्चेत्यपि ग्राह्यम् । अनेनानुगतिश्चेति विग्रहश्चेतीति । 'च' शब्दो न केवलमुक्तसमुच्चयार्थः किन्तु अनुक्तविग्रहसमुच्चयार्थो वानुगतिशब्दविग्रहोपलक्षको वेत्युक्तं भवति । यद्यप्यत्र भाष्ये आकाङ्क्षानुसारेणानुगतिमादावुक्त्वा सामर्थ्यमनन्तरं वक्तव्यं तथाप्यल्पाच्तरस्य पूर्वनिपातमनुसृत्य प्रवृत्तं सूत्रमनुगच्छता भाष्यकृता क्रमो भग्न इति भावः ।

ननु सूत्रेऽभिमानिनीनां व्यपदेश इति विग्रहसम्भवात् कैकवचनमित्यत आह– **दृश्यते चेत्युत्तरसूत्रानुगुण्येनेति** ॥ अभिमानिन्या व्यपदेश इति एकवचनान्तविग्रहस्य ग्राह्यत्वादित्यर्थः । उपलक्षणमेतत् । अभिमानिव्यपदेश इत्यभिमानिशब्दो ह्येकवचनान्तः समस्तः । व्यपदेश-

(भावबोधः)
शब्दस्यैकवचनान्तत्वात् । न हि बहूनामेको व्यपदेश इति सम्भवतीति सुधोक्तमपि ज्ञापकमत्र ग्राह्यम् ।

ननु 'तासां सामर्थ्यम्' इति भाष्ये "'दृश्यते च' इति सूत्रे सामर्थ्यस्यैव एकत्वमुच्यते न तु देवताया इति कथं तदत्र विग्रहज्ञापकमित्यत आह– **दृश्यन्ते मुनिभिरिति स्मृत्यानुकूल्यादिति ॥** स्मृतौ प्राक् देवतानां शक्तीनां च प्रकृतत्वान्मुनिभिश्च ता इति तच्छब्देन देवतानामपि परामर्शात् । अत एव ताः शक्तयो देवाश्चेति वक्ष्यते । तथा च तदनुसारेण तासां सामर्थ्यमिति भाष्ये देवता अपि विवक्षिताः । अत एव नाप्रामाणिकत्वमभिमानिदेवतानां तत्सामर्थ्यस्य चेति वक्ष्यतीति भावः ।

## भावदीपः

**युक्तीति ॥** श्रुतेः प्रतीतार्थप्रच्यावनं विना अनुपपद्यमानत्वरूपदृढयुक्तिविरोधपरिहारादित्यर्थः । 'दृढयुक्तिविरोध तु सर्वत्र न्याय ईदृश' इत्यनुभाष्योक्तेः । तेन न पूर्वेण गतार्थत्वमिति ज्ञेयम् । पूर्वसङ्गतिमाह **॥ वेदेति ॥** पूर्ववद्व्याख्या । मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणमिति न्यायविवरणानुसारेण पूर्वपक्षभाष्यं व्याचष्टे **॥ न वेदः प्रमाणमित्यादिना ॥** मृदादिशब्दैः सर्गाद्यकालीनपृथिव्यादिकमुच्यत इत्यादिवचनादित्यस्यार्थ इत्यादिनेति । युक्तीत्यादि व्याचष्टे **॥ तथात्वेऽपीत्यादिना ॥** इत्यादीत्यादिपदेन मृत्वाद् घटवदिति युक्तिर्गृह्यते । मृत्वेनैव हेतुना जडत्वं सिद्धमिति भावः । भाष्ये वेदैकदेश इति वाच्ये वेद इत्युक्तेरुपपत्तिमाह **॥ एवं चेति ॥** तत्सामान्यादिति न्यायादिति भावः **॥ युक्तेरेवेति ॥** या प्रागुक्तजडत्वादियुक्तेरेवेत्यर्थः । न च युक्तेर्मृदब्रवीदित्यादिधर्मिग्राहिश्रुतिबाधः । इदानीन्तनमृदादिकारणत्वेनादिकालीनमृदाद्यनुमानापरसिद्धमात्रस्य पक्षीकरणाद्वा श्रुतेरनुमानधर्म्यसमर्पकत्वेन प्राबल्याभावादिति भावः । तत्तन्नामान एवैते तत्तद्वस्त्वभिमानिन इत्यनुभाष्यदिशा सूत्रे तुशब्दो योग्यतयाभिमानिपदेनान्वेतीति भावेन तदर्थं योजनां च दर्शयन् भाष्यं व्याचष्टे **॥ तुशब्द इति ॥** भाष्येऽग्रेतनसूत्रानुरोधेन एकवचनान्ततया सूत्रार्थभाषणं समुदायाशयमिति भावेन देवतानामित्यादिबहुवचनप्रयोगस्तासामित्त्युत्तरभाष्यवाक्यानुरोधेन कृतः । दृश्यते मुनिभिश्च ता इति स्मृतौ तथा प्रयोगात् भाष्ये तासामिति बहुवचनोक्तिरिति भावः । अवधारणार्थतुशब्दसूचित-

(भावदीपः)

मुख्यत्वव्यावर्त्यचोद्यमाह ॥ **स्यान्मतमिति** ॥ ननु 'उपजीव्यविरोधे तु वेदस्यान्यार्थकल्पना । प्रत्यक्षमुपजीव्यं स्यात्प्रायो युक्तिरपि क्वचित्' इति पूर्वनयानुभाष्योक्त्याऽस्ति श्रुतेरप्यर्थान्तर-कल्पनमित्यत आह ॥ **न चेति** ॥ उपजीव्यप्रत्यक्षविरोधश्च नास्तीत्युक्तं पूर्वपक्षदशायामेवे-त्यर्थः । इयं च युक्तिर्न श्रुतेरुपजीव्येति भावः ॥ **मुख्यार्थेति** ॥ अभिमन्यमानगतमृत्वादि-मृदादिशब्दप्रवृत्तिनिमित्तस्याभिमान्यधीनत्वेन तदधीनत्वादिति न्यायेनाभिमानिनां मृदादिशब्द-मुख्यार्थत्वात्तैः शब्दैस्तेषां ग्रहणे मुख्यार्थलाभात् । युक्तिविरोधेनापातप्रतीतार्थत्यागेन तात्पर्यार्थत्याग इत्यर्थः । तथा च मृन्न वदतीति जडस्य पक्षत्वे सिद्धसाधनम् । चेतनस्य पक्षत्वे हेतोरसिद्धिरित्यनुमानदूषणं व्यक्तमिति भावः । सूत्रखण्डभाष्यमवतारयति ॥ **नाभिमानीति** ॥ सूत्रभाष्ययोरनुगतिरूपलक्षणं मत्वाऽऽह ॥ **अनुगतिर्विग्रहश्चेति** ॥ देहश्चेत्यर्थः । भाष्ये पूर्वोत्तरविरोधमाशङ्क्याह ॥ **अत्रेति** ॥ भाष्य इत्यर्थः । ननु एकवचनस्य सूत्रगतत्वादित्य-सिद्धम् । अभिमानिनां व्यपदेश इत्यपि विग्रहप्रदर्शनस्य सुशकत्वादित्यत आह ॥ **दृश्यते चेति** ॥ विग्रहस्याभिमानिनो व्यपदेश इत्येवंरूपस्य समासार्थप्रदर्शकवाक्यस्येत्यर्थः । ननूत्तरसूत्रे दृश्यते चाभिमानिदेवतेति यद्यर्थः स्यात्तदा तदनुसारात्पूर्वसूत्रेऽप्युक्तदिशा एकवचनान्ततया विग्रहः स्यात् । नैतदस्ति । दृश्यते च तासां सामर्थ्यं महद्भिरित्येव तत्र भाषणादित्यत आह ॥ **दृश्यन्ते इति** ॥ तत्र तासां सामर्थ्यमिति भाष्ये न शक्तिमात्रमुच्यते किन्तु देवता चेत्युपलक्ष्यते कुतः दृश्यन्त इति तत्रोदाहरिष्यमाणस्मृत्यनुसारादित्यर्थः । स्मृतौ बहुवचनोक्तावपि समुदाय-विवक्षया दृश्यते च देवतेत्यपि विवक्षणीयमिति भावः ।

## अभिनवचन्द्रिका

**पूर्वोक्तमेवात्र संशयबीजमिति** ॥ वेदे तावदुभयविधवाक्यदर्शनात्सन्देहो भवति प्रमाणं न वेति । तन्निरासस्तु द्वाभ्यामधिकरणाभ्यां भवति । कस्यचिदधिकारिणः पूर्वाधिकरणेन निरासः । अन्यस्य तु अनेन अधिकरणेन निरासो भवतीति भावः । एतेन पूर्वाधिकरणे वेदस्य निर्दोषतायाः उक्तत्वेन पुनस्तेनैव बीजेन शङ्कानुत्पाद इति निरस्तम् । तदधिकरणप्रवृत्तेः प्रागेवोत्पन्नसंशय-स्यानेनाधिकरणेन निरास इत्यङ्गीकारात् । न चाधिकरणवैयर्थ्यम् । पूर्वाधिकरणाऽनिरस्यपूर्वपक्ष-निरासार्थत्वात् ॥ **अन्यस्याप्यप्रामाण्यमिति** ॥ वाक्यप्रामाण्यं द्वेधा सिध्यतीति भवतोच्यते । कस्यचिदाप्तोक्तत्वेन, कस्यचिदपौरुषेयत्वेनेति । तत्र न तावदाप्तोक्तत्वेन वेदस्य प्रामाण्यमिति

(अभिनवचन्द्रिका)

शक्यते वक्तुं, अनङ्गीकारात् । नाप्यपौरुषेयत्वेन, मृदब्रवीदित्यादिवाक्ये व्यभिचारादिति भावः । एतेन असदर्थकत्वेन 'मृदब्रवीदित्यादिवाक्यस्याऽप्रामाण्येऽपि नेतरवेदाप्रामाण्यं कारणाभावादिति निरस्तम् ॥ **मुख्यार्थलाभादिति** ॥

ननु मृदादीनां वक्तृत्वादेः प्रबलयुक्तिविरुद्धत्वादेव श्रुत्यर्थप्रच्यावनमिति वक्तव्यं, न तु – मुख्यार्थलाभादिति । अन्यथा युक्तिविरोधेन पूर्वपक्षकरणमयुक्तं स्यात् । मुख्यार्थलाभायैव श्रुतेरन्यपरत्वस्याऽभिधानेन विरोधपरिहारायानभिधानात् इति चेत्, सत्यम् वक्तृत्वादेर्युक्ति-विरुद्धत्वादेव श्रुत्यर्थप्रच्यावनमिति वक्तव्यमिति अभिप्रेतं च टीकाकृतः । अन्यार्थकल्पने मुख्यार्थलाभादित्यनेन वेदस्य सावकाशत्वाभिधानात् । अयं भावः भवेच्छ्रुतिविरोधेन युक्तेरप्रामाण्यम्, यदि श्रुतिः सावकाशा न स्यात् । न चैवं प्रकृते । श्रुतेरन्यार्थकल्पने यथा प्रतीतार्थादपि मुख्यार्थलाभात् । कथञ्चिदर्थांतरयोजनासम्भवे हि सावकाशत्वं वदन्ति, किमु अर्थान्तरकल्पनया मुख्यार्थलाभे । ततश्च युक्तेः स्वभावतो दुर्बलत्वेऽपि निरवकाशतया प्राबल्यात् युक्त्यैव सावकाशश्रुतिबाधो युक्तः । न तु श्रुत्या युक्तिबाध इति । 'तासां च' इति मूलमवतारयति – **नाभिमानिदेवता इति** ॥ इति त्वाङ्गीकर्तुं शक्यत इति शेषः । एतेन 'किं ता अभिमन्यमानव्यापिन्यः, उत तदेकदेशवर्तिन्य' इत्यादिना तत्तदङ्गीकारं विकल्प्य, अङ्गीकार एव दूष्यते उत अभिमन्यमानव्यापित्वाद्यर्थो दूष्यते । नाद्यः विग्रहवत्त्वाद्यर्थाङ्गीकार-सम्भवेऽपि प्रतिज्ञाताभिमानिदेवताभावाऽसिद्धेः । न हि कस्यचिदङ्गीकारो न सम्भवतीत्येतावता अर्थो नास्तीति शक्यते वक्तुम् । जीवब्रह्मभेदस्य मायावादिनाऽङ्गीकर्तुमशक्यत्वेन तदभाव-प्रसङ्गात् । न द्वितीयः व्याहतेः । 'नाद्य' इत्यनेन विग्रहवत्त्वपक्षनिराकरणेन विग्रहशून्यत्व-मङ्गीकृत्य 'न द्वितीय' इति पुनस्तन्निषेधादिति परास्तम् ।

ननु 'दृश्यते च' इति सूत्रं नैकवचनान्तं विग्रहे ज्ञापकम् । तस्य सामर्थ्यं दृश्यते इत्यर्थकत्वादित्यत आह– **दृश्यन्ते मुनिभिरिति** ॥ अस्य सूत्रस्य सामर्थ्यं दृश्यत इत्येव नार्थः, अपि तु स्मृत्यानुकूल्यात् देवतासामर्थ्यं च दृश्यत इत्यर्थ इति भावः ।

## वाक्यार्थमुक्तावली

नन्विदमधिकरणं व्यर्थम् । अतीताधिकरण एवोपलक्षणत्वेन सर्वविरोधानां परिहृतत्वादिति

(वाक्यार्थमुक्तावली)

चेन्न । तथापि मृज्जलादीनां बुद्धिवागादिवाचकः । दृष्टव्याप्तिविरुद्धत्वादित्यनुभाष्योक्तरीत्याऽभ्यधिशङ्क्यैतदधिकरणोक्तानामित्याशयेनाह ॥ **अत्र पुनरिति** ॥ फलविसंवादस्य वैगुण्यनिमित्तत्वेन परिहार्यत्वेऽप्यर्थशून्यत्वस्यापि परिहार्यत्वमित्यभ्यधिका शङ्केति ज्ञेयम् । अनेनानन्तरसङ्गतिरप्युक्तेति ज्ञेयम् । यद्वा पूर्वाधिकरणे सर्वयुक्तिविरोधानामुपलक्ष्यत्वम् । किन्तु युक्तिमात्रविरोधपरिहारः पूर्वाधिकरणोपाधिः । दृढयुक्तिविरोधपरिहारोऽत्रोपाधिरिति न वैय्यर्थ्यम् । तदुक्तमनुव्याख्याने । 'दृढयुक्तिविरोधेऽतु सर्वत्र न्याय ईदृशः' इति । एवं च युक्तिविरोधपरिहारादित्यस्य दृढयुक्तिविरोधपरिहारादित्यर्थः । युक्तिदार्ढ्यं च श्रुतेः प्रतीतार्थप्रच्यावनं विना परिहार्यत्वमिति ज्ञेयम् । अनेन युक्तिमात्रविरोधे निरस्त एव दृढयुक्तिविरोधपरिहारावसर इत्येवमप्यनन्तरसङ्गतिरुक्ता भवति ॥ **प्रमाणं न वेति** ॥ अत्र मृदब्रवीदिति वेदः किं जडत्वादियुक्तिविरोधादप्रमाणमुताभिमानिदेवतापरतया प्रमाणमिति चिन्ता । तदर्थमभिमन्यमानमृदाद्यनुगतानां विग्रहवतामभिमानिनामनुपलब्धिः किं तदभावनिबन्धना किं वान्तर्धानादिसामर्थ्यनिबन्धनेति । तदर्थं सामर्थ्यविशिष्टदेवतासत्वे प्रमाणं नास्त्युतास्तीति ॥ **पूर्वपक्षयतीति** ॥ न च वेदापौरुषेयत्वस्य पूर्वत्र साधितत्वादपौरुषेयस्य चाप्रामाण्यायोगात्पूर्वपक्षानुदय इति वाच्यम् । अपौरुषेयत्वस्य प्रामाण्यं विनैव जडत्वादेर्वक्तृत्वाभावं विनानुपपत्तेः । अनृतत्वस्य चाप्रामाण्यं विनानुपपत्तेः । न वेदप्रामाण्यनिश्चयः । प्रत्युत पिपीलिकालिपिवदप्रामाणानुकरणशुकादिवाक्यवत्वे पुरुषाभावमात्रेणाप्रामाण्यमिति वा युक्तिविरोधादपौरुषेयवाक्यत्वमेव नेति वा पूर्वपक्ष्यभिप्रेतत्वादिति ज्ञेयम् । इत्यादियुक्तिविरुद्धत्वेनेत्यादिपदेन मृत्वादियुक्तयो गृह्यन्ते ।

ननु मृज्जलादीनां बुद्धिवागादिवाचकवेदप्रामाण्यमभ्युपगच्छतः जडत्वमसिद्धमिति मृत्वमेव स्वशब्देनोपादेयं किमर्थमादिपदेन ग्रहणम् । अत एव सुधायां जडत्वस्य हेतूकरणे त्वसिद्धिरित्युक्त्वा मृत्वादित्येव हेतुशरीरं दर्शितमिति चेन्न । मृत्वरूपपक्षतावच्छेदकजडत्वयोः सामानाधिकरण्यनियममभ्युपगच्छता मृत्वेन जडत्वं साधयामीत्यभिप्रायेण जडत्वस्य हेतूकरणोपपत्तेः । सुधायां तु किं प्रसाध्याङ्गकेन हेतुनेति भावेन स्फुटपक्षधर्मताकं पक्षतावच्छेदकमेव हेतूकृतम् । टीकायां पक्षतावच्छेदकस्य साक्षाद्धेतुत्वाकरणं तु वक्तृत्वादिना जडत्वस्य मृत्वादेर्विरोधाप्रतीतेरेव वक्तृत्वादिना मृत्वादेर्व्याप्यप्रतीतेर्जडत्वस्य स्फुटव्याप्तिकत्वाद्व्याप्तौ भारमवलम्ब्येति ज्ञेयम् ॥ **युक्तेरेवेति** ॥ नन्वादिकालीनमृदादिपक्षीकारे सिद्धसाधनत्वाभावेऽपि तेषां

(वाक्यार्थमुक्तावली)

मृदब्रवीत्' इत्यादि श्रुत्यैकसमधिगम्यत्वेन धर्मिग्राहकमानबाध इति चेन्न । आदिकालीनमृदादि-स्वरूपपरेण 'अग्नेराप:' इत्यादिवाक्यान्तरेण दृश्यमानकार्यलिङ्गेन वा धर्मिग्रहोपपत्तेरिति भाव: ॥ **मृदाद्यभिमानिनां देवतानामेवेति** ॥ अनेनावधारणार्थकतुशब्दस्य बुध्या विवेकेनाभिमानिनी-त्यनेन सम्बन्ध: । सूत्रे दृश्यते चेत्युत्तरसूत्रानुसारेणाभिमानिनो व्यपदेश इत्येकवचनान्ततया विग्रहेऽप्येकवचनं समुदायविवक्षयेति भावेन भाष्ये मृदादीत्यादिपदप्रयोग इत्युक्तं भवति । अवधारणार्थकतुशब्दसूचितमुख्यत्वहेतोर्व्यावृत्यं चोद्यमाह ॥ **स्यादिति** ॥ न युक्तिविरोधमात्रेण श्रुतेरन्यार्थत्वं कल्प्यते किन्तूपजीव्यप्रत्यक्षविरोधादित्यत आह ॥ **न चेति** ॥ आदिसृष्टा-वित्यादिनेत्यर्थ: ॥ **मुख्यार्थेति** ॥ तदधीनत्वादिन्यायेन मृदादिशब्दानामभिमन्यमानापेक्षयाऽभि-मानिष्वेव मुख्यत्वेन मृदादिशब्दानां मुख्यार्थलाभादित्यर्थ: । युक्ते: श्रुतित: स्वभावतो दुर्बलत्वेऽपि व्याप्तिपक्षधर्मत्वोपेतत्वेन निरवकाशत्वाच्चेत्यपि ग्राह्यम् । अन्यथा मुख्यार्थ-लाभायैवान्यार्थकल्पनेत्युक्तेस्तदकल्पकत्वाद्दाढर्याभावेन दृढयुक्तिविरोधोऽत्र निरस्यत इत्यस्या-युक्ते: । न च जडत्वहेतोरसिद्धि: तत्साधकमृत्त्वहेतोरपि तथात्वमेव । तथोक्तं सुधायां मृदादि शब्दस्य चेतनविषयत्वात्तत्पक्षीकारेऽसिद्धि: । शब्दमात्रेण हेतुत्वेऽतिप्रसङ्गादिति । तत्कथं व्याप्त्यादिमत्वेन निरवकाशत्वमिति वाच्यम् । वस्तुतो हि श्रुति: 'मृदब्रवीत्' इत्यादिका स्वरसतोऽभिमानिविवक्षया प्रवृत्ता । विदुषां तथैवार्थप्रतीति: परोक्तहेतोरसिद्धिश्च स्फुरति । मन्दास्त्वपौरुषेयत्वेन प्रामाण्यं युक्तिविरोधेनाप्रामाण्यं चानुसन्धायान्यथानुपपत्या प्रतीतादर्थान्तरं कल्पयन्तीति तद्विवक्षया दाढर्यं युक्तेर्विवक्षितमित्यदोष: ॥ **विग्रहश्चेति** ॥ **अनुगतिश्चेति** ॥ च शब्देन विग्रह: समुच्चीयते । सूत्रे अनुगतिपदमुपलक्षणमिति भाव: । सूत्रेऽन्यतरस्य पूर्वत्वाद्विशेषपदस्य प्राथम्यम् । तदनुसारेण भाष्यव्याख्यानेऽपि आकाङ्क्षाक्रमेण टीकायां व्याख्यानं बोध्यम् ।

ननु सूत्रेऽभिमानिनां व्यपदेश इति बहुवचनान्ततयापि विग्रहसम्भवादेकवचनस्य कथं सूत्रगतत्वं ज्ञायत इत्यत आह ॥ **दृश्यते चेति** ॥ अभिमानिनो व्यपदेश इत्येकवचनान्त-विग्रहस्येत्यर्थ: । बहूनामेकव्यपदेशाभावाद्व्यपदेश इत्येकवचनाच्चेत्यपि सुधोक्तं द्रष्टव्यम् ।

ननु दृश्यते चेति सूत्रं सामर्थ्यं दृश्यत इति भाष्ये व्याख्यास्यते कथं देवताविषयमित्यत आह ॥ **दृश्यन्त इति** ॥ स्मृतौ देवतानामपि दृश्यत्वोक्तेर्भाष्यमुपलक्षणमिति भाव: । सूत्रार्थस्तु यतोऽस्मिन्मृदब्रवीदित्यादावभिमानिनीनां देवतानामेव व्यपदेश: । अतोऽस्य मृदब्रवीदित्यादे-

(वाक्यार्थमुक्तावली)

स्तथात्वमप्रामाण्यं न । न चानुपलम्भाद्देवताभाव इति शेषः । कुतः विशेषानुगतिभ्याम् । विग्रहवत्त्वेनैवाभिमन्यमानानुगत्यन्तर्धानाख्यसामर्थ्यविशेषाभ्यां सतीनामप्यनुपलम्भसम्भवादिति ।

## तत्त्वसुबोधिनी

नन्विदमधिकरणं व्यर्थम् । अतीताधिकरण एव उपलक्षणत्वेन सर्वयुक्तिविरोधानां निरस्तत्त्वात् इत्यत आह ॥ **अत्र पुनरिति** ॥ तथा च । पूर्वाधिकरणे एव युक्तिविरोधः परिहृतः अत्र तु दृढयुक्त्यविरोधः उच्यते । इति अगतार्थता । अनेनैवान्तरसङ्गतिः लब्धा इति भावः ।

**पूर्वोक्तमेवेति** ॥ किञ्चिद्विद्यमानार्थाभिधायकं, किञ्चिदविद्यमानार्थाभिधायकमित्युभयविधवाक्योपलब्धिरेव सन्देहबीजं इत्यर्थः । अस्त्वसदभिधायकं ततोऽप्यप्रामाण्यं कुतः इत्यत आह ॥ **असदभिधायकत्वमेवेति** ॥ तथापि न कृत्स्नवेदाप्रामाण्यमित्यत आह ॥ **एवं चेति** ॥ **नन्विति** ॥ तथा चानुमानस्य सिद्धसाधनत्वाभावेऽपि तेषां श्रुत्यैकसमधिगम्यत्वेन धर्मिग्राहकमानबाधो जडत्वहेतोरसिद्धिरिति चेन्न । आदिकालीनमृदादिस्वरूपपरेण य इत्यादि वाक्यान्तरेण दृश्यमानकार्यलिङ्गेन वा धर्मिग्रहोपपत्तेः । मृत्वादिना जडत्वानुमानाच्च इति भावः ॥ **मृदाद्यभिमानिदेवतानामिति** ॥ तथा च अभिमानिदेवतापक्षीकारे हेतोर्नासिद्धिः । अभिमन्यमानपक्षीकारे प्रकृताविरोधः इति भावः । न यु(मु)क्तिविरोधमात्रेण श्रुतेरन्यार्थत्वं कल्प्यते किन्तु उपजीव्यप्रत्यक्षविरोधादित्यतः आह ॥ **न चोपजीव्येति** ॥ आदिकालीनमृदादीनामेव, श्रुत्या वक्तृत्त्वादिकमुच्यते । तेषां च नास्मदादिप्रत्यक्षं उपजीव्यमिति प्रागेवोक्तमित्यर्थः ॥ **अन्यार्थकल्पने इति** ॥ तदधीनत्वादिन्यायेन मृदादिशब्दानामभिमन्यमानापेक्षया अभिमानिष्वेव मुख्यत्वेन मृदादिशब्दानां मुख्यार्थत्वलाभादित्यर्थः ॥ **विग्रहश्चेति इति** ॥ अनेनानुगतिश्चेति चशब्दो न केवलं उक्तयुक्तिसमुच्चयार्थः । अनुक्तसमुच्चयार्थः इत्युक्तं भवति । यद्यप्यत्र भाष्ये आकांक्षानुसारेणानुगतिमादौ उक्त्वा सामर्थ्यमनन्तरं वक्तव्यम् । तथाप्यल्पाच्तरमित्यस्य पूर्वपातमनुसृत्य प्रवृत्तं सूत्रमनुगच्छता भाष्यकृता क्रमो भग्नः इति भावः । नन्वभिमानिदेवतानां अनेकत्वात् अभिमानिदेवता इति भाष्ये कथं उक्तमित्यत आह **अत्रैकवचनस्येति** ॥ तर्हि तासामित्ययुक्तमित्यत आह ॥ **तच्चेति** ॥ एकवचनमित्यर्थः ।

ननु सूत्रे, अभिमानिनां व्यपदेशादिति विग्रहसम्भवात् क एकवचनमित्यत आह ॥ **दृश्यते**

(तत्त्वसुबोधिनी)

**चेत्युत्तरसूत्रानुगुण्येनेति** ॥ अभिमानिव्यपदेशादिति एकवचनान्तविग्रहस्य ग्राह्यत्वादित्यर्थः । उपलक्षणमेतत् । अभिमानिव्यपदेश इति अभिमानिशब्दः एकवचनान्तः समस्तः । व्यपदेश-शब्दस्यैकवचनान्तत्त्वात् । न हि बहूनामेको व्यपदेशः इति न सम्भवति इत्यपि द्रष्टव्यम् । ननु तासां सामर्थ्यमिति भाष्ये दृश्यते चेति सूत्रे सामर्थ्यस्यैव कर्मत्वमुच्यते न देवतायाः इति कथं तदत्र विग्रहज्ञापकमित्यत आह ॥ **'दृश्यते मुनिभिः' इति स्मृत्यानुकूल्यादिति** ॥ स्मृतौ प्राक् देवतानां शक्तीनां च प्रकृतत्वात् मुनिभिश्च ता इति तच्छब्देन देवतानामपि परामर्शात् । अत एव देवताशक्तयश्चेति वक्ष्यते । तथा च तासां सामर्थ्यमिति भाष्ये देवता अपि विवक्षिताः । अत एव प्रामाणिकत्वमभिमानिदेवतानां सामर्थ्यस्य चेति वक्ष्यतीति भावः । केचित्तु ग्रहस्य कथं विग्रहश्चेति ब्रूम इत्यादिना ग्रहत्वाङ्गीकारेण समाधानोक्तिरित्यतो दृश्यते चेत्युत्तरसूत्रे देवतानां दृश्यत्वोक्त्या तत्प्रयोजकविग्रहस्याप्यभिप्रेतत्वात् युक्त्या विग्रहाङ्गीकारेण समाधानमित्याह दृश्यते चेत्युत्तरसूत्रानुसारेणेति पूर्ववाक्यं व्याख्याय तत्र सामर्थ्यस्यैव दृश्य-त्वोक्तेः न देवानां न तदन्यथानुपपत्या विग्रहवत्वसिद्धिरित्याशङ्कानिवर्तनार्थमुत्तरवाक्यमिति न दोषः इत्याहुः ।

## वाक्यार्थविवरणम्

अभिमान्यधिकरणे । विग्रहवर्ती देवतामसहमानो मीमांसकः शङ्कते ॥ **नाभिमानीत्या-दिना** ॥ **वचनादिति** ॥ तस्य वागिन्द्रियसाध्यत्वेन विग्रहाभावे इन्द्रियाभावेन वचनाद्ययोगादिति भावः । देशान्तरम् । तदधिष्ठितम् । तद्वैय्यर्थ्यात् । तस्मिन् देशान्तरे तस्या देवताया अवस्थानवैय्यर्थ्यादित्यर्थः ।

## वाक्यार्थमञ्जरी

पूर्वोक्तमुभयविधवाक्यदर्शनं तथात्वेऽपीत्यस्योत्तरमाह ॥ **मृत्र वक्त्रीति** ॥ **आदिसृष्टा-वेवेति** ॥ उदाहृतवाक्यानां सृष्टिप्रकरणस्थत्वादिति भावः । मृदब्रवीदित्यादावभिमानिचेतनस्यैव व्यपदेशो न जडस्य । नन्वभिमानिन्या अप्रत्यक्षत्वं पृथिव्यादिवस्त्वन्तरमधिष्ठाय वचनादिकं च कथम् । कथं च परिच्छिन्नानेकाभिमन्यमानगतत्वमित्यत उक्तम् ॥ **विशेषानुगतिभ्यामिति** ॥ विशिष्यत इति विशेषः शक्तिः, अनुगतिः व्याप्तिः ताभ्यामित्यर्थः ॥ **अवधारण इति** ॥ तस्य

(वाक्यार्थमञ्जरी)

च बुद्ध्या विवेकेनाभिमानिपदेनान्वय इति भावः । ननु न युक्तिविरोधमात्रेण श्रुतेरन्यार्थकत्वं कल्प्यते । किं तु युक्त्युपजीव्यप्रत्यक्षविरोधादित्यत आह ॥ **न चेति** ॥ आदिकालीन-मृदादीनामेव श्रुत्या वचनादिकमुच्यते तेषां च नास्मदादिप्रत्यक्षत्वमिति न प्रत्यक्षं श्रुत्युपजीव्य-मिति प्रागेवोक्तमित्यर्थः ॥ **अन्यार्थकल्पन इति** ॥ तदधीनत्वादिन्यायेन मृदादिशब्दानामभि-मन्यमानापेक्षयाभिमानिष्वेव मुख्यत्वेन मृदादिशब्दानां मुख्यार्थलाभादित्यर्थः । तथा च मुख्यार्थलाभायैवान्यार्थग्रहणं न युक्तिविरोधभीत्येति भावः । नाभिमानिदेवताः सन्तीत्यन्वयः ॥ **वचनाद्ययोगेति** ॥ शरीराद्यभावे वागाद्यभावादिति भावः । उक्तं तथा हीत्यादिना । देवतेति तासामिति च वैरूप्येण प्रयोगे हेतुमाह ॥ **अत्रेति** ॥ ननु सूत्रे अभिमानिनीनां व्यपदेश इति सम्भवात्कैकवचनमित्यत आह ॥ **दृश्यते चेति** ॥ अभिमानिन्या इत्येकवचनान्तविग्रहस्य ग्राह्यत्वमिति भावः । ननु तासां सामर्थ्यमिति भाष्येण दृश्यते चेति सूत्रे सामर्थ्यस्यैव कर्मत्वमुच्यते न देवताया इति कथं तदत्र विग्रहज्ञापकमित्यत आह ॥ **दृश्यन्त इति** ॥ तत्र ता इति तच्छब्देन देवतानामपि परामर्शादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ दृश्यते च ॐ ॥ ७ ॥**

**तासां सामर्थ्यं महद्भिः । भविष्यत्पुराणे च–**

**'पृथिव्याद्यभिमानिन्यो देवताः प्रथितौजसः ।**
**अचिन्त्याः शक्तयस्तासां दृश्यन्ते मुनिभिश्च ताः ।**
**ताश्च सर्वगता नित्यं वासुदेवैकसंश्रया' ॥ इति**

## सत्तर्कदीपावली

**तदेतत्प्रमाणवचनेन द्रढयति । पृथिव्याद्यभिमानिन्यो इत्यादिना ॥**

## तत्त्वप्रकाशिका

**नन्वत्राप्रामाणिकदेवताकल्पनात्तासां च विशिष्टसामर्थ्यकल्पनाद्वरं वेदाप्रामाण्यग्रहणमेव लाघवात् । न च वेदेन तत्सिद्धिस्तत्प्रामाण्ये विवादादित्याशङ्कां परिहरत्सूत्रं पठित्वा तच्छेषमेव**

(तत्त्वप्रकाशिका)

पूरयति ॥ **दृश्यते चेति** ॥ **नाप्रामाणिकत्वमभिमानिदेवतानां तत्सामर्थ्यस्य च महद्भिर्दृश्यमानत्वादित्यर्थः । परबुद्धेरप्रत्यक्षत्वात् कुत एतदित्यत आह ॥ भविष्यत्पुराणे चेति ॥** ता देवताः शक्तयश्च । अथवा विग्रहवतीनां सर्वगतानां तासां दर्शनप्रसङ्ग इत्युक्ते प्रष्टव्यम् । किमज्ञैर्दृश्येरन् महद्भिर्वा । आद्यस्योत्तरं विशेषसामर्थ्यम् । द्वितीयेऽभ्युपगमो दृश्यते चेति । अथवा वस्त्वन्तरमधिष्ठाय तासां वचनादिकं कथमित्यस्योत्तरं **तासामिति** ॥ परिच्छिन्नानामभिमानिनीनां कथमनेकाभिमन्यमानाधिष्ठातृत्वमपीत्यस्यानुगतिरिति । अनुपलब्धिबाधपरिहाराय सूत्रमिति । न च वाच्यं देवतासद्भावेऽपि कुतोऽत्र तद्व्यपदेशकल्पनेति । अचेतनानां वचनाद्यदृष्ट्या निर्दोषवाक्यस्याप्रामाण्यादृष्ट्या च तत्कल्पनोपपत्तेः । अतो वेदप्रामाण्ये युक्तिविरोधाभावाद्युक्तं तेन भगवतो जगत्कारणत्वसाधनमिति सिद्धम् ।

## भावबोधः

भाष्यस्थमहद्भिरित्यस्य स्वारस्याय प्रकारान्तरेण योजयति– **अथ वेत्यादिना** ॥ तासां चेत्यादिभाष्यमाकाङ्क्षाक्रमेण द्वेधा योजयित्वा इदानीं यथाक्रममेव तद्योजयति– **अथ वेत्यादिना** ॥ अपि तु वचनादिशक्ताया देवताया मृदादिशब्दवाच्यत्वद्योतिकैवेति न्यायविवरणाभिप्रायमाह– **न च वाच्यमित्यादिना** ॥ द्योतिकैवेत्यवधारयता निर्दोषवाक्याप्रामाण्याऽदृष्टिसहितया मृदादीनां वचनाद्यदृष्टेः, एवं कल्पकत्वं सूचितम् । अन्यथा वेदाप्रामाण्येनैव वचनाद्यदृष्टेरुपपत्ताववधारणायोगादित्यभिप्रेत्योक्तं निर्दोषवाक्यस्याप्रामाण्यादृष्ट्या चेति । अनेनानुव्याख्यानगता दृष्टिपदं निर्दोषवाक्याप्रामाण्याऽदृष्टिपरत्वेनापि व्याख्यातं भवति । सूत्रक्रमस्तु योजनाभेदेन टीकायामेव स्पष्टः ।

## भावदीपः

ननु सूत्रे देवतातत्सामर्थ्ययोर्मानोक्तिर्निर्बीजा तदुक्तावपि श्रुत्युक्तिं विना प्रत्यक्षोक्तिर्निर्बीजेत्यतोऽवतारयति ॥ **नन्विति** ॥ तत्सिद्धिः तयोः सिद्धिरित्यर्थः । देवतातच्छक्तिपरत्वेन भाष्यं सूत्रान्विततया व्याचष्टे ॥ **नाप्रामाणिकत्वमिति** ॥ ता इत्यनूद्यार्थमाह ॥ **ता देवताश्शक्तयश्चेति** ॥ द्वयोरपि प्रकृतत्वादिति भावः । ननु वेदादिप्रामाण्यविवादे बीजाभावस्योक्तत्वात्त्यागेन देवतादौ योगिप्रत्यक्षोक्तिरयुक्ता । अन्यथा योगिप्रत्यक्षे स्मृतेः प्रमाणीकरणायोगादिति

(भावदीपः)
पूर्वत्रारुच्याऽऽह ॥ **अथवेति** ॥ अत्र पक्षद्वयेऽपि विशेषानुगतिभ्यामिति हेत्वोर्न च दर्शनप्रसङ्ग इत्याद्यध्याहृतसाध्यान्वयादरुच्याऽभिमानिव्यपदेश इति श्रुतसाध्यान्वयेन मतान्तरमाह ॥ अथवा **वस्त्वन्तरमिति** ॥ तर्हि दृश्यते चेति सूत्रं किमर्थमित्यत आह ॥ **अनुपलब्धीति** ॥ योगिभिरप्यनुपलभ्यमानत्वान्नास्त्यभिमानिदेवतादीत्याशङ्कानिरासाय दृश्यते चेति सूत्रमित्यर्थः । न मृदादीनां वचनाद्यदृष्टिः श्रुत्यप्रामाण्यकारणमपि तु वचनादिशक्ताया मृदादिदेवतायाः शब्दवाच्यत्वद्योतिकैवेति न्यायविवरणे पूर्वपक्षांशस्य भाष्यव्याख्ययैव प्राग्विवृतत्वात्सिद्धान्तांशमत्र योजयितुं शङ्कामाह ॥ **न च वाच्यमिति** ॥ **अत इति** ॥ मृदादिशब्दानामभिमानिदेवतापरत्वादित्यर्थः ।

## अभिनवचन्द्रिका

**परबुद्धेरिति** ॥ परबुद्धेः मुनिबुद्धेरप्रत्यक्षत्वात् बोधनीयपुरुषबुद्धित्वाभावात् । एतत् देवाताप्रामाणिकत्वशङ्कानिवर्तनं कुतः कथं स्यात् । देवदत्तनिश्चयेन यज्ञदत्तशङ्कानिवृत्त्यदर्शनात् इत्यतः मुनिबुद्धेर्बोधनीयस्याप्रत्यक्षत्वेन तदीयशङ्कानिवर्तकत्वाभावेऽपि लिङ्गविधया तदस्तीति पुराणवचनेन तद्दर्शनस्य असिद्धिं परिहरन् 'दृश्यते च' इति सूत्रस्य 'तासामनुगतिर्दृश्यत' इत्यर्थान्तरमाह आचार्यो भाष्यकार इति भावः । 'भविष्यत्पुराणे च' इति भाष्यस्य 'दृश्यते च' इति सूत्रेणाऽन्वयः । एतेन महद्दर्शनस्यासिद्धिं शङ्कमानेन प्रमाणमात्राभावस्य वक्तव्यत्वेन अप्रत्यक्षत्वाभिधानमयुक्तं प्रमाणविशेषाभावेन प्रमेयाभावसाधनायोगात् । महद्दर्शनसाधनस्य 'दृश्यन्ते मुनिभिश्च ता' इत्यनेनैव पूर्णत्वादुत्तरार्धोदाहरणं व्यर्थम् । 'भविष्यत्पुराणे च' इति चशब्दानुपपत्तिः । भविष्यत्पुराणे चेति साकाङ्क्षत्वादपूर्णं चेति परास्तम् ।

**पूर्वपक्षस्तु**– न वेदः प्रमाणम् 'मृदब्रवीत्, ता आप ऐक्षन्त' इत्यादिनाऽभिहितमृदादिवक्तृत्वादेः 'मृन्न वदति जडत्वात्' इत्यादियुक्तिविरुद्धत्वेन साधकाभावात् । ततश्च न विष्णोस्तेन जगत्कारणत्वसिद्धिरिति ।

**सिद्धान्तस्तु**– वेदो नाऽप्रमाणम् । अपि तु प्रमाणमेव । 'मृदब्रवीत्' इत्यादिवेदस्य अभिमानिदेवतापरत्वेन युक्तिविरोधाभावात् । ननु श्रुतियुक्त्योः श्रुतेरेव प्राबल्यात्तद्विरुद्धयुक्तेरेवाऽप्रामाण्यं वाच्यम्, किं युक्तिविरोधपरिहारेण श्रुतेरन्यार्थकल्पनयेति चेत्, न भवेच्छ्रुति-

(अभिनवचन्द्रिका)

विरोधेन युक्तेरप्रामाण्यम्, यदि श्रुतिः सावकाशा न स्यात् । न चैवं प्रकृते श्रुतेरन्यार्थकल्पने प्रतीतार्थादपि मुख्यार्थलाभेन सावकाशत्वात् । तस्मात् युक्त्या श्रुतिबाधो युक्तः । ननु श्रुत्या युक्तिबाधः । ननु भवेदिदमभिमानिदेवतापरत्वेन श्रुतिप्रामाण्यम्, यदि अभिमानिदेवता एव स्युः न च ताः सन्ति । अभिमानिदेवताः सन्तीति वदन् प्रष्टव्यः, किं ता अभिमन्यमानव्यापिन्यः, उत तदैकदेशवर्तिन्य इति । आद्येऽपि किं ता विग्रहवत्यः, उत नेति । नाद्यः उपलम्भप्रसङ्गात् । न द्वितीयः । वचनाद्ययोगात् । नान्त्यः । तद्रहितदेशत्वात् । देशान्तरोपपत्तौ तद्वैयर्थ्यप्रसङ्गात् । किञ्च नापि देवतासद्भावे प्रमाणमीक्षामहे । श्रुतेरविश्वसनीयत्वात्, अन्यस्याभावादिति चेत्, यत्प्रागुक्तं किं ता अभिमन्यमानव्यापिन्यः, उत तदेकदेशवर्तिन्य' इति, तत्र अभिमन्यमानव्यापिन्यो विग्रहवत्यश्चेति ब्रूमः । तथात्वे उपलम्भप्रसङ्ग इति चेत्, न । किं महतामुपलब्धिप्रसङ्ग आपाद्यते, आहोस्विदज्ञानाम् । आद्ये त्विष्टापत्तिः । यतो 'दृश्यन्ते मुनिभिश्च ता' इति तद्दर्शनं प्रमाणसिद्धम् । न द्वितीयः अज्ञदृष्ट्ययोग्यत्वात् । प्रमाणसिद्धं हि अज्ञदृष्ट्ययोग्यत्वलक्षणसामर्थ्यं तासाम् । यदत्रोक्तं देवतासद्भावे प्रमाणाभावात् नाभिमानिदेवताः सन्तीति । तत्र महतां प्रत्यक्षस्यैव प्रमाणत्वात् । ननु वस्त्वन्तरमधिष्ठाय स्थितानां तासां वचनादिकं न युज्यत इति चेत्, न सामर्थ्यविशेषसद्भावेन तदुपपत्तेः । न च सामर्थ्यविशेषे प्रमाणाभावः, महद्भिस्तस्य दृश्यमानत्वात् । अतो वेदप्रामाण्ये युक्तिविरोधाभावात् युक्तं तेन भगवतो जगत्कारणत्वसाधनमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**वेदेनेति** ॥ पृथिव्यां या देवतेत्यादिवेदेनेत्यर्थः ॥ **तच्छेषमिति** ॥ विशेषपदानुवृत्या शेषं पूरयतीत्यर्थः । अत्रापि न तथात्वमित्यनुवर्तते पूर्वसूत्रात् । बुध्यादिविवेकेनाभिमानिदेवताविशेष इति पदद्वयं षष्ठ्यन्ततया प्रथमान्ततया चानुवर्तते । चशब्दो हेताविति भावेन सूत्रार्थमाह ॥ **नाप्रामाणिकत्वमिति** ॥ यस्मादभिमानिदेवताविशेषः तत्सामर्थ्यं च दृश्यतेऽतो अभिमानिदेवताया विशेषस्य च नाप्रामाणिकत्वमिति सूत्रार्थ इति भावः ॥ **परबुद्धेरप्रत्यक्षत्वादिति** ॥ परप्रत्यक्षस्य स्वप्रत्यक्षरूपत्वाभावात्कुतः प्रामाण्यादल्पकानामेतद्देवता तत्सामर्थ्यं च सिद्धेदित्यतोऽन्येषां स्मृत्या महत्प्रत्यक्षलिङ्गेन तद्दर्शनमिति भावेन लिङ्गस्यासिद्धिं परिहर्तुं सूत्रस्यार्थान्तरमाहेत्यर्थः । भविष्यत्पुराणे च अन्येषां देवता तत्सामर्थ्यं तस्य महत्प्रत्यक्षसिद्धत्वं

च दृश्यत इति सूत्रार्थ इति भावः । एतेन महत्प्रत्यक्षासिद्धिं शङ्कमानेन प्रमाणमात्राभावस्य वक्तव्यत्वेनाप्रत्यक्षत्वाभिधानमयुक्तम् । प्रमाणविशेषाभावेन प्रमेयाभावस्यायोगात् ।

भविष्यत्पुराणे चेति चशब्दानुपपत्तिः । भविष्यत्पुराणे चेति साकाङ्क्षमपूर्णं चेति निरस्तम् । अन्तर्धानशक्त्या दर्शनायोग्यत्वादनुपलम्भो नाभावसाधक इत्युक्तम् । इदानीं दृश्यत इत्युच्यत अतो विरोध इत्यतो महद्भिरिति भाष्यस्वारस्याय योजनान्तरमाह ॥ **अथवेति** ॥ अस्यां योजनायां सामर्थ्यमिति भाष्यस्यातीवोपयोगाभावात्पूर्वयोजना । अत्र पक्षद्वयेऽपि विशेषानुगति-हेत्वोर्न च दर्शनप्रसङ्गः इत्यध्याहृतसाध्यान्वयाद्यथाक्रममन्वयाभावाच्चारुच्याभिमानिव्यपदेश इति श्रुतसाध्येन यथा क्रमान्वयसिद्धये अर्थान्तरमाह ॥ **अथवेति** ॥ वस्त्वन्तरं पृथिव्यादिकं जडम् ॥ **अनेकेति** ॥ अनेकभूभागगिर्याद्यधिष्ठातृत्वमित्यर्थः । तथा च विशिष्टसामर्थ्यं सर्वत्रानुगतिभ्या-मभिमानवतां देवतानामेव मृदब्रवीदित्यादौ वचनकर्तृत्वादिव्यपदेश इति सूत्रयोजनेति भावः ॥ **अनुपलब्धीति** ॥ देवतानां तदचिन्त्यशक्तीनां चानुपलब्धिपरिहाराय दृश्यते चेति सूत्रमित्यर्थः । अभिमानिनामेवायं व्यपदेश इति सौत्रतुशब्दार्थावधारणं दृढीकर्तुमाशङ्क्य तत्परिहारायादृष्टिरिति सिद्धान्तन्यायं विवृणोति ॥ **न च वाच्यमित्यादिना** ॥ आद्ये मृदादि-शब्दानां देवतापरत्वेन सावकाशत्वोक्तिः । द्वितीये चोपलब्ध्यभावचोदने तत्सद्भावे योगि-प्रत्यक्षोक्तिरिति सूत्रक्रमः टीकायामेव स्पष्टः ।

## तत्त्वसुबोधिनी

ननु वेदादिप्रामाण्येऽविवादात् तत्त्यागेन देवतादौ योगिप्रत्यक्षोक्तिरयुक्ता, विवादबीजाभाव-स्योक्तत्वात् । अन्यथा योगिप्रत्यक्षे स्मृतेः प्रमाणीकरणायोगादिति पूर्वत्रारुच्याह ॥ **अथवेति** ॥ अत्र पक्षद्वयेऽपि विशेषानुगतिभ्यामिति हेत्वोः न च दर्शनप्रसङ्ग इत्याद्यध्याहृतसाध्यान्वया-दरुच्याभिमानिव्यपदेश इति श्रुतसाध्यान्वयेन मतान्तरमाह ॥ **अथवा वस्त्वन्तरमिति** ॥ ननु तर्हि 'दृश्यते च' इति सूत्रं किमर्थं इत्यत आह ॥ **अनुपलब्धिवाधपरिहारायेति** ॥ योगिभि-रप्यनुपलभ्यमानत्वात् मास्त्वभिमानिदेवता इति शङ्कानिरासाय दृश्यते चेति सूत्रमिति न वैय्यर्थ्यमित्यर्थः । मृदब्रवीदित्यादौ मृदादिशब्दैः अभिमानिदेवताः व्यपदिश्यते तत्र विग्रहादि-कमस्ति न वा इत्याद्यनुपपत्त्यादि तत्सर्वं विशेषानुगतिभ्यां परिहरणीयमित्यक्षरार्थः ।

## वाक्यार्थमञ्जरी

अभिमानिदेवता तत्सामर्थ्यं च योगिभिरुपलभ्यते चेत्यर्थः ॥ **कुत इति** ॥ महद्भिः दृश्यत इत्येतत्कुतः प्रमाणादस्माभिर्ज्ञेयमित्यर्थः । महद्भिरित्येतत्स्वारस्यानुसारेणाह ॥ **अथवेति** ॥ **अभ्युपगम इति** ॥ अभ्युपगमरूपमूलं दृश्यते चेति सूत्रेणोच्यत इत्यर्थः । एवं तासामिति भाष्यमाकाङ्क्षाक्रमेण द्विधा योजयित्वा इदानीं यथा क्रमेण योजयति ॥ **अथवेति** ॥ अत्र मृदब्रवीदित्यादौ ।

॥ इति अभिमान्यधिकरणम् ॥ ३ ॥

## ४. अथ असदधिकरणम्

'असदेवेदमग्र आसीत्' (छां.उ.६-२-१) 'असतः सदजायत' (ऋ.सं.१०-७२-३) इत्यादिनाऽसतः कारणत्वोक्तेर्विरोध इत्यतो वक्ति–

**॥ ॐ असदिति चेन्न प्रतिषेधमात्रत्वात् ॐ ॥ ८ ॥**

प्रतिषेधमात्रत्वान्नासतः कारणत्वं युक्तम् । असतः कारणत्वायुक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । सर्वशब्दानां ब्रह्मणि समन्वयेऽपि 'तदधीनत्वादर्थवत्' इत्यादिनाऽमुख्यत्वेनान्यस्यापि वाच्यत्वेनाङ्गीकारादसतः प्राप्तिः । तथा च श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधात् । अर्थायुक्तिविरोधोऽपि निराक्रियते ।

## सत्तर्कदीपावली

'असदेवेदमग्र आसीत्,' 'असतः सदजायत' इत्यादिना असतो जगत्कारणत्वश्रुतेः न ब्रह्मजगत्कारणमिति नाशङ्कनीयम् । न विद्यते सदुत्तमं यस्मात्तस्मादसदित्यसच्छब्दवाच्यस्य पुरुषोत्तमस्यावश्याङ्गीकर्तव्यत्वेनाविरोधात् । अत्यन्तासतो जगत्कारणत्वासम्भवात् । उपरितनपादगतेन नासतो दृष्टत्वादित्यनेन गतार्थमिदमिति नाशङ्कनीयम् । 'असतः सदजायत' इत्यादिवाक्यस्य जगत्कर्तृपुरुषोत्तमपरत्वेन युक्तिविरुद्धार्थत्वमित्यत्र प्रतिपादनात् । उपरि युक्तिभिः शून्यवादस्य निराकरिष्यमाणत्वेनापौनरुक्त्यात् । 'एतेन सर्वे व्याख्याता' इत्यत्रासदादिशब्दैर्मुख्यतः परमात्मोच्यत इति प्रतिपादितत्वेऽपि तेषाममुख्यवाच्यत्वस्याप्यङ्गीकृतत्वात् । 'असतः सदजायत' इत्यनेन असत्कारणत्वं विश्वस्याशङ्क्य असदिति चेन्न प्रतिषेधमात्रत्वादिति परिहृतमित्यदोषः । असतः कारणत्वादिकं वक्तीत्यसतः कारणत्वायुक्तिविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यत इत्यर्थः । तदेतदाह– **असदेवेदमग्र आसीदित्यादिना ॥**

## तत्त्वप्रदीपिका

'असदेवेदमग्र आसीत्, तत्सदासीत्' इति 'छान्दोग्यश्रुतिः । 'देवानां पूर्वे युगे असतः सदजायत' इत्यादिना वाक्यजातेनासतः कारणत्वमुच्यते । तस्मादुक्तसमन्वयस्य विरोधः । अथवा इत्यादिनाऽसत्कारणत्वादिवाक्येन सतः कारणत्वोक्तेर्विरोधः । तस्मादसत्कारणं स्यादित्यत आह–

(तत्त्वप्रदीपिका)

**असदिति चेन्न प्रतिषेधमात्रत्वात् ॥** प्रतिषेधबुद्धिविषयमात्रत्वात् । यद्यप्यभावानां भावधर्माः सन्ति, भावानां चापरे, तथाऽपि धर्मिणो भावरूपत्वं मात्रशब्देन विवक्षितम् । न ह्यभावरूपस्य धर्मिणः कारणत्वं दृश्यते भावधर्मवत्त्वेऽपि । न हि वन्ध्यासूनोः तद्भावान्यभेदादिभावधर्मवत्त्वेऽपि कार्यकरत्वं दृष्टम् ।

ननु 'नासतोऽदृष्टत्वात्' इत्युपरिष्टादसत्कारणमतं प्रतिपेत्स्यति । तत्र कथमपुनरुक्तिरित्यत आह– **असत इत्यादि ॥** असत एवाग्रे स्थितिः, तस्य कारणत्वं, तच्च मनःपूर्वकमित्याद्युक्तिभिर्विरुद्धं ब्रह्मकारणवाक्यम् । अस्ति हि तदुक्तिः श्रौती– 'इदं वा अग्रे नैव किञ्चनासीत् तदसदेव सन्मनोऽकुरुत' इत्यादिकेति । एतन्मतमत्र निषिध्यते । उपरि तु तद्विवर्तपक्षः सामयिकः संमतः । अथवाऽसतः कारणत्वाद्युक्तिहेतोः 'असदेवेदमग्र आसीत्' इत्यादिवाक्यमुक्तसमन्वयविरुद्ध-मप्रामाण्यमेति इत्येतदत्र निषिध्यते । अथवाऽसतः कारणत्वोक्त्या सत्कारणत्वोक्त्या च परस्परविरुद्धं वेदवाक्यमित्येतदत्र निषिध्यते । अथवा प्रागुत्पत्तेर्विनाशादूर्ध्वं चासदात्मकत्वात्कार्यस्य कारणमप्य-सद्भवितुमर्हति वस्तुत्वात्कार्यवत् । एवमसतः कारणत्वाद्युक्तिविरुद्धं ब्रह्मवाचकं वेदवाक्यमित्येतदत्र निषिद्ध्यते न तु शून्यसमयः । तथाश्रुतिप्राप्तं मुख्यार्थस्य ब्रह्मणोऽपरित्यागेनैवासतो मुख्यत्वापरिग्रहेण श्रुतिप्राप्तम् । अतो न प्रबलेयं श्रुतिप्राप्तिः । न चात्र श्रुतीनामेव मिथो विरोधनिरासः । येनोत्तरत्र पुनरुक्तिशङ्का स्यात् । किन्तु, अर्थाद्युक्तिविरोधो निराक्रियते । अथात्र पुनरपि समापतिता पुनरुक्तिः । यतो युक्तिसहितश्रुतिविरोधोऽप्युपरि निरसिष्यते । मैवं, मुखतः श्रुतिविरोधः, अर्थाद्युक्तिविरोधो निराक्रियते । तच्चोक्तं हि– **तथा श्रुतिप्राप्तमेवेत्यादि ॥** अत एव चावोचन्तानुद्रवन्तो भगवन्तो वृत्तमनुव्याख्याने–

> 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः ।
> एवं चतुर्विधा नैव विरुध्यन्तेऽन्वयं प्रति' इति ॥

## तत्त्वप्रकाशिका

अत्र ब्रह्मणो जगत्कारणत्वे युक्तिविरोधस्य परिह्रियमाणत्वादस्ति शास्त्रादिसङ्गतिः । जगत्कारणत्वं हरेरुक्तम् । तस्य युक्तिविरुद्धत्वे लक्षणासम्भवात्स निराकर्तव्य एव । जगत्कारणत्व-मेव विषयः । तद्विष्णोर्युक्तमयुक्तं वेति सन्देहः । श्रुतिविगानं सन्देहबीजम् । तत्र पूर्वपक्षयति ॥ असदेवेति ॥ न विष्णोर्जगत्कारणत्वम् । प्रमाणाभावात् । न च 'यतो वा इमानि' इत्यादि श्रुतिः

(तत्त्वप्रकाशिका)

प्रमाणम् । 'असदेवेदमग्र आसीत्' इत्यादिश्रुत्याऽसतोऽपि कारणत्वोक्तेः । न हि श्रुतित्वाविशेषेऽन्यया ब्रह्मणः कारणत्वं सेत्स्यत्यन्यया तु नासत इति युक्तम् । अतोऽसदेव जगत्कारणमिति न जगत्कारणत्वं ब्रह्मणः । तथा चोक्तं लक्षणं दुष्टमिति भावः । अत्र सर्वत्रासच्छब्देन प्रलयवर्तिविश्वप्रागभावोऽभिधीयते । कारणशब्देन कर्तेत्यवधेयम् । स्यादेतत् । श्रुतिद्वयेन सन्देह एव नान्यतरपक्षावधारणमिति । न पूर्वपक्षे सयुक्तिकत्वस्य वक्ष्यमाणत्वादिति । सिद्धान्तयत्सूत्रमवतार्याक्षेपांशस्य पूर्वमेव विवृतत्वात्परिहारांशं व्याचष्टे ॥ **अत इति** ॥ युक्तमेव विष्णोर्जगत्कारणत्वं न त्वसतः । तस्याभावधर्मात्मतामन्तरेण स्वरूपत एव प्रतिषेधबुद्धिविषयत्वात् । न हि घटप्रागभावस्य कारणत्वं सम्भवतीति भावः । न हि शशविषाणादीनां यत्किञ्चित्प्रति कारणत्वं सम्भवतीति भावः ।

नन्वेतस्मिन्नधिकरणेऽसतो जगत्कारणत्वं वदतां शून्यवादिनां समयो निराक्रियते न तु श्रुतिप्राप्तमसन्मतम् । 'एतेन सर्वे व्याख्याताः' इत्यसदादिशब्दानां ब्रह्मविषयत्वस्योक्तत्वेनासतः प्राप्त्यभावात् । अतोऽपव्याख्यानमेतदित्यत आह ॥ **असत इति** ॥ अत्राधिकरणेऽसतः कारणत्वप्रलयस्थितत्वाभिधायकश्रुत्या विरुद्धं विष्णोर्जगत्कारणत्वाभिधायकं वेदवाक्यमिति श्रुतिप्राप्तमेवासन्मतं निराक्रियते न तु समय इत्यर्थः । ननूक्तमेवासतो न श्रुतौ प्राप्तिरिति तत्राह ॥ **सर्वेति** ॥ नन्वस्त्वेवमसतः प्राप्तिस्तथापि समयोऽत्र निराक्रियत इति किं न स्यादित्यत आह ॥ **तथेति** ॥ अमुख्यतयेत्यर्थः । शून्यवादिसमयस्योपरितनपादे निराकरिष्यमाणत्वात् । अत्र श्रुतिप्राप्तमेवासन्मतं निराक्रियत इत्येवाङ्गीकार्यम् । अन्यथा पौनरुक्त्यापातादिति भावः । यद्यत्र ब्रह्मणो जगत्कारणत्ववाचिश्रुतेः श्रुतिप्राप्तासन्मतविरोधो निराक्रियेत तर्ह्येतदधिकरणं तृतीयपादे निबन्धनीयं न तु युक्तिविरोधपरिहारात्मकेऽस्मिन्पाद इत्यत आह ॥ **अर्थादिति** ॥ न केवलमत्र श्रुतिविरोधः परिह्रियते येनासङ्गतिः । किं नाम कारणमभिमतं प्रलयेऽसद्भवितुमर्हति वस्तुत्वात्कार्यवदित्याद्यसतः कारणत्वप्रतिपादकयुक्तिविरोधोऽपीति भावः । तथापि युक्तिविरोधमात्रपरिहारात्मके पादे श्रुतियुक्तिविरोधपरिहारोऽसङ्गत इत्यतोऽर्थादित्युक्तम् । नात्र श्रुतियुक्त्योः स्वतन्त्रं विरोधद्वयं परिह्रियते किं तु श्रुतिविरोधपरिहारेणाप्यन्ततो युक्तिविरोध एव । तथा हि । अत्रासतः कारणत्वप्रतिपादकयुक्तिः पूर्ववादिनोपन्यस्यते । तस्याश्च निर्मूलाया असाधकत्वात्तन्मूलभूता च श्रुतिरुच्यते । तथा चानुपपन्नभाषित्वेन श्रुतेरर्थान्तरे प्रामाण्याभाव इति तद्विरोधे परिहृते निर्मूलयुक्तेः स्वत एवाप्रामाण्यमिति । अतोऽत्र श्रुतिविरोधपरिहारस्य युक्तिविरोधपरिहाराङ्गत्वान्नासङ्गतिरिति युक्तमेवोक्तव्याख्यानमिति भावः ।

## गुर्वर्थदीपिका

अतोऽसदेव जगत्कारणमिति वदन् पूर्वपक्षी सावधारणत्वात् प्रागभावकारणतायाः सर्वैरङ्गीकृतत्वाच्चास्मद्वाक्यमेव प्रबलमित्यभिप्रैति । अभावधर्मात्मतामन्तरेणेत्यत्रान्योन्याभावाख्यो यो धर्मः तदात्मकतामन्तरेण विना धर्ममादायाभावात्मकताऽन्योन्याभावात्मके घटादवप्यस्ति । प्रागभावस्तु न तथा धर्मिस्वरूपपर्यालोचनयैवाभावः । एवं च सौत्रमात्रपदव्यवच्छेद्यो धर्मरूपेणैव प्रतिषेधः । सौत्रो हेतुस्तु धर्मिस्वरूपेणैव प्रतिषेधत्वं विवक्षितम् । अतो न ब्रह्मणि व्यभिचारः । नापि प्रागभावनिष्ठप्रमेयत्वादिधर्मात्मकतामादाय हेतोरसिद्धिः । धर्मरूपेण भावात्मकत्वेऽपि धर्मिरूपेण प्रतिषेधत्वस्यैव विद्यमानत्वादिति भावः । प्रतिषेधबुद्धिविषयत्वादित्यत्र प्रतिषेधविषयकबुद्धिविषयत्वादित्यर्थः । यद्यप्यभावे घटप्रतियोगिकनिषेधबुद्धेरनुयोगित्वेन विषयत्वम् । शशविषाणादौ तु निषेधबुद्धेः प्रतियोगित्वेनैव । तथाऽपि यथाकथञ्चित् निषेधबुद्धिविषयत्वेन शशविषाणवत्कर्तृत्वाभाव एव तात्पर्यः टीकाकारस्य । सूत्रकारस्य तु धर्मिस्वरूपेणैव प्रतिषेधरूपत्वात् न प्रागभावः कर्ता । धर्मिस्वरूपेण भावरूपकुलालादिचेतनेष्वेव कर्तृत्वदर्शनात् जगत्यपि भावरूपः कश्चन चेतनः कर्ता भवेत् । स चेश्वर एव । महीमहीधरादिकर्तृत्वस्येश्वरं विनाऽन्यत्रासम्भवादिति तात्पर्यम् । यद्यपि 'तदधीनत्वादर्थवत्' इति सूत्रेऽन्यनिष्ठावरत्वादौ स्वातन्त्र्येण ब्रह्मणोऽप्यवरादिशब्दवाच्यतैव मुखत उक्ता । तथाऽपि तद्गतत्वेनान्यस्याप्यवरादिशब्दवाच्यता सूचितेति भावेन तदधीनत्वादर्थवदित्यादिनेत्युक्तम् । आदिपदेन समाकर्षादिति सूत्रं गृह्यते । कारणत्वाभिमतं प्रलये असदित्यनुमाने असत्पदस्य सन् भावो न भवतीति व्युत्पत्त्या भावात्मकं नेत्यर्थः । वस्तुत्वात् भावत्वात् । तथा चानुपपन्नभाषित्वेन श्रुतेरित्यत्र श्रुतेः पूर्वपक्षश्रुतेरित्यर्थः ।

## भावबोधः

अत्र पूर्वाधिकरणे दृढयुक्तिविरोधपरिहारेण जगज्जन्मादिकारणत्वप्रतिपादकवेदप्रामाण्ये समर्थिते न्यायविवरणोक्तरीत्या यदि 'यतो वा' इत्यादि वेद प्रामाण्याद् ब्रह्मणो जगत्कारणत्वं तर्हि 'असदेवेदमग्र आसीत्' इत्यादिवेदस्यापि प्रामाण्यात्तदुक्तयुक्त्याऽपि जगत्कारणत्वं स्यादित्याक्षेपोत्थानात् अनन्तरसङ्गतिरिति ज्ञेयम् ।

यद्वा प्रबलयुक्तिविरुद्धायाश्च श्रुतेः स्वार्थपरित्यागस्यातीताधिकरणे व्यवस्थितत्वात् प्राग-

(भावबोधः)

भावस्यापि स्वरूपसत्त्वादिनाऽसदेवेत्यादिप्रयोगविषयत्वोपपत्तेरिति सुधोक्तरीत्या यदि प्रबलयुक्तिविरोधेन 'मृदब्रवीत्' इत्यादिश्रुतेरन्यार्थत्वकल्पना तर्हि श्रुतिसंवादिप्रबलयुक्तिविरोधेन 'सदेव सोम्य' 'यतो वा' इत्यादि श्रुतीनामप्यन्यार्थकत्वकल्पनेन ब्रह्मणो जगत्कारणत्वासिद्धिरित्याक्षेपोत्थानाद्वा अनन्तरसङ्गतिरिति ज्ञातव्या ॥ **तद्विष्णोरिति** ॥ अत्र विष्णोर्जगत्कारणत्वं न युक्तमुत युक्तमिति चिन्ता । तदर्थं यतो वेत्यादिश्रुतिः कारणं प्रलयेऽसद्भवितुमर्हतीत्यादियुक्तिबाधिता उत नेति । तदर्थं युक्तिरसद्वेत्यादिश्रुतिसंवादित्वेन यतो वेत्यादिश्रुतेः प्रबला न वेति । तदर्थमसद्वेत्यादिश्रुतिरसत्कारणत्वपरोत नेति । तदर्थमसतः कारणत्वाङ्गीकारे प्रलयेऽसन्मात्रावशेषः किमापादयितुमशक्य उत शक्य इति । तदर्थमसन्मात्रावशेष्याप्रामाणिकत्वप्रमाणविरुद्धत्वे न स्त उत स्त इति । तदर्थं तर्कं किं साधनबाधनक्षमो न भवत्युत भवतीति । एवं प्रधानादिपक्षेऽपि चिन्ता ऊह्या । 'असदेवेदमग्र आसीत्' इत्यादिश्रुत्या असतोऽपि कारणत्वोक्तेरिति । अनेनासतोऽपि स्रष्टृत्वं श्रूयत इति न्यायविवरणमपि व्याख्यातम् । अत्र भाष्यन्यायविवरणटीकाश्रुतिसूत्रगतासच्छब्दार्थतया शून्यमभिप्रेतं, न तु प्रागभावः । भाष्ये श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते । समयस्योपरि निषेधादित्युक्तेः । न हि प्रागभावकर्तृत्वप्रापकः समयोऽस्ति । टीकायामपि न हि शशविषाणादीनां किञ्चित्प्रति कारणत्वं सम्भवतीत्याद्युक्तेश्च । सुधायां तु ।

'अभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिणः'

इत्याद्यनुव्याख्यानानुसारेण श्रुतिसूत्रगताऽसच्छब्दस्य प्रागभावपरत्वमभ्युपेत्य महाप्रलये उत्पत्स्यमानः प्रागभावोऽवश्यमङ्गीकरणीय इत्याद्युक्तम् । एवञ्च श्रुतिसूत्रयोरनेकार्थत्वादेकैकार्थमभ्युपेत्य प्रवृत्तयोर्भाष्यानुव्याख्यानयोस्तट्टीकयोश्च न विरोधः ।

नन्वेवमेतेनेति सूत्रस्याकस्मादिति श्रुतिप्राप्तासन्मतनिराकरणपरत्वेन पौनरुक्त्यादिप्राप्तिरिति चेत्, न; अकस्मादिति श्रुतेर्निष्कारणकत्वाङ्गीकारात् । भाष्ये अकर्तृत्वेत्युक्तेः टीकायां निष्कारणत्वादित्युक्तेश्च । अत एव सुधायां भाष्यदिशा निष्कारणैव जगन्निराशङ्कितेति न पौनरुक्त्यमित्युक्तम् । न चैवम्

तन्मनोऽकुरुतेत्यादेरसतो मनसो जनिः ।<br>निवारिता तु पूर्वत्र ह्यकस्मादिति तद्बिना ॥

(भावबोधः)

इत्यनुव्याख्यानेन पूर्वमभावस्य जगत्कारणत्वं निराकृतमिदानीं तु शून्यस्येति सुधया च विरोधः । तयोरकस्मादिति श्रुतेः शून्यकारणत्वपरत्वेन प्रवृत्तेरिति वाच्यम् । अकस्मादिति श्रुतेरपि नानार्थत्वेन भाष्यानुव्याख्यानयोर्विरोधाभावादिति ॥ **तस्येति** ॥ नास्तीति प्रतिषेध-बुद्धिविषयत्वस्य प्रतियोगित्वादिना घटादावपि सत्त्वेऽपि कारणत्वराहित्याभावाद्व्यभिचारः स्यादित्यत उक्तं **स्वरूपत एवेति** ॥ देशकालाद्यसम्बन्धत्वेनेत्यर्थः । न ह्यत्यन्तासच्छ-शविषाणादिकं प्रामाणिकघटपटादिदेशकालादिसम्बन्धेन प्रतियोगितया प्रतिषेधबुद्धिविषयो भवतीति भावः । स्वरूपत एव प्रतिषेधबुद्धिविषयत्वं प्रागभावादावप्यस्तीति व्यभिचारः स्यादित्यत उक्तम् **अभावधर्मात्मतामन्तरेणेति** ॥ अभावस्तु अभावत्वादिधर्मात्मकत्वेनैव प्रतिषेधबुद्धिविषयो न तदन्तरेण, शशविषाणादिकं तु नाभावादिवत्तया तादृशबुद्धिविषय इत्यर्थः । एवञ्च प्रतिषेधमात्रत्वादित्येतत्केवलः प्रतिषेधो यस्य न तु घटादिवत् केनापि रूपेण सत्त्वं तत्प्रतिषेधमात्रम् । तस्य भावः प्रतिषेधमात्रत्वं तत्त्वादिति व्याख्यातं भवतीति भावः । भाष्येऽसतः कारणत्वादेरुक्त्येति विग्रहमभिप्रेत्याह– **कारणत्वप्रलयस्थितत्वाभिधायकश्रुत्येति** ॥ कारणं प्रलयेऽसद्भवितुमर्हतीति उभयसम्प्रतिपन्ने जगत्कारणेऽसत्त्वब्रह्मत्वाभ्यां विप्रतिपत्तौ पूर्वपक्षिणा असत्त्वं साधयतीयमित्येवं प्रयोगः प्रदर्शितः । अनेन ।

'असत्कार्यं यथादृष्टं वस्तुत्वात्कारणं तथा ।'

इत्यनुव्याख्यानं कारणस्य शून्यत्वसाधकप्रयोगदर्शनपरतया व्याख्यातं भवति । सुधायां तु परिशेषेण प्रागभावस्याकर्तृत्वसिध्यर्थं कारणतया सिद्धान्त्यभिमतेश्वरादीनां प्रलये सत्त्वसाधक-प्रयोगप्रदर्शनपरतया व्याख्यातमिति बोद्धव्यम् ॥ **अर्थान्तर इति** ॥ शून्यस्य कारणत्वादा-वित्यर्थः ।

## भावदीपः

युक्तिविरोधो निराक्रियत इत्यादि भाष्यदिशाऽस्यान्तर्भावसङ्गतिमाह ॥ **अत्र ब्रह्मण इति** ॥ **युक्तीति** ॥ श्रुत्युपसर्जनप्रागभावकर्तृत्त्वसाधकयुक्तीत्यर्थः । सा चाग्रे व्यक्ता । उक्तं चानुभाष्ये । अल्पवाक्ययुता युक्तिर्बहुलैव विरोधिनीति । अत्राल्पत्वबहुत्वे गुणत्वप्रधानत्वे इति सुधायामेवोक्तम् । पूर्वसङ्गतिमाह ॥ **जगदिति** ॥ उक्तं जन्मादिसूत्र इत्यर्थः ॥ **श्रुतीति** ॥ 'यतो वा' इति 'असदेवेदमग्र' इत्यादिश्रुतिविरोध इत्यर्थः । भाष्ये विरोध इत्यत्र 'यतो वा' इत्यादिश्रुतेरिति शेषं

(भावदीपः)

मत्वा साध्योक्तिपूर्वमित्युक्तेरित्यन्तं तावद् व्याचष्टे ॥ **न विष्णोरिति** ॥ अप्रयोजको हेतुरित्यत: ईश्वरस्य स्रष्टृत्ववदसतोऽपि स्रष्टृत्वं श्रूयत इति न्यायविवरणप्रयुक्तवति प्रत्ययोक्तसाम्यं व्यनक्ति ॥ **न हीति** ॥ अस्त्वसतोऽपि कारणत्वोक्तिस्तावता कथं यतो वा इत्यादि श्रुतिर्न प्रमाणं येन विष्णुकारणत्वं न युक्तमित्यत: विरोध इति भाष्यांशं फलोक्त्या विवृण्वन् उपसंहरति ॥ **अत इति** ॥ यतो वा इत्यादिश्रुतेरसद्वा इत्यादि श्रुतिविरोधेनाप्रामाण्यादित्यर्थ: ।

ननु नि:स्वरूपस्यासतो नियतप्राक्सत्त्वरूपहेतुत्वायोगवदासीदिति सत्त्वोक्तिविरोधाच्च कथमसत: कारणत्वशङ्का असच्छब्दस्य प्रागभावार्थत्वेऽपि तत्कारणत्वमात्रस्य विष्णुकर्तृत्वाविरोधाच्चेत्यत आह ॥ **अत्र सर्वत्रासच्छब्देन प्रलयवर्तिविश्वप्रागभावोऽभिधीयते कारणशब्देन च कर्तेत्यवधेयमिति** ॥ अचेतनस्यापि कर्तृत्वं वृक्षेण स्थीयत इत्यादौ कर्त्रर्थकतृतीयाविभक्तिदर्शनाद्युज्यत इति भाव: । असदेवेति प्रागुक्तावधारणमाक्षिप्य समाधत्ते ॥ **स्यादेतदिति** ॥ **सयुक्तिकत्वस्येति** ॥ तथा च भाष्ये उक्तेरित्यनन्तरं युक्त्या चेत्यपि ध्येयमिति भाव: । युक्तिश्च कारणं प्रलयेऽसद्भवितुमर्हति । वस्तुत्वादित्यग्रे व्यक्ता । असत: कारणत्वं न चेदकर्तृकं जगत्स्यादित्यतो भाष्ये साध्यभागस्यार्थमाह ॥ **युक्तमेवेति** ॥ कारणत्वं कर्तृत्वमित्यर्थ: ॥ **न त्वसत इति** ॥ न विश्वप्रागभावस्येत्यर्थ: । इति चेन्न निषेधैकस्वरूपस्य न कर्तृतेत्यनुभाष्योक्ते: । 'प्रतिषेधात्मकत्वं तु भावस्याभावधर्मत: । धर्मधर्म्यैक्यतश्चैव न तु तन्मात्रता भवेत् । अभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिण:' । तादृक्त्वं मात्रतेहोक्तेत्यनुभाष्यदिशा भाष्यस्थहेत्वंशं मात्रपदार्थं वदन्व्याचष्टे ॥ **तस्येति** ॥ तात्पर्यार्थ: ॥ **स्वरूपत एवेति** ॥ घटाभावादिवदिति भाव: । सर्वभावानामभावधर्मात्मना प्रतिषेधबुद्धिविषयत्वमस्तीति कुलालादौ व्यभिचारनिरासाय अभावधर्मात्मतामन्तरेणेति मात्रपदार्थो विवृत: । न हि तादृशेऽभावे बुद्धिपूर्वककृति (प्रवृत्ति) मत्त्वरूपमीश्वरगतत्वेनास्मदभिमतं कर्तृत्वं युज्यते घटाभावादावदर्शनादित्याह ॥ **न हीति** ॥ न हि शशविषाणादीनामिति पाठपक्षे तु यथा नि:स्वरूपाणां शशविषाणादीनां नियतपूर्वक्षणसत्त्वस्वरूपं कारणत्वं शङ्कार्हं न भवति तथा बुद्धिहीने विश्वप्रागभावे बुद्धिपूर्वककृतिमत्त्वरूपकर्तृत्वं न सम्भवतीत्यर्थ: । कारणत्वाद्युक्तिविरुद्धमिति भाष्ये कारणत्वादेरुक्ति: श्रुति: तद्विरुद्धमिति विग्रह: । न तु कारणत्वाद्धेतोर्युक्तिविरुद्धमिति भिन्नं पदमुत्तरभाष्यविरोधादिति भावेनाह ॥ **कारणत्वप्रलयस्थितत्वेति** ॥ **असन्मतमिति** ॥ प्रलयवृत्तिविश्वप्रागभाव एव

(भावदीपः)

विश्वस्योपादानं कर्ता चेत्यभावोपादानकर्तृत्वमतमित्यर्थः । असतः प्राप्तिः कर्तृत्वेनाभावस्य प्राप्तिरित्यर्थः ॥ **उपरितनेति** ॥ नासतो दृष्टत्वादित्यत्रेत्यर्थः । असन्मतमभावकर्तृत्वमतं निषिध्यत इत्यर्थः ॥ **अन्यथेति** ॥ अत्रापि समयप्राप्तस्य निषेधे प्रागभावकर्तृत्वप्रापकसमयाभावेन शून्यकारणतानिषेधस्यैव प्रसङ्गादिति भावः । असत्कार्यं यथादृष्टं वस्तुत्वात्कारणं तथेत्यनुभाष्योक्तदिशा असदिति चेदिति सूत्रांशसूचितां युक्तिमाह ॥ **कारणमिति** ॥ निमित्तकारणत्वेनोपादानकारणत्वेन च सिद्धान्त्यभिमतमीश्वरादृष्टप्रधानादिकं प्रलयेऽसत् अविद्यमानं वस्तुत्वात्कार्यवदित्यर्थः । एवं चानया युक्त्या ईश्वरप्रभृतिभावकारणमात्रस्य प्रलयेऽभावसिद्धौ कार्यत्वस्य सोपादानत्वसकर्तृकत्वनियमात् परिशेषादभावस्यैव विश्वकर्तृत्वं विश्वोपादानत्वं च सेत्स्यतीति भावेनोक्तमित्याद्यसतः कारणत्वेत्यादिपदम् । अर्थान्तरे प्रागभावकर्तृत्वादौ ।

## अभिनवचन्द्रिका

अत्र द्वे दर्शने श्रुतिप्राप्तं शून्यस्य जगत्कारणत्वमत्र निषिध्यत इत्येकम् । अपरन्तु प्रागभावस्य जगत्कारणत्वं निराक्रियत इति । तत्राद्यं टीकाकृतो दर्शनम् । अत्र 'तथा श्रुतिप्राप्तमसन्मतमत्र निराक्रियते समयस्योपरि निषेधात्' इति भाष्यं लिङ्गम् । अन्यथा 'नासतो दृष्टत्वात्' इत्यनेनैकार्थत्वप्रसक्त्यभावात् प्रापकभेदेन भेदाभिधानं न स्यात् । द्वितीयं सुधाकृतो दर्शनम् । अत्रानुव्याख्याने 'इति चेन्न, निषेधैकस्वरूपस्य न कर्तृता' इति निषेधस्वरूपाभिधानं लिङ्गम् । निषेधस्वरूपत्वस्याभावलक्षणत्वात् । तस्य च वर्णकान्तरत्वेन न परस्परं विरोधोऽपीति ध्येयम् । असिद्धिमाशङ्क्य निषेधति ॥ **न च यतो वेति** ॥ 'यतो वा' इत्यादिवाक्यस्य श्रुतिमूलकयुक्तिविरोधं वक्तुं श्रुतिं तावदाह ॥ **असदेव इदमग्र इत्यादिना** ॥ शून्यस्य सिद्धे ॥ श्रुतिवेद्यत्वे युक्तेरपि भावेन शून्यस्य जगत्कारणत्वं न ब्रह्मण इति गूढाभिसन्धिराह ॥ **अतोऽसदेवेति** ॥ आशयमविद्वाञ्छङ्कते **स्यादेतदिति** ॥ एतदित्येतत् विवृणोति **श्रुतिद्वयेनेति** ॥ ततश्च सन्देह एव स्यात् न अन्यतरपक्षावधारणमित्येतद्दूषणं स्यादिति योजना । स्वाशयमुद्घाटयति ॥ **पूर्वपक्ष इति** ॥

ननु प्रतिषेधमात्रत्वादित्ययुक्तं शून्यस्य अभावविलक्षणत्वाङ्गीकारेण प्रतिषेधमात्रत्वासिद्धिरित्यतः सौत्रं हेतुं व्याचष्टे ॥ **तस्य अभावधर्मात्मतामन्तरेणेति** ॥ शून्यं न जगत्कारणं,

(अभिनवचन्द्रिका)

नेदं जगत्कारणमिति तत्प्रतिषेधबुद्धिविषयत्वात् । यो यत्प्रतिषेधबुद्धिविषयः नासौ तद्वान् शशविषाणवदिति प्रयोगोऽत्र विवक्षितः । न च असिद्धो हेतुः । शून्यं न जगत्कारणमिति सार्वजनीनानुभवसिद्धत्वात् संयोगेन घटवदित्यपि समवायेन घटनिषेधात् प्रतिषेधबुद्धिविषयत्वं व्यभिचारीत्यत उक्तम् ॥ **अभावधर्मात्मतामन्तरेणेति** ॥ अभावशब्दोऽत्र अविद्यमानपरः । तदात्मत्वं तदवच्छिन्नत्वम् । अविद्यमानधर्मावच्छेदमन्तरेण स्वरूपतयैव यो यत्प्रतिषेधबुद्धिविषयः, नासौ तद्वानिति व्याप्तिर्विवक्षिता । संयोगेन घटवतो भूतलस्य न स्वरूपेण घटप्रतिषेध-बुद्धिगोचरता । किन्तु व्यधिकरणसम्बन्धेन तत्प्रतिषेधबुद्धिगोचरतेति न तत्र व्यभिचार इति भावः । एतेन सूत्रभाष्ययोः प्रतिषेधमात्रत्वस्य हेतूकृतत्वेन धीपर्यन्तधावनमनुपपन्नमिति परास्तम् । शून्यस्य प्रतिषेधात्मकत्वाभावेन धीपर्यन्तधावनस्य उचितत्वात् ॥ **प्रलयस्थितत्वाभिधायकश्रुत्या विरुद्धमिति** ॥ अत्र यद्यपि विष्णोर्जगत्कारणत्वस्य असतः प्रलये स्थितिमात्रेण न विरोधः, तथापि 'असदेवेदमग्र आसीत्' इति श्रुतेः सावधारणत्वात् तया च विष्णोः प्रलये स्थित्य-भावापत्त्या विरोध इति द्रष्टव्यम् ॥ **अत्र भाष्ये सर्वशब्दानामिति** ॥ सर्वशब्दानां ब्रह्मणि समन्वये विद्यमानेऽपि जगति व्यवहारविलोपप्रसङ्गभिया 'तदधीनत्वादर्थवत्' इत्यादिना अन्यस्यापि मुख्यतया वाच्यत्वस्य सूत्रकृतैव अङ्गीकृतत्वात् । शून्यस्य जगत्कारणत्वसाधक-प्रबलयुक्त्यनुसरणाय 'असदेवेदमग्र आसीत्' इत्यादिश्रुतीनामसन्मात्रप्रतिपादकत्वमभ्युपेत्य प्रमाणसंवादार्थानङ्गीकारानौचित्यादिति मन्यमानस्य अस्त्येव असतः प्राप्तिरित्यर्थः । एतेन 'असदेवेदमग्र आसीत्' इत्यत्र सिद्धान्तिना असच्छब्दस्य अमुख्यवृत्त्यापि असत्परत्वा-नङ्गीकारादमुख्यत्वेन अन्यस्यापि वाचकत्वेनाङ्गीकारादित्युक्तमयुक्तमिति परास्तम् **अमुख्यतयेत्यर्थ इति** ॥ श्रुत्यर्थाऽपरिज्ञानेनेत्यर्थः । विमर्शतः प्राप्तं मुख्यतः श्रुतिप्राप्तम्, आपाततस्तु प्राप्तं न मुख्यतः श्रुतिप्राप्तमिति भावेनाऽमुख्यतयेत्युक्तम् । एतेन श्रुतिमुख्यार्थस्येव तदमुख्यार्थस्यापि ग्राह्यत्वात् तन्निराकरणानुपपत्तिरिति परास्तम् ॥ **किं नामकारणमिति** ॥ असत्त्वं तावदविद्यमान-शून्ययोरनुगतम् । तत्र नेदमविद्यमानम्, 'असदेवेदमग्र आसीत्' इति प्रलयकाले सत्त्वेन प्रमाणसिद्धत्वादिति अविद्यामानत्वे दूषिते शून्यत्वमेव सिध्यतीति भावः । एतेन किं शून्यत्वं साध्यते, उत तदानीन्तनाभावप्रतियोगित्वम् । आद्ये दृष्टान्तः साध्यविकलः । द्वितीये त्वर्थान्तरता । कारणस्य प्रलयकालीनाभावप्रतियोगित्वसिद्धावपि असतः कारणत्वासिद्धेः प्रलय-कालीनाभावानां वस्तुत्वेऽपि तदानीन्तनाऽभावप्रतियोगित्वाभावात् व्यभिचारश्चेति परास्तम् ।

(अभिनवचन्द्रिका)
शून्यस्य तदानीन्तनाऽभावप्रतियोग्यनुगतस्याऽसत्त्वसामान्यस्य साधनात् । वस्तुत्वादित्यनेन अभावविलक्षणत्वस्यैव विवक्षितत्वात् ।

## वाक्यार्थमुक्तावली

**युक्तिविरोधश्चेति** ॥ श्रुत्युपसर्जनयुक्तिविरोधश्चेत्यर्थः । पूर्वाधिकरणे दृढयुक्तिविरोधे निरस्ते । इह तु युक्तिमात्रेण पूर्वपक्षानुदयात्तदुक्तमनुव्याख्याने 'अल्पवाक्यगता युक्तिर्बहुलैव विरोधिनीति' । अत्राल्पबहुत्वे गुणप्रधानत्व इति सुधायामेवोक्तम् । अत्राधिकरणे सूत्रभाष्ययोरसच्छब्देन शून्यं प्रागभावश्चोच्यते । अत एव टीकायां पाठद्वयम् । तत्प्रदर्शयिष्यामः । न चासतो नियतपूर्ववृत्तित्व-रूपकारणत्वायोगात्तत्पाठो नादरणीय इति वाच्यम् । असच्छब्देन शून्यस्य ग्रहणात्तस्य च परेण तत्वताङ्गीकारात् । अन्यथा समयचरणेऽपि पूर्वपक्षानुदयप्रसङ्गात् । अस्मिन्नेवाधिकरणे सुधाया-मकस्मादिति श्रुत्यर्थतया शून्यकारणतामाशङ्क्य चरमसूत्रेण तन्निरासोक्त्ययोगाच्च । प्रागभाव-कारणत्वमात्रस्यात्र निराकरणात्तद्विरोध इति निरस्तम् । अनुव्याख्याने एतेन शिष्टा इति चरमसूत्र-निषेध्यतया सदा शङ्क्ते न पुनरुक्तिभिया प्रथमसूत्रेण प्रागभावमात्रपूर्वपक्षाङ्गीकारेऽपीह चरमसूत्रेऽ-कस्मादिति श्रुत्यर्थतया शून्यग्रहणात्पौनरुक्त्यभावेन प्रथमसूत्रे सतोऽपि पूर्वपक्षकरणोपपत्तेः ।

ननु निषेधत्वमभावतेति वचनादसतः कथञ्चिदप्रतिषेधमात्रत्वमिति तत्रैव निरसिष्यते । न चात्रासच्छब्दार्थतयाऽभावस्य ग्रहे श्रुतिप्राप्तमसन्मतमत्र निराक्रियते । समयस्योपरि निषेधादिति समयपादीयासदधिकरणेन पौनरुक्त्यमाशङ्क्य तत्र समयप्राप्तस्य श्रुतिप्राप्तस्येति परिहारो युक्तः । प्रागभावकर्तृत्वपरसमयस्यैवाभावादिति वाच्यम् । अत्र शून्यस्यापि निषेधेन तद्विवक्षया गतार्थतामाशङ्क्य निषेधोपपत्तेः । न चासच्छब्दस्य शत्रन्तत्वात्कथमभावपरतेति वाच्यम् । अनुव्याख्याने शतृप्रत्यस्यासदभावनमिति छान्दसेनाभावसाधनत्वेन वाऽसत् असत्वमिति भावप्रधानत्वेन वाऽभावार्थत्वस्वीकारेणानुपपत्यभावादित्यलं विस्तरेण ।

भावबोधे तु सत्परपाठमेवावलम्ब्य चन्द्रिकायामभावपरपाठमेवावलम्ब्य टीकार्थ उक्तो ज्ञेयः । अत्र यदि प्रबलयुक्तिविरोधेन मृदब्रवीदित्यादेरन्यार्थकल्पना तर्हि श्रुतिसंवादियुक्तिविरोधेन 'सदेव सौम्येदमग्र आसीत्' 'यतो वा इमानि भूतानि जायन्त' इत्यादि श्रुतीनामन्यार्थकल्पने न तया ब्रह्मणो जगत्कारणत्वसिद्धिरित्याक्षेपेणोत्थानादनन्तरसङ्गतिरिति ज्ञेयम् ॥ **युक्तमयुक्तं चेति** ॥ अत्र

(वाक्यार्थमुक्तावली)

विष्णोर्जगत्कारणत्वं कारणाभिमतं प्रलये सद्भवितुमर्हतीत्यादिकया युक्त्या विरुद्धम् । उत युक्तेः प्रतिषेधमात्रत्वे युक्तिविरोधादविरुद्धमिति चिन्ता । तदर्थं श्रुतिबलात्कस्यचिदसतः कारणत्वं युक्तिविरुद्धमपि सम्भवति । उत युक्तिबलादसतः कारणत्वे सन्मात्रावशेषानिष्ठप्रसङ्गाच्छ्रुतेरन्यार्थत्वं युक्तेराभासत्वमिति । तदर्थमसन्मात्रावशेष्याप्रामाणिकत्वप्रमाणविरुद्धत्वे न स्त उत स्त इति । तदर्थं तर्कः किं साधनबाधनक्षमो न भवत्युत भवतीति । एवं जीवप्रधानादिविपक्षेऽपि चिन्त्याः ऊह्याः । श्रुतिसाम्यमित्युक्तन्यायं विवृणोति ॥ **न हीति** ॥ अत्र स्यादेतदित्यतः पूर्वमत्रेति सर्वत्रासच्छब्देन प्रलयवतः विश्वप्रागभावोऽभिधीयते कारणशब्देन कर्तोच्यत इति केषुचित्कोशेषु पाठो दृश्यते । तस्यार्थः ।

ननु अत्र श्रुतिसूत्रभाष्यगतासच्छब्दार्थतया शून्यस्यैव स्वीकारो अभावस्य च भावो हि धर्मोऽथापि हि धर्मिण इत्याद्यनुव्याख्यानानुगुणं यत इदं वाक्यमतस्तदनुसारेण प्रागभावार्थकत्वस्यापि स्वीकारे प्रागभावकारणत्वमात्रस्य विष्णुकर्तृताविरोधान्न निषिध्यते ॥ **प्रागभावोऽभिधीयत इति** ॥ **प्रागभावोऽप्यभिधीयते** ॥ न केवलं शून्यमित्यर्थः ॥ **अभावधर्मात्मतामन्तरेणेति** ॥ बुद्धिविषयत्वादित्युक्ते घटोऽस्तीति बुद्धिविषये घटादौ व्यभिचारः । अतः स्वरूपः एव प्रतिषेधेत्युक्तम् । स्वरूपत एवासतः प्रतिषेधस्वरूपतः प्रतिषेधोऽत्यन्ताभावः तद्विषयिणी बुद्धिः स्वरूपत एव प्रतिषेधबुद्धिस्तद्विषयादित्यर्थः । प्रागभावो हि देशविशेषे कालविशेषे चासतो देशान्तरे कालान्तरे च सतो घटादेः प्रामाणिकस्य प्रतिषेधो न तु स्वरूपत एवासत्प्रमाणप्रतियोगिको निषेध इति न तस्य स्वरूपत एवासत्प्रतियोगिकप्रतिषेधबुद्धिविषयत्वमिति न व्यभिचारः । स्वरूपतः प्रतिषेधबुद्धिविषयत्वादित्युक्ते उक्तरीत्यात्यन्ताभावे व्यभिचारः । तस्य व्यवहारं प्रति कारणत्वात् । अतोऽभावधर्मात्मतामन्तरेणेत्युक्तम् । अभावधर्मोऽभावत्वं तदात्मतामन्तरेण न तदवच्छेदमन्तरेणेत्यर्थः । अत्यन्ताभावो हि अभावत्वधर्मावच्छेदेनैव स्वबुद्धौ भासते न तु तमन्तरेणेति व्यभिचारः । अभावत्वरूपधर्मावच्छेदमन्तरेण प्रतिषेधबुद्धिविषयत्वादित्युक्ते घटे व्यभिचारः । तस्यापि प्रतिषेधबुद्धौ प्रतियोगितया विषयत्वात् । अतः स्वरूपत एव प्रतिषेधेति । स हि प्रागभावादिबुद्धावेव प्रतियोगितया भासते नत्वन्त्याभावबुद्धौ । प्रामाणिकप्रतियोगिकात्यन्ताभावास्यानङ्गीकारात् । तथा च सर्वं सुस्थम् । पक्षीकृतेऽपि स्वरूप एवासत् अत्यन्तासच्च । प्रतियोगिकाप्रतिषेधबुद्धौ अभावत्वरूपधर्मावच्छेदमन्तरेण प्रतियोगितया

(वाक्यार्थमुक्तावली)
विषयत्वसत्वान्नासिद्धिः ॥ **न हि शशविषाणादीनामिति** ॥ यद्यपि शून्यं नासदित्युक्तं माध्यमिकैः । तथापि सर्वधर्मशून्यत्वादसत्वपर्यवसानाच्छशविषाणदृष्टान्तः । क्वचित् न हि घट-प्रागभावस्य घटं प्रतीति पाठः । तत्रायमर्थः । प्रतिषेधबुद्धिविषयत्वादित्युक्तेऽन्योन्याभावलक्षण-धर्मात्मना प्रतिषेधबुद्धिविषये कुलालादौ व्यभिचार इत्यत उक्तम् ॥ **स्वरूपत एवेति** ॥ तस्यैव विवरणम् **अभावधर्मेति** ॥ प्रतिषेधात्मकत्वादित्यपि क्वचित्पाठः । कारणत्वाद्युक्तिविरुद्धमिति भाष्ये कारणत्वादेरुक्तिः श्रुतिस्तद्विरुद्धमिति विग्रहमभिप्रेत्याह ॥ **कारणत्वप्रलयस्थितत्वेति** ॥ अङ्गीकारादसतः प्राप्तिरिति भाष्यसिद्धान्तिना व्यवहारसिद्धयेऽन्यत्र तथात्वाङ्गीकारात्तन्न्याये-नात्राप्यसतः प्राप्तिरिति चोच्यत इत्यर्थः । अमुख्यतयेत्यर्थ इति श्रुत्यर्थापरिज्ञानेन प्राप्तमर्थ-मित्यर्थः । विमर्शप्राप्तस्यैव मुख्यत्वात् ॥ **कारणाभिमतमिति** ॥ सिद्धान्तिना कारणत्वेनाभिमतं ईश्वरादिकमित्यर्थः । इत्यादीत्यादिपदेन एतत्सजातीयाः सर्वे भावाः प्रलये सन्तः भावत्वा-त्कार्यवदिति । परम्परया प्रलये कारणतया सन्मात्रावशेषसाधकम् । प्रलयः असन्मात्रावशेषवान् प्रलयकालत्वादिति साक्षाद्विवक्षितमनुमानं च गृह्यते । आद्यानुमानद्वये प्रलये सिद्धान्त्यभिमत कारणमात्रस्य भावमात्रस्य वा सत्वसिद्धौ कार्यस्य च सकर्तृकत्वनियमात् परिशेषाच्छून्य-कारणत्वमभावकारणत्वं सिध्यतीति ज्ञेयम् । भावबोधे तु कारणाभिमतमित्यस्योभयसम्पन्ने जगत्कारणे सत्वब्रह्मत्वाभ्यां विप्रतिपत्तौ पूर्वपक्षिणा सत्वं साध्यते इत्युक्तम् । तत्रासत्वं शून्यत्वमभावत्वं वा । नाद्यः । दृष्टान्तानुपपत्तेः । न द्वितीयः । परेण शून्यभावप्रतियोगित्वा-नङ्गीकारादिति । चोद्यस्यासत्वं नाम शून्ये तदानीन्तनाभावप्रतियोगिनि च साधारणं घटादि-सद्वैलक्ष्यण्यं च विवक्षितम् । वस्तुत्वं चाभावविलक्षणत्वमिति समाधानं बोध्यम् ॥ **श्रुतिविरोध-परिहारेणापीति** ॥ उपोद्घातविधयेति शेषः ॥ **मूलभूतेति** ॥ न चैवं सति युक्तेः प्राधान्योक्ति-विरोधः । राज्ञः सेनावच्छ्रुतेर्मूलत्वेन वस्तुतः प्राधान्येऽपि ब्रह्मणः कर्तृत्वनिषेधे आभीरसेनाव-द्युक्तेरेवाग्रेसरत्वेन कार्यतः प्राधान्यात् । अत एव वक्ष्यति श्रुतिविरोधपरिहारस्य युक्तिविरोध-परिहाराङ्गत्वादिति । सूत्रे सदिति श्रुतिप्रतीकस्य युक्तौ असद्भवितुमर्हतीति साध्यस्य असदेव जगत्कारणमिति फलितस्य ग्रहणम् । ततश्च असद्वा इदमिति श्रुतेः कारणाभिमतं प्रलयेऽसत् वस्तुत्वादित्यनुमानादसदेव जगत्कारणं न विष्णुरिति चेत् प्रतिषेधमात्रत्वादिति सूत्रार्थः । हेत्वंशः प्रागेव विवक्षितः ।

## तत्त्वसुबोधिनी

अत्र पूर्वाधिकरणे दृढयुक्तिविरोधपरिहारेण जगज्जन्मादिकरणत्वप्रतिपादकवेदप्रामाण्ये समर्थिते यदि यतो वेत्यादि वेदप्रामाण्यं तर्हि उक्तयुक्त्या सतोऽपि जगत्कारणत्वं स्यादिति आक्षेपोत्थानादनन्तरसङ्गतिः ॥ **श्रुतिविगानमिति** ॥ असत्कर्तृत्वप्रापकविष्णुकर्तृत्वप्रापकश्रुत्योर्विगानमित्यर्थः । तथापि 'यतो वा' इत्यादि श्रुतिबलाद् विष्णोरेव जगज्जन्मादिकारणत्वं सिद्ध्यतीत्यतः आह ॥ **न हीति** ॥ भाष्यसूत्रस्थो सच्छब्दः प्रागभावपरो वा, असत्परो वेति संशयं निरसितुमाह **अत्र सर्वत्रेति** ॥ एवं च न हि घटप्रागभावस्य कारणत्वं क्लृप्तम् । तथा च कर्तृत्वमात्रकल्पने शतृप्रत्ययस्य सदसद्भवनमिति छान्दसेन भावसाधनत्वम् । न वा असदसत्त्वं भावप्रधानेन प्रागभावपर इति भावः । **सयुक्तिकत्वस्य इति** ॥ कारणं प्रलये सद्भवितुमर्हति वस्तुत्वात् घटवत् इति सयुक्तिकत्वस्येत्यर्थः । प्रतिषेधमात्रत्वादिति सौत्रं हेतुं व्याचष्टे ॥ **तस्येति** ॥ अत्र प्रतिषेधात्मकत्वादित्युक्ते भावेष्वपि अन्योन्याभावादिधर्मात्मना प्रतिषेधत्वमस्तीति व्यभिचारः स्यात् । अतः सूत्रे मात्रशब्दः । तथाप्यसिद्धिः प्रागभावस्यापि अभिधेयत्वादिधर्मात्मना भावत्वेन प्रतिषेधमात्रत्वाभावादतो मात्रशब्दाभिप्रायमाह ॥ **स्वरूपत एवेति** ॥ अनेनासिद्ध्यादिपरिहारो न ज्ञायते इत्यतः स्वरूपत एवेति स्वपदं विवृणोति ॥ **अभावो धर्मात्मतामन्तरेणेति** । अभावरूपो यः धर्मः तदात्मकतां विनेत्यर्थः । न हि प्रागभावे कथनाभावरूपो धर्मो वर्तते इति कारणात्तस्य प्रतिषेधरूपत्वं, किन्तु तं विनैव तस्य प्रतिषेधरूपत्वम् । अतो नासिद्धिरिति भावः । भावेषु व्यभिचारोऽपि न, तेषु अन्योन्याभावरूपधर्मवत्त्वेनैव प्रतिषेधात्मकत्वं न तु तद्भिनेति भावः । अस्तु प्रतिषेधात्मकत्वं प्रागभावस्य, तथापि कर्तृत्त्वं कुतो न इत्यत आह ॥ **न हीति** ॥ कारणत्वं कर्तृत्वमदृष्टत्वादिति भावः । प्रसक्तेरभावादित्याह ॥ **एतेनेति** ॥ कारणत्वाद्युक्तिविरुद्धमिति । भाष्ये कारणत्वादेरुक्तिं श्रुतिः, तद्विरुद्धमिति विग्रहः ।

ननु कारणत्वादिहेतोः युक्तिविरुद्धमिति भिन्नपदं अनन्तरभाष्यविरोधादित्याह ॥ **कारणत्वप्रलयस्थितत्वेति** ॥ तथेत्यस्यान्यत्वमर्थ इति प्रतीतिं निवारयितुमाह ॥ **अमुख्यतयेति** ॥ अन्यथा पौनरुक्त्यापातादिति । अथापि समयप्राप्ते निषेधप्रागभावकर्तृत्वप्रापकसमयाभावेन शून्यकारणतानिषेधस्यैव प्रसङ्गादिति भावः । अर्थादित्यनेन कथमसङ्गतिः परिहृतेत्यत आह ॥ **नात्रेति** ॥ अत्रान्तरे इति प्रागभावकारणत्वादौ इत्यर्थः । असतः कारणत्वाभ्युपगम इति प्रागभावस्य कर्तृत्वाभ्युपगम इत्यर्थः ।

## वाक्यार्थविवरणम्

अन्योन्याभावधर्मात्मकद्वारा स्वरूपतः प्रतिषेधबुद्धिविषये कुलालादौ व्यभिचारवारणाय 'अभावधर्मात्मकतामन्तरेण' इत्युक्तम् । अभावधर्मात्मकद्वारमन्तरेणेत्यर्थ इति सुधोक्तरीत्या ध्येयम् । 'प्रतिषेधात्मकत्वं तु भावस्याभावधर्मतः । धर्मधर्म्यैक्यतश्चैव' इत्यनुव्याख्यान-व्याख्यावसरे तथा उपपादितत्वादिति गुरुचरणाः । भावबोधोक्तं तु रीत्यन्तरमित्यदोषः । कुतो न त्वित्यत आह ॥ **एतेनेति** ॥ **श्रुतियुक्तिविरोधेति** ॥ जगत्कारणत्वश्रुतेरसत्कारणत्वाभि-धायकश्रुतियुक्तिभ्यां विरोधेत्यर्थः । मतमिति सप्रयोजनत्वं सूचितम् ॥ **श्रुतियुक्त्योः स्वतन्त्र-मिति** ॥ पञ्चमीयम् । जगत्कारणत्वश्रुतेरसत्कारणत्ववादिश्रुत्या असत्कारणत्वसाधकयुक्त्या च पृथग्विरोधद्वयं न परिह्रियत इत्यर्थः । प्रयोजनान्तरस्य धान्यादेः ।

## वाक्यार्थमञ्जरी

नन्वत्र शून्यस्य कारणत्वनिषेधपरतया श्रुतिसूत्रव्याख्यानमभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिण इत्यनुव्याख्यानविरुद्धम् । तत्र विश्वप्रागभावस्यैव कारणत्वनिषेधपरतया व्याख्या-नादिति चेन्न । श्रुतिसूत्रयोरनेकार्थत्वेनैकार्थमभ्युपेत्य प्रवृत्तग्रन्थयोर्विरोधाभावात् वक्ष्यमाण-त्वादर्थाद्युक्तिविरोध इति भाष्यव्याख्यानावसरे । असद्वेति श्रुतावसच्छून्यं कारणत्वेनोच्यत इति चेन्न । तस्य केवलप्रतिषेधप्रतीतिविषयत्वेन शशविषाणवत्कारणत्वानुपपत्तेरित्यर्थः ॥ **तस्येति** ॥ घटादौ नास्तीति बुद्धिविषयत्वसत्वेऽपि कारणत्वस्यैव सत्वाद्व्यभिचार इत्युक्तम् ॥ **स्वरूपत एवेति** ॥ भावधर्मात्मकतामन्तरेणेत्यर्थः । घटादेश्च प्रतियोगित्वरूपभावाधर्मात्मकत्वेनैव तथात्व-मिति न दोषः । स्वरूपत एव प्रतिषेधबुद्धिविषयत्वं प्रागभावे वर्तते तत्र कारणत्वमेवास्तीति व्यभिचार इत्यत उक्तम् । **अभावधर्मात्मकतामन्तरेणेति** ॥ प्रागभावत्वरूपाभावधर्मात्मकत्वेनैव प्रतिषेधबुद्धिविषयो न तदन्तरेणेति न दोषः । तथेत्यनन्तरं सिद्धान्तिनेति शेषः ॥ **अर्थान्तर इति** ॥ शून्यकारणत्वविषयत्व इत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॐ ॥ ९ ॥**

**असत उत्पत्तौ प्रलयेऽपि सर्वासत्त्वमेव स्यात् ।**

## सत्तर्कदीपावली

युक्त्यन्तरैरुक्तार्थं समर्थयते ॥ अपीतावित्यादिना ॥

## तत्त्वप्रदीपिका

असत उत्पत्त्यङ्गीकारे प्रलयेऽपि पूर्ववत्सर्वासत्त्वप्रसङ्गादसमञ्जसमिदमसन्मतम् ।

## तत्त्वप्रकाशिका

यदुक्तं प्रतिषेधमात्रत्वाच्छशविषाणादिवदसतो न कारणत्वमिति न तद्युक्तम् । युक्तिविरुद्धस्यापि श्रुतिबलात्कस्यचिदसतः कारणत्वस्याभ्युपगमे बाधकाभावात् । न च शशविषाणादीनामपि तथात्वप्रसङ्गः । सत्सु वैलक्षण्यवदसत्स्वपि वैलक्षण्योपपत्तेरित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अपीताविति** ॥ असतः सकाशाज्जगदुत्पत्तावभ्युपेतायां प्रलये असन्मात्रावशेषः प्रसज्जेत । कार्यनाशे कारणमात्रावशेषनियमात् । अतोऽसमञ्जसमसन्मतमित्यर्थः ।

## गुर्वर्थदीपिका

युक्तिविरुद्धस्यापीत्यत्र प्रतिषेधमात्रत्वादिति सौत्रयुक्तिविरुद्धस्येत्यर्थः । असत्स्वपि वैलक्षण्योपपत्तेरित्यत्र असत्सु निषेधबुद्धिविषयेष्वित्यर्थः ।

## भावबोधः

षष्ठीभ्रमं वारयति– **असतः सकाशादिति** ॥ सूत्रे अपीति शब्दः प्रलयवाचकः । तदिति पूर्वप्रकृतासत्परामर्शकम् । अवधारणार्थकमात्रशब्दशिरस्कम् । वदिति मतुप् । तदन्तश्च भावप्रधानमित्यभिप्रेत्य प्रवृत्तमिति भाष्यं व्याचष्टे– **प्रलयेऽसन्मात्रावशेष इति** ॥

## भावदीपः

**युक्तीति** ॥ प्रतिषेधमात्रत्वयुक्तीत्यर्थः । कस्यचिदसतः विश्वप्रागभावस्येत्यर्थः । आपाद्यापादकयोरसाङ्गत्यनिरासाय शेषपूर्त्या भाष्यं व्याचष्टे ॥ **असतः सकाशादिति** ॥ सूत्रे अपीतिशब्दः प्रलयवाची । तच्छब्दः प्राक्प्रकृतासच्छब्दिताभावपरः सावधारणः । वदितिमतुप्प्रत्ययो न

(भावदीपः)

तु परमत इव वतिरिति भावेन सूत्राक्षराणि योजयति ॥ **प्रलये असन्मात्रेत्यादि** ॥ सर्वासत्त्व-मिति भाष्यं तु तात्पर्यार्थोक्तिपरमिति भावः ॥ **कार्यनाश इति** ॥ यद्यपि कार्यनाशेऽपि कारण-शब्देनेहाभिमतकर्तृमात्रावशेषनियमो नास्ति नष्टकर्तृकघटादिनाशे व्यभिचारात् । तथापीह पूर्व-वादिना कर्तृपादानयोरैक्याङ्गीकारात्कार्यनाशे उपादानावशेषनियमात्तदभिप्रायेण कार्यनाशे कारणमात्रावशेषनियमादित्युक्तम् । असन्मतमभावमतम् ।

## अभिनवचन्द्रिका

**युक्तिविरुद्धस्यापीति** ॥ युक्तिप्रतिरुद्धस्यापीत्यर्थः । एतेन बाधाभावादित्ययुक्तम् युक्तिविरुद्धस्यापीत्यनेन युक्तिबाधस्याङ्गीकृतत्वादिति परास्तम् ॥ **न चेति** ॥ 'असदेवेदम्' इति असच्छब्दघटितायाः श्रुतेः शशविषाणादीनामपि कारणत्वं न वाच्यमित्यर्थः । एतेन शून्यस्य जगत्कारणत्वे श्रुतिसद्भावात् शशविषाणस्य तदभावेन वैषम्याच्छून्यस्य कारणत्वे शशविषाणस्यापि तत्स्यादिति शङ्कैव नोदेतीति परास्तम् ॥ **सत्स्विति** ॥ 'सदेव सोम्येदमग्र आसीत्' इति सच्छब्दघटितायाः श्रुतेः घटादिसाधारण्येऽपि विष्णोरेवैतच्छ्रुतिप्रतिपाद्यत्वं, न घटादेः प्रतिपाद्यत्वमिति वत् शून्यस्यैवासच्छब्दघटितश्रुतिप्रतिपाद्यत्वं न शशविषाणादीनामिति वैलक्षण्यसम्भवादिति भावः ॥ **कार्यनाश इति** ॥ सन्मात्रस्याकार्यत्वात् यावत्कार्यनाशस्यैव प्रलयत्वेन सत्त्वशेषो न स्यादिति भावः । अनेन 'असत उत्पत्तौ प्रलये सर्वासत्त्वमेव स्यात्' इति भाष्यम्, असतः सकाशात् सत उत्पत्तौ प्रलये विद्यमानस्य सर्वस्य कालादेः असत्त्वमेव स्यात्, सद्विलयरूपे प्रलये स्थितस्य सत्त्वायोगादिति व्याख्यातम् । अनेनैव भाष्येण 'अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्' इति सूत्रम्, **अपीतौ** प्रलये, स्थितस्य सर्वस्य कालादेः, **तद्वत्** शून्यवत्, असत्त्वप्रसङ्गादसमञ्जसम् असन्मतमिति व्याख्यातमिति सूचितम् ।

## वाक्यार्थमुक्तावली

मात्रशब्दशिरस्कं च ॥ **असतः शशविषाणवदिति** ॥ घटप्रागभाववदित्यपि क्वचित्पाठः । **न च शशविषाणादीनामिति** ॥ घटप्रागभावादीनामित्यपि क्वचित्पाठः ॥ **सत्स्विति** ॥ सत्स्व-पीतावीश्वरस्य जगत्कारणत्वं न घटादीनामिति सदेव सोम्येति श्रुत्यर्थस्य स्वीकारादिति । सूत्रे अपीतिशब्दः प्रलयपरः । तदिति प्रकृतासत्परं पूर्वसूत्राद्बुध्या विवेकेनानुवृत्तौ अवधारणार्थक-

(वाक्यार्थमुक्तावली)

मात्रशब्दशिरस्कं च । वदिति मतुप् तदन्तं च भावप्रधानमित्यभिप्रेत्य प्रलय इत्यादिभाष्यं व्याचष्टे ॥ **प्रलय इति** ॥ सर्वासत्वमेवेति भाष्यन्तु प्रलये सन्मात्रावशेषे कस्यापि सतोऽभावेन सर्वासत्वमेव स्यादिति तात्पर्योक्तपरमिति भावः ॥ **कार्यनाश इति** ॥ यद्यपीहाभिमतकर्तृमात्रा-वशेषनियमो नास्ति । कर्तृनाशानन्तरभाविघटादिनाशे व्यभिचारात् । तथा परेण सिद्धान्तिना निमित्तत्वेन कर्तृत्वेनोपादनत्वेनाभिमतानां सर्वेषामत्यसत्कार्यत्वं स्वीकृत्य निमित्तत्रयोपादानतया कर्तृतया चासत एवाङ्गीकारात् तदभिप्रायेणेयमुक्तिः । असन्मतमिति शेषोक्तिः ।

## तत्त्वसुबोधिनी

**तथात्वप्रसङ्ग इति** ॥ कर्तृत्वप्रसङ्ग इत्यर्थः । सतः कर्तृत्वपक्षे सतो ब्रह्मण एव कर्तृत्वं नान्यस्येति । तथा वैलक्षण्यमङ्गीक्रियते । तथा च प्रकृतेऽपीत्याह ॥ **सत्स्वपीति** ॥ षष्ठीभ्रमं निवारयति ॥ **असतः सकाशादिति** तद्वत्प्रसङ्गः इति । अत्र सूत्रे अपीतिशब्दः प्रलयवाचकः तच्छब्दः प्रकृतासत्परामर्शः । अवधारणार्थकमात्रशब्दशिरस्कः, वदिति मतुप् प्रत्यय इति भावः ।

## वाक्यार्थमञ्जरी

असतः कारणत्वे **अपीतौ** प्रलये **तद्वत् प्रसङ्गात्** तन्मात्रावशेषप्रसङ्गात् । असत्कर्तृत्वमतम-समीचीनमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ न तु दृष्टान्तभावात् ॐ ॥ १० ॥**

**प्रलये सर्वासत्त्वं भावे दृष्टान्तभावादेव न युज्यते । सत उत्पत्तिः सशेषविनाशश्च हि लोके दृष्टः ।**

## सत्तर्कदीपावली

**दृष्टान्तसद्भावात् जगतः सकर्तृकत्वपक्ष एव ज्यायान् नत्वसत्कारणत्वपक्षः दृष्टान्तरहितत्वा-दित्यर्थः ।**

## तत्त्वप्रदीपिका

यथाऽग्रे नैव किञ्चनाऽसीत् तथाऽन्ते नैव किञ्चन भविष्यतीति युक्तमेवेत्यत आह– **ॐ न तु दृष्टान्तभावात् ॐ ॥** प्रलये सर्वासत्त्वे न युज्यते । सद्भावे दृष्टान्तभावादेव । न चोत्पत्तेः प्रागपि युज्यते तस्मादेव ।

## तत्त्वप्रकाशिका

अस्माभिरपि प्रलयेऽसन्मात्रावशेषस्याभिलषितत्वान्नानिष्टापादनमेतदित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ न त्विति ॥** न प्रलये सर्वासत्त्वं युज्यते । तदा पदार्थसत्त्वस्यैव दृष्टान्तबलेन साधयितुं शक्यत्वात् । अतः परस्येष्टमपि प्रलये सर्वासत्त्वापादनं प्रामाणिकपरित्यागरूपत्वाद्भवेदेवानिष्टापादनमिति भावः । कोऽसौ प्रलये पदार्थसत्त्वसाधने दृष्टान्त इति तत्राह **॥ सत इति ॥** अत्रैतौ प्रयोगौ भवतः । विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हति । उत्पत्तित्वाद्धटोत्पत्तिवत् । विमतो विनाशः सशेषो विनाशत्वात् घटविनाशवदिति । एवं विप्रतिपन्नोत्पत्तिविनाशयोः सत्पूर्वकत्वे सशेषत्वे च सिद्धे प्रलये पदार्थसत्त्वमेव सिध्यति ।

## गुर्वर्थदीपिका

पदार्थसत्त्वस्यैवेत्यत्र पदार्थो भावपदार्थ इत्यर्थः । सतो भवितुमर्हतीत्यत्र सतो भावादित्यर्थः। विमतो विनाशः सशेष इत्यत्र भावशेषसहित इत्यर्थः । पदार्थसत्त्वमेवेत्यत्र कर्तृपदार्थस्य भावत्वमेवेत्यर्थः ।

## भावबोधः

अवधारणार्थकसौत्र 'तु' शब्दस्य प्रमाणप्राबल्यप्रदर्शकतया दृष्टान्तभावादेवेति भाष्ये सम्बन्धो दर्शितः । प्रमाणप्राबल्यस्य प्रमेयावधारणहेतुत्वात् स्वयं पदार्थसत्त्वस्यैवेत्युक्तम् ।

## भावदीपः

सतः भावपदार्थादित्यर्थः । **सत्पूर्वकत्वे** भावपूर्वकत्वे ।

## अभिनवचन्द्रिका

**विप्रतिपन्नोत्पत्तिरिति** ।। अनेन महदादीनां सज्जन्यत्वे सिद्धे तत्कारणस्य प्रलयकालिकस्य सर्वस्य सत्त्वं सिध्यतीति भावः ।। **परम्परया चेति** ।। वेदो न प्रमाणम् अनाप्तवाक्यत्वादित्यादि-रूपेणेश्वरादीनां प्रलये सत्त्वावेदकवेदप्रामाण्यनिराकरणद्वारेत्यर्थः । आद्यानुमानस्य व्यतिरेकित्वा-दन्वयदृष्टान्ताभावो न दोष इत्याशङ्क्य दूषयति ।

## वाक्यार्थमुक्तावली

सूत्रे अपीतौ तद्वत्वमित्यनुवर्तते । भावादिति यथा श्रुतं पञ्चम्यन्तं सप्तम्यन्तं च । अव-धारणार्थकस्तुशब्दः भावादित्यनेन सम्बध्यत इत्यभिप्रेत्य प्रवृत्तं भाष्यं व्याचष्टे ।। **न प्रलय** इति ।। अवधारणार्थकसौत्रतुशब्दस्य प्रमाणप्राबल्यप्रदर्शकतया दृष्टान्ताभावादेवेति सम्बन्धस्य दर्शित-त्वेऽपि प्रमाणप्राबल्यस्य प्रमेयावधारणहेतुत्वात् स्वयं पदार्थसत्यस्येत्युक्तम् ।। **अशेष** इति ।। अभावकारणत्वविवक्षायां भावशेषसहित इति दृष्टव्यम् । अन्यथा सिद्धसाधनत्वप्रसङ्गात् ।

## तत्त्वसुबोधिनी

अवधारणार्थकसौत्रतुशब्दस्य प्रमाणप्राबल्यप्रदर्शकतया दृष्टान्तभावादेवेति भाष्ये सम्बन्धो दर्शितः । प्रमाणप्राबल्यस्य प्रमेयावधारणहेतुत्वात् स्वयं पदार्थसत्त्वस्यैवेत्युक्तं न तावदिति । तदानीं प्रत्यक्षाभावादिति भावः ।

## वाक्यार्थमञ्जरी

न प्रलये असन्मात्रावशेषोऽभ्युपगन्तुं शक्यते । तदानीं पदार्थसत्वसाधकानुमाने दृष्टान्त-भावात् दृष्टान्तसद्भावादेवेत्यर्थः । दृष्टान्तमात्रस्यासाधकत्वादाह ।। **अत्रैताविति** ।।

## सूत्रभाष्यम्

**।। ॐ स्वपक्षदोषाच्च ॐ ।। ११ ।।**

**दृष्टान्ताभावादेव ।**

## तत्त्वप्रदीपिका

**स्वपक्षदोषाच्च असद्वादिनः ।**

## तत्त्वप्रकाशिका

**न केवलं प्रामाणिकपरित्यागप्राप्त्या प्रलये सर्वासत्त्वमनिष्टमपि त्वप्रामाणिकत्वाच्चेत्यर्थ प्रतिपादकसूत्रमुपन्यस्य व्याचष्टे ॥ स्वपक्षेति ॥ न तावत्प्रलये सर्वासत्त्वं प्रत्यक्षसिद्धम् । नाप्यागमेन । तस्याभावात् । अनुमानमपि किं प्रलयः सर्वासत्त्ववानित्यादिरूपेण साक्षाद्भवेत्परम्परया वा । नाद्यः । प्रलये सर्वासत्त्वपक्षे दृष्टान्ताभावेनानुमानस्य दुष्टत्वात् । व्यतिरेकेऽतिप्रसङ्गः । एतेन द्वितीयोऽपि परास्तः । अतः प्रलये सर्वासत्त्वस्याप्रामाणिकत्वात्तदभ्युपगमोऽनिष्ट इति भावः ।**

## गुर्वर्थदीपिका

असत्पदस्य ब्रह्मपरताया वक्ष्यमाणत्वात्तस्याभावादित्युक्तम् । परम्परया वेत्यस्यान्त्यावयविनां प्रागसत्वम् । ततस्तदवयवानां क्रमेणासत्त्वमित्यन्ततः सर्वासत्त्वं वेत्यर्थः । व्यतिरेकेऽतिप्रसङ्ग इत्यत्र व्यतिरेके केवलव्यतिरेकव्याप्त्या बाधितस्यापि साधने शशादिकं शृङ्गवत्पशुत्वात् यन्नैवं तन्नैवं यथा पुरुष इत्यपि साधयितुं शक्यत्वादित्यर्थः ।

## भावबोधः

**परम्परयेति ॥** ईश्वरादिकं प्रलयेऽसद्भवितुमर्हति भावत्वान्नष्टभाववदिति परम्परयेत्यर्थः । प्रलयः सर्वासत्ववान् प्रलयकालत्वात्, व्यतिरेकेण स्थितिकालवदिति व्यतिरेकित्वान्न दृष्टान्ताभावो दोष इत्यत आह– **व्यतिरेक इति ॥** यत्र सर्वासत्त्वाभावः सर्वसत्त्वं तत्र प्रलयकालत्वभाव इति व्यतिरेक एकस्मिन् काले सर्वसत्त्वापत्तिरूपातिप्रसङ्ग इत्यर्थः ।

यद्वा स्थितिकाल अतीतानागतसकलपदार्थोपेतः स्थितिकालत्वात् व्यतिरेकेण प्रलयकालवत् इत्यादिव्यतिरेकिप्रयोगसम्भवादतिप्रसङ्ग इत्यर्थः ॥ **एतेनेति ॥** ईश्वरादिकं स्थितिकालेऽप्यसद् भवितुमर्हति भावत्वात्, तदानीमविद्यमानघटादिवत् इत्यतिप्रसङ्गेनेत्यर्थः ।

यद्वा सर्वे भावाः प्रलये सन्तः भावत्वादिति परम्परयेत्यस्यार्थः । एतेनेत्यस्य तूक्तानुमाने दृष्टान्ताभावेन व्यतिरेके चातिप्रसङ्ग इत्यनेन चेत्यर्थः ।

## भावदीपः

सूत्रे चशब्दादाह ॥ **न केवलमिति** ॥ ननु दृष्टान्ताभावमात्रेण प्रलये सर्वासत्त्वं कथम-प्रामाणिकम् । प्रमाणमात्राभाव एव तत्त्वापातादित्यतो भाष्यमुपलक्षणत्वेन व्याचष्टे ॥ **न तावदिति** ॥ **परम्परया वेति** ॥ सर्वे भावाः प्रलये असन्तः भावत्वात् । कारणं प्रलये असत् वस्तुत्वात्कार्यवदित्यादिरूपयेत्यर्थः । ननु प्रलयः सर्वाभाववान् लयकालत्वाद् व्यतिरेकेणान्य-कालवदित्यनुमानं स्यादित्यत आह– **व्यतिरेक इति** ॥ प्रलयः शशविषाणवान् लयकालत्वात् व्यतिरेकेणान्यकालवत् इत्यप्रामाणिकपदार्थान्तरसाधनसम्भवादतिप्रसङ्ग इत्यर्थः । **एतेन** अति-प्रसङ्गेनेत्यर्थः । भावत्वादिना लये सर्वासत्त्वसाधने लयकालस्याप्यभावापत्तिप्रसङ्गात् । अन्यथा तत्र हेतोर्व्यभिचार इति भावः । यद्वा एतेनानुमानस्य दुष्टत्वेनेत्यर्थः । भावत्वादेर्दुष्टत्वं च विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हतीत्यादिप्रागुक्तानुमानविरुद्धत्वेनेत्यर्थः । यद्वा एतेन प्रागुक्तानुमानविरुद्धत्वेनैवेत्येवार्थः ।

## अभिनवचन्द्रिका

**व्यतिरेक इति** ॥ प्रलयकालः शशविषाणवान् प्रलयकालत्वात् व्यतिरेकेण सृष्टिकाल-वदित्यतिप्रसङ्ग इति भावः ॥ **एतेन द्वितीयोऽपीति** ॥ वेदप्रामाण्यादेव त्वदभ्युपगतशून्यकारणत्वा-देरप्यभावप्रसङ्गादित्यर्थः ।

## वाक्यार्थमुक्तावली

साक्षादिति पराभिलषितासन्मात्रावशेषस्यैव साध्यत्वादिति भावः ॥ **परं परयेति** ॥ कारणाभिमतमीश्वरादिकं प्रलये सद्भवितुमर्हति वस्तुत्वात् घटवत्, सर्वे भावाः प्रलये सन्तः भावत्वात्कार्यवदित्याद्यनुमानेन प्रलये सिद्धान्त्यभिमतकारणमात्रस्य भावमात्रस्य वा सत्वसिद्धौ कार्यस्य च सकर्तृकत्वनियमात्परिशेषादसतोऽभावस्य कर्तृत्वं सिद्ध्यतीति परम्परयेत्यर्थः । ननु यत्रासन्मात्रशेषवत्वं नास्ति तत्र प्रलयकालत्वं नास्ति यथा स्थितिकाल इति व्यतिरेकव्याप्ति-र्भविष्यतीत्यत आह ॥ **व्यतिरेके चेति** ॥ प्रलयकालः शशविषाणवान् प्रलयकालत्वाद्व्यतिरेकेण स्थितिकालवदित्यतिप्रसङ्ग इत्यर्थः । अत एव टीकायां शून्यप्रतिबन्दीत्यनेन शशविषाणादीना-मपि तथात्वप्रसङ्ग इत्याद्युक्तं प्राक् ॥ **एतेनेति** ॥ कारणाभिमताः सर्वे भावाः स्थितिकालेऽप्य-

(वाक्यार्थमुक्तावली)

सन्तः वस्तुत्वात्तदानीमविद्यमानघटवदिति प्रसङ्गेनेत्यर्थः । भावबाधार्थस्तु स्फुटः । सूत्रे अप्रीतौ तद्वत्वं च नेत्यनुवर्तते । स्वपक्षे प्रलये सन्मात्रावशेषपक्षे दृष्टान्ताभावेनानुमानदोषात् प्रमाणान्तरस्य चाभावादप्रामाणिकदोषाच्च प्रलये सन्मात्रावशेष इति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**परम्परयेति** ॥ 'ईश्वरादिकं, प्रलयेऽसद्भवितुमर्हति भावत्वात्' नष्टभाववत् इति परम्परयेत्यर्थः । प्रलयः सर्वासत्ववान् प्रलयकालत्वात् व्यतिरेकेण स्थितिकालवदिति व्यतिरेकित्त्वान्न दृष्टान्ताभाव इन्यत आह ॥ **व्यतिरेक इति** ॥ यत्र सर्वासत्वाभावः (सर्वसत्त्वं) तत्र प्रलयकालत्वाभावः इति व्यतिरेके एकस्मिन् काले सर्वसत्वापत्तिरूपातिप्रसङ्गः इत्यर्थः । यद्वा स्थितिकालो अतीतानागतसकलपदार्थोपेतः स्थितिकालत्वात् व्यतिरेकेण प्रलयकालवदित्यादिव्यतिरेकिप्रयोगसम्भवादतिप्रसङ्ग इत्यर्थः ॥ **एतेन द्वितीय इति** ॥ ईश्वरादिकं स्थितिकालेऽप्यसद्भवति भावत्वात्तदानीमविद्यमानघटादिवदित्यतिप्रसङ्गेनेत्यर्थः । यद्वा सर्वे भावाः प्रलये सन्तः भावत्वादिति परम्परयेत्यस्यार्थः । एतेनेत्यस्य तु उक्तानुमाने दृष्टान्ताभावेन व्यतिरेके चातिप्रसङ्ग इत्यनेन चेत्यर्थः ।

## वाक्यार्थमञ्जरी

स्वपक्षे सर्वासत्वसाधने दृष्टान्ताभावरूपदोषाच्चेत्यर्थः ॥ **परम्परयेति** ॥ विमतं प्रलये असद्भवितुमर्हति भावत्वान्नष्टभाववदिति परम्परयेत्यर्थः ॥ **प्रलये सर्वासत्वेति** ॥ प्रलयकाल एव सर्वासत्वं न स्थितिकाल इति मते अन्वयदृष्टान्ताभावादित्यर्थः । तर्हि यत्र सर्वासत्वाभावः तत्र प्रलयकालत्वाभावः यथास्थितिकाल इति व्यतिरेकोऽस्त्वित्यत आह ॥ **व्यतिरेक इति** ॥ स्थितिकालः अतीतानागतसकलपदार्थोपेतः स्थितिकालत्वाद्व्यतिरेकेण प्रलयकालवदित्यपि व्यतिरेकसम्भवादतिप्रसङ्ग इत्यर्थः ॥ **एतेनेति** ॥ विमतं स्थितिकालेऽप्यसद्भवितुमर्हति भावत्वादतीतभाववदित्यतिप्रसङ्गेनेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॐ ॥ १२ ॥**

(सूत्रभाष्यम्)

एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाऽप्यनुमेयमिति चेन्न, एवं सति प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वादनिर्मोक्षप्रसङ्गः। अतो यावत्प्रमाणसिद्धं तावदेवाङ्गी-कर्तव्यम्। नातोऽन्यच्छङ्क्यम्।

'यावदेव प्रमाणेन सिद्धं तावदहापयन्।
स्वीकुर्यान्नैव चान्यत्र शङ्क्यमानमृते क्वचित्' इति वामने ॥

## तत्त्वप्रदीपिका

तर्काप्रतिष्ठानादित्यादिसूत्रम्। एतावानेव तर्को नैतत्प्रतीपत्वेनेति प्रतिष्ठापकप्रमाणाभावात्। यथा त्वयाऽनुमितं तथाऽन्यथा मयाऽप्यनुमेयं स्यात्, त्वत्पक्षे प्रमाणसद्भाववन्मत्पक्षेऽपि तस्य युक्तत्वादिति चेत्, एवं सति यथा प्रमाणसिद्धो मोक्षः, तथाऽन्यथाऽप्यनुमेयत्वादनिश्चितो मोक्षः प्रसज्येत। अथवा सत्त्वेन प्रमाणसिद्धेऽपि मोक्षेऽन्यथाऽनुमेयत्वात्तदभावप्रसङ्गः। अपिशब्दात्सर्वस्यापि प्रमाणसिद्धस्या-न्यथात्वप्रसङ्गः। अपि च त्वदुक्तन्यायेनैव त्वदुक्तादन्यथाऽप्यनुमेयत्वप्राप्तेः स्वव्याघातः स्यात्।

## तत्त्वप्रकाशिका

तर्केण सदसतोः कारणत्वसाधनबाधने आक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद् व्याचष्टे ॥ तर्केति ॥ यत्तर्कबलेन सतः कारणत्वसाधनमसतश्च तद्बाधनं तदयुक्तम्। यद्यत्तर्केण साध्यते तस्मादुक्तात्तर्केण साधितादन्यथापि प्रतितर्केण साधयितुं शक्यत्वेन तर्कस्याप्रामाण्यात्। न हि प्रतितर्क एतावानेवैतादृशं तर्कं प्रति विरोधितया वर्तते नैतादृशमिति नियामकमस्ति। अतः सर्वानुमानेषु प्रतितर्कस्यानिवारणीयत्वेन तेषामप्रामाण्यान्न तद्बलात्सत्कारणत्वसाधनादि युक्तमिति भावः। परिहारांशं व्याचष्टे ॥ नेति ॥ तर्कसिद्धं सर्वं प्रतितर्केण दूषयितुं शक्यत इति वदन् प्रष्टव्यो जायते। किं प्रामाणिकं तर्कसिद्धं प्रतितर्केण दूषयितुं शक्यमप्रामाणिकं वेति। द्वितीयस्तु युक्त एव। प्रथमेऽपि प्रष्टव्यं किमेवं वादिना मते मोक्षोऽस्ति न वेति। न चेन्नासौ वादी। प्रयोजनान्तरस्य शास्त्रमन्तरेणापि सिद्धेः। अस्ति चेत्किं विप्रतिपन्नं प्रत्यागमेनैव साध्यते उत तर्केण। नाद्यः। अनिर्मोक्षवादिनाऽऽगमप्रामाण्यानभ्युपगमात्। अतो द्वितीयपक्ष एवाङ्गीकार्यः। तथा च प्रामाणिकस्यापि तर्कसिद्धस्य प्रतितर्केण बाधे सोऽपि चार्वाकतर्केण बाधितः स्यादिति मतं व्यर्थमेव भवेत्। न च परं प्रति प्रतिपादनोपायाभावेऽपि स्वस्यागमेन मोक्षसिद्धिरिति वाच्यम्। विप्रतिपन्नप्रमेये स्वस्यापि केवलागमेनानध्यवसायादिति भावः। एवं सर्वतर्केऽपि प्रतितर्कः

(तत्त्वप्रकाशिका)
प्रसरतीत्यङ्गीकारेऽतिप्रसङ्गमुक्त्वा विपर्यये पर्यवसानं दर्शयति ॥ **अत इति** ॥ यत एवं प्रामाणिकतर्कस्यापि प्रतितर्केण बाधाभ्युपगमेऽतिप्रसङ्गोऽतः प्रामाणिकमेव तर्केणाङ्गीकार्यमप्रामाणिकं न शङ्क्यम् । प्रमाणसाहाय्ययुक्तः प्रतितर्कोऽप्रामाणिकतर्कं बाधते न त्वप्रामाणिकः प्रामाणिकम् । अत्रैतौ भवत इत्यत्र उक्ततर्कद्वयस्य प्रलयः सर्वासत्त्ववानित्यादिविरुद्धतर्कौ तूभावपि न प्रामाणिकौ । प्रकृततर्कश्च प्रामाणिको नाप्रामाणिकेन निषेद्धुं शक्यत इति भावः । अत्र स्मृतिसंमतिं चाह ॥ **यावदिति** ॥ अन्यत्रान्यत् ।

## गुर्वर्थदीपिका

नियामकमस्तीत्यत्र सुरा पेया द्रवद्रव्यत्वात्क्षीरवदित्यादितर्कस्यापि कर्तुं शक्यत्वादित्यर्थः । चार्वाकतर्केणेत्यत्र अस्ति चेन्मोक्षो दृश्येत न च दृश्यते तस्मान्नास्तीति चार्वाकतर्केणेत्यर्थः ।

## भावबोधः

**आगमप्रामाण्यानभ्युपगमादिति** । आगमप्रामाण्यं प्रसाध्य तेन मोक्षः साध्यत इति चेत् । न; आगमप्रामाण्यस्यापि तर्केणैव साध्यत्वादिति भावः ॥ **विरुद्धाविति** ॥ परस्परमित्यर्थः ॥ **उभावपीति** ॥ किन्त्वेकं प्रामाणिकमपरमप्रामाणिकमित्यर्थः । तर्हि विप्रतिपन्नोत्पत्तिः सती भवितुमर्हतीति प्रकृततर्क एवाप्रामाणिकः प्रतितर्कबाध्योऽस्त्वित्यत आह– **प्रकृततर्कश्चेति** ॥

## भावदीपः

सदसतोः भावाभावयोः । **कारणत्वसाधनबाधने** निरन्तरसूत्रद्वयोक्ते इति भावः । साध्यं पूरयन्नुक्तादित्यादिभाष्यं हेतुतया व्याचष्टे ॥ **यत्तर्केति** ॥ एतावानित्यादि व्याचष्टे ॥ **न हीति** ॥ सूत्रे एवमपीत्यस्यैव सति तर्कसिद्धस्य प्रतितर्केण बाधे सतीति भाषितस्यापादकस्याप्रयोजकत्व-निरासाय तथाऽऽपाद्यस्येष्टापत्तिनिरासाय चोभयत्र विकल्पपूर्वं तर्कस्वरूपं निर्धारयन् भाष्यं व्याचष्टे ॥ **तर्कसिद्धमित्यादिना** ॥ **युक्त एवेति** ॥ तथा च कामाच्च नानुमानापेक्षेत्यनेन न विरोध इति भावः ॥ **प्रयोजनान्तरस्येति** ॥ पशुपुत्रादेः ॥ **अनभ्युपगमादिति** ॥ तत्प्रामाण्यप्रसाधनं च तर्केणैवेति भावः । एवं परिष्कृत्यैवं सतीत्यादि भाष्यं व्याचष्टे ॥ **तथा चेति** ॥ अनिर्मोक्षप्रसङ्गे किमनिष्टमित्यत आह ॥ **मतं व्यर्थमेवेति** ॥ **विरुद्धतर्काविति** ॥ प्रमाणेनेति शेषः । अन्यत्रेति स्मार्तपदानुवादेनान्यदिति व्याख्या ।

## अभिनवचन्द्रिका

**साधनबाधने आक्षिप्येति ॥** अयमाक्षेपः तटस्थस्य न पूर्वपक्षिण इति बोध्यम् । एतेन- पूर्वपक्षिणैव तर्केणाऽसत्कारणतां प्रसाध्य विष्णुकारणत्वस्य दूषितत्वात् पुनस्तदप्रामाण्यकथनायोग इति परास्तम् ॥ **न चेन्नासौ वादीति ॥** ननु इदं साधनम्, उत आपादनम् । नाद्यः तस्य वादित्वेन बाधितविषयत्वात् । अवादित्वसाधनस्य प्रकृतानुपयुक्तत्वाच्च । न द्वितीयः विपर्यये पर्यवसानाभावात् । मोक्षानभ्युपगन्तुरपि चार्वाकस्य समयित्वोपलम्भेन आपाद्यापादकयोर्व्याप्ति-वैधुर्याच्च । न च चार्वाकः समयी नेति वक्तुं युक्तम् । समयं निराकुर्वता सूत्रकृता तदनिराकरण-प्रसङ्गात् । नापि चार्वाको मोक्षमङ्गीकरोति इति शक्यते वक्तुमिति कथं न व्यभिचार इति चेत्, उच्यते आपादनमेवेदं न साधनं, न च विपर्यये पर्यवसानाभाव इति वाच्यम् । अङ्गी-कर्तव्यत्वाभावस्यैवाऽऽपादकत्वेनाऽङ्गीकारस्याऽनापादकत्वात् । एतेन चार्वाकेण मोक्षानङ्गी-कारेऽपि तेनाप्यङ्गीकर्तव्यत्वात् व्यभिचारः परास्तो वेदितव्यः । सूत्रयोजना तु 'एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावादुक्तादन्यथाप्यनुमेयमिति सदसतोः कारणत्वसाधनबाधनेऽनुपपन्ने इति चेत्, अत्र वक्तव्यम् । किं अप्रमाणिकं प्रतितर्केण बाधयितुं शक्यमुत प्रामाणिकम् । आद्ये तु एवमित्युत्तरम् । अप्रामाणिकं दूषयितुं शक्यते इति यत्, तत् एवं एवमेव । अस्माकमनुमतमेवेति यावत् । परं तु प्रकृतं सत्कारणत्वादिकं प्रामाणिकमेवेति न प्रतितर्केण दूषयितुं शक्यमिति भावः । द्वितीयेऽपि वक्तव्यम् किमेवंवादिनो मते मोक्षोऽस्ति न वेति । नेति पक्षेऽपि एवमित्युत्तरम् । मोक्षमनङ्गीकुर्वतोऽवादित्वेनोपेक्षणीयत्वात् । उपेक्षणीयोत्प्रेक्षित-युक्तिविरोधेऽपि यदस्माभिः सदसतोः कारणत्वादिकमुक्तं तत् एवमेव यथास्थितमेव, न ह्यप्रामाणिकोत्प्रेक्षितयुक्तिविरोधेन प्रामाणिकं हीयत इति भावः । आद्ये 'एवमप्यनिर्मोक्षप्रसङ्ग' इत्युत्तरम् । एवमपि मोक्षाङ्गीकर्तृत्वेन वादित्वेनोपेक्षानर्हत्वेऽपि प्रामाणिकस्यापि मोक्षस्या-भावप्रसङ्गरूपबाधकसद्भावात् न प्रामाणिकं सत्कारणत्वादिकं युक्तिविरोधेन त्याज्यमिति द्रष्टव्यम् । एतेन 'तर्काप्रतिष्ठानादन्यथानुमेयमिति चेदनिर्मोक्षप्रसङ्ग' इत्येतावता पूर्णत्वात् एवमपीत्यस्य वैय्यर्थ्यमिति परास्तम् । ननु वादिप्रतिवादितर्कयोरुभयोरपि प्रमाणसाहाय्ययुक्तत्वे किं कार्यमत आह– **विरुद्धतर्काविति ॥** उभयोरपि प्रमाणसाहाय्यमयुक्तमिति भावः ।

## वाक्यार्थमुक्तावली

तर्केण सदसतोरिति सिद्धान्तिना सतः कारणत्वमसतो बाधनं पूर्वपक्षिणा सतः कारणत्व-साधनं सतः कारणत्वबाधनं चेत्युभयकर्तृकसाधनबाधने समयान्तरावष्टम्भेनाक्षिप्य समादधत्सूत्र-मित्यर्थः । अत एव सुधायां तदेतन्मतान्तरेणाक्षिप्य समादधत्सूत्रमित्युक्त्वा नायमनुमाना-वष्टम्भेन पूर्वपक्षः सिद्धान्तो वा युज्यत इत्युक्तम् । तर्काप्रतिष्ठानादित्यत्र प्रतिष्ठीयतेऽनेनेति प्रतिष्ठानं प्रतिष्ठापकप्रमाणमिति भावेन भाष्ये एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावा-दित्युक्तम् । अन्यथापीत्यस्य अवधिसापेक्षत्वादुक्तादित्युक्तम् । तर्केण साधितादित्यर्थः । एवमित्यर्थः एवं सतीति । अपीत्यस्य प्रमाणसिद्धेऽपीति मोक्षेऽप्यनिर्मोक्ष इत्यनुचितत्वाद-न्यथानुमेयत्वादिति योजितम् । तत्रैवं सति तर्कस्य प्रतितर्केण बाधे सतीत्यापादकमप्रयोजकं प्रमाणान्तरेण मोक्षसिध्युपपत्तेः । मा वा मोक्षोऽनिष्टाभावादित्यतः विकल्पमुखेन भाष्यं सङ्गम-यति तर्कासिद्धमित्यादिना ॥ **आगमप्रामाण्यानभ्युपगमादिति** ॥ आगमप्रामाण्यं प्रसाध्य तेन मोक्षः साध्यत इति चेत्तत्प्रामाण्यस्यापि तर्केणैव साध्यत्वादिति भावः ॥ **केवलागमेनेति** ॥ बुद्धिदोषनिरासकतया निर्दोषत्वादियुक्त्यपेक्षणादिति भावः । यावत्प्रमाणं सिद्धं तावदेवेत्यस्यार्थः **प्रामाणिकमेवेति** ॥ अङ्गीकार्यमित्यस्य शेषपूरणेन व्याख्यानं **तर्केष्विति** ॥ तर्केणानुकूलतर्केण दृढीकरणीयमित्यर्थः । ततोऽन्यदित्यस्यार्थः **अप्रमाणिकमिति** ॥ भावमाह **प्रमाणसाहाय्ययुक्त इति** ॥ **अप्रामाणिकतर्कमिति** ॥ प्रमाणानुकूलतर्कमिति वा प्रामाणिकतर्कविषयमिति वाऽर्थः । एवमुत्तरत्रापि वादिप्रतिवादितर्कयोरूभयोरपि प्रमाणसाहाय्ययुक्तत्वे कथं निर्णय इत्यत आह– **विरुद्धेति** ॥ सूत्रार्थस्तु तर्काप्रतिष्ठानादेतादृशं तर्कं प्रति विरोधितया नैतादृशमिति नियामक-प्रमाणाभावात् सर्वत्र प्रतितर्कस्य प्रयोक्तुं शक्यत्वादुक्तान्यथाऽनुमेयमिति सदसतोः कारणत्व-साधनेऽनुपपन्ने इति चेन्न । एवं सत्यप्रामाणिकस्य तर्कसिद्धस्य प्रतितर्केण बाधेऽस्मदनिष्टाभावात् प्रामाणिकस्यापि न कस्यचित्तर्कसिद्धस्य प्रतितर्केण बाधाङ्गीकारे सत्यपि मोक्षेऽन्यथाऽनुमातुं शक्यत्वादनिर्मोक्षप्रसङ्गः । न चासाविष्टोऽसमयित्वप्राप्तेः । अतः प्रमाणसिद्धौ प्रतितर्कस्य न प्रवृत्तिः । किं तु प्रमाणसाहाय्ययुक्तः । अप्रामाणिकं तर्कं प्रति प्रतिरोधितया वर्तत इत्य-ङ्गीकार्यत्वात्तर्काप्रतिष्ठानमसिद्धम् ।

## तत्त्वसुबोधिनी

ननु तर्कस्याप्रामाण्यं, सर्वत्र तर्कस्य विरोधितया प्रवृत्त्यभावात् इत्यत आह ॥ **न** हीति ॥ **नासौ वादीति** ॥ नासौ शास्त्रीत्यर्थः ॥ तथा च मोक्षानङ्गीकारे शास्त्रप्रणयनं अनर्थकं स्यादिति भावः । ननु प्रयोजनान्तरावाप्त्यर्थं शास्त्रप्रणयनमित्यत आह ॥ **प्रयोजनान्तरेति** ॥ **आगमप्रामाण्यानभ्युपगमादिति** ॥ आगमप्रामाण्यं प्रसाध्य तेन मोक्षः साध्यते इति न वाच्य-मागमप्रामाण्यसाधनस्यापि तर्केणैव कार्यत्वादिति भावः इति मतम् । मोक्षाङ्गीकारमतम् । तर्कद्वयस्यापि विरुद्धत्वे कथं व्यवस्थेत्यतः आह ॥ **विरुद्धतर्काविति** ॥ प्रमाणेनेति शेषः । तथा च तर्कद्वयस्यापि प्रमाणविरोधेनाप्रामाणिकत्वमिति भावः ॥ यद्वा विरुद्धाविति परस्पर-मित्यर्थः ॥ **उभावपीति** ॥ किन्त्वेकं प्रामाणिकमपरमप्रामाणिकमित्यर्थः ॥ तर्हि विप्रतिपत्त्यो-त्पत्तिः सतीभवितुमर्हति इति प्रकृततर्क एव अप्रामाणिक प्रतितर्क बाध्योऽस्त्वित्यत आह ॥ **प्रकृततर्कश्चेति** ॥ अन्यत्रेत्यस्य, अन्यस्मिन्निति प्रतीतिं निवारयितुं तद्व्याचष्टे ॥ **अन्यदिति** ॥ एतेनेति अतिदेशप्रयोजकामभ्यधिकाशंकामाह **यास्त्वित्यादिना** ॥ श्रुतिमूलत्वादिति जीवादीनां प्रतिषेधमात्रत्वाभावेन युक्तिविरोधाभावाच्चेति भावः ।

## वाक्यार्थविवरणम्

**मतं व्यर्थमिति** । विगतप्रयोजनमित्यर्थः । मतस्य व्यर्थत्वे व्याहतिरिति भावः । 'अक्ष-जागममूलस्य स्यादेवास्य प्रतिष्ठितिः' इति अनुव्याख्यानं मनसि निधायाह ॥ **प्रमाण-साहाय्येति** ॥ 'आगमानुगृहीता तु मानमेवानुमापि तु' इत्येतन्मनसि निधायाह ॥ **प्रकृतेति** ॥ सतः कारणत्वासाधकः । अन्यत्रेत्यस्यान्यस्मिन्नर्थ इति प्रतीतिं वारयितुं तद्व्याचष्टे ॥ **अन्यदिति** ॥ दध्यादिवदित्यादिपदेन घटादिकं ग्राह्यम् ।

## वाक्यार्थमञ्जरी

तर्कस्यानुमानस्य प्रतिष्ठानादव्यवस्थितत्वेनाप्रमाणत्वादन्यथा असतः कारणत्वादिरूपेणापि अनुमेयमनुमातुं शक्यमिति चेन्न । एवमपि एवं सति तर्कस्याप्रामाण्याङ्गीकारे मोक्षाभावप्रसङ्ग इत्यर्थः । ननु त्वया असतः कारणत्वे तर्के उपन्यस्ते तत्प्रतिरोधितया अस्माभिस्तर्क उपन्यस्त-

(वाक्यार्थमञ्जरी)
स्तद्दूषणाय त्वया पुनस्तर्काभिधानमनुचितं किं चास्मत्तर्क एव त्वत्तर्कबाधको न तु वैपरीत्यमित्यत आह ॥ **न हीति** ॥ प्रामाणिकं तर्कातिरिक्तप्रमाणप्राप्तं युक्त एवेति सत्कारणत्वं तु नैवमिति भावः । वादी समयी समयप्रयोजनाभावादिति भावः ॥ **शास्त्रमन्तरेणापीति** ॥ तथा च न तेन समयित्वमिति भावः । **सोऽपि** मोक्षसाधकोऽपि । यद्यपि चार्वाकेणानुमानप्रामाण्यमपि नाभ्युपगतं तथापि तत्र संवादेन प्रामाण्यव्यवहारमात्रं तेनाङ्गीकृतमत एवमुक्तिः । यथोक्तं संवादेन च प्रामाण्याभिमान इति ॥ **विरुद्धाविति** ॥ परस्परमिति शेषः ॥ **उभावपीति** ॥ किन्त्वेकं प्रामाणिकमपरमप्रामाणिकमित्यर्थः । इत्यङ्गीकार्यमिति शेषः । तर्हि विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हतीति प्रकृततर्क एवाप्रामाणिकः सन्प्रतितर्कबाध्योऽस्त्वित्यत आह ॥ **प्रकृततर्कश्चेति** ॥

## सूत्रभाष्यम्

**॥ ॐ एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॐ ॥ १३ ॥**

एतेन दृष्टान्तभावेनाभावेन चावशिष्टा अप्यपरिग्रहा विरुद्धसिद्धान्ता अकर्तृकत्वाचेतनकर्तृकत्वजीवकर्तृकत्वादयोऽपि । 'अकस्माद्धीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैति'

'प्रधानादिदमुत्पन्नं प्रधानमधितिष्ठति ।
प्रधाने लयमभ्येति न ह्यन्यत्कारणं मतम्' ॥

'जीवाद्भवन्ति भूतानि जीवे तिष्ठन्त्यचञ्चलाः ।
जीवे तु लयमृच्छन्ति न जीवात्कारणं परम्' इत्यादि श्रुतिप्राप्ता निराकृताः ।

यथा दुःखादिषु जीवस्यास्वातन्त्र्यमेवमन्येष्वपीति दृष्टान्तः । श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिता । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते, यत्र विरोधस्तत्र ब्रह्मैवोच्यत इति नियमः ।

## सत्तर्कदीपावली

एतेनैव न्यायेन जगतोऽकर्तृकत्वाचेतनकर्तृकत्वपक्षा निराकृता भवन्ति । भगवत्कर्तृकत्ववादिनं प्रत्यकर्तृकत्वे जीवेनाप्रेरितेन जडेन वा कृतत्वे दृष्टान्तस्याभिधातुमशक्यत्वात् । ईश्वरकर्तृकत्वे दृष्टान्तसद्भावाच्च । तदाह ॥ **एतेनेत्यादिना** ॥ अकस्माद्धीदमाविरासीदित्यादिश्रुतिगतिमाह ॥ **श्रुतिगतिरित्यादिना** ॥

## तत्त्वप्रदीपिका

अस्मत्पक्षे दृष्टान्तभावेन परपक्षे तदभावेन च । **अपरिग्रहा** वेदैरपरिगृहीताः । अत्राऽदिशब्देन मायिब्रह्मकर्तृत्वमेव बोद्धव्यम् । श्रुतिगतिस्तु ब्रह्मवाचकत्वेन प्रदर्शिताऽधस्तात् । प्रदर्शयिष्यते च साऽसत्कारणश्रुतीनामसम्भवसूत्रे । यत्रान्यवाचकत्वेऽप्यविरोधस्तत्रान्यदप्यमुख्यतयोच्यते । यथा चात्र प्रधानं कथञ्चित्कारणमुपादानत्वेन । यथा वा 'यो भूतानामधिपतिः' 'सोऽरोदित्' इत्यादौ । यत्र विरोधस्तत्र ब्रह्मैव । यथा 'सत्यं ज्ञानं' 'नकिरिन्द्र' 'निषुसीद्' इत्यादौ । 'अकः' न कोऽपि, सर्वतो विलक्षण इत्यर्थः ॥

## तत्त्वप्रकाशिका

मास्त्वसत्कारणं जगतस्तथापि न विष्णोर्जगत्कारणत्वं सम्भवति । विप्रतिपन्नं निष्कारण-मचेतनकारणं जीवकारणं वा कार्यत्वात् कूलपतनदध्यादिवदिति निष्कारणत्वादिसाधकयुक्ति-विरोधात् । न च निर्मूलयुक्तेरसाधकत्वम् । 'अकस्मात्' इत्यादि श्रुतिमूलत्वादित्याशङ्कां परिहर-त्सूत्रमुपन्यस्य व्याचष्टे ॥ **एतेनेति** ॥ सत्कारणत्वादौ दृष्टान्तभावेन निष्कारणत्वादौ दृष्टान्ता-भावेनेत्यर्थः । कूलपतनादीनामपि निष्कारणत्वादि न संमतमिति भावः । अत्र निष्कारणत्वादि-निरासे वक्ष्यमाणचार्वाकसाङ्ख्यनिषेधस्य पौनरुक्त्यं प्रसज्जत इत्यत उक्तम् ॥ **श्रुतिप्राप्ता** इति ॥ तृतीयानुप्रवेशादि तु पूर्ववत्परिहरणीयम् । नन्वस्तु सत्कारणत्वादौ घटादिदृष्टान्तभावो निष्कारण-त्वादौ दृष्टान्ताभावश्च तथापि कथमजीवकर्तृत्वे दृष्टान्तः कथं च जीवकर्तृत्वे दृष्टान्ताभावो घटादीनां जीवकर्तृत्वदर्शनादित्यत आह ॥ **यथेति** ॥ दुःखादिकार्येषु जीवस्य कर्तृत्वाभावेनाजीवकर्तृत्वेऽस्ति दृष्टान्तः एवमन्येष्वपि कार्येषु तत्साध्यम् । ततश्च जीवकर्तृत्वे दृष्टान्ताभाव इति भावः । घटादीनां जीवकर्तृत्वाभावे न चेतनकर्तृकत्वे दृष्टान्तोऽचेतनकर्तृकत्वनिषेधार्थमित्यतोऽकर्तृत्वमित्यनुक्त्वाऽ-स्वातन्त्र्यमित्युक्तम् । नन्वेवं चेदसत्कारणत्वादिश्रुतीनां का गतिरित्यत आह ॥ **श्रुतीति** ॥ श्रुतीनां ब्रह्मवाचकत्वेऽप्यसदादिवाचकत्वममुख्यतयाऽभ्युपगम्यत एवातस्तद्विरोध इत्यत आह ॥ **यत्रेति** ॥ अतो युक्त्यादेराभासत्वेनाविरोधकत्वाद्युक्तं जन्मादिकारणत्वं ब्रह्मणो लक्षणमिति स्थितम् ॥

## गुर्वर्थदीपिका

तृतीयानुप्रवेशादित्यत्र तृतीयः तृतीयःपादः, पूर्ववत् 'असदेवेदमग्र आसीत्' इत्यत्रोक्त

(गुर्वर्थदीपिका)
श्रुतियुक्त्योरङ्गाङ्गित्वात् । घटादीनां जगत्कर्तृत्वाभाव इत्यत्र अचेतनकर्तृत्वनिषेधार्थं चेतनकर्तृत्वे सिद्धान्तिना वक्तव्ये दृष्टान्तो नेति योजना ।

## भाववोधः

एतेनेत्यतिदेशप्रयोजकाभ्यधिकाशङ्कामाह **मास्त्वित्यादिना** ॥ **श्रुतिमूलत्वादिति** ॥ जीवादीनां प्रतिषेधमात्रत्वाभावेनोक्तविरोधाभावाच्चेति ज्ञेयम् । भाष्येऽवशिष्टा इत्येवोक्ते ब्रह्मकारणत्ववादोऽपि प्राप्नोति । तदर्थमपरिग्रहाविरुद्धसिद्धान्ता इत्युक्तम् । तन्मात्रे तूक्ते असत्कारणत्ववादोऽपि गृह्येत । ततश्च पुनरुक्तिरतिदेशानुपपत्तिश्च स्यात् । अतोऽवशिष्टा इत्युक्तमिति ज्ञातव्यम् । **तृतीयानुप्रवेशादीति** ॥ अत्रादिपदेनैतत्पादान्तभावग्रहणम् । अन्येष्वपि कार्येष्विति जीवकर्तृकत्वे दृष्टान्तत्वेन पराभिमतेषु घटादिष्वित्यर्थः ॥ **घटादीनां जीवकर्तृकत्वाभाव इति** ॥ यथा दुःखादिषु जीवस्याकर्तृकत्वमेवमन्येषु घटादिष्वकर्तृत्वमित्युक्ते घटादीनां सर्वात्मना जीवकर्तृत्वं निषिद्धं स्यात् । ततश्च महदादीनामचेतनकर्तृकत्वनिषेधार्थं विवक्षिते महदादिकं चेतनकर्तृकं कार्यत्वादिति अनुमाने घटादीनां दृष्टान्तत्वं न स्यात् । अस्वातन्त्र्यमित्युक्तौ तु जीवस्य घटादौ पराधीनकर्तृत्वानिषेधेन तस्मिन्ननुमाने घटादीनां दृष्टान्तत्वसम्भव इत्यर्थः ॥ **नन्वेवं चेदिति** ॥ अनेन सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति श्रुतिसाम्यमिति न्यायविवरणमप्यवतारितं ज्ञेयम् ।

अत्राद्ये– असद्वेत्यादिश्रुतिसंवादियुक्त्या शून्यस्य जगत्कारणत्वमाशङ्क्य तत्र युक्तिविरोधोक्तिः । द्वितीये– शून्यस्य जगत्कारणत्वाङ्गीकारे प्रलये सर्वासत्त्वप्रसङ्गरूपबाधकोक्तिः । तृतीये– तस्यानिष्टत्वप्रदर्शनार्थं तदङ्गीकारस्य प्रामाणिकपरित्यागरूपबाधकत्वोक्तिः । चतुर्थे– तस्यैवाऽप्रामाणिकस्वीकाररूपत्वोक्तिः । पञ्चमे– तृतीयचतुर्थाभ्यामुक्तस्य तर्कस्य साधनबाधनाक्षमत्वमाशङ्क्य तत्परिहारोक्तिः । षष्ठे– जीवादीनां जगत्कर्तृत्वादिपक्षेषु तृतीयचतुर्थसूत्रोक्तसाधकाभावबाधकयोरतिदेश इति सूत्रक्रमः ।

## भावदीपः

भाष्ये श्रुतिप्राप्ता इत्यस्य श्रुतिमूलयुक्तिप्राप्ता इत्यर्थमभिप्रेत्य तद्दर्शयति ॥ **विप्रतिपन्नमित्यादिना** ॥ **कूलेति** ॥ कूलपतनं निष्कारणकं पय एव दधि जायत इति दध्यचेतन-

(भावदीपः)

कारणकम् । घटादिर्जीवकारणकः । शेषोक्त्या भाष्यं व्याचष्टे ॥ **सत्कारणत्वादाविति** ॥ ननूक्तं निष्कारणत्वादौ कूलपतनादिदृष्टान्त इति तत्राह ॥ **कूलेति** ॥ पयोऽम्बुवच्चेत्तत्रापीत्यादौ समय-पादे कूलपतनादावपि ईशप्रवृत्तेर्वक्ष्यमाणत्वादिति भावः ॥ **वक्ष्यमाणेति** ॥ समयपादे ॥ श्रुति-**प्राप्ता इतीति** ॥ तत्र तु समयप्राप्ता इति भावः । ननु श्रुतिप्राप्तस्य निराकरणे तृतीयपादे निवेशः स्यात् प्रथमपादे निवेशश्च न स्यादित्यत आह ॥ **तृतीयेति** ॥ पूर्ववदर्थाद्युक्तिविरोधोऽपि निराक्रियत इत्यत्रोक्तरीत्या श्रुतिमूलकयुक्तिप्राप्तव्युत्पादनेनेत्यर्थः । अत एव विप्रतिपन्न-मित्यादिना श्रुतिमूलकयुक्तिप्राप्तत्वप्रदर्शनं प्राक्कृतमिति भावः । भाष्ये यथेत्येकपक्ष एव दृष्टान्तप्रदर्शनमयुक्तमित्यतोऽन्यत्र स्फुटत्वान्नायुक्तमिति भावेन तदनुवदन्नवतारयति ॥ **नन्वस्त्विति** ॥ स्वतन्त्रः कर्तेति पाणिन्युक्तेरस्वतन्त्रत्वमित्यस्याकर्तृत्वमर्थ इति भावेन योजयति ॥ **जीवस्य कर्तृत्वाभावेनाजीवकर्तृत्व इति** ॥ सतीति शेषः । दुःखादिर्दृष्टान्तोऽ-स्तीत्यर्थः । अन्येषु घटादिकार्येष्वित्यर्थः ।

ननु दुःखादिदृष्टान्तेन घटादिष्वपि जीवकर्तृत्वाभावे साध्यमाने महदादिकमचेतनकर्तृकं न । किं तु चेतनकर्तृकमेव कार्यत्वादित्यत्र घटादिर्दृष्टान्तो न स्यादित्याशङ्कामनूद्य भाष्योक्त्या तन्निराह ॥ **घटादीनां जीवकर्तृत्वाभाव इति** ॥ **न चेतनकर्तृत्व इति** ॥ जगत इति शेषः । कुतो जगतश्चेतनकर्तृत्वे दृष्टान्तेन भाव्यं येन तदभावोऽनिष्ट इत्यत आह ॥ **अचेतनेति** ॥ **अस्वातन्त्र्यमित्युक्तमिति** ॥ तथा च घटादौ कर्ता शास्त्रार्थवत्त्वादिति वक्ष्यमाणन्यायेन जीवस्य कर्तृत्वे सत्यपि पराधीनमेव तत् । न स्वतन्त्रम् । तथा च जगत्स्वतन्त्रजीवकर्तृकमित्यत्र दृष्टान्ताभावः । स्वातन्त्र्येण जीवकर्तृकं नेत्यत्र दृष्टान्तभावः । जगदचेतनकर्तृकं न किन्तु चेतन-कर्तृकमेव कार्यत्वादित्यादौ घटादिदृष्टान्तभावश्च नानुपपन्न इति भावः । भाष्ये श्रुतिगतिरित्यत्र श्रुतिशब्दो नाव्यवहितश्रुतिमात्रपरः । किं तु सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति न्यायविवरणानुरोधात्प्रागुक्तश्रुतिपरोऽपीति भावेनाह ॥ **असत्कारणत्वादीति** ॥ तन्मात्रपरत्व-भ्रान्तिनिरासायादिपदम् । अत एव भाष्यस्थश्रुतिपदस्य श्रुतीनामिति बहुवचनेन निर्देशः । न्यायविवरणस्थासत्पदमुपलक्षणमिति भावः । साक्षात्परम्पराफलयोरुक्त्या सर्वसूत्रार्थमुपसंहरति ॥ **अत इति** ॥ प्रतिषेधमात्रत्वरूपयुक्तिविरुद्धत्वात्तद्वत्प्रसङ्गरूपबाधकादपि तौ भावपदार्थसत्त्वे दृष्टान्तभावाद्वैपरीत्ये दृष्टान्ताभावात्सत्तर्कस्य स(प्रतिष्ठित)प्रमितत्वाच्चेत्यर्थः ॥ **युक्त्यादेरिति** ॥ श्रुतिरादिपदार्थः । श्रुतेराभासत्वं च पूर्ववाद्युक्तार्थ एवेति ध्येयम् ।

## अभिनवचन्द्रिका

**विप्रतिपन्नमिति ॥** अत्र घटादिसर्वमपि कार्यं वक्ष्यमाणदृष्टान्तव्यतिरिक्तं पक्ष इति बोध्यम् । तत्तद्वादिनां सर्वत्रापि विप्रतिपत्तेः । एतेन कार्यत्वहेतोर्घटादौ व्यभिचारशङ्का निरस्ता । ननु अचेतनकर्तृत्वजीवकर्तृत्वादिमते कथञ्चित्कार्यत्वस्य हेतुत्वसम्भवेऽपि निष्कारणकत्ववादिमते न तस्य हेतुत्वं सम्भवति विरुद्धत्वात् । अनन्यथासिद्धनियतपश्चाद्भाविन एव कार्यत्वात् । अन्यथा तदभावेऽसिद्धमिति अनन्यथासिद्धपदेनैव तेन सिद्धत्वरूपसकारणत्वस्याभिधानादिति चेत्, न ब्रूमो वयं कार्यत्वेन हेतुना सर्वथाऽकारणकत्वं साध्यत इति । येनोक्तदोषः स्यान्न चैवं किं नाम अकर्तृकत्वं साध्यत इति । तदुक्तम्– 'अकर्तृकत्वाऽचेतनकर्तृकत्वजीवकर्तृकत्वा-दयोऽपि' इति । अत एव 'कूलपतनवत्' इति दृष्टान्तोक्तिर्युज्यते । अन्यथा पतनं प्रति कूलस्यैव कारणत्वेनाऽकारणकत्वाभावात्तदुदाहरणमयुक्तं स्यात् ।

ननु 'विप्रतिपन्नमचेतनकारणम्' इति अचेतनकर्तृकत्वसाधनमनुपपन्नम् । अचेतनं च कर्ता चेत्यस्य विप्रतिषिद्धत्वात् । अचेतनं हि ज्ञानशून्यं, कर्ता चोपादानगोचरापरोक्षज्ञानादिमान् इति कथनं विप्रतिषेध इति चेत्, उक्तम् किमुक्तं देहेन्द्रियादिव्यतिरिक्त आत्मा नास्त्येवेति मते स्वतो ज्ञानाभावेन अचेतनानामपि देहेन्द्रियाणां क्रमुकपर्णादिसमुदाये मदशक्तिवत् समुदाये ज्ञानशक्तिसद्भावेन अचेतनस्य कर्तृत्वाङ्गीकारे न किञ्चिदनुपपन्नमित्युक्तम् । अत एव दध्यादि-वदिति दृष्टान्तोक्तिरुपपन्ना । आसंचनादिद्वारा देवदत्तादिसंज्ञकदेहानां कर्तृत्वमित्यभिमानात् ॥ **पूर्ववत्परिहरणीयमिति ॥** 'श्रुतिविरोधपरिहारस्य युक्तिविरोधपरिहाराङ्गत्वात् न तृतीयपादे प्रवेशः, 'अपि तु युक्तिपाद' इति परिहारणीयमित्यर्थः । एतेन इदमन्तर्भेदाधिकरणमिति सूचितम् । अन्यथा अस्याऽधिकरणस्य तृतीयपादप्रवेशमाशङ्क्य परिहारस्य प्रागेवाभिहितत्वात् पुनस्तदाशङ्क्य परिहारो व्यर्थः स्यात् ।

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कारणत्वं युक्तम्, प्रमाणाभावात् । न च 'यतो वा' इत्यादिश्रुतिः प्रमाणमिति वाच्यम् । ब्रह्म न जगत्कारणं तत्पूर्वमसत्त्वात् । 'यत् यतः पूर्वं नाऽस्ति न तत् तस्य कारणम्' इति युक्तिविरुद्धत्वेन श्रुतेः प्रतीतार्थे प्रामाण्यायोगात् । न चासिद्धो हेतुः 'असदेवेदमग्र आसीत्' इति श्रुतिसिद्धत्वात् । न च ब्रह्मणोऽकारणत्वे निष्कारणं जगत् आपद्यत इति वाच्यम् । 'असतः सदजायत' इति श्रुतिबलेन शून्यस्यैव कारणतया ग्राह्यत्वात् ।

(अभिनवचन्द्रिका)
न च ब्रह्मणः कारणत्वे इव शून्यस्य कारणत्वाङ्गीकारे युक्तिविरोधोऽस्ति । प्रत्युत प्रलयकालीन-कारणमसद्भवितुमर्हति वस्तुत्वात्कार्यवदित्यनुमानेनाऽविद्यमानशून्याऽनुगतेऽसत्सामान्ये सिद्धे नेदमविद्यमानम् 'असदेवेदमग्र आसीत्' इति श्रुत्या अविद्यमानत्वे दूषिते परिशेषात्प्रलय-कालीनकारणस्य शून्यत्वमेव सिध्यति । अतः शून्यस्यैव जगत्कारणत्वं न ब्रह्मण इति अयुक्तं लक्षणसूत्रमिति ।

**सिद्धान्तस्तु**– युक्तमेव विष्णोर्जगत्कारणत्वं, न त्वसतः । तस्य 'कारणं न' इति कारणताप्रतिषेधबुद्धिविषयत्वात् । व्यधिकरणधर्मावच्छेदमन्तरेण यत् प्रतिषेधबुद्धिविषयः, नासौ तद्वानिति व्याप्तेर्निरवद्यत्वात् । किञ्च असतः कारणत्वाङ्गीकारे प्रलयेऽसन्मात्राऽवशेषप्रसङ्गः । ननु प्रलयगतानां सर्वेषामपि असत्त्वस्येष्टत्वेन नेदमनिष्टापादनमिति चेत्, न विप्रतिपन्नोत्पत्तिः सतो भवितुमर्हति उत्पत्तित्वात् घटोत्पत्तिवत् । विमतो विनाशः सच्छेषः विनाशत्वात् घटनाश-वदित्यनुमानाभ्यां प्रलयकालगतस्य सत्त्वसिध्या तदनङ्गीकारस्य प्रामाणिकहानरूपत्वेनाऽ-निष्टत्वात् । किं च प्रलये सर्वाऽसत्त्वमप्रामाणिकम्, तथा हि प्रलये स्थितानां कालादीनामसत्त्वं किं प्रत्यक्षवेद्यम्, उत आगमवेद्यम्, आहोस्विदनुमानवेद्यम् । नाद्यः असन्निकृष्टत्वात् । न द्वितीयः तदभावात् । नापि तृतीयः दृष्टान्ताद्यभावात् । नन्वयं सिद्धान्तश्चानुपपन्नः । एतावानेव तर्क इति प्रतिष्ठापकप्रमाणाभावेन उक्तादन्यथाप्यनुमातुं शक्यत्वादिति चेत्, अत्र वक्तव्यं किं प्रामाणिकं तर्कसिद्धं प्रतितर्केण दूषयितुं शक्यम् उताऽप्रामाणिकम् । द्वितीयस्त्वभिमतः । आद्येऽपि किमेवंवादिनो मते मोक्षोऽस्ति न वेति । नेति पक्षेऽवादित्वेनोपेक्षणीयत्वात् सिद्धान्त्यभिमतप्रमेयाऽविघातक इति सत्कारणत्वादिकं यथास्थितमेव । आद्ये यदि तर्कोऽप्रमाणं स्यात्, तर्हि मोक्ष एव न सिध्येत् तत्साधनोपायाभावात् । न च आगमेन तत्सिद्धिः, मोक्ष-मनभ्युपगच्छता तत्प्रामाण्यानङ्गीकारात् । एतेन सत्कारणत्वादौ दृष्टान्ताभावेन विप्रतिपन्नं निष्कारणम्, चेतनकारणं, जीवकारणं वा कार्यत्वात् कूलपतनदध्यादिवदित्यादिविरुद्धसिद्धान्ता निरस्ता वेदितव्याः । अतो युक्त्यादेराभासत्वेनाविरोधकत्वात् युक्तं लक्षणसूत्रमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

एतेनेत्यतिदेशोपपत्तयेऽभ्यधिकां शङ्कामाह ॥ **मास्त्विति** ॥ न चेदमेतेन मातरिश्वा । अत एव प्राणः । एतेन सर्व इत्यादिवदधिकरणान्तरं स्यादिति वाच्यम् । एतेन योगः प्रत्युक्तः इति

(वाक्यार्थमुक्तावली)
वदतिदेशान्वेऽप्यवान्तरभेदोपपत्तेः । श्रुतिप्राप्ता इत्यस्य श्रुतिमूलयुक्तिप्राप्ता इत्यर्थं हृदि निधाय युक्तिमाह **विप्रतिपन्नमिति ॥ निष्कारणमिति ॥** आकस्मिकमित्यर्थः । अकस्माद्धीदमाविरासीदित्यस्य कस्मादपीदं नाविरासीदित्यर्थः । नन्वकारणकत्वे कार्यत्वहेतुकथनं विरुद्धम् । अनन्यथासिद्धनियतपश्चाद्भाविन एव कार्यत्वात् । अन्यथा तदभावे सिद्धमित्यन्यथासिद्धिपदेनैव तेन सिद्धत्वरूपसकारणकत्वस्याभिधानादिति चेन्न । दृष्टकारणातिरिक्तकारणाभावस्य विवक्षितत्वात् । अन्यथा कुलालस्यैव पतनकारणत्वे कुलालपतनवदिति दृष्टान्तीकरणानुपपत्तेः । अत एव निष्कारणकत्वनिरासे चार्वाकसमयनिरासेन पौनरुक्त्यमाशङ्क्य निराक्रियत इति बोध्यम् । अचेतनकर्तृकत्वाजीवकतृकत्वादयोऽपीति भाष्ये चेतनपदेनाचेतनप्रकृतिः आदिपदेन जीवकालकर्मग्रहणम् ।

नन्वत्र प्रधानादेः कारणत्वमात्रमाशङ्क्य निषिध्यत उत कर्तृत्वं नाद्यः अङ्गीकारात् । न द्वितीयः । पूर्वपक्षिणा कर्तृत्वासाधनात् । तथात्वे दध्यादौ साध्यवैकल्यप्रसङ्गात् । अत एवाचेतनकारणत्वं वेत्युक्तं टीकायाम् । सुधायां चात एव कर्तृशब्दः कारणमात्रपरो दृष्टव्य इत्युक्तमिति चेत् । आद्यपक्षाङ्गीकाराद् अचेतनस्य प्रधानस्योपादानत्वम् । जीवस्यादृष्टाद्वारतया दृष्टकालादेर्निमित्तत्वमिति दृष्टमेवेति चेन्न । प्रधानादेरेव सर्वत्र कारणत्वं नेश्वरस्येत्यत्र निषेध्यत्वात् । न च पूर्वपक्षप्रापकाभावः । न ह्यन्यत्कारणं परं न जीवात्कारणं परं इति वाक्यसत्वात्। उक्तं चानुव्याख्याने । प्रापकं वाक्यमात्रमिति **॥ न सम्मतमिति ॥** पयोऽम्बुवच्चेत्त्रापि ईशप्रवृत्तेस्तत्रापि वक्ष्यमाणत्वादिति भावः **॥ अन्येष्वपि कार्येष्विति ॥** जीवकर्तृत्वे दृष्टान्ततयाऽभिमतेषु घटादिषु कार्येष्वित्यर्थः **॥ घटादीनामिति ॥** यथा दुःखादिषु जीवस्याकर्तृत्वमेवमन्येषु घटादिष्विति घटादीनां जीवे कर्तृत्वाभावेऽङ्गीकृते महदादीनामचेतनकर्तृत्वनिषेधार्थं प्रवृत्ते महदादिचेतनकर्तृकं कार्यत्वादित्यनुमानेन चेतनकर्तृकत्वे दृष्टान्तो न स्यादित्यतो कर्तृत्वमित्यनुक्त्वा स्वातन्त्र्यमित्युक्तमिति योजना । अस्वातन्त्र्यमित्युक्तौ जीवस्य घटादौ पराधीनकर्तृत्वानिषेधेन तस्मिन्ननुमाने घटादीनां दृष्टान्तत्वसम्भव इति भावः । सूत्रे शिष्टा इत्येवोक्ते इत्युक्तौ ब्रह्मकारणत्वेन प्राप्नोति तदर्थमपरिग्रहा इत्युक्तम् । तन्मात्रे तूक्ते भावकर्तृत्ववादो गृह्यते । तथा च पुनरुक्तिरन्यथानुपपत्तिश्च स्यात् । अतः शिष्टा इत्युक्तमिति सुधायां पदकृत्यं व्यक्तम् । अत्राद्ये असतः कारणत्वसाधकयुक्तिविरोधमाशङ्क्य प्रतिपक्षोक्तिः । द्वितीये तन्मूल-

(वाक्यार्थमुक्तावली)
भूतश्रुतेरर्थान्तरपरत्वेन युक्तेर्दोषव्यावर्तकबाधोक्तिः । तृतीयचतुर्थाभ्यां तस्य निष्ठत्वज्ञापनाय प्रलयेऽसन्मात्रावशेषाङ्गीकारस्य प्रामाणिकपरित्यागिनः प्रामाणिकरूपत्वोक्तिः । पञ्चमे तर्केण पूर्वपक्षसिद्धान्तानुदयमाशङ्क्य परिहारः । षष्ठे तृतीयचतुर्थोक्तस्याभ्यधिकाशङ्कानिरासायातिदेश इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

भाष्ये अवशिष्टाः इत्येवोक्ते ब्रह्मकारणत्ववादोऽपि प्राप्नोति । तदर्थं अपरिग्रहाविद्ध-सिद्धान्तः इति व्याख्यातम् । तन्मात्रतश्च असत्कारणत्ववादोऽपि गृह्यते ततश्च पुनरुक्तिरिति दर्शनानुपपत्तिश्च स्यादतोऽवशिष्टाः इत्युक्तम् । ननु कथं दृष्टान्ताभावः कूलपतनादेरेव दृष्टान्त-त्वादित्यत आह ॥ **कूलपतनादीनामपीति** ॥ ननु श्रुतिप्राप्तनिष्कारणत्वादिनिषेधः तृतीयपादेऽ-न्तर्भावः स्यादेतत्पादेऽसङ्गतश्चेत्यत आह ॥ **तृतीयेति** ॥ अत्र युक्तिविरोधस्य सद्भावान्न तृतीयानुप्रवेशः । श्रुतिविरोधस्य युक्तिविरोधाङ्गत्वान्मुख्यतो युक्तिविरोधस्यैव निराक्रियमाण-त्वात् । अत्राननुप्रवेशोऽपि नेति पूर्ववत्परिहरणीयमित्यर्थः ॥ **अन्येष्वपि कार्येष्विति** ॥ जीवकर्तृत्वदृष्टान्तत्वेन पराभिमतेषु घटादिषु इत्यर्थः ।

ननु भाष्ये यथा दुःखादिषु अकर्तृकत्वमित्येव कुतो नोक्तम् । अस्वातन्त्र्यमिति किमर्थमुक्तं इत्यत आह ॥ **अत्र घटादीनां जीवकर्तृत्वाभावेन चेतनकर्तृत्वे दृष्टान्तोऽचेतनकर्तृत्वनिषेधार्थ-मित्यत इति** ॥ अत्र घटादीनां जीवकर्तृत्वाभाव इति पदच्छेदः । यथा दुःखादिषु जीवस्य अकर्तृत्वमन्येष्वपि घटादिषु अकर्तृत्वमित्युक्ते घटादीनां सर्वात्मना जीवकर्तृत्वं नास्तीति उक्तं स्यात् । एवं च महदादीनां अचेतनकर्तृत्वनिषेधार्थं महदादिकं चेतनकर्तृकं कार्यत्वादित्यनुमाने घटादीनां दृष्टान्तत्वं न स्यात् । अस्वातन्त्र्यमित्युक्तौ तु घटादौ पराधीनकर्तृत्वनिषेधे तस्मिन्नु-माने घटादीनां दृष्टान्तत्वसम्भवः इत्यर्थः । अत्राद्ये सूत्रे असत्कारणत्वे युक्तिविरोधोक्तिः । अत्राभावः इति वक्तव्येऽसदिति श्रुत्यनुकरणार्थम् । असत्वस्य कर्तृसाधनत्वं भवितृसाधनत्वं वाऽश्रित्य भावजातं प्रलयेऽसत् भावत्वादिति युक्तिसूचनार्थं च । द्वितीये असत्कारणत्वाङ्गीकारे प्रलये सर्वासत्वरूपबाधकोक्तिः । तत्रापि इत्यनेन प्रलये भावमात्रासत्वकालोऽपि न स्यादिति सूचितम् । तृतीये तदङ्गीकारस्य प्रामाणिकपरित्यागरूपत्वोक्तिः चतुर्थे तस्यैवाप्रामाणिक-

(तत्वसुबोधिनी)
स्वीकाररूपत्वोक्तिः । पञ्चमे तर्कस्य साधनाद्यक्षमत्वमाशङ्क्य तत्परिहारः । षष्ठे जीवकर्तृत्वादि-पक्षेषु साधकाभावबाधकोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

ननु कथं दृष्टान्ताभावः । कूलपतनादेरेव दृष्टान्तत्वादित्यत आह **कूलपतनादीनामिति** ॥ न **सम्मतमिति** ॥ इति समयपादे ईश्वरकर्तृकत्वप्रतिपादनादिति भावः । यद्यत्र ब्रह्मणो जगत्कारणत्ववाचिश्रुतेः श्रुतिप्राप्ताकर्तृकत्वादिमतविरोधो निराक्रियते तर्ह्येतदधिकरणं तृतीयपादे निबन्धनीयं परस्परश्रुतिविरोधपरिहाररूपत्वात् । न तु युक्तिविरोधपरिहारात्मकेऽस्मिन् पादे इत्यत आह– **तृतीयानुप्रवेशादिति** ॥ आदिपदेन पादाननुप्रवेशग्रहणम् ॥ **पूर्ववदिति** ॥ न केवलमत्र श्रुतिविरोधः परिह्रियते येनासङ्गतिः । किं नाम विप्रतिपन्नं निष्कारणमित्याद्यकर्तृकत्वसाधकयुक्तिविरोधोऽपि । तथापि युक्तिविरोधपरिहारात्मके पादे श्रुतियुक्तिविरोधपरिहारोऽसङ्गतः इति चेन्न । नात्र श्रुतियुक्त्योः स्वतन्त्रं विरोधद्वयं परिह्रियते किन्तु श्रुतिविरोधपरिहारेणाप्यन्ततो युक्तिविरोध एव । तथा हीत्यादिपूर्वोक्तरीत्येत्यर्थः ।

## वाक्यार्थमञ्जरी

एतेन दृष्टान्तभावेनाभावेन शिष्टा अवशिष्टा अपरिग्रहा वेदपरिग्रहरहितास्तद्विरुद्धाश्चाकारणत्वादिवादा निरस्ता इत्यर्थः ॥ **न सम्मतमिति** ॥ तस्यापीश्वरजन्यत्वादिति भावः ॥ **वक्ष्यमाणेति** ॥ द्वितीयपाद इति शेषः ॥ **तृतीयानुप्रवेशादीति** ॥ आदिपदेनैतत्पादानन्तर्भावग्रहणम् ॥ **पूर्ववदिति** ॥ अर्थाद्युक्तिविरोधोऽपीत्युक्तरीत्येत्यर्थः ॥ **अन्येष्वपीति** ॥ जीवकर्तृत्वेनाभिमतघटादिष्वित्यर्थः ॥ **घटादीनां जीवकर्तृत्वाभाव इति** ॥ यदि घटादीनां जीवकर्तृत्वं न स्यात्तर्हि विमतं चेतनकर्तृकं कार्यत्वादित्यनुमाने दृष्टान्ताभावः स्यात् । न चेष्टापत्तिः । तथात्वे अचेतनकर्तृत्वनिषेधाभावापत्तेरित्यर्थः ॥ **अस्वातन्त्र्यमित्युक्तमिति** ॥ तथा च घटादौ पराधीनजीव कर्तृत्वानिषेधान्नोक्तानुमाने दृष्टान्ताभाव इति भावः ।

॥ इति **असदधिकरणम्** ॥ ४ ॥

## ५. अथ भोक्त्रधिकरणम्

### ॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ ॥ १४ ॥

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति' इति (मुं.उ.३-२-७) मुक्तजीवस्य परापत्तिरुच्यते। अतस्तयोरविभागः। अतः पूर्वमपि स एव। न ह्यन्यस्यान्तत्वं युज्यत इति चेन्न। स्याल्लोकवत्। यथा लोके उदके उदकान्तरस्यैकीभावव्यवहारेऽप्यन्त-र्भेदोऽस्त्येव, एवं स्यादत्रापि। तथा च श्रुतिः 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' (क.उ.४-१-५) इति। स्कान्दे च–

'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्।
न चैतदेव भवति यतो वृद्धिः प्रदृश्यते॥
एवमेव हि जीवोऽपि तादात्म्यं परमात्मना।
प्राप्तोऽपि नासौ भवति स्वातन्त्र्यादिविशेषणादिति।
ब्रह्मेशानादिभिर्देवैर्यत्प्राप्तुं नैव शक्यते।
तद्यत्स्वभावः कैवल्यं स भवान् केवलो हरे'॥ इति च।

'न ते महित्वमन्वश्नुवन्ति' (ऋ.सं.७-९९-१) 'न ते विष्णो जयमानो न जात' (ऋ.सं.७-९९-२) इत्यादि च। फलत्वेऽपि युक्तिविरोधेऽन्तर्भावादत्रोक्तम्।

## सत्तर्कदीपावली

यज्जगज्जन्मादिकर्तृत्वमुक्तं विष्णोः तन्न युज्यते। तस्य जीवाभिन्नस्य जीववज्जगत्कर्तृत्वायोगात्। परेऽव्यये सर्व एकीभवन्तीति श्रुत्यन्यथानुपपत्त्या जीवेशाभेदसिद्धिरिति न वाच्यम्। एकीभवन्तीति श्रुतेर्नीरेण क्षीरमेकीभवतीतिवत् संसर्गविषयत्वेन जीवविष्णोरभेदासम्भवात्। न च नीरक्षीरयोरभेद एव। हंसेन पृथक्क्रियमाणत्वात्। नीरप्रक्षेपे क्षीरस्य परिमाणाधिक्यदर्शनाच्चेत्येतमर्थं विस्तृत्य दर्शयति। भोक्त्रापत्तेरित्यादिना।

## तत्त्वप्रदीपिका

कर्माणि विज्ञानमयश्चेत्यत्र न स्वरूपैकत्वमुच्यते। कर्मणां तदनभ्युपगमात्। प्रपञ्चितं

(तत्त्वप्रदीपिका)

चैतत्तत्वनिर्णये भगवत्पादैरेव– 'स्वरूपैक्याभिप्राये कर्माणि विज्ञानमयश्चेति न युज्यते । न हि तत्पक्षेऽपि कर्मणां ब्रह्मैक्यं मुक्तावस्ति । निवृत्त्यभिप्राये पञ्चदशकलानामपि समत्वात्' इत्यादि । अतो ज्ञानोत्तरकालीनकर्मभिः सह मुक्तजीवस्य परोपकण्ठे स्थितिस्तद्बुद्धिसारूप्यं वेह विवक्षितम् । 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयत' इति च श्रुतिर्ब्रह्मविदः कर्मणामक्षयमाचष्टे । तादृक्त्वमेकस्थानगतत्वेन मिश्रत्वम् । तादात्म्यं तादात्म्यसादृश्यादेव, न स्वरूपैक्यम् । नासौ भवतीति प्रकटप्रतिषेधात्तदधीनत्वं तत्प्राधान्यं तन्मत्यैक्यं तत्सामीप्यं तत्सारुप्यं तत्स्वारूप्य-मित्यनेकविधं हि तादात्म्यम् । कुत एतज्ज्ञानफलं निर्वाणमत्रोक्तमित्यत आह– **फलत्वेऽपीति ॥** फलत्वेऽप्येतदत्रोक्तं, जीवैक्य ईशितुः कर्तृत्वविरोधस्य युक्तिविरोधेऽन्तर्भावात् । यावन्न जीवा-दात्यन्तिकभेदसिद्धिस्तावद्युक्तिविरुद्धमीश्वरस्य कर्तृत्वम् । न खल्वितोऽधिको यौक्तिको विरोधोऽस्ति । न हि परतन्त्रेणाल्पविदाऽल्पशक्तिना दुःखिनाऽभिन्नस्य परस्य सर्वकर्तृत्वं युक्तम् । अनीश्वरत्वादि-प्रसङ्गात् । अपरथा कथमितरव्यपदेशादित्यादि । अतोऽस्य विचारस्य फलगोचरत्वेऽपि प्रधानयुक्ति-विरोधविचारेऽन्तर्भावात्प्रथमप्राप्तत्वाच्चाविरोधप्रस्तावस्यात्रोपपत्तिः ।

## तत्त्वप्रकाशिका

अत्र पुनर्विष्णोर्जगत्कारणत्वादौ युक्तिविरोधस्य परिह्रियमाणत्वादस्ति शास्त्रादिसङ्गतिः । विष्णोर्जगत्कर्तृत्वादि पूर्वमभिहितं तस्य च युक्तिविरुद्धत्वे लक्षणमसम्भवि स्यादतोऽसौ निराकरणीय एव । जगज्जन्मादिकर्तृत्वं विषयः । परमात्मनो युक्तमयुक्तं वेति सन्देहः । वादिविवादः सन्देह-बीजम् । पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद् व्याचष्टे ॥ **भोक्त्रापत्तेरिति ॥** न विष्णोर्जगत्कर्तृत्वादि युक्तम् । तस्य जीवाभिन्नत्वात् । न हि जीवाभिन्नस्य जगत्कर्तृत्वाद्युपपद्यते । जीवाभेदो ह्युभयगतविरुद्धधर्मपरित्यागेन जीवस्येश्वरसालक्षण्यग्रहणेनेश्वरस्य जीवसालक्षण्यग्रहणेन वा सम्भवति । सर्वथा न जगत्कारणत्वादीश्वरैकनिष्ठं सम्भवति । तस्य जीवाभेद एव कुत इति चेत् । कर्माणि विज्ञानमयश्च आत्मेत्यादौ मुक्तजीवस्य परमात्मत्वप्राप्तिः श्रूयते । किं चातः । तेनैव हेतुना मुक्तेश्वरयोरभेदसिद्धिः । यो यथा श्रूयते स तथेति व्याप्तेः । मुक्तजीवाभिन्नस्यापि कथञ्चिज्जगत्कारणत्वं निर्वोढुं शक्यमिति चेन्न । मुक्तावैक्ये संसारेऽप्यैक्यस्याऽऽवश्यकत्वात् । न हि भिन्नमभिन्नतां यातीति युक्तम् । अतो जीवाभिन्नत्वादीश्वरस्यैव परमार्थतो जगत्कारणत्वा-द्यनुपपन्नमिति लक्षणसूत्रं न युक्तमिति भावः ।

(तत्त्वप्रकाशिका)

नञध्याहारेण सिद्धान्तांशं व्याचष्टे ॥ **नेति** ॥ जीवेशयोरभेदाभावान्नेश्वरस्य जगत्कारणत्वादि विरुद्धं ऐक्येनोक्तत्वान्मुक्तजीवस्य परमात्माभिन्नत्वेन तत्सिद्धिरिति चेन्न । एकीभूतत्वेनोक्त-जलेऽन्तर्भेददर्शनेन व्यभिचारात् । ऐक्योक्तिस्तु स्थानैक्याद्यालम्बनत्वेन जलैकीभावोक्तिवदुपचरिता स्यादिति भावः । न श्रुतेः स्वातन्त्र्येणोपचरितार्थत्वकल्पनं किन्तु श्रुत्याप्युक्तमित्याह ॥ **तथा चेति** ॥ एवं मुनेर्विजानत आत्मा भवति गौतमेति वाक्यशेषः । एतेन बाधकं विनोपचारकल्पन-मयुक्तमित्येतदपि परास्तम् । 'निरञ्जनः परमं साम्यमुपैति' 'परात्परं पुरुषमुपैति दिव्यम्' इत्यादि सन्निहितवाक्यविरोधाच्च जलयोरप्यैक्यान्न व्यभिचार इत्यत उक्तार्थे स्मृतिं चाह ॥ **स्कान्दे चेति** ॥ तादात्म्यं परमात्मना प्राप्त इत्युक्तोऽपीत्यर्थः । मुक्तोऽपीति वा । हरौ नियतचित्तत्वाद् ग्रहवत्तत्प्रवेशनात् । 'मोक्षं तादात्म्यमित्याहुर्न तु तद्रूपतः क्वचित्' इति वचनात् । अल्पमुक्तानामेतदस्त्वित्यत आह ॥ **ब्रह्मेति** ॥ वर्तमाननिषेधात्स्यादुत्तरत्रेत्यत आह ॥ **नेति** ॥

ननु मुक्तेश्वरयोर्भेदसमर्थनं फलाध्यायसङ्गतमतो नैतत्सूत्रार्थः किन्तु चेतनाचेतनात्मकप्रपञ्चस्य ब्रह्मात्मकत्वे विषयस्य विषयित्वं स्यात् । तथा च विषयविषयिविभागो न स्यादित्याशङ्कां समुद्रात्म-नामपि फेनतरङ्गादीनां विभागवदुपपद्यत इति अत्र निरस्यत इत्यत आह ॥ **फलत्वेऽपीति** ॥ एतदधिकरणस्य फलाध्यायसङ्गतत्वेऽप्यत्र नासङ्गतिर्येनान्यार्थकल्पनम् । उक्तरीत्या युक्तिविरोध-परिहारेऽप्यन्तर्भावात् । अन्यथोभयान्तर्गतस्यैकत्राप्यनुक्तिप्रसङ्ग इति भावः । अर्थान्तरं तु प्रपञ्चस्य ब्रह्मात्मकत्वनिरासेन निरस्तम् । भोक्तृत्वापत्तेरिति भावप्रधाननिर्देशाभावाच्च । अतो विष्णोर्जग-त्कारणत्वादौ युक्तिविरोधाभावादुपपन्नं लक्षणसूत्रमिति सिद्धम् ।

## गुर्वर्थदीपिका

तस्मिन्परमात्मनि आत्मा चित्तं यस्य स तदात्मा, तस्य भावस्तादात्म्यमिति भावेनोक्तं **हरौ नियतचित्तत्वादिति** ॥ तादात्म्यं परमात्मनेत्यत्र तस्य परमात्मनो आत्मा देहो यस्य स तदात्मा आधाराधेयभावसम्बन्धः षष्ठ्यर्थः । तस्य भावस्तादात्म्यमिति व्युत्पत्तिमभिप्रेत्योक्तं गृहवत्तत्प्रवेशनात् इति 'न ते महित्वमन्वश्नुवन्ति' इत्यस्यायमर्थः । हे विष्णो त्वं मात्रया प्रमाणेन परः अतिशयितोऽस्ति, तव यादृशं परिमाणं तादृशं कस्यापि नास्तीत्यर्थः । निरवधिकव्याप्तोऽसीति भावः । साऽपि व्याप्तिः प्रभया सूर्यस्येव नेत्याह तन्वा तावत्पर्यन्तं शरीरेणैव वृधान अभिवृद्धः अत एव ते महित्वं महिमानं केऽपि नाश्नुवन्ति । न प्राप्नुवन्ति

(गुर्वर्थदीपिका)
'अशुगतौ' इति धातुः । जीवानामणुत्वेन तव परममहत्परिमाणदेहवत्त्वेन विरुद्धधर्माधिकरणत्वात्तव महिमा कैरपि जीवैर्न प्राप्तुं शक्यते । अतस्त्वं सकलजीवेभ्योऽत्यन्तविलक्षणोऽसीति । एवं च सहेतुकं भेदस्य श्रुत्यैवोक्तत्वेन न कदाऽपि जीवब्रह्मणोरैक्यमिति भावः । प्रपञ्चस्य ब्रह्मात्मकत्वनिरासेनेत्युपलक्षणं, जीवब्रह्मचितोरैक्याङ्गीकारेऽपि जडप्रपञ्चैक्यस्य परेणैवानङ्गीकारात् शङ्कैवेयं निर्मूला । भोक्तृभोज्यविचारस्याब्रह्ममीमांसारूपत्वेन शास्त्रादेव बहिर्भावः परकीयभाष्यस्येत्यपि द्रष्टव्यम् । फेनतरङ्गादीनां समुद्रेण सह तवापि मते भेदाभेदाङ्गीकारात्स्यात्तत्र विभागः । जीवजडात्मकप्रपञ्चस्य तु त्वयैव ब्रह्मण्यत्यन्ताभेदाङ्गीकारेण विभागनिर्वाहकभेदाभावात्कथं भोक्तृभोज्यविभागः । अतो दृष्टान्तानानुगुण्यं चेत्यपि द्रष्टव्यम् । भोज्यस्येति तवाध्याहारः, ब्रह्मत्वस्येत्यस्माकमध्याहार इति समम् । भोक्तृत्वेति भावनिर्देशस्तवाधिको दोष इति भावेनाह भोक्तृत्वापत्तेरिति भावनिर्देशाभावादिति ।

## भावबोधः

'श्रुतिगुणयुक्तयः' इत्यनुव्याख्याने युक्तीनां श्रुत्युपसर्जनत्वरूपश्रुतिगुणत्वं श्रुतिसंवादित्वेन श्रुतिसिद्धलिङ्गकत्वेन चाभिप्रेतम् । तथा च तेनैवाधिकरणद्वयोपाधिकथनमित्यभिप्रेत्य सुधायामतीताधिकरणे ब्रह्मणो जगज्जन्मादिकारणत्वे श्रुतिसंवादित्वेन प्रबलयुक्त्या विरोधः परिहृतः । इदानीं तु श्रुतिसिद्धलिङ्गत्वेन प्रबलया युक्त्या विरोधः परिह्रियत इत्यधिकरणोपाधिः पूर्वेणास्य गतार्थतापरिहारायोक्तः । तदभिप्रायेणाऽऽह– **अत्र पुनरिति** ॥ अनन्तरसङ्गतिस्तु पूर्वसूत्रे एतेनेत्यतिदेशेन 'जीवाद्भवन्ति भूतानि' इति श्रुतिप्राप्तजीवकर्तृत्वपक्षनिरासो न युज्यते । जीवब्रह्मणोरभेदेन जीवस्य जगत्कर्तृत्वाभावे तदभिन्नस्य ब्रह्मणस्तत्र स्यात् । ब्रह्मणस्तदङ्गीकारे तदभिन्नजीवस्यापि तत्स्यात्, इत्युभयथापि न ब्रह्मण एव जगत्कर्तृत्वमित्याक्षेपोत्थानादिति ज्ञातव्यम् ॥ **परमात्मन इति** ॥ अत्र ब्रह्मण एव परमार्थतो जगत्कर्तृत्वमयुक्तमुत युक्तमिति चिन्ता । तदर्थं ब्रह्मणो जीवाभिन्नत्वरूपो हेतुः किं सिद्ध उतासिद्ध इति । तदर्थं 'परेऽव्यये सर्व एकीभवन्ति' इत्यादिश्रुतिः किं स्वरूपैक्यरूपमुख्यार्था उत स्थानैक्यादिरूपोपचरितार्थेति । तदर्थमेकीभवन्तीत्यादिश्रुतेरुपचरितार्थत्वे साधकं मुख्यार्थत्वे बाधकञ्च नास्त्युतास्तीति । **उभयगतधर्मपरित्यागेनेति** ॥ जीवस्यासर्वकर्तृत्वादित्यागेनेश्वरगतसर्वकर्तृत्वादित्यागेनेश्वरगतसर्वकर्तृत्वादिसालक्षण्यग्रहणेनेत्यर्थः ॥ **सर्वथेति** ॥ अत्राद्ये पक्षे अतिव्याप्तेः, द्वितीये

(भावबोध:)
असम्भवादिति भाव: । सूत्रे भोक्तुरापत्तेरिति विग्रह: । भोक्तुरित्यनन्तरं मोक्षपरत्वेत्यध्याहार: । आपत्तेरित्यनन्तरमुक्तेरिति चाध्याहार: । अन्यथा साध्यावैशिष्ट्यादित्यभिप्रेत्य कर्माणीत्यादि-भाष्यं व्याचष्टे **कर्माणीत्यादिना** ।। भाष्ये परेत्येतद्भावप्रधानमित्यभिप्रेत्य परमात्मत्वेत्युक्तम् । अनेन–

'कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति'

इति श्रुतेर्नैक्यमिति न्यायविवरणं नञ्परित्यागेन व्याख्यातं भवति । मुक्तजीवस्य आनन्दा-देरिव ज्ञानेन प्राक् विद्यमानस्य सर्वकर्तृत्वस्याभिव्यक्तिसम्भवे ईश्वरसालक्षण्यात्तदभिन्नस्य सर्व-कर्तृत्वनिर्वाह: सम्भवतीत्यभिप्रेत्य शङ्कते **मुक्तजीवाभिन्नस्यापीति** ।।

'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतेष्वपि ।
मुक्तानां नैव काम: स्यात्' ।

इति स्मृतिविरोधेन मुक्तस्य सर्वकर्तृत्वप्राप्त्यसम्भव इत्यभिप्रेत्य **कथञ्चिदित्युक्तम्** ।। यद्वा मुक्तजीवस्य निर्धर्मकत्वेनासर्वकर्तृत्वादिविरुद्धधर्माभावात्तदभिन्नस्येश्वरस्य सर्वकर्तृत्वनिर्वाह: कथं सम्भवतीत्याशयेन शङ्कते– **मुक्तजीवाभिन्नस्येति** ।। विरुद्धधर्माभावेऽपि निर्धर्मकाभिन्नस्य सर्वकर्तृत्वरूपधर्मनिर्वाहासम्भवात् कथञ्चिदित्युक्तम् । मुक्तावैक्येऽपि संसारे भेद एवास्तु । 'च्वि' प्रत्ययस्वारस्यादित्याह– **न हीति** ।। संसारे ब्रह्मणो भिन्नं जीवजातं मुक्तौ ब्रह्माभिन्नतां यातीति हि यस्मान्न युक्तमित्यर्थ: । अनेनान्यस्य संसारे ब्रह्मणो अन्यस्यान्यत्वं मुक्तौ स्वान्य-ब्रह्मत्वं हि यस्मान्न युज्यत इति अप्रयोजकत्वशङ्कापरिहारकविपक्षबाधकतर्कप्रदर्शनपरतया भाष्यं व्याख्यातं भवति । तर्कमूलभूतव्याप्तिप्रदर्शनपरत्वेनापि भाष्यं व्याचष्टे– **न हीति** ।। अन्येना-न्यस्य घटाद्यन्यस्य पटादेरन्यत्वं घटादित्वं न हि युज्यत इति व्याख्यातं भवति । न चैवं च्वि-प्रत्ययानुपपत्ति: प्रतीत्यपेक्षया तदुपपत्ते: । प्राक् भिन्नतया दृष्टो जीवो ब्रह्मण:, अथेदानीं मुक्तावभिन्नतया दृश्यत इति एकीभवन्तीत्युच्यत इति पूर्वपक्ष्यभिप्राय इति भाव: । एवं भाष्येऽ-न्यस्यान्यत्वाभावस्य पूर्वपक्षयुक्तित्वोक्तावप्यनुव्याख्याने तस्य 'नान्यदन्यत्वमापन्नम्' इत्यादिना सिद्धान्तयुक्तित्वोक्तिर्न विरुद्धा । भेदप्रतीतेर्बाधकाभावेन भ्रमत्वासम्भवेन प्रमात्वेऽङ्गीकार्ये जीवो न कदाचिद् ब्रह्माभिन्नतया प्रमितिविषयस्ततो अत्यन्तभिन्नतया प्रमितत्वादित्यनुमानविरोधेन प्रतीत्यपेक्षयापि च्विप्रत्ययोपपत्त्यसम्भवात्तत्स्वारस्याय संसारदशायां जीवस्यावश्यं ब्रह्मभेदे

(भावबोधः)

वक्तव्ये जीवो न कालान्तरेऽपि ब्रह्मणैक्यमापत्स्यते । प्राक् ततो भिन्नत्वात् । यः कदाचिद्यतोऽत्यन्तं भिद्यते नासौ कदाचिदैक्यमापद्यते । यथा घटः पटो नेत्यनुमानविरोधान्मुक्तौ तस्य तदभेदानुपपत्तिरित्याशयेनानुव्याख्यानप्रवृत्तेः । **जीवेशयोरभेदाभावादिति** ॥ अनेन भेदापादकमेवैतन्न्यायविवरणमप्युक्ततात्पर्यकं भवति । **स्थानैक्याद्यालम्बनत्वेनेति** ॥ आदिपदेन मत्यैक्यं ग्राह्यम् । जलैक्योक्तिवदितिस्थानैक्याभिप्रायेण । उभयानुगुणं तु निदर्शनमेकीभूता तु सा सेनं पाण्डवानभ्यवर्तत इतिवदिति न्यायविवरणोक्तं द्रष्टव्यम् । अनेनैकीभावशब्दस्तु सान्निध्येऽपि भवतीति न्यायविवरणमप्युक्ततात्पर्यकं भवति । भाष्योदाहृतश्रुतिभागेन जीवब्रह्माभेदप्रतिपादकश्रुतीनामुपचरितार्थत्वानुक्तेराह– **एवं मुनेरिति** ॥ एवं विजानतो मुनेर्विजानतां मुनीनामात्माऽधिपतिर्हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति । किमुतान्य इत्यर्थः । तथा च तत्त्वमसीत्यादिजीवब्रह्मैक्योक्तिः सादृश्याभेदलक्षणोपचरितार्थेति भावः ।

'उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्' इति स्मृत्यनुसारेण तादृगेव भवतीति एकस्थानस्थत्वस्याप्युपलक्षणम् । ततश्चैवमिति दार्ष्टान्तिकभागस्यैकस्थानत्वप्रतिपादकत्वमपीति प्रकृतोपयोग इति ज्ञातव्यम् । अत एव पूर्वमुपचरितार्थकल्पनमिति सामान्येनोक्तम् । अनेन न्यायविवरणे एवं मुनेरिति वाक्यशेषोदाहरणप्रयोजनमुक्तं भवति ॥ **एतेनेति** ॥ बाह्यानुपपत्तिमुक्त्वा निरञ्जन इत्यादि न्यायविवरणोक्तान्तरानुपपत्तिमप्याह– **निरञ्जन इति** ॥ तादात्म्यपदमैक्यपरमित्यङ्गीकृत्याह– **इत्युक्तोऽपीति** ॥ तथा च न व्याहतिरिति भावः । **मुक्तोऽपीति** ॥ एतत्तादात्म्यं प्राप्तोऽपीत्यर्थः । अत्र परमात्मनेत्येतत्तत्प्रसादेनेत्यर्थकमिति बोध्यम् ॥ **एतदिति** ॥ नासौ भवतीत्यादिकम् ॥ **वर्तमाननिषेधादिति** ॥ नाश्नुवन्तीति वर्तमाननिषेधादित्यर्थः ॥ **युक्तिविरोधपरिहारेऽपीति** ॥ प्रथमातिक्रमे च कारणाभावादिति भावः ।

'भोक्तृत्वापत्तित इति यन्मतं तत्कुतो हरिः ।
भोक्त्रापत्तेरिति प्राह' ।

इत्यनुव्याख्यानं मनसि निधायाऽऽह **भोक्तृत्वापत्तेरिति** ॥

## भावदीपः

**युक्तीति** ॥ पूर्वं श्रुतिसंवादितया प्रबलयुक्त्या विरोध उक्तः । अत्र तु बहुश्रुतिसिद्धतया

(भावदीपः)

प्रबलयुक्त्यविरोध उच्यत इति सुधोक्तदिशा एकीभवन्तीत्यादि बह्वभेदश्रुतिसिद्धजीवाभिन्नत्व-रूपयुक्तिविरोधस्येत्यर्थः । एतावता पादसङ्गतिसिद्धेर्युक्तीत्येवोक्तम् । तदपेक्षयैव पुनरित्युक्तिः । पूर्वसङ्गतिमाह ॥ **विष्णोरिति** ॥ जन्मादिसूत्र इति भावः ॥ **वादीति** ॥ भेदाभेदवादीत्यर्थः । भाष्यं युक्तेरसिद्धिनिरसनपरतया व्याकुर्वन्विरोधियुक्तिं व्यनक्ति ॥ **न विष्णोरिति** ॥ इयं च युक्तिः पूर्णगुणत्वस्यापि विरोधिनीत्यादिपदम् । युक्तेरप्रयोजकत्वं निराह ॥ **न हीति** ॥ कुत इत्यतः साध्येन विना हेतोरनुपपत्तिं व्यनक्ति ॥ **जीवेति** ॥ उभयगतविरुद्धधर्मत्यागेन वेत्यग्रेतनो वाशब्दोऽत्राप्यनुषञ्जनीय इति चन्द्रिका । एवं चाद्यतृतीयपक्षयोर्लक्षणमसम्भवि द्वितीये त्वति-व्याप्तमिति भावेनाह ॥ **सर्वथा न जगत्कारणत्वादीश्वरैकनिष्ठं सम्भवतीति** ॥ इदानीं भाष्य-मवतारयति ॥ **तस्येति** ॥ विज्ञानमयशब्दितो जीवात्मा परेऽव्यये परमात्मनीति वाच्ये एकी-भवन्तीति बहुवचनघटनाय कर्माणीत्यंशोक्तिः । कर्मणामेकीभावो निवृत्तिरेव पूर्वपक्षे श्रूयत आथर्वण इत्यर्थः । अतस्तयोरविभाग इति भाष्यमवतारयति ॥ **किं चात इति** ॥ **यो यथा श्रूयत इति** ॥ तात्पर्येण श्रुत्योच्यत इत्यर्थः तेन मृदब्रवीदित्यादौ न व्यभिचारः । ऐक्यं च तात्पर्यविषय इति शङ्कितुर्भावः ।

यद्वा 'वेदेन सह वादो यो वेदवाद इतीरित इत्याद्युक्तलक्षणवेदवादिनामत्र निरस्यत्वात् । वेदे आपातप्रतीतस्यैव तदर्थत्वेन स्वीकाराच्छ्रूयत' इत्येवोक्तम् । अत एव पूर्वत्रापि भाष्ये श्रुतिप्राप्ता इत्येवोक्तिः । भेदपक्ष एव जगद्व्यापारवर्जमिति विश्वकर्तृत्वस्य निषेत्स्यमानत्वाद-भेदपक्षे मुक्तस्य विश्वकर्तृत्वेऽक्षादिविरोधाभावात् । तादृशमुक्तजीवाभिन्नस्य विष्णोर्विश्व-कारणत्वमविरुद्धमिति भावेनाशङ्क्यातः पूर्वमपीत्यादि भाष्यं तन्निरासकत्वेन व्याचष्टे ॥ **मुक्त-जीवाभिन्नस्यापीति** ॥ पूर्वपक्षभाष्यं फलोक्त्योपसंहरति ॥ **अत इति** ॥ उक्तश्रुतिबलादित्यर्थः । ननु श्रुतिबलात्परमार्थतो जीवाभिन्नत्वेऽपि ईश्वरस्य काल्पनिकभेदेन जगत्कारणत्वं स्यादित्यत उक्तम् ॥ **परमार्थत इति** ॥ परमार्थतो ब्रह्मैव कारणत्वादिमत्र तु जीव इति यत्सिद्धान्ति-नोऽभिमतं तदनुपपन्नमित्यर्थः । भाष्ये ऐक्यश्रुतेः सावकाशत्वोक्तिर्युक्तेरसिद्ध्यभिप्रायेणेति भावेन तत्तात्पर्यमाह ॥ **जीवेशयोरिति** ॥ ऐक्यश्रुतेः का गतिरित्यत एकीभावशब्दस्तु सान्निध्येऽपि भवतीति न्यायविवरणानुरोधेन गतिमाह ॥ **ऐक्योक्तिस्त्विति** ॥ सान्निध्यपदस्य मत्यैक्यमप्यर्थ इति भावेनादिपदप्रयोगः । अत एव तत्रोभयानुगुण्येन एकीभूता तु सा सेना पाण्डवानभ्य-

(भावदीपः)

वर्ततेतिवदित्युक्तमिति भावः । भाष्ये दृष्टान्तभागमात्रस्योक्तत्वेऽपि न्यायविवरणे शेषस्याप्युक्त्यात्रापि दार्ष्टान्तिकांशोऽप्यभिमत इति भावेन तदानुगुण्येनैव भाष्यमवतार्य शेषमाह ॥ **न श्रुतेरिति** ॥ एकीभवन्तीति श्रुतेरित्यर्थः । **एवमिति** ॥ विजानतो मुनेरात्मा स्वरूपमप्येवं भवतीत्यर्थः । (एवमेव हि जीवोऽपीति स्मृत्युक्तेः अत्र काठकभाष्योक्तब्रह्मार्थग्रहणे तु ब्रह्मेशानादिभिरिति स्मृत्युक्तिरयुक्ता स्यात् । एवमेव छान्दोग्यभाष्यटीकोक्तेश्च) ॥ **एतेनेति** ॥ सदृष्टान्तजीवेशभेदबोधकश्रुत्युदाहरणेनेत्यर्थः । न्यायविवरणोक्तपूर्वोत्तरवाक्यविरोधं चाह ॥ **निरञ्जन इति** ॥ उपलक्षणमेतत् । विष्णुतत्वनिर्णयतट्टीकाद्युक्तबाधकान्तराण्यपि ध्येयानीति । व्याख्यातैषा श्रुतिः सम्यक्तत्रैव टीकादौ प्रथमपरिच्छेदान्तिमभागे । आथर्वणभाष्ये च व्याघातनिरासायाह ॥ **इत्युक्तोऽपीति** ॥ तादात्म्यं मुक्तिरित्यत्र मानमाह ॥ **हराविति** ॥ **तादात्म्यमिति** ॥ हरिणेति योज्यम् ॥ **इति वचनादिति** ॥ चतुर्थस्कन्धतात्पर्योक्तादिति ज्ञेयम् ॥ **अल्पेति** ॥ असायुज्यमुक्तानामेतत् । नासौ भवतीति स्मृत्युक्तं प्रमेयमित्यर्थः ॥ **वर्तमानेति** ॥ नान्वश्नुवन्तीति वर्तमाननिषेधादित्यर्थः । न ते विष्णाविति श्रुतिः प्राग्जन्मादिसूत्रे व्याख्यातेति भावः । तर्ह्यनर्थकं सूत्रं स्यादिति शङ्कते ॥ **किं त्विति** ॥ ब्रह्मण उपादानत्वे भोक्तुः शारीरस्य भोग्यत्वापत्तेर्भोग्यस्य च शब्दादेर्भोक्तृत्वापत्तेस्तयोरविभागः स्यात् द्वयोरपि परमकारणब्रह्मणोऽनन्यत्वादित्यादिना मायावाद्युक्तं सूत्रार्थमाह ॥ **चेतनेति** ॥ विषयस्य शब्दादेरित्यर्थः । विषयित्वं भोक्तृत्वम् ॥ **ब्रह्मात्मकत्वनिरासेनेति** ॥ उत्तरनये न चान्यत्रेत्यादिना भाष्ये करिष्यमाणेनेति भावः । भोक्तृत्वापत्तिरिति तु यन्मतं तत्कुतो हरिः । भोक्त्रापत्तेरिति प्राहेत्यनुभाष्योक्तमाह ॥ **भोक्तृत्वेति** ॥ अवान्तरफलोक्तिपूर्वं प्रधानफलोक्त्या सूत्रार्थमुपसंहरति ॥ **अत इति** ॥ जीवेश्वरयोरैक्याभावादित्यर्थः ।

## अभिनवचन्द्रिका

**न विष्णोर्जगत्कर्तृत्वादीति** ॥ अयमत्र प्रयोगो विवक्षितः 'विष्णुर्जगत्कर्ता न जीवाभिन्नत्वात् संप्रतिपन्नवत्' इति । एतेन हेतोः पक्षवृत्तित्वाभावात् वैयधिकरण्यमिति परास्तम् । अप्रयोजकतां परिहरति – **न हीति** ॥ न हि यो येनात्यन्ताभिन्नः, स तद्विरुद्धस्वभाव उपलब्धः येन जीवाभिन्नोऽपि विष्णुर्विश्वकर्ता स्यादिति भावः । अतःपरं 'तस्य जीवाभेद एव कुत इत्यतः प्राक् जीवाभेदो ह्युभयगतविरुद्धधर्मत्यागेन जीवसालक्षण्यग्रहणेन वा सम्भवति,

(अभिनवचन्द्रिका)

सर्वथा न जगत्कारणत्वादि ईश्वरैकनिष्ठं सम्भवति' इति वाक्यद्वयं प्रक्षिप्तम् । अवश्यं चैतदेवं विज्ञेयम् जीवाभेदेन पूर्वपक्षमारभ्य चिन्मात्रभेदव्युत्पादनस्यासङ्गतत्वात्, जीवस्येश्वरसालक्षण्य-ग्रहणेन जीवेश्वराभेदसम्भवोक्तेरनुपयुक्तत्वात् । अप्रयोजकताशङ्कापरिहाराय प्रवृत्तेन साध्यं विना हेत्वसम्भवस्यैव व्युत्पादनीयत्वात्, न ह्यनेन वाक्येनेश्वरस्य जगत्कर्तृत्वे जीवाभेदासम्भवो व्युत्पाद्यते येनोपयुक्तं स्यात्, किं नाम ईश्वरधर्मस्य जगत्कारणत्वस्य जीवनिष्ठत्वाङ्गीकारे अभेदः सम्भवतीति व्युत्पाद्यते । प्रमाणाभावेन प्रमाणविरुद्धत्वेन च ईश्वरस्य जीवसालक्षण-ग्रहणायोगेन ईश्वरस्य जीवसालक्षण्यग्रहणे अभेदः सम्भवति इत्युक्त्ययोगाच्च । सालक्षण्यस्य भेदव्याप्तत्वेन तेन अभेदोपपादनायोगाच्च । जीवस्य ईश्वरसालक्षण्यग्रहणेन अभेदोपपत्तिपक्षे जगत्कारणत्वस्य ईश्वरैकनिष्ठत्वानपायेन, सर्वथा न जगत्कारणत्वादि ईश्वरैकनिष्ठं सम्भव-तीत्युक्त्ययोगाच्च 'न हि जीवाभिन्नस्य जगत्कर्तृत्वाद्युपपद्यत' इत्यनेन वाक्यद्वयस्यानन्वयाच्चेति ॥ **किं चात इति** ॥ अस्तु मुक्तस्य परापत्तिश्रवणं, तथापि कुतोऽभेदः । न हि यद्यद्देवदत्तेनोच्यते तत्तत्तथा भवतीति भावः ॥ **तेनैवेति** ॥ श्रुत्युक्तत्वेनैवेत्यर्थः । यद्वाक्येनोच्यते तत्तथेति नियमाभावेऽपि यच्छ्रुत्योच्यते तत्तथेति नियमसद्भावादैक्यसिद्धिरिति भावः ॥ **कथञ्चिदिति** ॥ नियम्यनियामकभावस्य भेदव्याप्तत्वेन अमुक्तनियामकत्वसम्भवेऽपि मुक्तनियामकत्वस्य असम्भव इत्यभिप्रेत्य कथञ्चिदित्युक्तम् । उपसंहरति **अत इति** ॥ अत्र ईश्वरस्येत्येव पाठः, न तु ईश्वरस्यैवेति । मूलकोशेष्वदर्शनात् । तादात्म्यं प्राप्तोऽपीत्यस्य मुक्तोऽपीत्यर्थः कथमित्यत आह– **हराविति** ॥

**पूर्वपक्षस्तु** – न विष्णोर्जगत्कारणत्वादि युक्तम्, तस्य जीवाभिन्नत्वात् । न हि जीवाभिन्नस्य जगत्कर्तृत्वाद्युपपद्यते । जीवाभेद एव कुत इति चेत्, न 'परेऽव्यये सर्व एकीभवन्ति' इति श्रुतेः । अतो जीवाभिन्नत्वादीश्वरस्य जगत्कारणत्वाद्यनुपपन्नमिति न लक्षणसूत्रं युक्तम् ।

**सिद्धान्तस्तु** – जीवेश्वरयोरभेदाभावान्नेश्वरस्य विरुद्धं जगत्कारणत्वादिकम् । न च 'परेऽव्यये सर्व एकीभवन्ति' इति श्रुतेः कथमैक्याभाव इति वाच्यम् । 'निरञ्जनः परमं साम्य-मुपैति' इति सन्निहितवाक्यविरोधेन श्रुतेस्तत्र तात्पर्याभावात् । का गतिः तर्हि अभेदश्रुतेरिति चेत्, न स्थानैक्याद्यालम्बनत्वेन जलैकीभावोक्तिवदुपचरितत्वोपपत्तेः । अतः विष्णोर्जगत्कारणत्वे युक्तिविरोधाभावादुपपन्नं लक्षणसूत्रमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

अतीताधिकरणे ब्रह्मणो जगज्जन्मादिकारणत्वे श्रुतिसंवादित्वेन प्रबलयुक्त्या विरोधः परिहृतः । इदानीं श्रुतिसिद्धत्वेन प्रबलयुक्त्या विरोधः परिह्रियते इति सुधोक्तमधिकरणोपाधिं सूचयन् सङ्गमयति ॥ **अत्र पुनरिति** ॥ अनन्तरसङ्गतिस्तु पूर्वसूत्रे एतेनेत्यतिदेशेन जीवकर्तृत्व-निरासेन युज्यते । जीवब्रह्मणोर्भेदाभावेन जीवस्य तदभावे तदभिन्नब्रह्मणोऽपि तन्न स्यात् । ब्रह्मणस्तदङ्गीकारे तदभिन्नजीवस्यापि तत्स्यादित्युभयथापि शङ्कोत्थापनादिति ज्ञेयम् ॥ **युक्त-मयुक्तं वेति** ॥ अत्र परमात्मन एव जगत्कर्तृकत्वं जीवाभिन्नत्वयुक्तिविरुद्धमुताविरुद्धमिति चिन्ता । तदर्थमभिन्नत्वहेतुः सिद्ध उतासिद्ध इति । तदर्थमैक्यतया प्रतीयमानं परेऽव्यये सर्व एकीभवन्तीति वाक्यं किं स्वरूपैक्यरूपमुख्यार्थमुत स्थानैक्यादिपरतयोपचितार्थमिति । सूत्रे पूर्वपक्षोऽपि नेत्यनुवर्तते । विष्णोर्जगत्कारणत्वमिति प्रकृतं तेन सम्बध्यते । कुतः यत अविभागो भेदस्तस्मादित्यर्थमभिप्रेत्य व्याचष्टे ॥ **न विष्णोरिति** ॥ विष्णोर्जगत्कारणत्वं न लक्षण-मित्यर्थः । प्रयोगस्तु विष्णुर्न जगत्कारणत्वादिलक्षणकः जीवाभिन्नत्वादर्जुनादिवदिति ।

अप्रयोजकत्वं परिहरति ॥ **न हीति** ॥ जीवाभेदेऽपि जगत्कारणत्वं तदेकनिष्ठं न स्यादित्यतस्तस्य तदेकनिष्ठत्वे जीवाभेद एव न स्यादिति हेतूच्छित्तिमभिप्रेत्याभेदं त्रेधोपपादयति ॥ **जीवाभेदो हीति** ॥ उभयगतविरुद्धधर्मपरित्यागेत्यतःपरमपि उपरितनवाशब्दः सम्बध्यते । उभयगतेत्येतत् वाशब्दसम्बन्धं विना जीवेश्वरसालक्षण्यग्रहणोपपादकं च । ततश्च जीवेश्वराभेदो हि मिथ्यावादिरीत्योभयगतसर्वकर्तृत्वासर्वकर्तृत्वरूपविरुद्धधर्मस्य मिथ्यात्वेन तदविवक्षया चिन्मात्रैक्येन वा प्रत्यक्षमुभयधर्मजीवस्य स्वगतासर्वकर्तृत्वत्यागेन श्रुतिसिद्धसर्वकर्तृब्रह्मलक्षण-सद्भावेन वा श्रुतिमुपमर्द्येश्वरस्य स्वगतसर्वकर्तृत्वत्यागेन प्रत्यक्षसिद्धासर्वकर्तृजीवधर्माङ्गीकारेण वाऽसम्भावितः गत्यन्तराभावात् । तथा च जगत्कारणत्वस्य ईश्वरैकनिष्ठत्वे त्रेधोपपाद्यो भेदो न स्यादिति भावः ।

एवमप्रयोजकत्वं परिहृत्य तेन हेतुना सिद्धं साध्यमित्याह **सर्वथेति** ॥ उभयधर्ममिथ्यात्वे-नान्यतरधर्मत्यागेनाभेदपक्षेऽपीत्यर्थः । तथाऽद्ये तृतीये चासम्भवः । द्वितीयेऽतिव्याप्तिरिति तदेकनिष्ठत्वाभावो बोध्यः । नन्वैक्येनातिव्याप्तिचोदनमयुक्तम् । लक्ष्ये तच्चोदनायोगादिति चेन्न ।

(वाक्यार्थमुक्तावली)

ब्रह्मलक्षणस्य भेदवाद्यनभिमतेनापि प्रमिताभेदलिङ्गेन तत्तद्रीत्या अलक्ष्येऽपि वर्तनादतिव्याप्ति-प्रसक्तेरित्याशयात् । स्वरीत्यात्वसम्भव एवेति हृदयम् । वक्ष्यते चैतत् । हेतुस्वरूपासिद्धयं परिहारकतया भोक्त्रापत्तेरविभाग इति समग्रं पूर्वपक्षांशं व्याचष्टे **तस्य जीवाभेद** इत्यादिना । एकीभवन्तीति बहुवचनघटनाय कर्मणीत्यंशोक्तिः । एकीभावश्च कर्मणां परमते निवृत्तिरिति ज्ञेयम् । परमात्मत्वप्राप्तिरिति परापत्तिरिति भाष्ये भावप्रधानो निर्देश इति भावः । किं चात इति । अतश्च किम् । उपचारसम्भवात् । लोके गाव एकीभवन्तीत्यादौ उक्तस्य तथात्वनियमा-भावादिति भावः ॥ **तेनैवेति** ॥ श्रुत्युक्तत्वं तेनैव हेतुनेत्यर्थः । लौकिकवाक्योक्तस्य तथात्व-नियमाभावेऽपि श्रुत्युक्तस्य तथात्वनियमो न व्यभिचरित इत्याह **यो यथेति** ॥ अन्यथा ईश्वररूपेष्वपि भेदः स्यादिति भावः ।

ननु मुक्तौ जीवाभिन्नस्य ब्रह्मणो नासर्वकर्तृत्वं सिद्धयति । संसारिण इव मुक्तस्य सर्वकर्तृत्वे प्रत्यक्षविरोधाभावेन पूर्वमसतोऽपि जीवकर्तृत्वस्य ज्ञानान्मुक्तेरिव मुक्तौ ज्ञानेनोदयसम्भवेन मुक्ता-भिन्नस्यापि ब्रह्मणः कारणत्वसम्भवान्नासम्भव इत्याशङ्क्य परिहरति **मुक्तजीवेति** ॥ मुक्तस्य जगद्व्यापाराभावात्कथञ्चिदित्युक्तम् । नन्वसम्भवपरिहारेऽप्यतिव्याप्तितादवस्थ्ये न लक्षण-निर्वाहः । यद्यैक्यान्नातिव्याप्तिरिति मतं तर्हि सर्वथेत्यत्रातिव्याप्त्युक्तिरयुक्तेति चेत् प्राक् संसार-दशायामेव प्रत्यक्षोपमर्देन श्रुतिसिद्धब्रह्मलक्षणस्यैक्ययुक्तिप्राप्तस्यातिव्याप्तेरुक्तत्वेऽपि देहमुक्त्य-नन्तरं ब्रह्मीभूतस्य लक्ष्यत्वविवक्षयाऽतिव्याप्त्यभावोपपत्तेः सिद्धान्तरीत्योक्तत्वेन स्वरीत्याऽ-सम्भवस्यैव तात्पर्यतः प्राप्तत्वाच्च । अत एव सुधायां प्रत्यक्षस्य प्राबल्यात् प्रत्यक्षसिद्धासर्वजीव-कर्तृसालक्षण्यमेव वक्तव्यमित्यसम्भव एव निर्धारित इति बोध्यम् । यद्वा मुक्तजीवस्य निर्धर्म-कत्वेनासर्वकर्तृत्वादिविरुद्धधर्माभावात्तदभिन्नस्येश्वरस्य सर्वकर्तृत्वनिर्वाहः सम्भवतीत्याशयेन शङ्कते **मुक्तजीवाभिन्नस्यापीति** ॥ विरुद्धधर्माभावेऽपि निर्धर्मिकाभिन्नस्य सर्वकर्तृत्वरूपधर्म-निर्वाहसम्भावात्कथञ्चिदित्युक्तम् । मुक्तावैक्येऽपि संसारे भेद एवास्तु च्विप्रत्ययस्वारस्यादित्यत आह ॥ **न हीति** ॥ अनेन संसारे ब्रह्मणोऽन्यस्य जीवस्य मुक्तावन्यत्वं ब्रह्मत्वं न हि युज्यत इति भाष्यं व्याख्यातं भवति । यदि संसारे भेदः स्यात्तर्हि मुक्तावैक्यं न स्यादिति तर्कमूलव्याप्ति-प्रदर्शनपरत्वेनापि भाष्यं व्याचष्टे ॥ **नहीति** ॥ अनेन घटाद्यन्यस्य पटादेरन्यत्वं घटादित्वं न हीति व्याख्यातं भवति । असम्भवमुपपाद्योपसंहरति **अत इति** ॥ असर्वकर्तृत्वेन प्रत्यक्षसिद्धसंसार्य-

(वाक्यार्थमुक्तावली)
भेदादीश्वरस्य जगत्कारणत्वासम्भव इति भावः । न चैवं च्विप्रत्ययानुपपत्तिः । न ह्यन्यस्येत्युक्तिविरोधाद्भेदभ्रमनिवृत्तेरभूततद्भावाभिप्रायेणोपपत्तेः ।

प्राग्भिन्नतया दृष्टोऽयं जीवः ब्रह्मणा अथेदानीमभिन्नतया दृश्यत इत्यभेदप्रतीत्यपेक्षया चोपपत्तेः । एतेन भाष्येऽन्यस्यान्यत्वाभावस्य पूर्वपक्षयुक्तितयोक्तत्वात् । अनुव्याख्याने तस्य नान्यदन्यत्वमापन्नमित्यादिना सिद्धान्तयुक्तित्वेनोक्तत्वाद्विरोधः इत्येकः पूर्वः पक्षः । एतं पक्ष-मवलम्ब्य भाष्यप्रवृत्तिः । द्वितीयस्तु च्विप्रत्ययस्वारस्यात् पूर्वं भेदः मुक्तौ त्वभेदः न ह्यन्यस्येति युक्तिस्तु च्विप्रत्ययरूपश्रुतिबाधितेति एतत्पूर्वपक्षदूषणाय पूर्वं सिद्धेन भेदेन पश्चादपि भेदं साधयितुं नान्यदन्यत्वमित्यादिसिद्धान्तानुव्याख्यानं प्रवृत्तमिति भाष्यानुव्याख्यानटीकयोर्विरोधः । स्पष्टं च सुधायामिति । एतेन भोक्तुर्जीवस्य मुक्तौ ब्रह्मत्वापत्तेः । परेऽव्यय इति श्रवणा-त्तयोरविभागः । यतो मुक्तावविभागोऽतो भोक्तुर्दुःखादिभोक्तुः संसारिणोऽपि परेणापि विभागः यतो ब्रह्मणः संसार्यविभागस्तेन ब्रह्मणो जगत्कारणत्वासम्भव इति पूर्वपक्षसूत्रार्थ उक्तो भवति । सिद्धन्तांशे भोक्त्रापत्तेरित्यन्वेति ।

विभाग इति च पूर्वसूत्रादपिशब्दोऽनुवर्तते । नञध्याहारश्च । ततश्च ऐक्यत्वेनोक्तत्वात् जीवेशयोर्भेदाभावेन जगत्कारणत्वाभाव इति न वाच्यम् । भोक्त्रापत्तेरप्यैक्येनोक्तत्वेऽपि विभागो भेदः लोकवत् उदके सिक्तोदकस्येव स्यात् । ऐक्येनोक्तिरपि उदके उदकस्यैकीभावोक्तिवत् स्थानैक्याद्यालम्बनत्वेनोपचरिता स्यादिति सूत्रभाष्ययोरर्थमभिप्रेत्य व्याचष्टे **जीवेशयोरित्यादिना** ॥ **स्थानैक्याद्यालम्बनत्वेति** ॥ स्थानैक्यपक्षे सर्व एकीभवन्तीत्यत्र सर्वशब्दस्य तत्स्थाने लक्षणा। मत्यैक्यपक्षे सर्वशब्दस्य सर्वसम्बन्धिमति विषये लक्षितलक्षणेति भावः ॥ **जलैकी-भावोक्तिवदिति** ॥ इदं च स्थानैक्याभिप्रायेण । उभयाभिप्रायेण तु 'एकीभूता तु सा सेना पाण्डवा-नभ्यवर्तत' इतिवदिति न्यायविवणोक्तमुदाहरणं बोध्यम् । लौकिकव्यवहारस्योपचरितत्वेऽपि न श्रुतेरुपचारो युक्त इत्याह– **न श्रुतेरिति** ॥ तथा च श्रुतेरिति चशब्दसमुच्चयमाह– **न श्रुतेरिति** ॥

विवक्षितार्थप्रतिपादकवाक्यशेषं पठति **एवं मुनेरिति** ॥ एवं विजानतो मुनिवर्गस्य आत्माधिपतिः हिरण्यगर्भोऽपि मुक्तः । परमात्मानं प्राप्य तादृगेव भवति न तु स एव भवति किम्वन्ये जीवा इत्यैक्यवाक्यस्य बुद्धिसारूप्येणोपचरितार्थत्वस्योक्तत्वादिति भावः । उक्तं चान्यत्र । जीवस्य परमैक्यन्तु बुद्धिसारूप्यमेव तु । एकस्थाननिवासो वेति । तथा इति च

(वाक्यार्थमुक्तावली)
श्रुतिरिति भाष्ये चशब्दसम्बन्धं मत्वा तत्समुच्चयमेकीभावस्य पूर्वमुत्तरं च वाक्यं पठति ॥ **निरञ्जन इति** ॥ न च व्यभिचारादित्यादिपदेन जलैकीभावव्यवहारस्योपचरितार्थत्वं गृह्यते ।

व्याहतिपरिहाराय इत्युक्त इति पदद्वयमध्याहृत्य योजयति **इत्युक्त इति** ॥ अध्याहाररुच्या पक्षान्तरमाह– **मुक्तोऽपीति** ॥ अस्मिन् पक्षे परमात्मना तत्प्रसादेनेत्यर्थः । तस्मिन्नात्मनि चिन्तयस्वेति वा । तस्मिन्नात्मा स्वरूपं यस्येति वा तदात्मा तस्य भावः तादात्म्यमिति व्युत्पत्तेरिति भावः ॥ **अल्पमुक्तानामिति** ॥ एतन्नासौ भवतीति स्मृत्युक्तप्रमेयम् । अल्पमुक्तानामस्वतन्त्रमुक्तानामित्यर्थः न तु स्वतन्त्रमुक्तानां हिरण्यगर्भादीनामिति भावः । भाष्ये यत्कैवल्यं स्वातन्त्र्यमित्यर्थः ॥ **ब्रह्मात्मकत्व इति** ॥ प्रकृत्यधिकरणे सर्वस्य ब्रह्मोपादानकत्वस्योक्तत्वात्तद्रीत्येत्यर्थः ॥ **विषयस्येति** ॥ भोग्यस्य शब्दादेर्भोक्तृत्वं स्यात् । तथा च भोग्यभोक्तृविभागो न स्यादित्याशङ्का लोकवत् लोके यथा समुद्रकार्याणामपि फेनतरङ्गादीनां विभागस्तद्वत् प्रकृतेऽपि स्यादिति अत्र सूत्रे निरस्यत इत्यर्थः ॥ **एकत्रापीति** ॥ प्रथमातिक्रमे कारणाभावादत्रोक्तिरिति भावः । निरस्तमिति न चान्यत्कल्प्यम् । अप्रामाणिकत्वादिति प्रकृत्यधिकरण एवेत्यर्थः । भोक्तृत्वापत्तित इति यन्मतं तत्कुतो हरिः । **भोक्त्रापत्तेरिति** प्राहेत्यनुव्याख्यानोक्तं कौशल्यमप्याह– **भोक्तृत्वेति** ॥

## तत्त्वसुबोधिनी

ननु पूर्वमपि प्रबलयुक्त्यविरोधः उक्तः । इदानीमपि स एव उच्यते इति पौनरुक्त्यमित्यत आह ॥ **अत्र पुनरिति** ॥ तथा च पूर्वे ब्रह्मणो जन्मादिकारणत्वे श्रुतिसंवादित्वेन प्रबलयुक्त्यविरोधः परिहृतः इदानीं तु, श्रुतिसिद्धलिङ्गत्वेन प्रबलया युक्त्या विरोधः परिहृतः यतः इत्यगतार्थता इति भावः । अत्र पूर्वाधिकरणे एतेनेत्यतिदेशेन जीवाद्भवन्तीति श्रुतिप्राप्तजीवकर्तृत्वपक्षनिरासो न युज्यते । जीवब्रह्मणोरभेदेन जीवस्य जगत्कर्तृत्वाभावे, तदभिन्नस्य ब्रह्मणः तन्न स्यात् । ब्रह्मणस्तदङ्गीकारे तदभिमानजीवस्यापि तत्स्यादित्युभयथापि न ब्रह्मण एव जगत्कर्तृत्वं इत्याक्षेपोत्थानादनन्तरसङ्गतिः । अस्तु जीवाभेदः तत किमित्यत आह ॥ **न हीति** ॥ कुतो नेत्यत आह ॥ **जीवाभेदो हीति** ॥ जीवस्यासर्वकर्तृत्वादित्यागेन ईश्वरगतसर्वकर्तृत्वादिसालक्षण्यग्रहणेनेत्यर्थः । **सर्वथेति** आद्यपक्षेति । व्याप्ते द्वितीये सम्भवादिति भावः । अत्र

(तत्त्वसुबोधिनी)
भोक्तुरापत्तेरिति विग्रहः । भोक्तुरित्यनन्तरं मोक्षे परेत्यध्याहारः । आपत्तेरित्यनन्तरं उक्त-रित्यध्याहारः । अन्यथा साध्यावैशिष्ट्यादित्यभिप्रेत्य कर्माणीत्यादिभाष्यं व्याचष्टे ॥ **कर्मा-णीत्यादिना** ॥ भाष्ये परे इत्येतद्भावसाधनमित्यभिप्रेत्य परमात्मने उक्तममुक्तजीवस्य परमात्मत्वप्राप्तिश्रवणं ततः किमित्याक्षिपति **किं चातः इति** ॥ उत्तरमाह– **तेनैव हेतुना इति** ॥ मुक्तजीवस्य परमात्मत्वप्राप्तिश्रवणरूपहेतुनेत्यर्थः । मुक्तजीवस्य परमात्मत्वप्राप्तिः श्रवण-मात्रेण कथं तयोरभेदसिद्धिः इत्यतः, व्याप्तेः सत्त्वादित्याह ॥ **य इति** ॥

मुक्तजीवस्यानन्दादेरिव ज्ञानेन प्राग्विद्यमानस्य सर्वकर्तृत्वनिर्वाहः सम्भवतीत्यभिप्रेत्य शङ्कते ॥ **मुक्तेति** ॥ स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि मुक्तानां नैव कामाः स्यादिति स्मृतिविरोधात् । मुक्तत्वसर्वकर्तृत्वप्राप्त्यसम्भवादित्यभिप्रेत्य कथञ्चिदित्युक्तम् । यद्वा मुक्तजीवस्य निर्धर्मकत्वेन सर्वकर्तृत्वादिविरुद्धधर्माभावात् । तदभिन्नस्येश्वरस्य सर्वकर्तृत्वानिर्वाहः सम्भव-तीत्याशयेन शङ्कते ॥ **मुक्तेति** ॥ विरुद्धधर्माभावेऽपि निर्धर्मकाभिन्नस्य सर्वकर्तृत्वरूपधर्म-निर्वाहासम्भवात् । कथञ्चिदित्युक्तम् । मुक्तावैक्येऽपि संसारे भेद एव श्रुतिप्रमेयस्वारस्यादित्यत आह ॥ **न हीति** ॥ संसारे ब्रह्मणोऽभिन्नं जीवजातं मुक्तौ ब्रह्माभिन्नतां यातीति हि, यस्मा-त्तस्मात् पूर्वभेदाङ्गीकरणं न युक्तमित्यर्थः । अन्यस्य संसारे ब्रह्मणोऽन्यस्य, अनन्यत्वं मुक्तौ स्वान्यब्रह्मत्वं हि यस्मात् न युज्यते इति भाष्यं व्याख्यातं भवति । तर्कमूलभूतव्याप्तिप्रदर्शन-परत्वेनापि तद्व्याचष्टे ॥ **न हीति** ॥ अनेनान्यस्य घटाद्यन्यस्य पटादेः, अनन्यत्वं घटादित्वं न हि युज्यते इति व्याख्यातं भवति । न चैवं प्रत्ययानुपपत्तिः । प्रतीत्यपेक्षया तदुपपत्तेः प्राग्भिन्न-तया दृष्टो जीवोऽयं ब्रह्मणः, अथेदानीं मुक्तानामभिन्नतया दृश्यते इति एकीभवन्तीत्युच्यते इति भावः ॥ **तत्सिद्धिः** ॥ जगत्कारणत्वाद्यभावसिद्धिः । अभेदे हेतुः **एक्येनोक्तत्वादिति** ॥ **ऐक्योक्तिस्तु इति** ॥ आदिपदेन मत्यैक्यं ग्राह्यम् । ब्रह्मभेदप्रतिपादकश्रुतीनां उपचरितार्थ-त्वानुक्तेराह **'एवं मुनेरिति'** ॥ एवं विजानतो मुनेः । विजानतां मुनीनां आत्माधिपति-र्हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति, किमुतान्यस्य इत्यर्थः ॥ **एतेनेति** ॥ वाक्यशेषपुरुषबाधकसत्वेनेत्यर्थः । तादात्म्यपरं, ऐक्यपरम् अङ्गीकृत्याह **इत्युक्तोऽपीति** ॥ **मुक्तोऽपीति** ॥ तत्तादात्म्यं प्राप्तोऽपीत्यस्यार्थः । अत्र परमात्मनेत्येतत्, तत्प्रसादेनेत्यर्थकं इति बोध्यम् ॥ **एतदिति** ॥ नासौ भवतीत्यादिकं **वर्तमाननिषेधादिति** ॥ नाश्नुवन्ति इति

(तत्त्वसुबोधिनी)

वर्तमाननिषेधादित्यर्थः । **अत्र** एतदधिकरणे ॥ **अर्थान्तरन्त्विति** ॥ एकसमुद्रात्मनामपि फेनादीनां अवान्तरभेदवत्, एकब्रह्मात्मनामपि चेतनाचेतनानां अवान्तरभेद इत्याद्यर्थान्तरमित्यर्थः ॥ **भोक्तृत्वेति** ॥ यद्यत्र भोग्यस्य भोक्तृत्वापत्तेरित्यर्थो विवक्षितः स्यात् सूत्रकारस्य तर्हि भोक्तृत्वापत्तेरित्येवं ब्रूयात्, **न भोक्त्रापत्तेरिति** ॥ ततः नेदं व्याख्यानं सूत्रकृताभिमतमिति भावः । ननु भावप्रधाननिर्देशानां बहुलमुपलम्भान्नायं दोषः । सत्यं प्रतिपाद्यव्यवस्थितौ शाब्दी गौणता कथञ्चिदङ्गीक्रियते । न चास्य सूत्रस्येदं प्रतिपाद्यं व्यवस्थितम् । जगदुपादानत्वस्य प्रागनुक्तत्वेनानुक्तोपालम्भप्रसङ्गादित्यभिप्रायेनैतत्प्रवृत्तेरिति ज्ञेयम् ।

## वाक्यार्थविवरणम्

**ईश्वरैकनिष्ठमिति** ॥ आद्येऽतिव्याप्तिः । द्वितीयेऽसम्भवापत्तेरित्यर्थः । कल्पनमित्यत्र कल्पनशब्दोपरि भारः ॥ **ब्रह्मात्मकत्व इति** ॥ प्राचीनप्रबन्धेनाभिहिते सतीति शेषः । विषयस्य अचेतनरूपभोग्यवर्गस्येत्यर्थः । विषयित्वम् । चेतनरूपभोक्तृत्वं स्यात् । यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तिबलाद् भोग्याचेतनवर्गाभिन्नब्रह्माभिन्नत्वाच्चेतनरूपभोक्तृवर्गस्यापि भोग्यत्वं स्यात् । यद्भोग्यं भोक्त्रभिन्नब्रह्माभिन्नं तद्भोग्यं तेनाभिन्नमिति । एवं भोग्यस्यापि भोक्तृत्वं स्यादुक्तबलादित्यर्थः । ततः किमित्यत आह ॥ **तथा चेति** ॥ विषयविषयिविभागः । भोग्यभोक्तृविभागः । फेनतरङ्गादीनाम् । इतरेतरभावापत्त्येति शेषः । विभागवत् । विभागभङ्गीभाववत्। यथोक्तं सुधायाम् । केचिदिदं सूत्रमन्यथा व्याचक्षते । पूर्वं किल चेतनाचेतनात्मकप्रपञ्चस्य ब्रह्मोपादानत्वेन ब्रह्मानन्यत्वमुक्तम् । तदाक्षिप्य समाधातुमिदं सूत्रम् । तथा हि । यदि चेतनाचेतनात्मकजगतो ब्रह्मानन्यत्वं स्यात्तदा चेतनो भोक्ता भोग्यश्च चेतनो विषय इत्ययं विभागो न स्यात् । कुतः । भोग्यस्यापि भोक्तृत्वापत्तेः भोक्तुरपि भोग्यत्वापत्तेः । भवितव्यं चानेन विभागेन प्रत्यक्षादिसिद्धत्वादिति चेत् । स्याल्लोकवत् । यथा लोके समुद्रात्मनामपि फेनतरङ्गादीनां नेतरेतरभावापत्त्या विभागभङ्गः । यथा वा महाकाशात्मनामपि घटमठाद्याकाशानाम् । तथा प्रकृतेऽपि स्यादितीति । अन्यथा फलाध्यायसङ्गतत्वेन तत्रैवेदं वक्तव्यमिति । यदि ॥ **एकत्राप्यनुक्तीति** ॥ अतः प्रथमातिक्रमे कारणाभावादत्रोक्तमिति भावः ।

## वाक्यार्थमञ्जरी

भोक्तुर्जीवस्यापत्तेर्ब्रह्मत्वप्राप्तेरेकीभवन्तीवि श्रुत्युक्तत्वेन तयोरविभागः भेदाभाव इति चेन्न स्याल्लोकवत् । यथा लोके स्थानैक्याभिप्रायेणोदके उदकस्यैकीभावव्यवहारस्तथैकीभावव्यवहारः स्यादित्यर्थः ॥ **उभयगतेति** ॥ विरुद्धधर्माधिकरणयोरैक्यायोगाज्जीवस्य असर्वकर्तृत्वादित्यागेनेश्वरगतसर्वकर्तृत्वादिसालक्षण्यग्रहणे नेश्वरस्य वा सर्वकर्तृत्वादित्यागेन जीवगतासर्वकर्तृत्वादिसालक्षण्यग्रहणेनेत्यर्थः ॥ **सर्वथेति** ॥ आद्ये अतिव्याप्तेः द्वितीयेऽसम्भवादित्यर्थः ॥ **कर्माणीति** ॥ पूर्वोक्ता कालाद्यभिमानिदेवताः कर्माणि तदभिमानी पुष्करः विज्ञानस्वरूप आत्मा जीवश्चेत्येते 'सर्वे अव्यये परे ब्रह्मणि एकीभवन्ति' संश्लिष्टा भवन्तीत्यर्थः । अतश्च किमिति प्रश्नोत्तरमाह ॥ **तेनैवेति** ॥ जीव ईश्वराभिन्नस्तथा श्रुत्युक्तत्वादित्यत्र व्याप्तिमाह ॥ **यो यथेति** ॥ मुक्तजीवस्य निर्धर्मकत्वेन सर्वकर्तृत्वादिविरुद्धधर्माभावात्तदभिन्नस्येश्वरस्य सर्वकर्तृत्वरूपधर्मनिर्वाहः सम्भवतीत्याशयेन शङ्कते ॥ **मुक्तजीवभिन्नस्येति** ॥ विरुद्धधर्माभावेऽपि निर्धर्मकाभिन्नस्य सर्वकर्तृत्वरूपधर्मनिर्वाहासम्भवात्कथञ्चिदित्युक्तम् । निर्वोढुं निर्वहितुम् । कुत इत्यत आह ॥ **न हीति** ॥ न हि घटभिन्नः पटः कदापि घटाभिन्नतां यातीत्यर्थः । तर्हि श्रुतेः का गतिरित्यत आह ॥ **ऐक्योक्तिस्त्विति** ॥ स्वातन्त्र्येण स्वेच्छया । नात्र श्रुतेरुपचरितार्थत्वमुच्यत इत्यत आह ॥ **एवं मुनेरिति** ॥ एवं विजानतां मुनीनामात्माधिपतिर्ब्रह्मापि मुक्तः परमात्मानं प्राप्य तादृगेव भवति किमुतान्य इत्यर्थः । एतेन श्रुत्युदाहरणेन आन्तरानुपपत्तिं चाह ॥ **निरञ्जन इति** ॥ **सन्निहितेति** ॥ एकीभवन्तीत्येतत्समीपस्थेत्यर्थः । तत्र क्रमेण सारूप्यसामीप्ययोर्भेदाविनाभूतयोरुक्तेरिति भावः । यथाश्रुतासम्भवादाह ॥ **इत्युक्तोऽपीति** ॥ अध्याहारभयादाह ॥ **मुक्तोऽपीति** ॥ अत्र परमात्मनेत्यस्य तत्प्रसादेनेत्यर्थो बोध्यः । तादात्म्यं मुक्तिरित्यत्र चतुर्थतात्पर्योदाहृतप्रमाणमाह ॥ **हराविति** ॥ तादात्म्यं हरिणेति योज्यम् । हरावित्यनेन तस्मिन्हरौ आत्मा अन्तःकरणं नियतं यत्र भवति तत्तदात्मं तदेव तादात्म्यमिति वा तस्य हरेरात्मा देहो यत्र प्रवेशस्थानं भवति तत्तदात्मं तदेव तादात्म्यमिति वा तादात्म्यं मोक्ष इत्युक्तं भवति ॥ **अल्पेति** ॥ अधमेत्यर्थः । एतन्नासौ भवतीत्यादिकम् ॥ **वर्तमानेति** ॥ नाश्नुवन्तीति वर्तमाननिषेधादित्यर्थः ॥ **फलाध्यायेति** ॥ चतुर्थाध्याय एव मुक्तिरूपफलविचारादिति भावः ॥ **चेतनाचेतनेति** ॥ यदुक्तं प्रकृतिनये ब्रह्मणश्चेतनाचेतनात्मकप्रपञ्चोपादानत्वेन

(वाक्यार्थमञ्जरी)

तदभिन्नत्वमिति । तदयुक्तम् । तथात्वे भोग्यविषयादिपदाभिधेयाचेतनस्याभोक्तृविषयिशब्दाभिधेयचेतनत्वप्रसङ्गात् । यद्यदभिन्नाभिन्नं तत्तेनाभिन्नमिति व्याप्तेः । तथा चाचेतनो भोग्यश्चेतनो भोक्तेति व्यवस्था न स्यात् न चेष्टापत्तिः । प्रत्यक्षसिद्धत्वादित्यर्थः ॥ **समुद्रेति** ॥ यथा फेनतरङ्गादेः समुद्राभिन्नत्वेन परस्परमैक्येऽपि व्यावहारिकभेदेनान्योन्यव्यवस्था तथेहापीत्यर्थः ॥ **युक्तिविरोधपरिहारेऽपीति** ॥ प्रथमातिक्रमे कारणाभावादिति भावः ॥ **ब्रह्मात्मकत्वनिरासेनेति** ॥ प्रकृतिनयादिभाष्योक्तदिशा ब्रह्मोपादानकत्वाभावेन तदात्मकत्वे निरस्ते उक्तशङ्काया एवानुदयात्र तत्समाधानायान्यथाव्याख्यानं युक्तमित्यर्थः । भोग्यस्य भोक्तृत्वापत्तेरिति व्याख्याने अश्रुतकल्पनं चेत्याह ॥ **भोक्तृत्वेति** ॥

॥ इति भोक्त्रधिकरणम् ॥ ५ ॥

## ६. अथ आरम्भणाधिकरणम्

**॥ ॐ तदनन्यत्वमारम्भणशब्दादिभ्यः ॐ ॥ १५ ॥**

स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टा । नैवं ब्रह्मणः । स्वरूपसामर्थ्यादेव तस्य सृष्टिः । 'किं स्विदासीदधिष्ठानमारम्भणं कतमस्त्वित्कथाऽऽसीत्' (ऋ.सं.१०-८१-२) इति ह्याक्षेपः । अधिष्ठानाद्यनुक्तेः । आदिशब्दाद्युक्तिभिश्च ।

'परतन्त्रो ह्यपेक्षेत स्वतन्त्रः किमपेक्षते ।
साधनानां साधनत्वं यतः किं तस्य साधनैः' इत्यादिभिः ॥

## सत्तर्कदीपावली

साधननिरपेक्षमेव जगज्जन्मादिकर्तृत्वमभिप्रेतं यद्विष्णोस्तद्युक्तिविरुद्धमित्याक्षिप्य समर्थयति ॥ **तदनन्यत्वमित्यादिना** ॥ यदुक्तं कुलालादेः साधनसापेक्षं कर्तृत्वं असमर्थत्वाद्विष्णुस्त्वचिन्त्यशक्तित्वात्साधननिरपेक्षोऽपि विश्वं सृजति इत्यत्र श्रुतिमुदाहरति ॥ **किंस्विदिति** ॥ आरभ्यते येन तदारम्भणं यतो येन कारणादिना भूमिं जनयन्विश्वकर्मा विश्वद्रष्टा द्यां च निर्मितवान् महिना माहात्म्येन तदधिष्ठानमारम्भणं च किमासीत् । पार्थिवतैजसावयव्यवयवानां प्रलयात्किमासीत्कतमदासीत्कथमासीन्न किमपि न कतमदपि न कथमप्यासीदित्याक्षेपार्थः किंशब्दोऽत्र, न तु प्रश्नार्थः । वाक्यशेषे अधिष्ठानादेरुत्तरत्वेनाश्रवणात् । द्यावाभूमी जनयन् देव एक इति श्रवणाद्विश्वकर्ता विष्णुरेक एव आसीदित्यर्थः । सूत्रगतादिशब्दोपात्तास्तिस्रो युक्तीर्दर्शयति ॥ **परतन्त्र इति** ॥

## तत्त्वप्रदीपिका

स्वतन्त्राणि बहूनि च साधनानि पटादिसृष्टौ दृष्टानि । न हि तुरीतन्तुवेमादेः प्रातिस्विककार्यशक्तिः कुविन्दाद्यधीना । अतोऽन्यसामर्थ्यसहकृतः पटादिनिर्माता । ब्रह्मणस्त्वनन्यसामर्थ्यादेव जगत्सृष्टिः । तदनन्यत्वं स्वतन्त्रकारणस्य ब्रह्मणोऽन्यत्वेनाभावः । कुतः ? किं स्विदासीदित्यारम्भणशब्दादिभ्यः । आक्षेपस्वरूपो ह्ययं व्यपदेशः, न प्रश्नस्वरूपः । उत्तरत्राधिष्ठानारम्भणाद्यनुक्तेः ।

## तत्त्वप्रकाशिका

अत्र हरेः स्वातन्त्र्येण जगत्कारणत्वे युक्तिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । विष्णुर्जगत्सृष्ट्यादिकर्तेत्युक्तम् । तस्य च स्वतन्त्रसाधनानपेक्षत्वे युक्तिविरोधप्राप्तौ न सर्वगुणत्वं तेन सिध्यतीत्यसौ निराकर्तव्य एव । तज्जगत्सृष्ट्यादिकं विषयः । किं स्वतन्त्रसाधनसापेक्षं न वेति संशयः । लोकदृष्टिरलौकिकत्वं च सन्देहबीजम् । स्वतन्त्रसाधनसापेक्षमिति पूर्वः पक्षः । विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वात् घटादिसृष्टिवदिति युक्तिसिद्धत्वात् । अन्यथा तद्विरोधात् । घटसृष्टौ मृदादीनि खलु स्वतन्त्रसाधनानि । तानि विना सृष्ट्यनुपपत्तेः । अतो ब्रह्म स्वतन्त्रसाधनसापेक्षमेव सृष्ट्यादिकर्त्रीति न तस्य जगज्जन्मादिकारणत्वेन सर्वगुणपूर्णत्वसिद्धिरिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे **॥ तदनन्यत्वमिति ॥** यद्यपि घटादिसृष्टिः स्वतन्त्रबहुसाधनसापेक्षा दृष्टा तथापि नैतद्दृष्टान्तेन ब्रह्मणो जगत्सृष्टिस्तथा कल्प्या किन्तु स्वतन्त्रसाधनस्य तदनन्यत्वम् । किमुक्तं भवति । स्वरूपसामर्थ्यादेव तस्य सृष्टिः । कुतः । यतः किं स्विदिति श्रुतावधिष्ठानादिसाधनाद्याक्षेपः क्रियते । आक्षेपस्य विपर्यये पर्यवसानात् । अनुमानं तु श्रुतिविरोधादप्रमाणमेवेति भावः । ईश्वरसृष्टेः स्वतन्त्रसाधनसापेक्षत्वमात्रसाधने सिद्धसाधनता स्यादिति बह्वित्युक्तम् । विश्वकर्मा हरिः यतो येनाधिष्ठानादिना भूमिं द्यां च जनयन् जनयिता विशेषेण बभूव । येन च महिम्ना विश्वतश्चक्षुरावृणोत्तदधिष्ठानं किमासीत् । आरभ्यतेऽनेनेत्यारम्भणं साधनं वा कतमदासीत् । कथं रूपं चासीत् । न किञ्चित्कथमपीत्यर्थः । किंशब्दस्य प्रश्नाक्षेपयोः समत्वात्प्रश्नोऽयं किं न स्यादित्यत आह **॥ अधिष्ठानादिति ॥** प्रश्नश्चेत्परिहारो वक्तव्यः । किं स्विद्भिमस्य भेषजमित्यादिवत् । अत्र परिहारायाधिष्ठानाद्यनुक्तेर्नायं प्रश्नः किं त्वाक्षेप एवेति भावः । युक्तिविरुद्धं चानुमानमिति भावेनाह **॥ आदीति ॥** अत्रापरतन्त्रत्वात्स्वतन्त्रत्वात्साधनसत्ताप्रदत्वादिति व्यतिरेकिहेतुत्रयं सूचितं भवति ।

## गुर्वर्थदीपिका

दण्डमृत्पिण्डादीनां जडत्वेन प्रवृत्तौ कुम्भकारापेक्षायामपि घटान्वयव्यतिरेकप्रयुक्तस्वकारणत्वेन न तदपेक्षेति भावेनोक्तं घटसृष्टौ मृदादीनि खलु स्वतन्त्रसाधनानीति । स्वतन्त्रसाधनस्य तदनन्यत्वमित्यत्र नाध्याहारदोषः परेण शङ्कनीयः । जगत इत्यध्याहारस्य परेणापि कार्यत्वात् । इयांस्तु विशेषः । 'सत्त्वाच्चावरस्य' इत्युत्तरसूत्रे अस्वतन्त्रसाधनस्याङ्गीकृतत्वात् । प्रथमसूत्रे

(गुरुर्थदीपिका)
स्वतन्त्रकारणस्येत्यध्याहारस्य सूत्रसूचितत्वमित्यस्माकं गुणः । परस्य तु निर्मूलाध्याहाराख्य-दोषश्च । 'अधिष्ठानं किंस्विदासीत्' न किञ्चित् 'आरम्भणं कतमस्त्विदासीत्' न कतमदिति उभे आक्षिप्य कथाकथं केन प्रकारेण आसीदित्यनेन अण्डान्तःप्रकृत्यादीनां भूम्यादेः सृष्टत्वात् अण्डस्याधिष्ठानत्वं प्रकृत्यादेरारम्भणत्वं च केनचिदविवेकिना कल्प्यते चेदादिकूर्मेणाण्ड-धारणायाण्डादधस्तादपि विद्यमानस्य कथं तदण्डमधिष्ठानं, 'स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम्' इति वचनात् भगवत्प्रेरणां विना चलितुं महदाद्याकारेण परिणमितुं चासमर्था प्रकृतिः कथं तस्यैव स्वतन्त्रमारम्भणं, न हि मातुः स्कन्धमधिरूढः स्तनन्धयः शिशुः मातुरेवाधिष्ठानादिकमित्याक्षेपिकीं युक्तिं सूचयति । अत एव प्रकारस्यात्य-पशब्दत्वात् प्रयोगमपि कथेत्यपशब्दीचकार । न चायं प्रश्नः 'कश्चिदेकाकी चरति' इत्यस्य 'सूर्य एकाकी चरति' इति वदुत्तराभावात् । ईश्वरसृष्टेरित्यत्र ईश्वराख्यस्वतन्त्रसाधनस्यैव सिद्धत्वात् सिद्धसाधनतेत्यर्थः ।

## भावबोधः

**युक्तिविरोधपरिहारादिति ॥** 'बहुयुक्तयः' इत्यनुव्याख्यानानुसारेण बाहुल्यलक्षणबलव-द्युक्तिविरोधपरिहारायेदमधिकरणमारभ्यत इति सुधायामेवाधिकरणोपाधेरुक्तत्वेनागतार्थता । यदि लोकानुसारेण श्रुत्युक्तजीवब्रह्मैक्यस्य स्थानैक्यादिरूपत्वं तर्हि लोकानुसारादेव 'यतो वा' इत्यादि श्रुत्युक्तेश्वरकर्तृकसृष्टेरपि स्वतन्त्रसाधनसापेक्षत्वं स्यादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति ज्ञातव्यम् । अत एव स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टेत्युक्तम् ॥ **किमिति ॥** अत्रेश्वर-कर्तृकमहदादिसृष्टिः किं कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षोत तन्निरपेक्षेति चिन्ता । तदर्थं तन्निरपेक्षत्वे युक्तिविरोधः प्राप्नोति उत नेति । तदर्थं सृष्टित्वादिरूपा युक्तिः किं श्रुतियुक्ति-विरुद्धा न भवत्युत भवतीति । तदर्थं 'किं स्विदासीत्' इति श्रौतः 'किं' शब्दः किं प्रश्नार्थ उत आक्षेपार्थ इति । तदर्थं स्वतन्त्रसाधनपरोत परतन्त्रसाधनपरेति । तदर्थं परतन्त्रसाधन-परत्वेऽपि अबादीनां स्वरूपनिषेधपरोत स्वातन्त्र्यादितद्धर्मनिषेधपरेति । तदर्थं जगदुपादानादि-साधनान्तरसद्भावे तस्य परमात्मतन्त्रत्वे च प्रमाणं नास्त्युतास्तीति ॥ **विप्रतिपन्ना सृष्टिरिति ॥** अनेन लौकिकसर्वकार्यानुसारेणाकर्तृत्वं सर्वानुसार इति न्यायविवरणं व्याख्यातं भवति । स्वतन्त्रसाधनस्येति सूत्रे शेषोक्तिरियम् । स्वतन्त्रसाधनमन्यदङ्गीकृत्य तस्य ब्रह्माभेद उच्यत

(भावबोधः)

इत्यन्यथाप्रतीतिनिरासाय भाष्यं सूत्रतात्पर्यकथनपरत्वेन योजयति किमुक्तं भवतीति; स्वरूप-सामर्थ्यादेव । न तु साधनान्तरापेक्षयेत्यर्थः । एवञ्च स्वतन्त्रकारणस्य तदनन्यत्वमित्युक्ते स्वतन्त्रं कारणं तदेव नान्यदिति लभ्यत इति सूत्रभाष्ययोरेकार्थत्वमिति भावः । अनेन तद्विलक्षण्येन सर्वकर्तृविलक्षणशक्तित्वमेवेति न्यायविवरणांशस्यापि तात्पर्यमुक्तं भवति ॥ **यत इति** ॥ उप-लक्षणमेतत् । एष सर्वेश्वर इति न्यायविवरणोदाहृतश्रुतिरपि द्रष्टव्या । अनेन विलक्षणशक्ति-त्वमेव सर्वश्रुत्यनुसारीत्यंशोऽपि व्याख्यातः ॥ **अधिष्ठानादिसाधनाद्याक्षेपः क्रियत** इति ॥ न चैवम् आरम्भणाद्याक्षेपशब्दादिभ्य इति सूत्रे निर्देशः स्यादिति वाच्यम्; आरम्भणशब्देना-धिष्ठानादिसाधनजातमुपलक्ष्यते । नेन च तदाक्षेपो लक्ष्यत इति लक्षितलक्षणायास्यैवार्थस्य विवक्षितत्वादिति भावः । यद्यपि 'साधकतमं करणम्' इति स्मरणेन शब्दादप्यर्थप्राधान्यस्य बलवत्त्वादारम्भणशब्दः सूत्रे उपात्तः । तथापि श्रौतनिर्देशानुसारेणाधिष्ठानाद्याक्षेप इत्युक्तम् ॥ **विपर्यये पर्यवसानादिति** ॥ नन्वेवं सति किंस्विदिति श्रुतेरधिष्ठानादिकारणान्तराभावप्रतिपाद-कत्वात् कथं स्वतन्त्रकारणस्य ब्रह्मानन्यत्वे प्रमाणत्वेन तदुपन्यास इति चेत्, न; अभिप्राय-सद्भावात् । 'सत्त्वाच्चावरस्य' इत्यादिना ब्रह्मातिरिक्तकारणसद्भावो हि वक्ष्यते । अनया च श्रुत्या तदभावोऽवगम्यत इत्यर्थात् स्वतन्त्रकारणाभाव एव सिध्यतीति । अत एव वक्ष्यति साधनाद्याक्षेपस्तत्सद्भावोक्त्यन्यथानुपपत्तिश्चास्य समाधानमिति ॥ **वह्वित्युक्तमिति** ॥ न चैवमपि महदादिसृष्टेरीश्वरतज्ज्ञानेच्छादिस्वतन्त्रबहुसाधनसाध्यत्वे पुनः सिद्धसाधनतैवेति वाच्यं; कर्तृव्यतिरिक्तस्वतन्त्रसाधनजन्यत्वस्य विवक्षितत्वात् । अत एव प्रागेवं साध्यनिर्देशः कृतः । ईश्वरज्ञानेच्छादीनां तु तत्कर्तृत्वान्तर्गतत्वेन तदनतिरिक्तत्वेन न तदादाय दोषतादवस्थ्यमिति भावः । तदुक्तं कर्मनिर्णयटीकायाम् 'कर्तृत्वञ्च कार्यकारणं क्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकः स्पन्दः । ततः सर्वकर्तेत्युक्ते सर्वज्ञः सत्यकामः सत्यसङ्कल्पः समस्तशक्तिसमन्वित एवोक्तो भवति' इति । 'वि' इत्युपसर्गाद् बभूवेति शेषोक्तिः ॥ **कतमदासीदिति** ॥ किमासीदित्यर्थः । कथेत्यस्यार्थः **कथं रूपमिति** ॥ **इत्यादिवदिति** ॥ इत्यादेः प्रश्नस्य 'अग्निर्हिमस्य भेषजम्' इत्यादिपरिहारवदित्यर्थः ॥ **युक्तिविरुद्धं चेति** ॥ अनेन विलक्षणशक्तित्वमेवाशेषयुक्त्यनुसारीति न्यायविवरणमप्युक्ततात्पर्यकं भवति । अनुमानं तु श्रुतिविरोधादप्रमाणमिति पूर्ववाक्येनैतद्वाक्येन च युक्तिमात्राच्छ्रुतियुक्ता हि युक्तिर्बलवतीति न्यायविवरणमप्युक्ततात्पर्यकं भवति । भाष्ये युक्ति-भिश्चेति बहुवचनं प्रयुज्य तद्युक्तिप्रतिपादकतया 'परतन्त्रो हीति' प्रमाणोदाहरणादाह– **अत्रेति** ॥

(भावबोधः)
ईश्वरो महदादिसृष्टौ स्वव्यतिरिक्तस्वतन्त्रसाधननिरपेक्ष इति प्रतिज्ञायामित्यर्थः । **अपरतन्त्रत्वादिति ॥**

ननु परानपेक्षत्वं स्वतन्त्रत्वमित्यन्यत्र व्याख्यातत्वेन हेत्वोरभेद इति चेत्, न; परसापेक्षत्वाभावोऽपरतन्त्रत्वं स्वेच्छानुसारित्वं स्वतन्त्रत्वमिति विवक्षितत्वादिति भावः । यथोक्तमनुव्याख्याने–

'स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः' इति ।

**हेतुत्रयं सूचितमिति ॥** 'परतन्त्रो ह्यपेक्षेत' इत्यादिव्यतिरेकप्रदर्शनेनेत्यर्थः ।

## भावदीपः

**युक्तीति ॥** साधनान्तराणां सत्ताशक्त्यादेः स्वातन्त्र्यसाधकबहुयुक्तिविरोधपरिहारादित्यर्थः । तेन जगत्सृष्ट्यादिकर्तृत्वेनेत्यर्थः । तादृशसाधनसापेक्षकर्तरि ब्रह्मादौ सर्वगुणत्वादृष्टेरिति भावः । अत्र जन्मादिसूत्रे विवक्षितं स्वतन्त्रसाधनान्तरानपेक्षकर्तृत्वं न सिद्ध्यतीत्येवोक्त्या जन्मादिसूत्रेणास्य सङ्गतत्वे वाच्ये तेन सर्वगुणत्वं न सिध्यतीति जिज्ञासासूत्रस्थब्रह्मपदोक्तगुणपूर्त्यसिद्ध्युक्तिस्तु जन्मादिसूत्रे तादृशकर्तृत्वविवक्षाभावे गुणपूर्त्यसिद्ध्या जिज्ञासाया एवासिद्धिरिति बाधकोपदर्शनमुखेन तत्सूत्रेण तादृशकर्तृत्वस्य विवक्षितत्वं दर्शयितुम् ॥ **स्वतन्त्रेति ॥** कर्त्रन्येति योज्यम् । स्वातन्त्र्यं च कर्त्रनधीनसत्तादिमत्त्वम् ॥ **अलौकिकत्वमिति ॥** अन्यभावव्यावृत्तेश्चेत्यत्रोक्तदिशा स्रष्टुरीशस्यालौकिकत्वाद्वा परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्य इत्यत्र वक्ष्यमाणदिशा सृष्ट्यादीशगुणजातस्यालौकिकत्वाद्वा 'उत्ताना वै देवगवा वहन्ति' इत्यादेरलौकिकानां देवगवानामुत्तानानामेव वहनमिव स्वतन्त्रसाधनानपेक्षमपि सृष्ट्यादिकं सम्भाव्यत इति भावः । लौकिककार्याणामनुसारेणाकर्तृतन्त्रत्वमिति न्यायविवरणेऽकर्तृतन्त्रत्वमित्यस्य कर्तृव्यतिरिक्तस्वतन्त्रसाधनाधीनत्वमित्यर्थमुपेत्य दृष्टान्तोक्तिपरस्वतन्त्रेत्यादिभाष्यसूचितां युक्तिमाह ॥ **विप्रतिपन्नेति ॥** सिद्धसाधनतानिरासाय साध्यविशेषणम् । अत्र भाष्यदिशा स्वतन्त्रबहुसाधनसापेक्षेति साध्ये निर्देष्टव्ये न्यायविवरणरीत्या साध्यनिर्देशस्तु ज्ञानेच्छादिकमादाय सिद्धसाधनताव्युदासाय। कर्मनिर्णयटीकायां कर्तृत्वं च कार्यकारणक्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकः स्पन्द इत्युक्तेः कर्तृव्यतिरिक्तेत्युक्त्यैव ज्ञानेच्छाद्यन्यस्वतन्त्रसाधनसापेक्षेत्यर्थलाभ इति भावः । अत्र साध्ये स्वतन्त्रेत्यनन्तरं सत्ताकेतिप्रवृत्तिकेत्यादिपदप्रक्षेपेण तथा पक्षे सृष्टिपदस्थाने स्थिति-

(भावदीपः)

संहृत्यादिपदप्रक्षेपेण च युक्तेर्बाहुल्यं बोध्यम् । वियत्पादे तु श्रुतिप्राप्तं साधनान्तरसत्त्वाद्: स्वातन्त्र्यं निरसिष्यते । अत्र तु युक्तिप्राप्तमिति भावेनोक्तम् ॥ **युक्तिसिद्धत्वादिति** ॥ स्वतन्त्र-साधनसापेक्षत्वस्येति योज्यम् । अन्यथा तादृक्साधनानपेक्षत्वे । भाष्योक्तं दृष्टान्तांशं व्यनक्ति ॥ **घटेति** ॥ साधनतां तावद्व्यनक्ति ॥ **तानीति** ॥ मृदादिसत्ताशक्त्यादेः कुलालानधीनत्वस्य स्फुटत्वात्स्वातन्त्र्यांशो नोपपादितः ॥ **अत इति** ॥ युक्तिसिद्धत्वादित्यर्थः । विरोधनिरासाय भाष्यं व्याचष्टे ॥ **यद्यपीति** ॥ नैवमित्यादेरर्थो न तद्दृष्टान्तेनेत्यादि । शेषोक्त्या सूत्राक्षरार्थमाह ॥ **स्वतन्त्रसाधनस्य तदनन्यत्वमिति** ॥ भाष्यं तु पर्यवसितव्याख्यानमिति भावेनावतारयति ॥ **किमुक्तं भवतीति** ॥ न तु स्वतन्त्रमन्यदपेक्ष्येत्येवार्थः । हिर्हेताविति मत्वा भाष्यशेषमवतार्य व्याचष्टे ॥ **कुतो यत इति** ॥ सूत्रे आरम्भणशब्द आरभ्यते येनेति व्युत्पत्त्या साधनजातपर इति भावेनोक्तम् ॥ **अधिष्ठानादीति** ॥ कथमेतावता उक्तार्थः सिद्ध इत्यत आह ॥ **विपर्यय** इति ॥ नास्त्यधिष्ठानादिकं किमप्यतः स्वरूपसामर्थ्यादेव सृष्टिरिति पर्यवसानादित्यर्थः ॥ **अप्रमाण-मेवेति** ॥ 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्युक्तेरिति भावः ॥ **बह्वित्युक्तमिति** ॥ बहुसाधनेति भाष्ये साधनस्य बहुत्वं ज्ञानेच्छाद्यन्यद्दण्डादिस्थानीयसाधनबहुत्वं विवक्षितमिति भावः । सृष्टौ साधनाक्षेपपरत्वप्रतीत्यर्थं यतो भूमिं जनयन्विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षा इत्युत्तरार्धं वदन् किंस्विदित्यस्यार्थमाह ॥ **विश्वकर्मा हरिरिति** ॥ विइत्यस्य विशेषेण बभूवेति और्णोदित्यस्यावृणोदित्यर्थः । विपर्यये पर्यवसानमाह ॥ **न किञ्चिदिति** ॥ अत्र साधनस्वरूपमात्रनिषेधप्रतीतावपि धर्मान्तरेण वाक्यशेषादिति न्यायेन साधकसत्त्वावेदक-वक्ष्यमाणानेकवचनबलात्स्वातन्त्र्येण न किञ्चिदित्यर्थो लभ्यत इति भावः ॥ **किंस्विदिति** ॥ तैत्तिरीये किंस्विद्धिमस्य भेषजमित्यस्याग्निर्हिमस्य भेषजमिति यथा परिहारस्तथेत्यर्थः ॥ **युक्ति-विरुद्धं चेति** ॥ यद्यपि श्रुतेर्युक्तीनां च स्वरूपसामर्थ्यादेव सृष्टिरिति भाष्योक्तसाध्येनैवान्वयो भाति । तथा सर्वकर्तृविलक्षणसर्वशक्तित्वमेवाशेषयुक्तिश्रुत्यनुसारीति न्यायविवरणोक्तेश्च । अत एव प्राकृतो यत इत्यादिना भाष्यशेषस्तथैव व्याख्यातः । तथा च सामर्थ्यादेव सृष्टिरित्ये-तद्युक्तिभिरपि साधयतीति वक्तव्यम् । तथापि तस्य स्फुटत्वात्तावता प्रागुक्तानुमानस्य दूषणा-प्राप्तेः । युक्तिमात्राच्छ्रुतियुक्ता हि युक्तिर्बलवतीति न्यायविवरणानुरोधेन युक्तिविरुद्धं चेति भावार्थोक्तिः । अत एव इति भावेनेत्युक्तिः श्रुतिविरोधादप्रमाणमेवेति भावः इत्युक्तिः ॥ **हेतुत्रयमिति** ॥ स्वतन्त्रसाधनान्तरनिरपेक्षत्वरूपसाध्य इति भावः ।

## अभिनवचन्द्रिका

**स्वतन्त्रसाधनानपेक्षत्व इति** ॥ अत्र साधनानां स्वातन्त्र्यं नाम अपरायत्तसाधनत्वोपेतत्वम् । एतेनाचेतनानां स्वातन्त्र्यायोगात् स्वतन्त्रसाधनानपेक्षत्वे युक्तिविरोधस्यैवाभावेन तत्परिहारप्रयासो व्यर्थ इति परास्तम् ॥ **तज्जगत्सृष्ट्यादिकं विषय इति** ॥ अत्र यद्यपि ईश्वरो विषयः स्वतन्त्रसाधनसापेक्षो न वेति सन्देहः । कर्तृत्वमलौकिकत्वं च सन्देहबीजमिति वक्तव्यम्, तथापि स्वतन्त्रसाधनसापेक्ष इति पूर्वपक्षयित्वा स्वतन्त्रसाधनसापेक्षो नेति सिद्धान्तकरणे अस्त्येव किञ्चित्स्वतन्त्रसाधनं परन्तु ईश्वरो न तदपेक्ष इति विज्ञायेत तन्माविज्ञायीति 'जगत्सृष्ट्यादिकं विषय' इत्युक्तम् । जगत्सृष्ट्यादेस्तु स्वतन्त्रसाधनानपेक्षत्वे साधिते स्वतन्त्रसाधनं नेत्येव सिध्यति, कार्यानाक्षिप्तस्य कारणत्वायोगात् ॥ **मृदादीनि खल्विति** ॥ यद्यपि मृदादीनामपि ईश्वराधीन-साधनत्वात् स्वतन्त्रसाधनत्वं प्रतिवादिनोऽसिद्धमिति साध्यविकलो दृष्टान्तः, तथापि कर्त्रनधीन-साधनसापेक्षत्वस्यैव साध्यत्वात् । मृत्पिण्डादौ च कर्त्रनधीनसाधनत्वसद्भावेन तस्य स्वतन्त्र-साधनत्वात् । तत्सापेक्षत्वात् घटसृष्टेः न साध्यविकलता । मृदादीनां कर्त्रनधीनसाधनत्वमेव कुत इत्यत आह– **तानि विनेति** ॥ यदि मृदादीनां साधनत्वं कुलालाधीनं स्यात्तर्हि तदपहाय स्रष्टुं समर्थः स्यात् । न चासौ तथेति न तत्साधनत्वं तदधीनमिति भावः ॥ **न तद्दृष्टान्तेनेति** ॥ घटसृष्टिवत् महदादिसृष्टेः स्वतन्त्रसाधनसापेक्षत्वं न कल्प्यमित्यर्थः । तर्हि किं प्रकृत्यादीनां कारणत्वमेव नेति पृच्छति – **किन्त्विति** ॥ उत्तरमाह **स्वतन्त्रसाधनस्येति** ॥ स्वातन्त्रसाधनतया प्रतीयमानस्य प्रकृत्यादेः तव्द्यतिरेकेणासत्त्वं, तदधीनत्वमिति यावत् । प्रकृत्यादीनां स्वातन्त्र्यमेव नास्ति, कारणत्वं तु न विहन्यत इति भावः । आशयमविद्वान् पृच्छति – **किमुक्तं भवतीति** ॥ आशयमुद्घाटयति ॥ **स्वरूपसामर्थ्यादिवेति** ॥ सत्यमुपादानादिसापेक्षा भगवत्सृष्टिः, तथापि न स्वतन्त्रसाधनसापेक्षा, कुतः तच्छक्तेरपि स्वाधीनत्वादिति भावः ॥ **किं स्विदिति श्रुताविति** ॥ अनेन 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति सूत्रं, '**तदनन्यत्वं** स्वतन्त्रसाधनतया प्रतीयमानस्य प्रकृत्यादेस्तद्व्यतिरेकेणासत्त्वं, तदधीनत्वमिति यावत् । तन्नियामकस्य तु तदभिन्नत्वं, **आरम्भण-शब्दादिभ्यः** आरम्भणशब्दोपेत 'किं स्विदासि' इत्यादि श्रुत्यादिभ्य इति व्याख्यातं भवति । नन्वस्त्वनन्यशब्दस्याभेदोऽर्थः अधीनत्वं तु कथमर्थ इति चेत्, न अभिन्न एव स्वाधीनेऽपि 'अनन्योऽयं मत्तः' इति प्रयोगदर्शनात् ॥ **आक्षेपस्येति** ॥ आक्षेपो निन्दा । निन्दा च न

(अभिनवचन्द्रिका)

व्यसनितया क्रियते किन्तु तदभावप्रतिपादनाशयेनेति आक्षेपस्य विपर्यये पर्यवसानम् तदभाव-परत्वमित्यर्थः । सिंहावलोकनन्यायेन बहुपदकृत्यमाह– **ईश्वरसृष्टेरिति** ।। 'स्वतन्त्रसाधना सृष्टिर्लोके दृष्टा' इत्येतावन्मात्रोक्तौ ईश्वरसृष्टेरपि स्वतन्त्रसाधनसापेक्षत्वमात्रं साधितं स्यात् । तथा च सिद्धसाधनतेति भावः । 'किं स्विदासीदधिष्ठानमारम्भणं कतमत्स्वित् कथासीत् । यतो भूमिं जनयत् विश्वकर्मा विद्यामौर्णोन्महिनाविश्वचक्षा' इति ऋचं व्याचष्टे– **विश्वकर्मा हरिरिति** ।। विश्वकर्मा येनाधिष्ठानादिना जनयिता बभूव, येन च राजादिमहिम्ना आवृणोत् तदधिष्ठानादिकं किमासीत् । नासीदित्यर्थः ।

ननु विश्वकर्मा हरिरिति व्याख्यानमयुक्तम् । 'य इमा विश्वाभुवनानि जुह्वत् ऋषिर्होता न्यसीदत् पिता न' इति ऋषेर्जगत्कर्तृत्वाभिधानादित्यत उक्तम् – **ऋषिरिति** ।। अयमेव प्रागुक्त ऋषिः नातोऽन्य इति भावः । **अत्रापरतन्त्रत्वादिति** ।। ईश्वरः स्वतन्त्रसाधनविधुरः साधनमपहाय स्रष्टुं शक्यत्वात्, यः स्वतन्त्रसाधनवान् नासौ तदभावे कर्तुं शक्तः । इदमेव हि साधानानां स्वातन्त्र्यं, यत्, तदभावे कर्तुमशक्यत्वम् । तथेश्वरः स्वतन्त्रसाधनशून्यः स्वेच्छयोपात्तसाधनत्वात्, यः स्वतन्त्रसाधनः नासौ स्वेच्छयोपात्तसाधनः, किन्तु विपक्षे कार्यानुपपत्तिभयोपात्तसाधनः, यथा कुलालः । तथेश्वरः स्वतन्त्रसाधनरहितः, साधनसत्ताप्रदत्वात्, व्यतिरेकेण कुलालवदिति व्यतिरेकिहेतुत्रयं 'परतन्त्रो ह्यपेक्षते' इत्यनेन भाष्यकृता सूचितमित्यर्थः । एतेन 'आदिशब्दा-द्युक्तिभिश्च' इति भाष्यं 'स्वरूपसामर्थ्यादिव तस्य सृष्टिरित्यनेनान्वितमित्युक्तं भवति । ततश्च 'स्वरूपसामर्थ्यादिव तस्य सृष्टिः' इत्यादि, आदिशब्दाद्युक्तिभिश्चेत्यन्तभाष्यस्य, एवं योजना 'हिशब्दो हेतौ । हि यस्मात् 'किं स्विदासीत्' इति साधनान्तराक्षेपः, तस्मात् स्वरूपसामर्थ्यादिव तस्य सृष्टिः, न तु स्वतन्त्रसाधनाधीना । न केवलमाक्षेपात् स्वरूपसामर्थ्यादिव सृष्टिः किन्तु आदिशब्दोक्तयुक्तिभिश्च' इति ।

## वाक्यार्थमुक्तावली

**अत्रेति** ।। पूर्वं जगत्कर्तृत्वमेव नेति शङ्का परास्ता । अत्र श्रुतिसिद्धं तदुपेत्य लोकानुसारेण श्रुत्यैक्यस्य स्थानैक्यादिरूपेण मुख्यत्वे श्रुत्युक्तसर्वजगत्कर्तृत्वस्यापि लोकानुसारादेव स्वतन्त्र-साधनसापेक्षतया मुख्यत्वं स्यादित्याक्षिप्य हरेः स्वातन्त्र्येण जगत्कारणत्वे बहुत्वेन प्रबलयुक्ति-विरोधोऽत्र परिह्रियत इत्यर्थः । अत एव स्वतन्त्रबहुसाधनासृष्टिर्लोके दृष्टेति भाष्ये वक्ष्यति ।

(वाक्यार्थमुक्तावली)
सुधायां च बहुयुक्तय इत्यनुव्याख्यानानुसारेण बाहुल्यत्वलक्षणबलवद्युक्तिविरोधपरिहारायेद-मधिकरणमारभ्यत इत्युक्तम् । अत एव पूर्वाधिकरण सिद्धान्तन्यायेनाक्षेपादव्यवहितसङ्गतिर-गतार्थता च ॥ **स्वतन्त्रेति** ॥ साधनानां स्वातन्त्र्यं नाम कर्तृनधीनसत्तावत्वं बोध्यम् । न सर्व-गुणत्वमिति स्वतन्त्रसाधनसापेक्षत्वपारतन्त्र्यप्रसङ्गेन स्वातन्त्र्यहेतुकगुणपूर्तिर्न स्यादिति भावः ।

**जगत्सृष्ट्यादिकमिति** ॥ ईश्वरकर्तृकं जगत्सृष्ट्यादिकमित्यर्थः । अत्र विप्रतिपन्ना ईश्वर-कर्तृका महदादिसृष्टिः सृष्टित्वात् पटसृष्टिवदिति युक्त्या कर्त्तन्यस्वतन्त्रसाधनसापेक्षा उत श्रुति-युक्तितर्कबाधाद्युक्तेराभासतया स्वतन्त्रसाधनापेक्षा वेति चिन्ता । तदर्थमभ्यः सम्भूत इति श्रुतौ स्वतन्त्रसाधनप्रतीतेः तर्कस्येष्टापादनत्वात् विपर्ययापर्यवसानाच्च तर्कस्याभासत्वम् । युक्तेर्बाधश्रुतेः सत्प्रतिपक्षत्वम् । उत अभ्य इति श्रुतौ परतन्त्रसाधनस्यैवोपलम्भात्तर्कादिरनाभासत्वमिति । सति चैवं तदर्थसंशये फलफलिभावे च अभ्य इति श्रुतेः परतन्त्रसाधनपरत्वनिर्वाहाय चिन्तान्तरं साधनस्वरूपमेवास्ति न वेति । तदर्थमसद्व्यपदेशः सर्वथा सत्वपर उतास्वातन्त्र्येणासत्वपर इति । तदर्थं साधनसत्वे भगवदैश्वर्यं विरुध्यते उत नेति । तदर्थं साधनसत्वे पारतन्त्र्ये च प्रमाणं नास्त्युतास्तीति । स्वतन्त्रसाधनेति भाष्यानुसारेण पूर्वपक्षमाह **विप्रतिपन्नेति** ॥ सिद्धसाधनता-वारणाय कर्तृव्यतिरिक्तेति । ईश्वरस्य कर्तृत्वात् ज्ञानेच्छाप्रयत्नानां कर्तृत्वान्तर्गतत्वान्न तानादाय सिद्धसाधनतेत्यर्थः । यथोक्तं कर्मनिर्णयटीकायाम् । कर्तृत्वं च कार्यकारणक्रियाफलाभिज्ञान-तदिच्छाप्रयत्नपूर्वकः स्पन्द इति ।

अत्र साधनपदेनाधिष्ठानोपादानादिकं सत्वं विवक्षितं तस्य स्वातन्त्र्यं च सत्ताशक्तिप्रवृत्तिषु विवक्षितम् । सृष्टिपदं च स्थित्याद्युपलक्षणम् । एवं च विमता सृष्टिः कर्तृधीनशक्तिकाधिष्ठान-सापेक्षा । तथोक्तरूपोपादानसापेक्षा । एवं स्थित्यादिरपीति प्रमेयभेदाद्युक्तिबाहुल्यमनेनोक्तं भवति । शेषोक्त्या सूत्रं व्याचष्टे **स्वतन्त्रसाधनस्येति** ॥ स्वतन्त्रसाधनमन्यदङ्गीकृत्य तस्य ब्रह्मा-भेद उच्यत इति भ्रान्तिं वारयितुमभिप्रायकथनपरं भाष्यमुत्थापयति किमुक्तं भवतीति । न तु स्वाधीनसत्ताकसाधनापेक्षयेत्येवार्थः । आरम्भणशब्द उपादाने साधनपरः । तेन च प्रधान-कारणवाचिनाधिष्ठानादिकारणान्तरं लक्ष्यते । लक्षितलक्षणया तदाक्षेपो लभ्यत इति भावेना-रम्भण शब्देत्येतद्व्याख्यापरमिति ह्याक्षेप इत्यन्तभाष्यं व्याचष्टे **यत इति** ॥ एतेन भाष्ये हिशब्दो यत इत्यर्थ इत्युक्तं भवति । अतः स्वरूपसामर्थ्यादेव तस्य सृष्टिर्न तु स्वतन्त्रसाधना-

(वाक्यार्थमुक्तावली)

पेक्षयेत्यर्थः। न तु सूत्रे मुखत आरम्भणशब्दस्योपात्तत्वाट्टीकायां साधनाधिष्ठानादिति प्रयोक्तव्यम्। श्रौतनिर्देशानुसारेण टीकायां निर्देशश्चेत्सूत्रे तदुक्तं घनं किमर्थमिति चेन्न। शब्दादप्यर्थप्राधान्यस्य बलवत्वात्। कारणवाचिन आरम्भणशब्दस्य सूत्र उपादानोपपत्तेः। स्पष्टमेतत्सुधायाम्॥ **विपर्यये पर्यवसानादिति**॥ अधिष्ठानादिकमासीत्किं नासीदेवेति विपर्ययपर्यवसानादित्यर्थः।

ननु साधनान्तराक्षेपे तदभावोऽवगम्यते। तस्य स्वातन्त्र्याभावः कथं लभ्यत इति चेन्न। वक्ष्यति हि ब्रह्मातिरिक्तकारणसद्भावं आरम्भणशब्दादिभिश्च तदभावोऽवगम्यते। ततोऽर्थात्स्वतन्त्रकारणाभाव एव सिध्यतीति सुधायामेव समाहितत्वात्। वक्ष्यति च साधनाद्याक्षेपः। तद्भावोक्त्यन्यथानुपपत्तिश्चास्य समाधानमिति॥ **सिद्धसाधनता स्यादिति**॥ ईश्वरतज्ज्ञानेच्छादिकमादाय सिद्धसाधनतावारणाय बह्वित्युक्तम्। ईश्वरतज्ज्ञानादेः कर्तृत्वान्तर्गतानेकसाधनत्वाद्बहुत्वाभावादिति भावः। यतो भूमिं जनयन् विश्वकर्मा विद्यामौर्णोन्महिविश्वचक्षा इत्युत्तरार्धव्याख्यानपूर्वं किं स्विदासीदधिष्टानमारम्भणं कतमस्वित्कथासीदिति पूर्वार्धं व्याचष्टे **विश्वकर्मेत्यादिना**॥ वीत्युपसर्गस्य क्रियाक्षेपत्वाद्बभूवेति शेषोक्तिः। और्णोत् आवृणोत्। कथा कथं रुपम्। इत्यादिवत् इत्यादिप्रश्नस्य 'अग्निर्हिमस्य भेषजम्' इत्यादिपरिहारवत्॥ **युक्तिविरुद्धं चेति**॥ एतेन हि यस्मादाक्षेपस्तस्मात्पूजादिशब्दाद्युक्तिभिश्च स्वरूपसामर्थ्यादेव तस्य सृष्टिः न तु स्वतन्त्रसाधनसापेक्षेति भाष्ययोजनोक्ता भवति॥ **अपरतन्त्रत्वादिति**॥ परसापेक्षत्वादिति भावः॥ **स्वतन्त्रत्वादिति**॥ स्वेच्छानुसारित्वादित्यर्थः। सूचितमिति स्मृतौ व्यतिरेकव्याप्तिप्रदर्शनम्। ईश्वरः सृष्टौ साधनं नापेक्षते परतन्त्रत्वाभावात् स्वेच्छानुसारिप्रवृत्तिमत्वात् साधनसत्ताप्रदत्वात्। व्यतिरेकेण कुलालादिवदिति व्यतिरेकित्रयं सूचितमित्यर्थः। स्वतन्त्रसाधनस्य तदनन्यत्वमीश्वरसम्बन्धिन्यां महदादिसृष्टौ स एव स्वतन्त्रसाधनं नातोऽन्यत्स्वतन्त्रसाधनमपेक्षितमिति यावत्। स्वतन्त्रसाधनत्वाक्षेपकश्रुतेर्युक्तिभिश्चेति सूत्रार्थः।

## तत्त्वसुबोधिनी

**युक्तिविरोधपरिहारादिति**॥ तथा च बाहुल्यलक्षणबलवद्युक्तिविरोधपरिहारस्यात्र क्रियमाणत्वात् न पूर्वेणास्य गतार्थता. इति भावः। अत्र यदि लोकानुसारेण श्रुत्युक्तब्रह्मैक्यस्य

(तत्त्वसुबोधिनी)
स्थानैक्यादिरूपत्वं तर्हि लोकानुसारादेव यतो वेत्यादिश्रुत्युक्तेश्वरकर्तृकसृष्टेरपि स्वतन्त्रसाधन-सापेक्षत्वं स्यादित्याक्षेपणोत्थानादनन्तरसङ्गतिः । ननु स्वतन्त्रसाधनसापेक्षत्वे प्रमाणा-भावान्नेदमुपपद्यते इत्याशङ्क्य तत्र प्रमाणं आह ॥ **विप्रतिपन्ना इति** ॥ सिद्धसाधनतापरिहाराय **कर्तृव्यतिरिक्तेति** साध्ये विशेषणम् ॥ **अन्यथेति** ॥ कर्तृव्यतिरिक्तस्वतन्त्रसाधनानपेक्षत्वे इत्यर्थः । दृष्टान्ते साध्यसत्त्वमुपपादयति ॥ **घटसृष्टाविति** ॥ स्वतन्त्रसाधनस्येति सूत्रे शेषोक्तिरियं स्वतन्त्रसाधनमन्यदङ्गीकृत्य तस्य ब्रह्मभेदः उच्यते इति । अन्यथा प्रतीतिनिरासाय प्रवृत्तं भाष्यं सूत्रतात्पर्यकथनपरत्वेन योजयति ॥ **किमुक्तं भवतीति** ॥ स्वरूपसामर्थ्यादेव न तु साधनान्तरा-पेक्षयेत्यर्थः । एवं च साधनस्य तदनन्यत्वमित्युक्ते स्वतन्त्रकारणं तदेव नान्यदिति लभ्यते इति सूत्रभाष्ययोरेकार्थत्वमिति भावः ॥ **यतः इति** ॥ उपलक्षणमेतत् । एषः सर्वेश्वर इति श्रुतिरपि दृष्टव्या ॥ **अधिष्ठानादीति** ॥ न चैवं आरम्भणाद्याक्षेपशब्दादिभ्य इति सूत्रनिर्देशः स्यादिति वाच्यम् । आरम्भणशब्देन, अधिष्ठानादिसाधनजातमुपलक्ष्यते । तेन चाक्षेपो लक्ष्यते इति लक्षितलक्षणयास्यैवार्थस्य विवक्षितत्वादिति भावः ।

यद्यपि किंस्विदिति श्रुतौ अधिष्ठानं प्रथममुक्तं तथापि आरम्भणशब्दार्थस्य कारणस्य साधनेष्वतिशयितत्वात् सूत्रे आरम्भणशब्दः । न च तर्हि टीकायामधिष्ठानादिशब्दप्रयोगः कथ-मिति वाच्यम् । श्रौतनिर्देशानुसारेण तथोक्तत्वात् इति भावः । अस्त्वाक्षेपे ततः किमित्यत आह ॥ **आक्षेपस्येति** ॥ अधिष्ठानादिकं आसीत् किं नासीदिति विपर्ययपर्यवसानादित्यर्थः । न च स्वतन्त्रकारणस्य ब्रह्मानन्यत्वे किंस्विदिति श्रुत्युदाहरणमयुक्तं, तस्याधिष्ठानादिकारणान्तरा-भावप्रतिपादकत्वादिति वाच्यम् । अभिप्रायसद्भावात् । 'सत्वाचावरस्य' इत्यादिना ब्रह्मातिरिक्तकारणसद्भावो हि वक्ष्यते । अनया च श्रुत्या तदभावोऽवगम्यते इति । अर्थात् स्वतन्त्रकारणाभाव एव सिध्यतीति । अतः एव वक्ष्यति साधनाद्याक्षेपस्तु ऋग्भाष्योक्त्य-न्यथानुपपत्तिश्च अस्य समाधानमिति भावः ।

ननु तर्ह्यनुमानस्य का गतिरित्यतः आह ॥ **अनुमानं त्विति** ॥ स्वतन्त्रबहुसाधनेति भाष्य बहुपदं किमर्थं प्रयुक्तमित्यत आह ॥ **ईश्वरसृष्टेरिति** ॥ **बह्वित्युक्तमिति** ॥ न चैवमपि महदादि-सृष्टेरीश्वरज्ञानेच्छादिस्वरूपतन्त्रबहुसाधनसाध्यत्वेन पुनः सिद्धसाधनतैवेति वाच्यम् । कर्तृ-व्यतिरिक्तस्वतन्त्रसाधनजन्यत्वस्य विवक्षितत्वात् । ईश्वरज्ञानेच्छादीनां कर्तृत्वान्तर्गतत्व

(तत्त्वसुबोधिनी)

तदति(नति)रिक्तत्वेन न तद्दोषतादवस्थ्यं इति भावः । अप्रतीतार्थत्वाच्छ्रुतिं व्याचष्टे ॥ **विश्वकर्मेति** ॥ वीत्युपसर्गात् बभूवेति शेषोक्तिः और्णोदित्यस्य आवृणोदित्यर्थः । **कतमदासीदिति** ॥ किमासीदित्यर्थः । कथेत्यस्यार्थः कथं रूपमिति । प्रश्नश्चेत्परिहारो वक्तव्यः इत्यत्र दृष्टान्तमाह । **किं स्विद्धर्मस्य भेषजम्'** इत्यादिवदित्यादेः प्रश्नस्य अग्निर्हिमस्य भेषजमित्यादिपरिहारवदित्यर्थः । भाष्ये मुक्तिभिश्चेति बहुवचनं प्रयुज्य तद्युक्तिप्रतिपादकतया 'परतन्त्रो हि' इति प्रमाणोदाहरणमाह ॥ **अत्रेति** ॥ ईश्वरो महदादिसृष्टौ स्वव्यतिरिक्तस्वतन्त्रसाधननिरपेक्षः इति प्रतिज्ञायां इत्यर्थः । अपरतन्त्रत्वात् **स्वतन्त्रत्वादिति** ॥ ननु परानपेक्षत्वं स्वतन्त्रत्वमित्यन्यत्रोक्तत्वेन हेत्वोरभेद इति चेत् परसापेक्षत्वाभावोऽपरतन्त्रत्वं, स्वेच्छानुसारित्वं स्वतन्त्रत्वमिति विवक्षितत्वादिति भावः ॥ **हेतुत्रयमिति** ॥ परतन्त्रो ह्यपेक्षते' इत्यादि व्यतिरेकव्याप्तिप्रदर्शनेनेत्यर्थः ।

## वाक्यार्थविवरणम्

विप्रतिपन्नमहदादिसृष्टेः स्वतन्त्रसाधनसापेक्षत्वमात्रसाधने ईश्वररूपस्वतन्त्रसाधनापेक्षत्वेन सिद्धसाधनतावारणाय कर्तृव्यतिरिक्तेत्युक्तम् । अस्वतन्त्रसापेक्षसिद्धार्थान्तरवारणाय स्वतन्त्रपदम् । अन्यथा **स्वतन्त्रसाधनानपेक्षत्वे तदिति** ॥ **एतद्युक्तीत्यर्थः** ॥ दृष्टान्ते साध्यमुपपादयति । **घटसृष्टावित्यादिना** ॥ ईश्वरसृष्टेः । महदादिसृष्टेः ॥ **सिद्धसाधनतेति** ॥ ईश्वररूपस्वतन्त्रसाधनमादायेति शेषः । येन च महिम्ना विश्वतश्चक्षुर्भूमिं द्यां चावृणोत्तादृशमहिमोपेतो विश्वकर्मेत्येवं योज्यम् । एवं च द्वितीययच्छब्दस्य अन्वयाभाव इति शङ्कानवकाशः । येन च महिम्ना इत्यनयोर्न सामानाधिकरण्यं किन्तु येन चाधिष्ठानेन महिम्ना चेति वैय्यधिकरण्यमेवेत्यन्ये ।

## वाक्यार्थमञ्जरी

तस्य जगत्कर्तृत्वस्य तेन युक्तिविरुद्धत्वलक्षणेन साध्यवैकल्यं परिहरति ॥ **घटसृष्टाविति** ॥ स्वतन्त्रसाधनस्य तदनन्यत्वं ब्रह्मानन्यत्वं तदतिरिक्तं स्वतन्त्रसाधनं नास्तीति यावत् । आरम्भणमुपादानं तदभावप्रतिपादकश्रुतेरपरतन्त्रत्वादियुक्तिभिश्चेत्यर्थः । किमुक्तं भवतीति प्रश्नोत्तरमाह ॥ **स्वरूपसामर्थ्यादिवेति** ॥ न तु साधनान्तरापेक्षयेत्यर्थः । आक्षेपमात्रस्याभिमतसाधकत्वाभावादाह ॥ **विपर्यये पर्यवसानादिति** ॥ न किञ्चिदित्यादिरूपेणेत्यर्थः ॥ **सिद्धसाधनतेति** ॥

(वाक्यार्थमञ्जरी)

ईश्वरस्य स्वाख्यस्वतन्त्रसाधनसापेक्षताङ्गीकारादिति भावः । 'यतो भूमिं जनयन्विश्वकर्मा विद्या-मोर्णोन्महिना विश्वचक्षा' इत्युत्तरार्धेन सह किंस्विदिति श्रुतिं व्याचष्टे ॥ विश्वकर्मेति ॥ वीत्युप-सर्गाद्धभूवेति शेषोक्तिः । येन चाधिष्ठानादिना और्णोदित्यस्यार्थः ॥ आवृणोदिति ॥ भूमिं द्यामिति वर्तते । कतमस्त्विदिति किमित्यर्थः । कथेत्यस्यार्थः कथं रूपमिति ॥ समत्वा-दिति ॥ 'कुत्साप्रश्नवितर्केषु क्षेपे किं शब्द इष्यत' इत्युक्तेरिति भावः । किंस्विद्धिमस्येति ॥ हिमस्य भेषजमौषधं निवारकं किं स्वित् किमित्यादिप्रश्नस्याग्निर्हिमस्य भेषजमित्यादिपरिहारवदित्यर्थः। युक्तिभिरिति बहुवचनघटनायाह ॥ अत्रेति ॥ ईश्वरः स्वतन्त्रसाधनं नापेक्षते इति प्रतिज्ञाया-मित्यर्थः । अपरतन्त्रत्वात्परसापेक्षत्वाभावात् । स्वतन्त्रत्वात् स्वेच्छानुसारित्वादतो नाभेदः ।

## सूत्रभाष्यम्

**॥ ॐ भावे चोपलब्धेः ॐ ॥ १६ ॥**

**स्वतन्त्रसाधनभावे प्रमाणैरुपलभ्येत ।**

**'अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ति कुतश्चन ।**
**अतो वेदत्वमेतेषां यतस्ते सर्ववेदका' इति स्कान्दे ॥**

## सत्तर्कदीपावली

परतन्त्रत्वाभावात्स्वतन्त्रत्वात्साधनसाधनत्वस्य तदधीनत्वान्न विष्णुः साधनापेक्षीत्यर्थः श्रुत्यन्तरैरप्यनुपलम्भान्न विष्णोरप्यपेक्षणीयं साधनमस्तीत्याह ॥ भावे चेत्यादिना ॥

## तत्त्वप्रकाशिका

युक्त्यन्तरेण स्वतन्त्रसाधनं प्रतिक्षिपत्सूत्रमुपन्यस्य व्याचष्टे ॥ भावे चेति ॥ यदि भगवत्सृष्टौ तदतिरिक्तं स्वतन्त्रसाधनमस्ति तर्हि वेदादिप्रमाणैरुपलभ्येत न चोपलभ्यते । अतो नास्तीत्यर्थः । प्रमाणानुपलब्धमपि किं न स्यादित्यत आह ॥ अनुक्तमिति ॥ भगवद्गुणादिकं च सामान्य-तस्तदुक्तमेवेत्यदोषः ।

## गुर्वर्थदीपिका

'भगवद्गुणादिकं च सामान्यत' इत्यत्र सामान्यतः अन्तरहिता गुणाः सन्तीत्यनन्तत्वेनेत्यर्थः । 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इत्यादिना 'विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रं' इति समग्रं वाक्यं गृह्णाति ।

## भावबोधः

**वेदादिप्रमाणैरिति** ॥ उक्तश्रुतियुक्तिविरोधेन पूर्वपक्ष्युक्तयुक्तेरप्रामाण्यादिति भावः ।

## भावदीपः

सूत्रे चशब्दः प्रागुक्तहेतूनां विपक्षे बाधकरूपयुक्तिसमुच्चय इति भावेनाह ॥ **युक्त्यन्तरेणेति** ॥ तर्के बाधवारणायापादकं विशिनष्टि ॥ **तदतिरिक्तमिति** ॥ **अनुक्तमितीति** ॥ इतिहासपुराणयोः पञ्चमवेदत्वप्रसिद्धेः स्मृतौ पञ्चभिरित्युक्तमिति भावः । 'संत्यश्रुता' इति वक्ष्यमाणश्रुतिविरोध इत्यत आह ॥ **भगवद्गुणादिकं चेति** ॥

## अभिनवचन्द्रिका

**वेदादिप्रमाणैरुपलभ्येतेति** ॥ आदिशब्देन वेदानुसारिपौरुषेयग्रन्था गृह्यन्ते । एतेन 'भावे चोपलब्धेः' इति सूत्रं 'प्रसङ्ग' इति शेषपूरणेन 'स्वतन्त्रसाधनभावे उपलब्धेः प्रसङ्ग' इति व्याख्यातं भवति ॥ **प्रमाणानुपलब्धमपीति** ॥ आगमानुपलब्धमपि प्रागुक्तानुमानोपलब्धत्वात् किं न स्यादित्यर्थः । भाष्ये **अनुक्तं पञ्चभिर्वेदैरिति** ॥ पञ्चभिर्वेदैरनुक्तमतीन्द्रियं वस्तु, कुतश्चन अनुमानादेः, नास्ति न सिध्यतीत्यर्थः । अयं भावः नानुमानं स्वातन्त्र्येणाऽर्थं साधयति, किं तर्हि प्रत्यक्षागममूलमेवार्थं साधयति । न तावदत्र प्रत्यक्षं मूलमिति शक्यते वक्तुम्, तस्यातीन्द्रियत्वात् । एवं चागमस्याप्यभावे निर्मूलमनुमानममानमिति । ननु वेदानुक्तमतीन्द्रियं यदि नानुमानात् सिध्यति, तर्हि ईश्वरस्य वेदानुक्तगुणसिद्धिर्न स्यात् । न चेष्टापत्तिः 'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का' इति वेदानुक्तगुणसद्भावाभिधानादित्यत आह **भगवद्गुणादिकं चेति** ॥ वेदशब्दार्थपर्यालोचनयापि वेदस्य सर्वार्थगमकत्वं गम्यत इति भावेनाह मूले **अतो वेदत्वमिति** ॥

## वाक्यार्थमुक्तावली

**युक्त्यन्तरेणेति** ॥ परपक्षे बाधकतर्केणेत्यर्थः । तर्के इष्टापत्तिनिरासाय **तदतिरिक्तेति** ॥ अनन्त-वेदानां चतुर्वेदात्मकत्वान्नानुपपत्तिः । संत्यश्रुता इति श्रुतिविरोध इत्यत आह **भगवद्गुणादिक-मिति** ॥ अश्रुता अपि गुणाः सन्तीत्येवंरूपेण सामान्यतो वेदोक्तमेवेत्यर्थः । तदुक्तं वेदगम्य-माहात्म्यस्यापि वेदेनैव गम्यत्वादिति । सूत्रे भाव इत्येतत्सतिसप्तमी । स्वतन्त्रसाधनस्येति शेषः ।

## तत्त्वसुबोधिनी

**वेदादिप्रमाणैरिति** ॥ उक्तयुक्तिविरोधेन युक्तेरप्रामाण्यादिति भावः । तर्हि भगवद्गुणानामपि वेदेनानुपलब्धत्वात् तदभावः स्यादित्यत आह ॥ **भगवदिति** ॥ तदुक्तमेव पञ्चवेदोक्तमेव ।

## वाक्यार्थविवरणम्

ननु वेदानुक्तगुणानामपि सत्त्वादुक्तमयुक्तमित्यत आह ॥ **भगवदिति** ॥ **सामान्यत इति** ॥ तदनुक्ता अपि गुणा भगवति सन्तीत्येवं यदा वदति तदा तेषां सामान्यतो वेदोक्तत्वमेव प्राप्त-मित्यदोष इति भावः ।

## वाक्यार्थमञ्जरी

ईश्वरातिरिक्तस्वतन्त्रसाधनस्य भावे सत्वे उपलब्धेः प्रसङ्गः प्रमाणैरुपलभ्येतेति यावत् । तर्हि वेदानुक्तानां रमोपास्यानां गुणादीनामभावप्रसङ्ग इत्यत आह ॥ **भगवदिति** ॥ कतिपय-गुणादीन्विशिष्योक्त्वा इतोऽन्येऽपि सन्तीति प्रतिपादने सामान्यतः श्रुत्युक्तत्वं प्राप्तमिति भावः ।

## सूत्रभाष्यम्

**'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' (तै.आ.३-१-३) इत्यादिना साधनान्तरप्रतीतेः कथमनुपलब्धिरित्यत आह–**

**॥ ॐ सत्वाच्चावरस्य ॐ ॥ १७ ॥**

**अवरस्य तदधीनस्य साधनस्य सत्त्वात् । 'काल आसीत्पुरुष आसीत्परम आसीत्तद्यदासी-**

(सूत्रभाष्यम्)
तदावृतमासीत्तदधीनमासीदथ ह्येक एव परम आसीद्यस्यैतदासीन्न ह्येतदासीत्' इति कापायण-श्रुतिः ।

## सत्तर्कदीपावली

यद्यपि साधनैर्विनापि जगत्स्रष्टुं शक्नोति परमेश्वरः । तथापि तेषां साधनत्वं सम्पाद्य लीलया तैः सृजतीत्येतत्प्रतिपादयन्नाह ॥ **अद्भ्य इत्यादिना** ॥ पृथिव्यै पृथिव्या इत्यर्थः । अबादिभिर्हिरण्य-गर्भविग्रहो ब्रह्माण्डरूपः सम्भूत इत्यर्थः । महाप्रलयेऽपि परतन्त्रसाधनसद्भावे श्रुतिमुदाहरति ॥ **काल आसीदिति** ॥ यस्य परमेश्वरस्य तत्कालादिकमधीनमासीत् । तत्परतन्त्रत्वेनासमर्थत्वात् । न ह्येतदासीदित्युच्यत इत्यर्थः ।

## तत्त्वप्रदीपिका

आपीयन्त इत्यापः कर्माणि । पृथुत्वात्पृथिवी प्रकृतिः । रसो भक्तिः । सत्त्वाद्यावरस्य । तदधीनस्य साधनस्य सत्त्वादेवाद्भ्य इत्यादिवचनं न तु स्वतन्त्रस्य । तदधीनस्य सत्त्वे प्रमाणमाह ॥ **काल आसीदित्यादि** ॥ अस्य जगतोऽग्रे कालः पुरुषः परमश्चैवाऽसीत् । यत्तत्कालादिक-मासीत्तदावृतमासीत् । अथवा स एकः परम एवाऽसीत् । यदधीनमेतदासीत् । न स्वतन्त्रम् । न ह्येतदासीदिति वक्तुं शक्यते, परतन्त्रत्वादेव । अथवा, अथेति विशेषद्योतकः । एको भगवानेव परमः प्रधान आसीत् न ह्यन्यत्परममासीत्, किन्तु तदधीनमेव ।

## तत्त्वप्रकाशिका

ननु 'अद्भ्यः सम्भूत' इति श्रुतौ 'प्रकृतिं स्वामवष्टभ्य विसृजामि' इति स्मृतौ च भगवदितर-स्वतन्त्रसाधनप्रतीतेर्न तदनुपलब्धिरित्याशङ्क्य तत्परिहारत्वेन सूत्रमवतार्य व्याचष्टे ॥ **अद्भ्य इति** ॥ नात्र स्वतन्त्रसाधनमुच्यते किं तु भगवदधीनमेव । तदधीनसाधनस्य सत्त्वाभ्युपगमान्नोक्तविरोध इति भावः । तत्पुरुषाख्यो हिरण्यगर्भो विश्वकर्मणो हरेः सकाशादवाद्युपलक्षितभूतै रसोप-लक्षिततन्मात्राभिश्चोत्पन्नः । सर्वस्मादधिकत्वेन समवर्तत । तस्य तत्पुरुषस्याग्रत एव जातं विश्वं ब्रह्माण्डाख्यं रूपं त्वष्टा भगवान् धारयन् वर्तत इत्यर्थः । ननु साधनमात्रमत्र प्रतीयते न तु तदधीन-मिति तच्च लोकानुसारात्स्वतन्त्रमेव किं न स्यादित्यत आह ॥ **काल इति** ॥ यस्मात्तदा यदासीत्तद्भगवदधीनमासीत्तस्मादेक एव परम आसीदित्युच्यते । कीदृशोऽसौ यस्य सकाशादेतदासीत् । कुतः । न ह्येतत्पूर्वमासीदित्यर्थः । साधनाद्याक्षेपतत्सद्भावोक्त्यन्यथानुपपत्तिश्चास्य समाधानम् ।

## गुर्वर्थदीपिका

अधीत्यस्यार्थः **सर्वस्मादधिकत्वेनेति** । जीवसमूहादिति शेषः । आ समन्ताज्जानं जननं यस्य तदाजानमित्यभिप्रायेणाह **अग्रत एव जातमिति** । तदित्यस्यार्थकथनं **तदेति** । सृष्टिकाल इत्यर्थः । तेन भगवता आवृतमित्यस्यार्थकथनं **भगवदधीनमिति** ॥ अथेत्यस्यार्थकथनं **तस्मादिति** ॥ अन्यथानुपपत्तिश्चास्य समाधानमित्युपलक्षणं, भूतचतुष्टयस्य तन्मात्राचतुष्टयस्य च मुखतोऽनुक्त्या उपेक्षितत्वेन च भगवदधीनत्वेनावरत्वमित्यपि ज्ञेयम् ।

## भावबोधः

**तद्यदासीदित्यत्र तच्छब्दस्य** तदेत्यर्थत्वं यदित्यस्य हेत्वर्थतया कालादिपरतया चावृत्तिस्तदावृतमित्यत्र **तच्छब्दस्यावृत्तिः** । एकं कालपुरुषादिपरतया व्यस्तं, द्वितीयं तेन परमात्मना वृतमिति समस्तमथशब्दो हेत्वर्थ इत्यभिप्रेत्य श्रुत्यर्थमाह– **यस्मात्तदेत्यादिना** ।

## भावदीपः

पूर्वाक्षेपरूपताद्योतनाय शेषोक्त्याऽर्थं वदन्नेव भाष्यमवतारयति ॥ **नन्वब्भ्य इति** ॥ आदिपदोपात्तमाह ॥ **प्रकृतिमिति** ॥ गीतास्मृतौ नवम इत्यर्थः ॥ **स्वतन्त्रेति** ॥ पारतन्त्र्यानुक्त्यैव लोक इव स्वातन्त्र्यसिद्धेरिति भावः । सूत्रभाष्ययोरुक्तसत्त्वादिति हेतोरर्थः ॥ **सत्त्वाभ्युपगमादिति** ॥ ईश्वरसृष्टिपरत्वद्योतनाय 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्र' इति श्रुत्यर्थमाह । **तत्पुरुषाख्य इति** ॥ अद्भ्यः पृथिव्या इति पञ्चमीचतुर्थ्यौ तृतीयार्थ इति भावेनोक्तम् ॥ **अवाय्वुपलक्षितभूतैरिति** ॥ सम्भूतपदार्थ उत्पन्न इति । आजानमग्र इत्यस्याग्र एव जातमिति । विदधदित्यस्यार्थो धारयन्निति एतीत्यस्य वर्तत इति । यत्तदोरावृत्त्याऽर्थमाह ॥ **यस्मात्तदा यदासीत्तदिति** ॥ **भगवदिति** ॥ तदावृतमिति तच्छब्दः प्रकृतपरमपदोक्तस्य परामर्शक इति भावः । यद्वा यस्मात्तस्मादिति तात्पर्योक्तिः । भगवदिति योग्यतयान्वयः । नन्वेतावता ननु साधनमात्रम्' इति कृतचोद्यस्य किमुत्तरमित्यत आह ॥ **साधनादीति** ॥ यथोत्तरसूत्रे तम आसीदित्युक्तिबलान्नासदासीदित्यस्य पारतन्त्र्यादियुक्तसाधनसत्त्वपरत्वं कल्प्यते । तथा अद्भ्य

(भावदीपः)

इत्यादेरपि किं स्विदिति वाक्यबलात्परतन्त्रसाधनसत्त्वपरत्वम् । किं स्विदित्यस्य तु स्वातन्त्र्याक्षेपपरत्वं च कल्पनीयम् । अन्यथा वाक्यद्वयायोगात् । व्यावहारिकादिपरत्वकल्पनं तु अप्रामाण्यापत्त्यादिना न युक्तमिति भावः । एतेन किं स्विदित्यस्य स्वरूपाक्षेपपरत्वेन प्रतीतस्य स्वातन्त्र्याक्षेपपरत्वमुपपादितं ध्येयम् ।

## अभिनवचन्द्रिका

**न तदनुपलब्धिरित्याशङ्क्येति** ॥ तथा च भावे चोपलब्धेः' इतीष्टापादनत्वात्तर्काभास इति भावः ॥ **तदधीनस्य च साधनस्येति** ॥ चोऽवधारणे । तदधीनस्यैवेत्यर्थः । अयं भावः यस्य स्वतन्त्रसाधनस्योपलब्धिरापाद्यते नास्त्येव तदुपलब्धिः, यच्चोपलभ्यतेऽस्वतन्त्रसाधनं न तस्योप-लब्धिरापाद्यत इति नेष्टापादनमिति ॥ **अद्भ्यः सम्भूतपृथिव्यै रसाच्च** ॥ विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे' इति वाक्यं व्याचष्टे ॥ **तत्पुरुषाख्य** इति ॥

## वाक्यार्थमुक्तावली

चशब्दोऽवधारणे । अवरस्यैवेत्यन्वेति । समुच्चये च । अवरस्य साधनस्य सत्त्वात् । तस्यै बाह्य इत्यत्रोक्तत्वात् । स्वतन्त्रसाधनभावे उपलब्धिप्रसंगो विरुद्ध इति सूत्रार्थमाह **नात्रेति** ॥ 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदधद्रूपमेति तत्पुरुषस्य विश्वमाजानमग्र' इति श्रुत्यर्थमाह **तत्पुरुषाख्य इत्यादिना** । अद्भ्यः पृथिव्यै इति पञ्चमीचतुर्थ्यौ तृतीयार्थ इति भावेनाह **अवादीति** ॥ अग्रे अजानमित्यस्यार्थोऽग्रत एव जातमिति । एतीत्यस्य वर्तत इति । यत्तदोरावृत्या श्रुत्यर्थमाह **यस्मात्तदा यदासीदिति** ॥ तदावृतमिति तच्छब्दः प्रकृत-परमपदोक्तपरामर्शक इति भावः । पुरुषो हिरण्यगर्भादिः । अद्भ्य इत्यत्र साधनसत्वमात्र-प्रतीतावपि काल आसीदित्यत्र स्पष्टश्रुत्यन्तरबलात्तदधीनसाधनपरत्वमिति भावः । एतेन सौत्रश्चशब्दः स्पष्टश्रुतिसमुच्चायक इति व्याख्यातं भवति । उपपत्तिसमुच्चायकत्वेनापि भाष्यमु-पलक्षणं मत्वा व्याचष्टे **साधनादीति** ॥ किं स्विदासीदित्याक्षेपः । अद्भ्यः सम्भूत इति तत्सद्भावोक्तिश्चेत्येतदन्यथानुपपत्तिश्च पारतन्त्र्यं गमयतीत्यर्थः ।

## तत्त्वसुबोधिनी

'अद्भ्यः सम्भूतः' इति वाक्यं व्याचष्टे ॥ **तत्पुरुषाख्यः इत्यादिना** ॥ तद्यदासीत्यत्र तच्छब्दस्य तदित्यर्थत्वं, यदित्यर्थस्य हेत्वर्थपरतया कालादिपरतया चावृत्तिः । एकं कालादि-परतया समस्तं, द्वितीयं तेन परमात्मना वृत्तमिति समस्तम् । अपशब्दो हेत्वर्थः इत्यभिप्रेत्य श्रुत्यर्थमाह ॥ **यस्मात्तदेत्यादिना** ॥ **साधनादीति** ॥ किंस्विदिति श्रुतौ साधनादिकमाक्षिप्तं, सत्वाच्चेत्यादिना साधनसद्भावश्चोक्तः । एतदुभयोक्त्यन्यथानुपपत्या स्वतन्त्रसाधनमेव सिद्ध्यति । ननु सर्वथा साधनाभावो वा तस्य स्वातन्त्र्यं वा इत्यस्य समाधानमित्यर्थः । साधनान्तरस्यैवा-भाव इति अद्भ्यः सम्भूतः इति श्रुतौ विश्वकर्मपदस्य हिरण्यगर्भपरत्वेन तत्पुरुषपरस्य हिरण्य-गर्भसृष्टपुरुषपरत्वस्य सम्भवेन हिरण्यगर्भकर्तृकावान्तरसृष्टावबादिकारणसद्भावपरत्वेन न तद्विरोध इति भावः ।

## वाक्यार्थविवरणम्

अग्रत एव जातमिति भूरादिलोकापेक्षया अग्रत इत्यर्थः ।

## वाक्यार्थमञ्जरी

**अवष्टभ्य** आश्रित्य । अवरस्य भगवदधीनस्य साधनस्य सत्वादेव नाद्भ्य इत्यादिविरोध इत्यर्थः । 'अद्भ्यः सम्भूतः पृथिव्यैरसाच्च । विश्वकर्मणः समवर्तताधि । तस्य त्वष्टा विदध-द्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे' इति श्रुतिं व्याचष्टे ॥ **तत्पुरुषाख्य इति** ॥ अबादी-त्यादिपदेन पृथिवीतन्मात्राभिर्भूतगुणैः शब्दादिभिः । आजानमित्यस्यार्थो जात इति । अथ-शब्दो हेत्वर्थ इत्याशयेनाह ॥ **यस्मादिति** ॥ उच्यते एको नारायण आसीदित्यादौ ॥ **साधनाद्यपेक्षयेति** ॥ किंस्विदासीदित्यादिसाधनापेक्षः अद्भ्यः इत्यादिना च तत्सद्भावः ।

## सूत्रभाष्यम्

**॥ ॐ असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॐ ॥ १८ ॥**

**'नासदासीन्नो सदासीत्'** **(ऋ.सं.१०-१२९-१)** **इति सर्वस्यासत्त्वव्यपदेशान्नेति चेन्न । अव्यक्तत्वपारतन्त्र्यादिधर्मान्तरेण हि तदुच्यते । 'तम आसीत्'** **(ऋ.सं.१०-१२९-३)** **इति**

(सूत्रभाष्यम्)
वाक्यशेषात् । न चान्यत्र प्रमाणमस्ति । 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्त-भोगामजोऽन्यः' (म.ना.उ.१०-५) ।

'अनाद्यनन्तं जगदेतदीदृक् प्रवर्तते नात्र विचार्यमस्ति ।
न चान्यथा क्वापि च कस्य चेदमभूत्पुरा नापि तथा भविष्यत्' ॥

'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्' (भ.गी.१६-८) । 'असत्यमाहुर्जगदेतदज्ञाः शक्तिं हरेर्ये न विदुः परं हि' 'यस्सत्यरूपं जगदेतदीदृक् सृष्ट्वा त्वभूत्सत्यकर्मा महात्मा' । 'अथैनमाहुस्सत्यकर्मेति, सत्यं ह्येवेदं विश्वमसौ सृजते । अथैनमाहुर्नित्यकर्मेति नित्यं ह्येवासौ कुरुते' । 'यच्चिकेत सत्यमित्तन्न मोघम्' (ऋ.सं.१०-५५-६) इत्यादिश्रुतिस्मृतिभ्यः ।

'परस्परविरोधे तु वाक्यानां यत्र युक्तता ।
तथैवार्थः परिज्ञेयो नावाक्या युक्तिरिष्यत' इति बृहत्संहितायाम् ।

विरुद्धवत्प्रतीयन्त आगमा यत्र वै मिथः ।
तत्र दृष्टानुसारेण तेषामर्थोऽन्ववेक्ष्यत' इति च ।
ईशोऽनीशो जगन्मिथ्या न पूज्यो गुरुरित्यपि ।
इत्यादिवद्विरुद्धानि वचनान्यथ युक्तयः ।
प्रमाणैर्बहुभिर्ज्ञेया आभासा इति वैदिकैः ॥
वेदवेदानुसारेषु विरोधेऽन्यार्थकल्पना ।
अन्येषां तु विरुद्धानां विप्रलम्भोऽथवा भ्रम' इति च भागवततन्त्रे ।

'शास्त्रार्थयुक्तोऽनुभवः प्रमाणं तूत्तमं मतम् ।
मध्यमं त्वागमो ज्ञेयः प्रत्यक्षमधमं स्मृतम् ॥

प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।
अनुमाद्या न स्वतन्त्राः प्रमाणपदवीं ययुः' इति पुरुषोत्तमतन्त्रे ॥

## सत्तर्कदीपावली

न च 'नासदासीन्नोसदासीत्तदानीम्' इति श्रुत्या कालादिकस्याप्यभावः प्रलयकालीनः प्रतिपाद्यत

(सत्तर्कदीपावली)

इति वाच्यम् । सच्छब्दस्य पृथिव्यादित्रयविषयत्वेनासच्छब्दस्य वाय्वन्तरिक्षविषयत्वेन सावकाशत्वात् । पृथिव्यादीनामपि सूक्ष्मरूपस्य प्रलयेऽभावो न वक्तुं शक्यते । 'तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्' इति वाक्यशेषविरोधापत्तेः । तमोगूळ्हत्वेन परतन्त्रत्वेन सतो अशक्तत्वेन नासीदिति वक्तुं शक्यत्वात् । न च प्रकृत्यादिकं विना जगत्सृष्टिरित्यत्र किञ्चित्प्रमाणमस्तीत्याह ॥ **न चेति** ॥ प्रलयेऽपि प्रकृतिपुरुषसद्भावे प्रमाणमाह ॥ **अजो ह्येक इति** ॥ 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिनोक्तां न जायत इत्यजां प्रकृतिमेको न जायत इत्यजो जीवो जुषमाणोऽनुशेते । प्रलये जहात्येनां भुक्तभोगामजोऽन्यो मुच्यमान इत्यर्थः । एतदेव प्रमाणान्तरैः द्रढयति ॥ **अनाद्यनन्तमित्यादिना** ॥ व्रीह्यादिवत्प्रवाहरूपेण वर्तमानत्वादीदृगित्युक्तं जगद्रज्जुसर्पवत्क्वापि बाधितं नाभूत्पुरा न च भविष्यत्युत्तरत्रेत्यर्थः । 'प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः । असत्यमप्रतिष्ठम्' इत्यादिना विश्वमिथ्यात्वमतमासुरमिति दर्शयति । असत्यमिति विश्वमिथ्यात्वमतस्यासुरत्वं युक्तं विष्णुमाहात्म्यविरुद्धत्वादित्येतदुच्यते ॥ **असत्यमाहुरिति** ॥ पुनरपि विश्वसत्यत्वं श्रुत्या द्रढीकरोति ॥ **यच्चिकेतेति** ॥ कितकरण इत्यस्माद्धातोर्यद्विश्वमिन्द्रादिनामा हरिश्चिकेत चकारेति व्याख्येयम् । तन्न मोघं तन्न मिथ्येत्यर्थः । नेह नानास्ति किं चन' इत्येतद्वाक्यविरोधमुक्तवाक्यानामाशङ्क्य परिहरति ॥ **परस्परविरोध इत्यादिना** ॥ यथेह भूतले घटो नास्तीत्यनेनापि न जीवादिभेदो निषिध्यते । प्रत्यक्षादिप्रमाणविरोधादिहेतिपदवैय्यर्थ्याच्च नानानास्तीत्येतावता पूर्णत्वात् । न च सर्वभेदो निषेद्धुं शक्यते । कुत्रापि सर्वभेदानिषेधाद्भेदस्य निषेद्धुमशक्यत्वात्तस्यापि निषेधे तन्निषेधाद्भेदः तन्निषेधाद्भेद इत्यनवस्था स्यात् । सर्वभेदतन्निषेधयोर्भेदाभावे सर्वभेदनिषेध इति वक्तुमशक्यत्वाच्च । अतो 'यदेवेह तदमुत्र' इति प्रस्तुते परमात्मनि नेह नानास्तीति नानात्वं निषिध्यते । तत्तल्लोकभेदेन नानेक परमेश्वरः किं त्वेक एवेत्यर्थः । यथा मे माता वन्ध्येतिवदीशो नीश इत्येतद्व्याहतमेवं जगन्मिथ्येत्येतदपि व्याहतमेव । जगन्मिथ्येतद्वाक्यार्थयोर्जगदन्तर्भूतत्वेन मिथ्यात्वापातात् । मिथ्यात्वमिथ्यात्वे जगत्सत्यत्वापातादित्यर्थः । नावाक्या युक्तिरिष्यत इति यदुक्तं तत्प्रपञ्चयति ॥ **प्रत्यक्षयोरिति** ॥

## तत्त्वप्रदीपिका

'नासदासीत्' इत्यादि सर्वासत्त्वव्यपदेशान्न किञ्चित्साधनमस्तीति चेन्न । अव्यक्तत्वपारतन्त्र्यावृतत्वादिधर्मान्तरविवक्षया तदसत्त्वमुच्यते । न सर्वाभावविवक्षया । वाक्यशेषे तमः सलिलाद्यभिधानात् । 'तस्माद्धन्यन्न परः किञ्चनास' इति वाक्यशेषे च सुखचेष्टकादन्यस्य परत्वमात्रेण निषेधात् ।

(तत्त्वप्रदीपिका)

केचिदेतानि सूत्राण्यन्यथा योजयन्ति । तद्यथा 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' । यदि भोक्ता भोग्यभावमापद्येत भोग्यं वा भोक्तृभावं, तर्हि प्रत्यक्षादिसिद्धस्य तयोर्विभागस्याभावः प्रसज्येत । तयोश्चेतरेतरभावापत्तिः परमकारणाद् ब्रह्मणोऽनन्यत्वात्प्रसज्येतेति चेत्, स्याल्लोकवत् । यथा समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गबुद्बुदादीनां मिथो विभागः मिथः संश्लेषादिव्यापारश्चोपपद्यते । न च समुद्रात्मनोऽनन्यत्वेऽपि फेनतरङ्गादीनामितरेतरभावापत्तिः । न च तावता समुद्रादन्यत्वमप्येवमिहापि स्यात् ।

**ॐतदनन्यत्वमारम्भणशब्दादिभ्यः ॥** अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं स्याल्लोकवदिति परिहारोऽभिहितः । न त्वयं विभागः परमार्थतोऽस्ति । यतः कारणाद्ब्रह्मणोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते । कुतः ? आरम्भणशब्दादिभ्यः । आरम्भणशब्दस्तावत्– एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्यते 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्, वाचारम्भणं विकार' इत्यादि । एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृण्मयं घटादिविज्ञातं स्यात् । यतो वाचाऽऽरम्भणं विकारः नामधेयमात्रमनृतं मृत्तिकेत्येव सत्यम् । एवं दृष्टान्तोक्तेर्दार्ष्टान्तिकेऽपि ब्रह्मणि कार्यस्य व्यतिरेकेणाभावः । आदिशब्दात् 'स आत्मा तत्त्वमसि' इत्याद्यात्मैकत्वप्रतिपादकमपि वाक्यजातमुदाहर्तव्यम् । अन्यथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तेः । तस्माद्यथा घटशरावाद्याकाशानां महाकाशादनन्यत्वं, यथा वा शुक्तिरजतादीनां शुक्त्यादिभ्योऽनन्यत्वं, दृष्टनष्टस्वरूपत्वात्, स्वरूपेणानुपाख्यत्वात्, एवमस्य भोक्तृभोग्यादिप्रपञ्चस्य ब्रह्मव्यतिरेकेणाभाव इत्यर्थः । नन्वेकस्यैव ब्रह्मणो नानाभोक्तृभोग्यात्मकत्वमप्यस्तु, यथा समुद्रात्मनैकत्वं फेनतरङ्गाद्यात्मना नानात्वम् । तदुक्तं च स्याल्लोकवदिति त्वयैव । यथा वा मृदात्मनैकत्वं घटाद्यात्मना नानात्वम्, एवं च मृदादिदृष्टान्ता अनुरूपाः स्युः । मैवम् । तत्र प्रकृतिमात्रस्य सत्यत्वावधारणात् । वाचारम्भणशब्देन विकारस्यानृतत्वाभिधानात् । दार्ष्टान्तिकेऽपि तत्सत्यमिति ब्रह्मण एव सत्यत्ववचनात् । तत्त्वमसीति शारीरस्य ब्रह्मभावोपदेशाच्च । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति भेददृष्ट्यपवादश्च श्रूयते । न चैतावता लौकिकवैदिकभेदव्यवहारलोपः । स्वप्नस्येव प्राक्प्रबोधादुपपत्तेः । न चानृतेन मोक्षशास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वानुपपत्तिः । शङ्काविषादिनिमित्तस्य सत्यस्यैव मरणस्योपलब्धेः । तस्मान्मिथ्याभूतेनापि शास्त्रेण सत्यब्रह्मावगतिरुपपद्यते । तस्मात्परमार्थतोऽद्वितीयं ब्रह्म । तस्याऽत्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारबीजभूते । ताभ्यामन्यः सर्वज्ञ ईश्वरः । एवमविद्याकल्पितनामरूपोपाध्यनुरोधीश्वरो भवति । तदेवमविद्याकृतमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं

(तत्त्वप्रदीपिका)
सर्वशक्तित्वं च । न परमार्थतः । सूत्रकारोऽपि व्यवहारावस्थाभिप्रायेण स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः परिणामप्रक्रियां चाश्रयति सगुणेषूपासनेषूपयोक्ष्यत इति ।

**भावे चोपलब्धेः** ॥ भावः एव कारणस्य कार्यमुपलभ्यते । नाभावे, सत्यां हि मृदि घट उपलभ्यते । न च नियमेनान्यभावेऽन्यस्योपलब्धिर्दृष्टा । यदि धूमादौ दृष्टा तथाऽपि न कश्चिद्दोषः । तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरनन्यत्वे हेतुं वयं वदामः । लोकेऽपि तन्तुव्यतिरेकेण पटो नोपलभ्यते । तन्तव एवाऽतानवितानवन्तः प्रदृश्यन्ते । भावाच्चोपलब्धेरिति वा सूत्रम् । प्रत्यक्षोपलब्धिभावाच्च तयोरनन्यत्वमित्यर्थः । तन्तुसंस्थाने हि पटे तन्तुव्यतिरेकेण पटो नाम कार्यं नोपलभ्यते । एवं तत्तत्कारणद्वारेण परब्रह्मण्यद्वितीये पर्यवसितिः ॥ **ॐ सत्त्वाच्चावरस्य ॐ** ॥ अपि च प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्यावगम्यते । 'सदेव सोम्येदमग्र आसीत्' इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात् । अतोऽप्यनन्यत्वमेव ।

**असद्व्यपदेशान्नेति चेन्नेत्यादिसूत्रम्** ॥ 'असदेवेदमग्र आसीत्' इत्यादौ प्रागुत्पत्तेः कार्यस्यासत्त्वव्यपदेशान्न सत्त्वमिति चेन्न । न ह्ययमत्यन्तासत्त्वाभिप्रायेण व्यपदेशः । व्याकृतनामरूपत्वाद्धर्मात् धर्मान्तरेणाव्याकृतनामरूपत्वेनायमसद्व्यपदेशः । 'तत्सदासीत्' इत्यादि वाक्यशेषात् । तदेव ह्यत्र सदिति विशिनष्टि । अत एवमुक्तन्यायेन मूलकारणमेवान्त्यात्कार्यात्तेन तेन कार्याकारेण नटवत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते । तस्मात्परमार्थतोऽद्वितीयं ब्रह्म, अनिर्वचनीयमन्यदित्यधिकरणार्थ इति । अत आह– **न चान्यत्र प्रमाणमस्तीति** ॥ न तावदनिर्वाच्यत्वे सूत्रं वेदवाक्यमन्यद्वा प्रमाणमस्ति । अनिर्वचनीयत्वसाधकस्यातत्वावेदकत्वेनाशास्त्रीयत्वात् । अतत्वावेदकत्वेऽपि तात्विकावस्थापेक्षयाऽऽभासत्वं न व्यवहारावस्थायामपीति चेदेवं तर्हि व्यावहारिकमेव जगतो मिथ्यात्वमभ्युपेतं न तात्विकं स्यात् । ततश्चात्माद्वैतस्य व्यावहारिकत्वप्रसङ्गः । प्रपञ्चसत्यत्वस्य तात्विकत्वप्रसङ्गः । अपि च व्यवहारनिर्वाहकं ह्यतत्वावेदकमिष्यते । व्यवहारस्तु तत्वग्राहकेणैव सत्यत्वविषयेणैव निरुह्यते । किमनेन मानाभासेनान्यथात्वविषयेणाप्रयोजकेन ? अथोच्येत अनिर्वचनीयत्वमात्रं तत्वावेदकमेव; तत्वतोऽनिर्वाच्यं जगदिति ब्रूम इति । तर्हि मुक्तावप्यनिर्वाच्यप्रपञ्चो न निवर्तेत, तत्वावेदकप्रमाणसिद्धत्वाद् ब्रह्मवत् । तस्मान्नानिर्वाच्ये तत्वावेदकमतत्वावेदकं च प्रमाणमस्ति ।

तदनन्यस्य च कथमनिर्वाच्यत्वम् ? अन्यराहित्यमात्रमत्रानन्यत्वं न त्वैक्यमिति चेन्न, भेदरहितस्य तेनाभेदो बलाद्भवत्येव, ब्रह्मस्वरूपत्वात् । न च मृद्घटादिवदत्र प्रकृतिविकारभावः,

(तत्त्वप्रदीपिका)

येनानन्यत्वाशङ्कावकाशः । न च निर्दिष्टदृष्टान्तस्तदनुबन्धीत्यादिकमवादिष्म । यच्चान्यदन्यदुपन्यस्तं; तदपि तत्र तत्र दत्तोत्तरमेवेत्युपेक्ष्यते । चिद्भावानुरक्ता च बुद्धिरचित्सु परिमार्गणीया, या तदनन्यत्वसाधनीशोधिता । भावाच्चोपलब्धेरिति वा सूत्रमिति सूत्रविकल्पेनाऽपि तत्सम्प्रदायापरिज्ञान-विजृम्भितेति न प्रबुद्धपरिषदि प्रौढिमावहति ।

कथञ्च प्रागुत्पत्तेः कारणात्मना सतः कार्यस्य तत्त्वान्यत्वाभ्यां सदसत्त्वाभ्यां चानिर्वचनीयत्वम्। न च 'नासदासीन्नो सदासीत्' इति तत्र प्रमाणमस्ति । तदानीमिति विशेषणात्सृष्टेरूर्ध्वमुभयोरपि सद्भावावगमात् । न चात्र सदसती भावाभावौ, पृथिव्यादिभूतत्रयं सद्व्यक्तत्वादपरं द्वयमसदव्यक्त-त्वादुच्यते । 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सत्' इति च श्रुतिः । अन्यथा रजआदेः सदन्तर्भावात्पृथङ्-निषेधायोगात् ।

'अव्यक्तमसदित्युक्तं व्यक्तं सदिति चोच्यत' इति च ब्राह्मे ।

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाण' इत्यादि श्रुतिस्मृतिवचनेभ्यश्च न चेतनाभेदो जगन्मिथ्यात्वं च प्रामाणिकम् ।

ननु वर्णितमिह मानमैतदात्म्यमित्यादि । न च प्रतिपक्षप्रमोपन्यासमात्रबलादेतदपलापो युक्तः। सत्यम् । न तत्त्वदभिमते मानम् । प्रमाणान्तरविरोधात्, स्वव्याहतेश्च । एतदेव वर्णयति **परस्परविरोध** इत्यादिना । अन्येषां तु विरुद्धानां वचनानां विप्रलम्भः प्रयोजनम्, अथवा भ्रमः कारणं कल्प्यम् ॥

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद् व्याचष्टे ॥ **असदिति** ॥ साधनान्तरसत्त्व-मभ्युपेत्य तस्येश्वराधीनत्वं यदुदितं न तद्युक्तम् । 'नासदासीत्' इति श्रुतौ प्रलये सर्वस्यासत्त्वव्यप-देशात् । साधनान्तरस्यैवाभावे परमात्माधीनतावर्णनं तु सुतरामयुक्तमिति भावः । तदानीं प्रलये पञ्च भूतानि नासुः । गुणत्रयं यच्च परं व्योम प्रकृतिर्मृत्युरमृतं दिवारात्र्योश्च प्रभावो नासीत् । एतदभावात्किं कुत्र कस्य सुखार्थमावृणोत् । न किमपि । यच्चेतनप्रकृतिरूपमम्भस्तदप्यासीत्किं नैवासीत् । किं तु निवातं ब्रह्मैकमेव स्वसामर्थ्येनाचेष्टत न तु तस्मादन्यत्परमासेत्यर्थः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ भवेदेतद्यदि तस्यां श्रुतौ साधनानां स्वरूपासत्त्वाभिप्रायेणासत्त्वव्यपदेशो भवेत् । नैतदस्ति । साधनानामव्यक्तत्वपरतन्त्रत्वाधमत्वविकृतरूपविनाशादिधर्मान्तरापेक्षयाऽसत्त्वस्य

(तत्त्वप्रकाशिका)

व्यपदिष्टत्वात् । अव्यक्तादौ तद्व्यपदेशस्य लोके दृष्टत्वात् । न च वाच्यं स्वरूपासत्त्वाभिप्रायेणासत्त्वोक्तिः किं न स्यादिति । वाक्यशेषे प्रकृत्यादिसत्त्वश्रवणादिति भावः । यत्तमोऽपरिमितं सलिलं भूत्वाऽऽसीत्प्रकृत्याख्यं तेनेदं सर्वं गूहितमासीदित्यर्थः । अन्यथा तस्माद्धान्यन्न परः किञ्चनासेति परशब्दवैयर्थ्यम् ।

अथ परकृतापव्याख्यां निराचष्टे ॥ **न चेति** ॥ अतीताधिकरणे व्यवहारमभ्युपेत्य चेतनाचेतनविभागो निरूपितः । इदानीं तु पारमार्थिकीं दशामवलम्ब्य चेतनाचेतनस्य ब्रह्मानन्यत्वमुच्यते । 'वाचारम्भणम्' इत्यादिश्रुतेरिति व्याख्यानं न युक्तम् । प्रपञ्चस्य ब्रह्मानन्यत्वे प्रमाणाभावादिति भावः । न केवलं चेतनानामचेतनानां चानन्यत्वे प्रमाणाभावः । किं तु प्रमाणविरुद्धं चेति भावेनाह ॥ **अजो हीति** ॥ रजः सत्त्वतमोगुणात्मिकां स्वसदृशमहदादिकार्याणि जनयन्तीं प्रकृतिं सेवमानः कश्चिज्जीवोऽनुवर्तते । कश्चिदस्यां भोगान्भुक्त्वा जहातीति मुक्तामुक्तयोः परस्परं भेदः श्रूयते । अत्रेश्वरोऽपि मुक्त उच्यते । अचेतनप्रपञ्चस्य ब्रह्मानन्यत्वं नाम बाधितत्वं विवक्षितं परस्य तच्च प्रमाणविरुद्धमिति भावेनाह ॥ **अनादीति** ॥ नित्यमबाध्यं जीवो न ब्रह्मणो भिद्यते चेतनत्वात् ब्रह्मवत् । प्रपञ्चो बाध्यो दृश्यत्वाच्छुक्तिरजतवदित्यादियुक्तिसद्भावात्कथं प्रमाणाभाव इत्यत आह ॥ **परस्परेति** ॥ वाक्यानां विरोध एवैकवाक्यानुसारियुक्तिसिद्धार्थो ग्राह्यो न केवलयुक्तिसिद्धार्थ इत्यर्थः । सन्तु तर्हि वाचारम्भणमित्यादिश्रुतिस्मृतयः प्रमाणमत्रेत्यत आह ॥ **विरुद्धवदिति** ॥ नैताभिः श्रुतिभिरनन्यत्वं सिध्यति उदाहृतश्रुतिविरोधात् । न च तर्हि परस्परविरोधादप्रामाण्यम् । विरोधे प्रत्यक्षानुसारेण तद्विरुद्धानन्यत्वश्रुत्यादेर्व्याख्येयत्वादिति भावः । एतेन श्रुतियुक्तिभ्यामनन्यत्वसिद्धिरित्यपास्तम् ।

प्रत्यक्षस्य ततोऽपि बलवत्त्वाद्युक्तीनामाभासत्वाच्च द्रष्टुमिति प्रबलबहुप्रमाणदर्शनं वा । स्मर्यते च प्रपञ्चमिथ्यात्ववादिश्रुत्यादेरप्यन्यार्थवर्णनमिति भावेनाह ॥ **ईश इति** ॥ आभासत्वमेव विभज्याह ॥ **वेदेति** ॥ वेदादेस्तदर्थ एवाभासत्वमन्यार्थकल्पना तु कर्तव्यैव । तदितरेषां विप्रलम्भोऽथ वा भ्रमः कारणं कल्पनीयम् । ननु प्रमाणत्वाविशेषात्कुतो न युक्तेरर्थसाधकत्वमित्यत आह ॥ **शास्त्रार्थेति** ॥ तदनुकूलः साक्षादर्थविषयत्वात् । यथार्थज्ञानमुत्तमं प्रमाणम् । आगमस्य तत्साधनभूतस्य सर्वविषयत्वान्मध्यमत्वम् । प्रत्यक्षस्यानुप्रमाणस्यासर्वविषयस्यावरत्वम् । अनुप्रमाणमनुमानं प्रमाणान्तरसाहाय्ययुक्तमसर्वविषयमिति सर्वावरमिति । अतोऽर्थान्तरस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चोक्त एव सूत्रार्थ इति स्थितम् ।

## गुर्वर्थदीपिका

'नासदासीन्नो सदासीत्' इत्यनेन 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमा परो यत्। किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः' । इति श्रुतिखण्डत्रयं गृह्यते । 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते' इति स्मृतेः सत्पदेन पृथिव्यप्तेजोरूपं भूतत्रयम्, असत्पदेन वाय्वाकाशभूतद्वयं च ग्राह्यमिति भावेनाह **पञ्चभूतानि नासुरिति** ॥ रजःपदं सत्वतमसोरप्युपलक्षणमिति भावेनाह– **गुणत्रयमिति** ॥ देहलीदीपन्यायेनोभयसङ्ग्रहार्थं श्रुत्या मध्यपतितं रज एव गृहीतमिति ज्ञेयम् । परमिति वदता 'पृ पालनपूरणयोः' इति धातोः कर्त्रर्थे असुन् प्रत्यये कृते सति परमिति सकारान्तं पदमिति सूचितम् । 'न मृत्युरासीत्' इति श्रुतिखण्डस्यार्थमाह **मृत्युरित्यादिना** । प्रकृष्टं केतः केतनं चिह्नं असाधारणधर्म इति भावेनाह दिवारात्र्योश्च **प्रभाव इति** ॥ 'किमावरीव' इति श्रुति-खण्डस्यार्थमाह **एतदभावादित्यादिना,** एतदभावात् पृथिव्यादिभोगसाधनवस्त्वभावात् कुह कुत्र किं कस्य, शर्मन् सुखार्थम्, आवरीवः अवर्तदित्यर्थष्टीकाकारस्याभिप्रेतः । 'आनीदवातं स्वधया तदेकं, तस्माद्धान्यं न परः किञ्च नाऽऽस' इति श्रुतिखण्डस्यार्थं कथयति **निवात**मित्यादिना । अवातमित्यस्यार्थः निवातमिति, स्वधयेत्यस्यार्थकथनं **स्वसामर्थ्येनेति** ॥ धीयते धार्यते अनया सर्वं जगदिति व्युत्पत्त्या स्वधापदेन स्वसामर्थ्यमुच्यते इति भावः । आनीदित्यस्यार्थकथनं **अचेष्टतेति** ॥ 'अन चेष्टायाम्' इति धातोः लुङि रूपमिदम् । तस्मादन्यत्परमासेत्यत्र परम् उत्तममित्यर्थः । अन्यत्वार्थकथने प्रागुक्तान्यपदेन पौनरुक्त्यम् । विकृतरूपविनाशेत्यस्य विकृत-रूपस्य स्थूलरूपस्य विनाश इत्यर्थः । आदिपदेनानुपकारित्वं गृह्यते । तमोऽभिमानित्वात्, 'तमु ग्लाने' इति धातोः दुर्गारूपेण जगत्संहर्तृत्वाच्च श्रीरूपं सलिलं तमःपदेनोच्यते । प्रकृष्टं केतनं निकेतनं स्थानं यस्येति व्युत्पत्तिमाश्रित्याह **अपरिमितमिति** ॥ प्रकृत्याख्यं श्रीरूप-प्रकृत्याख्यमित्यर्थः । **गूळ्हं** गूढमित्यस्यार्थकथनं **गूहितमिति** ॥ प्रपञ्चस्य ब्रह्मानन्यत्वे प्रमाणा-भावादित्युपलक्षणम् । एवं सति आदिपदोल्लङ्घने कारणाभावादल्पाक्षरत्वाच्च वाचादिशब्देभ्य इत्येव सूत्रप्रवृत्तिप्रसङ्ग इत्यपि द्रष्टव्यम् । प्रमाणविरुद्धं चेत्युपलक्षणम् । ब्रह्मात्मकपदेनैकत्र बाधः । अन्यत्राभेद इति विरम्यव्यापारप्रसङ्गश्च ।

## भावबोधः

**साधनान्तरस्यैवाभाव इति** ॥ 'अद्भ्यः सम्भूतः' इत्यादिश्रुतेस्तु विश्वकर्मपदस्य हिरण्यगर्भपरत्वेन तत्पुरुषपदस्य हिरण्यगर्भस्रष्टृपुरुषपरत्वस्य सम्भवेन हिरण्यगर्भकर्तृकावान्तरसृष्टावब्वादिकारणसद्भावपरत्वेन न तद्विरोध इति भावः । 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत् सत् वायुरन्तरिक्षं चासत्' इति श्रुत्यनुसारेण 'नासदासीन्नोसदासीत्तदानीम्' इति पादं व्याचष्टे ॥ **तदानीं प्रलये पञ्च भूतानीति** ॥ रजःशब्द उपलक्षक इत्यभिप्रेत्य **गुणत्रयम्** इत्युक्तम् । परं व्योमाव्याकृताकाशमित्यन्यत्र व्याख्यातत्वेऽपि साधनसत्त्वाक्षेपप्रकरणादत्र परं व्योम प्रकृतिरिति व्याख्यातम् । न मृत्युरासीदित्यर्धं व्याचष्टे– **मृत्युरिति** ॥ तर्हि तदानीमिति श्रौतपदं स्पष्टार्थम् । प्रकेतशब्दार्थः **प्रभाव इति** ॥ किमावरीवरित्यर्धं व्याचष्टे ॥ **एतदभावादिति** ॥ कुहेत्यस्यार्थः **कुत्रेति** ॥ शर्मन् शर्मणि तादर्थ्ये च सप्तमीत्यभिप्रेत्य सुखार्थमित्युक्तम् । आवरिवरीत्यस्यार्थः **आवृणोत् इति** ॥ अवर्ततेति । आनीदवातमित्यर्धं व्याचष्टे ॥ **किं तु निवातमिति** ॥ अपरिमितमित्याङोऽर्थः । अवग्रहदर्शनात् । अप्रकेतं प्रभावरहितमिति स्पष्टम् । 'तद्वशस्य भावो नापरः' इत्यनुव्याख्यानं मनसि निधायाऽऽह ॥ **अन्यथेति** ॥ 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सुरूपाम्' इति पूर्वार्धसाहित्येनोदाहृतार्धं व्याचष्टे ॥ **रज इत्यादिना** ॥

नन्वत्र जीवेश्वरभेदानुक्तेः कथं तदभेदे एतद्विरोध इत्यत आह ॥ **अत्रेश्वरोऽपीति** ॥ न चैवमीश्वरस्य प्रकृतिभोगत्यागयोरयोग इति वाच्यम्; 'ऋतं पिबन्तौ' इति 'श्रोत्रं चक्षुः स्पर्शनं च' इत्याद्युक्तरीत्या प्रकृतिभोगस्य क्रियाप्रबन्धे लडिति सर्वदा प्रकृत्यबद्धत्वरूपप्रकृतित्यागस्य च सत्त्वादिति भावः ॥ **नित्यमबाध्यमिति** ॥ सदेत्यर्थस्य प्रकृतानुपयोगादित्यर्थः ॥ **एतेनेति** ॥ दृष्टानुसारेणेत्यनेनेत्यर्थः ॥ **श्रुतियुक्तिभ्यामिति** ॥ प्राक् केवला युक्तिः श्रुतिश्च शङ्किता । अत्र तु समुचितमिति भेदः ॥ **प्रबलबहुप्रमाणेति** ॥ अत एव 'अनाद्यनन्तम्' इत्यादिबहुप्रमाणोदाहरणमिति भावः । अनुभवस्य शास्त्रार्थविशिष्टत्वासम्भवादाह ॥ **तदनुकूल इति** ॥ शास्त्रार्थविषयतया शास्त्रानुकूल इत्यर्थः । शास्त्रानुकूलकरणानामप्युत्तमत्वादनुभवस्यैव तत्कुत इत्यत आह ॥ **साक्षादर्थविषयत्वादिति** ॥

## भावदीपः

शङ्कास्थनञोऽन्वयमाह ॥ **न तद्युक्तमिति** ॥ **असत्त्वेति** ॥ सूत्रे असच्छब्दो भावप्रधान इति दर्शितम् । असत्त्वतो ह्यस्य प्रकृतसङ्गतिमाह ॥ **साधनान्तरस्यैवाभाव इति** ॥ असद्वा इत्यादिप्राचीनवाक्यं तु सुधोक्तदिशा हिरण्यगर्भपरं न त्वीशपरमिति भावः । यदन्यद्वायो-श्चान्तरिक्षाच्चैतत्सदित्यादितत्वोद्योताद्युक्त्या सदसच्छब्दयोरर्थमाह ॥ **पञ्चभूतानीति** ॥ रजः-पदमुपलक्षणं मत्वाऽह ॥ **गुणत्रयमिति** ॥ 'किमावरीवः कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास' । इति मन्त्रशेषस्यान्वयाय व्युत्क्रमेणार्थमाह ॥ **मृत्युरिति** ॥ प्रकेतः प्रभाव इत्यर्थः । कुह कुत्र । शर्मन् शर्मणि । निमित्तसप्तमीति भावेनाह ॥ **सुखार्थ-मिति** ॥ आवरीव इत्यस्यार्थ **आवृणोदिति** ॥ वृञ्वरणे यङ्लुङि रूपमिति भावः । अवातं निवातम् । वातप्रेरणां विना । तच्छब्दार्थो **ब्रह्मेति** ॥ स्वधया स्वसामर्थ्येनानीद चेष्टत । अन-चेष्टायाम् । तस्मात् ह अन्यदिति पदच्छेदः । सिद्धान्तोपयोगाय शेषार्थोक्तिः । यद्वा अन्यत्किञ्चिन्नासेति सर्वासत्त्वोक्तेः शङ्कोपयोगित्वेनैवेति ज्ञेयम् । अत एव भाष्ये सर्वस्येत्युक्तिः । चोद्यमनूद्य नञोऽन्वयमाह ॥ **भवेदेतदित्यादिना** ॥ सूत्रे असद्व्यपदेशादित्येतत्सिद्धान्त-भागेऽप्यनुषज्यत इति भावेन तदुच्यत इत्युक्तं दर्शयन् शेषोक्त्या भाष्यं व्याचष्टे ॥ साधना-**नामिति** ॥ हिशब्दोक्तप्रसिद्धिं व्यनक्ति ॥ **अव्यक्तादाविति** ॥ हेत्वंशं व्यनक्ति ॥ **न चेत्यादिना** ॥ **सत्वश्रवणादिति** ॥ तथा च प्रागुक्तदिशा तत्सद्भावोक्त्यनुपपत्त्या न स्वरूपासत्वव्यपदेश इति भावः । प्रकृत्यादिसत्वोक्तिस्फोरणाय तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदमिति शेषार्थमाह ॥ **यत्तम इति** ॥ अप्रकेतमित्यस्यार्थो **अपरिमितमिति** ॥ आः इत्यस्यार्थ **आसीदिति** ॥ अस्तेर्लङि तिपि बहुलं छन्दसीतीडभावे 'हल्ङ्याभ्य' इति लोपे तिप्यनस्तेरिति दत्वाभावे रूपम् । उक्तं चोनार्ये चोनमिष्यत इत्यत्र ऋग्भाष्यटीकायाम् । गूळ्हं गूहितम् ॥ **अन्यथेति** ॥ स्वरूपासत्त्वाभिप्राय इत्यर्थः । तथा च वाक्यशेषे परशब्दान्यथानुपपत्त्या च न स्वरूपासत्त्वमर्थ इति भावः । यद्वा तद्वशस्य भावो न पर इत्यनुव्याख्यानसुधयो रीत्या न परः किं च नासेति वाक्यशेषे साक्षादेव स्वातन्त्र्यनिषेधाद्धर्मान्तरेणैवासत्त्वव्यपदेश इति भावेनोक्त-मन्यथेति । तेन भाष्यस्थादिपदार्थो विवृतो ध्येयः ॥ **अथेति** ॥ प्रकरणविच्छेदार्थोऽर्थांतरपरः ॥

(भावदीपः)

**निरूपित इति** ॥ स्याल्लोकवदित्यनेनेति भावः । चेतनाचेतनस्येति समाहारः ॥ **प्रमाणाभावादिति** ॥ स्पष्टयिष्यते चायं हेतुरनुपदमिति भावः । उत्तरार्धस्थक्रिययोर्विशेष्यभूतकर्माकाङ्क्षां पूरयितुम् 'अजामेकां लोहितशुक्लकृष्णां वह्वीं प्रजां जनयन्तीं सरूपाम्' इति पूर्वार्धमपि व्याचष्टे ॥ **रजस्सत्वेति** ॥ तावता जीवब्रह्माभेदे किं बाधकमित्यत आह ॥ **अत्रेश्वरोऽपीति** ॥ अद्वैतिमते मुक्तेश्वरयोरभेदादजोऽन्य इति श्रुत्यैव ब्रह्मणः संसारिभ्यो भेदोऽपि सिद्ध इति भावः ॥ **विवक्षितमिति** ॥ अनृतस्य विश्वस्य सत्यब्रह्माभेदायोगादिति भावः । नित्यं ह्येवेति वाक्यस्य प्रकृतोपयोगायार्थमाह ॥ **नित्यमबाध्यमिति** ॥ तुरेवार्थ इति भावेनाह ॥ **विरोध एवेति** ॥ **उदाहृतेति** ॥ अजो ह्येक इत्यादीत्यर्थः । उत्तरार्धव्यावर्त्यमाह ॥ **न चेति** ॥ तत्रेत्यस्यार्थो विरोध इति ॥ **प्रत्यक्षेति** ॥ साक्ष्यनुभवादिरूपेत्यर्थः ।

ननु नावाक्या युक्तिरिष्यत इत्युक्त्या अजो ह्येक इत्यादिश्रुतिविरोधेन केवलश्रुत्या चानन्यत्वासिद्धावपि वाचारम्भणमित्यादिश्रुतिसहितया प्रागुक्तयुक्त्या तत्सिद्धिरस्त्वित्यत आह ॥ **एतेनेति** ॥ दृष्टानुसारेणेति वचनेनेत्यर्थः ॥ **श्रुतियुक्तिभ्यामिति** ॥ अन्योन्यसहिताभ्यामित्यर्थः । एतेनेत्युक्तं व्यनक्ति ॥ **प्रत्यक्षस्येति** ॥ 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्यलौकिकविषयं साक्ष्यन्यप्रत्यक्षापेक्षं चेति भावः ॥ **अभासत्वाच्चेति** ॥ तच्च तत्वनिर्णयादावन्यत्र विस्तृतमिति भावः । साक्षिप्रत्यक्षस्य सर्वस्मात्प्रबलत्वेऽपि प्रत्यक्षमात्रस्य श्रुतितो दुर्बलत्वात् पूर्वत्रारुच्या दृष्टशब्दं प्रकारान्तरेण व्याचष्टे ॥ **द्रष्टुमितीति** ॥ **तदर्थ एव** विरुद्धार्थ एव । कारणमिति शेषोक्तिः । शास्त्रमात्रविषय इति भ्रान्तिनिरासाय शास्त्रार्थयुक्तशब्दार्थमाह ॥ **तदनुकूल इति** ॥ तेन तात्पर्यलिङ्गाद्यनुनिरासाय शास्त्रार्थयुक्तशब्दार्थमाह ॥ **तदनुकूल इति** ॥ तेन तात्पर्यलिङ्गाद्यनुभवोऽपि सङ्गृहीतः । साक्षीति भ्रान्तिनिरासाय वा भ्रमसाधारण्यस्य वा निरासाय स्मृत्यन्यज्ञानभ्रमनिरासाय वाऽनुभवशब्दार्थमाह ॥ **यथार्थज्ञानमिति** ॥ केवलप्रमाणरूपमित्यर्थः । उत्तमत्वे हेतुः ॥ **साक्षादर्थविषयत्वादिति** ॥ यद्यप्यनुप्रमाणान्यपि साक्षादेव वस्तुविषयकाणि न तु परम्परया । यथोक्तं सुधायां न विलक्षणत्वादितिनये अनुप्रमाणमेतानि ह्यक्षयुक्तिवचांस्यत इत्येतद्व्याख्यावसरे ज्ञानविषय एव हि करणानां विषय इत्यादि । तथाप्यत्रार्थशब्दस्य ज्ञेयवाचित्वाज्ज्ञेयविषयत्वं चानुप्रमाणानां ज्ञानोपाधिकत्वेन न साक्षात् । ज्ञानस्य तु आत्मोपाधिकत्वेन न तु स्वव्यतिरिक्तोपाधिकत्वेनेति तात्पर्यकत्वं ध्येयम् । उक्तं च तत्रैव

(भावदीपः)

सुधायां यथार्थज्ञानजनका यथार्थयुक्तयः स्मृता इत्येतद्व्याख्यावसरे ज्ञानमेव हि विषयस्य ज्ञेयतायां साक्षादुपाधिरित्यादि । यत्तु प्रमाणपद्धताविदं च साक्षाज्ज्ञेयविषयीकारित्वात्केवलमित्युच्यत इत्यादिवाक्यं तदप्येवं नेयम् ॥ **अनुप्रमाणस्येति** ॥ यथार्थज्ञानसाधनस्येति भावः । भाष्ये अनुमाद्या इत्याद्यशब्दोऽनुमाविशेषार्थापत्त्यादिपर इति भावेनाह ॥ **अनुप्रमाणमनुमानमिति** ॥ यथार्थज्ञानसाधनमनुमानमित्यर्थः ।

## अभिनवचन्द्रिका

'नासदासीन्नोसदासीत्तदानीं नासीद्रजो नो व्योमापरो यत्' । 'किमावरीवः कुहकस्य शर्मन्नम्भः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः किञ्चनास' इति ऋचं व्याचष्टे **तदानीं प्रलय इति** ॥ नासदासीन्नोसदासीदित्यनेन लब्धमर्थमाह – **पञ्चभूतानि नासुरिति** ॥ 'तम आसीत्तमसा गूळमग्रेऽप्रकेतं सलिलं सर्वमा इदं इति वाक्यं व्याचष्टे – **यत्तमोऽपरिमितमिति** ॥ 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' इति वाक्यं व्याचष्टे – **रजस्सत्त्वतमोगुणात्मिकामिति** ॥ **मुक्तामुक्तयोः परस्परं भेदः श्रूयत इति** ॥ यद्यपि अत्र जीवेश्वरभेदसाधनार्थमेव प्रमाणमुदाहर्तव्यं न तु मुक्तामुक्तयोः, तथापि अनेन वाक्येन मुक्तामुक्तयोर्भेदसिद्धौ तस्य अविद्यानिवृत्तौ अनुवर्तमानस्य आविद्यकत्वायोगेन पारमार्थिकत्वस्यैव वक्तव्यत्वेन मुक्तानां परस्परं भेदे वास्तवे सिद्धे सति तेषां परमेश्वरभेदोऽप्यर्थात् सिध्यति । अत्यन्तं भिन्नानामेकेनैक्यायोगादित्याशयेनेदं वाक्यमुदाहृतम् । यद्यपि जीवेश्वरभेदप्रतिपादकानि स्पष्टवाक्यानि सन्ति' तथापि मीमांसार्थं शिष्यबुद्धिशुद्धये इदं वाक्यमुदाहृतमिति द्रष्टव्यम् । 'इतः परं अत्रेश्वरोऽपि मुक्त उच्यते' इति टीकायां श्रूयमाणं वाक्यं न टीकावाक्यम्, अपि तु 'मुक्तामुक्तयोः परस्परं भेदः श्रूयत' इति टीकावाक्यव्याख्यानाय केनचिद्विदुषा निर्मितं दैववशाट्टीकायां मिलितमिति बोध्यम् । चन्द्रिकाभावबोधयोस्तु टीकाबहिर्भूतमपीदं वाक्यं टीकया संवलितत्वात् गङ्गाजलानुप्रविष्टयामुनोदकवत् सेव्यमेवेति द्योतनाय व्याख्यातमिति बोध्यम् । अवश्यं चैतदेवं विज्ञेयम् भाष्ये श्रुतौ च मुक्तपदाभावेनात्रेश्वरो मुक्त उच्यत इति व्याख्यानायोगात् । न हि व्याख्येयग्रन्थेऽविद्यमानपदव्याख्यानाय प्रेक्षावान् प्रवर्तते । न च 'अत्रेश्वरोऽपि मुक्त उच्यत' इत्यनेन

(अभिनवचन्द्रिका)
'जहात्येनां भुक्तभोगामजोऽन्य' इत्यंशात् ईश्वरोऽपि प्रतिपाद्यत इत्यर्थो विवक्षित इति वाच्यम् । नित्यमुक्तस्य 'भुक्तभोगां जहाति' इत्युक्त्ययोगात् ।

सत्तर्कदीपावल्यां तु – 'न च प्रकृत्यादिकं विना जगत्सृष्ट्यादिरित्यत्र किञ्चित्प्रमाणमस्ति' इत्याह – **न चेति** ॥ प्रलयेऽपि प्रकृतिपुरुषसद्भावे प्रमाणमाह – **अजो ह्येक इति** ॥ 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिनोक्तां न जायते इत्यजां प्रकृतिं एको न जायत इत्यजो जीवो, जुषमाणोऽनुशेते प्रलये, जहात्येनां भुक्तभोगामजोऽन्यो मुच्यमान इत्यर्थः । एतदेव प्रमाणान्तरैर्द्रढयति । 'अनाद्यनन्तम्' इत्यादिनेति व्याख्यातम् ।

**साक्षादर्थविषयत्वादिति** ॥ मुख्यतया ज्ञेयविषयीकारित्वादित्यर्थः । **सर्वविषयत्वान्मध्यमत्वमिति** ॥ अमुख्यतयेति शेषः । ततश्च अमुख्यतया सर्वज्ञेयविषयीकारित्वान्मध्यमत्वमित्यर्थः । अयमत्र विवेकः । आगमस्य सर्वज्ञेयविषयीकारित्वस्य ज्ञानवन्मुख्यत्वाभावात् तदपेक्षया अवरत्वमिति ।

## वाक्यार्थमुक्तावली

**उक्तमाक्षिप्येति** ॥ तटस्थाक्षेपोऽयमिति ज्ञेयम् । सूत्रेऽवरस्य सत्वमित्यनुवर्तते । असद्व्यपदेशादिति भावप्रधानो निर्देशः । सर्वस्येति शेष इत्यभिप्रेत्य प्रवृत्तं भाष्यं व्याचष्टे **साधनान्तरस्येत्यादिना** ॥ 'नासदासीन्नोसदासीत्तदानीं नासीद्रजो न व्योमापरो यत् । किमावरीवः कुहकस्य शर्मन्नंभः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यं न परः किंचनासेति श्रुत्यर्थमाह **तदानीमित्यादिना** ॥ **पञ्चभूतानीति** ॥ सदसच्छब्दयोर्मूर्तामूर्तपरत्वादिति भावः । रजःशब्दो गुणान्तरोपलक्षक इत्याशयवतोक्तं **गुणत्रयमिति** ॥ व्योतमस्मिन् जगदिति व्युत्पत्या व्योमशब्दः प्रकृतिपर इत्याह **प्रकृतिरिति** ॥ अमृतं स्वर्गादि । प्रकेतः प्रभावः । शर्मन् शर्मणि । तादर्थ्ये सप्तमीत्याह **सुखार्थमिति** ॥ निवातं वातप्रेरणया रहितं परं श्रेष्ठम् । सूत्रे असद्व्यपदेशादित्येतत् सिद्धान्तेऽप्यनुवर्तत इति भावेन भाष्ये तदुच्यत इत्युक्तम् । तच्छेषोक्त्या व्याचष्टे **साधनानामित्यादिना** ॥ **लोके दृष्टत्वादिति** ॥ पिशाचादावव्यक्तत्वेन परतन्त्रे गृहक्षेत्रादौ परतन्त्रत्वेन सुमङ्गल्यामपि पत्युरधर्मत्वेनापत्तिरियमिति । सत्यपि विशेष्ये देवदत्तादौ आगन्तुकरूपनाशेन लोके सत्वव्यवहारस्य

(वाक्यार्थमुक्तावली)

दृष्टत्वादित्यर्थः । न च स्थितिकालेऽपि पारतन्त्र्यसत्वादसद्व्यपदेशः स्यादिति वाच्यम् । प्रयोगे सत्येव निमित्तास्यानुसरणीयत्वेन निमित्तमस्तीत्येतावता प्रयोगस्य नियम्यत्वायोगात् । 'तम आसीत्तमसा गूळ्हमग्रे प्रकेतं सलिलं सर्वमा इदम्' इत्यस्यार्थमाह **यत्तम इति** ॥ अप्रकेत-मित्यस्याविज्ञातमित्यर्थः । तस्य तात्पर्यम**परिमितमिति** ॥ **प्रकृत्यारव्यं** तम इति । चित्प्रकृत्यारव्यं तम इत्यर्थः ।

सर्वाधित्वेन तमो हि दुर्गेत्युक्तः । आः इति श्रौतपदस्यार्थो **गूहितमासीदिति** ॥ भावत्रोधे तु अपरिमित्याङोऽर्थ इत्युक्तम् ॥ **अन्यथेति** ॥ स्वरूपासिद्धित्वाभिप्राय इत्यर्थः । ननु प्रलयेऽवसितं चेत्प्रकृत्यादि तस्य स्वातन्त्र्यादिधर्माभावः कुतः येनैवं व्याख्यायत इति चेत् वाक्योपक्रमतच्छेषयोर्विरोधादर्थापत्त्यैवेति ब्रूमः । श्रूयते च स्पष्टमित्याशयवान् वाक्यशेषा-दित्यनुव्याख्यानुसारेण प्रकारान्तरेण व्याचष्टे ॥ **अन्यथेति** ॥ तस्माद्धान्यं न पर इति वाक्य-शेषात् इह हि ब्रह्मण अन्यत्प्रकृत्यादिकम् । परः परं स्वातन्त्र्यादिधर्मोपेतं वा आस आसीदिति तत्सद्भावाभ्युपगमेन परत्वं निषिध्यते । अन्यथा परशब्दवैयर्थ्यादिति सुधानुसारेण व्याख्येयम् । ततश्च साधनादेः सर्वस्यासत्वव्यपदेशादवरस्य साधनस्य सत्वं नेति चेन्न । पारतन्त्र्यादि-धर्मान्तरविवक्षयैव साधनानामसत्वे तम आसीदिति ईश्वरान्यसत्वे वाक्यशेषसत्वादन्यथा तद्विरोधात् । पारतन्त्र्येऽपि न परः किञ्चनासेति वाक्यशेषादिति सूत्रार्थः ॥ **परकृतामिति** ॥ विवर्तवादिकृतामित्यर्थः ॥ **अतीतेति** ॥ फेनतरङ्गादिदृष्टान्तेन व्यावहारिको भेद उक्त इत्यर्थः ॥ **इत्यादिश्रुतेरिति** ॥ 'इदं सर्वं यदयमात्मा' इति श्रुतिः आदिशब्दाद्गृह्यते । जहात्येनामित्यत्रै-तच्छब्दपरामृष्टं दर्शयितुम् अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजा जनयन्तीं सरूपाम्' इति पूर्वार्धमपि व्याचष्टे ॥ **रजःसत्वेति** ॥ नन्वत्र मुक्तामुक्तभेदोक्तावपि जीवेश्वरभेदानुक्तेः कथं तदभेदे एतद्विरोध इत्यत आह ॥ **अत्रेश्वरोऽपीति** ॥ अत्र जहात्येनामिति वाक्ये मुक्त उच्यते । अद्वैतिमते मुक्तेश्वरयोरभेदान्मुक्त इत्यनेनेश्वरोऽप्युच्यते । ततश्च मुक्तामुक्तयोर्भेदे जीवेश्वरयोरेव भेदः प्राप्त इति भावः । अनेन मुक्तपदाभाववानीश्वरोऽपि **मुक्त इत्युच्यत** इति वाक्यमसमञ्जस-मिति निरस्तम् । अस्मन्मते तु अन्यैर्भुक्तभोगाम् । 'ऋतं पिबन्तौ' । 'श्रोत्रं चक्षुः' इत्यादेः । स्वेन वा भुक्तभोगां नित्यं जहाति । क्रियाप्रबन्धे लङिति । सर्वदा बद्धत्वरूपप्रकृतित्यागस्य विवक्षितत्वान्नानुपपत्तिः । सत्तर्कदीपावल्यां न चेत्यादिभाष्यं रीत्यन्तरेण व्याख्यातं तत्प्रकारश्च

(वाक्यार्थमुक्तावली)

प्रमेयमुक्तावल्यां प्रदर्शितोऽनुसन्धेयः ॥ **नित्यमबाध्यमिति** ॥ सदेत्यस्य प्रकृतोपयोगाभावादिति भावः । तत्र अदृष्टानुसारेणेत्यत्रेत्यस्यार्थमाह ॥ **विरोध इति** ॥ प्रत्यक्षानुसारेण स्वस्येश-भेदग्राहकसाक्षिप्रत्यक्षानुसारेण । एतेन दृष्टानुसारेणेति वचनेन प्राक्केवला युक्तिः श्रुतिश्च शङ्किता। अत्र तु समुच्चितेति भेदः । अहं ब्रह्मेत्यादि प्रत्यक् चैतन्यानुवादेनैक्यपराणां साक्षिप्रत्यक्षविरोधेऽपि 'सर्वं खल्विदं ब्रह्म' इत्यादेस्तदभावात्कथमित्यतोऽर्थान्तरमाह दृष्ट-मितीति । निरवकाशत्वादिना प्रबलबहुप्रमाणदर्शनमित्यर्थः । ईशोऽनीश इति भाष्यस्यायमर्थः । इतिशब्दः प्रत्येकमभिसम्बध्यते । अत एव द्विर्ग्रहणम् । एवमपिशब्दोऽपि । ततश्चेशोऽप्यनीश इत्यादिवत् जगदपि मिथ्येत्यादिवदित्याद्यर्थसाधकवचनयुक्तिवदथान्यानि विरुद्धानि प्रमाणानि युक्तयश्च बहुभिर्वैदिकैः प्रमाणैराभासा इति ज्ञेयाः । इति इत्यादिवत् इत्याद्यर्थवन्ति प्रमाणानि युक्तयोऽथ युक्तयश्चेति मतुब्वा तत्वोद्योतटीकायां व्यासस्मृतेरेवमेवार्थ उक्त इति ज्ञेयम् । **विप्रलम्भोऽथवा भ्रमः कारणमिति** ॥ अनुभवस्य शास्त्रार्थयुक्तत्वं न सम्भवति सामानाधि-करण्यायोगादित्यत आह ॥ **तदनुकूल इति** ॥ शास्त्रार्थविषयत्वेन सजातीयसंवादरूपतया शास्त्रानुकूल इत्यर्थः ॥ **साक्षादिति** ॥ स्वोपाध्यज्ञेयविषयीकारित्वादित्यर्थः ॥ **तत्साधनीभूतस्येति** ॥ स्वोपाध्यज्ञेयविषयीकारिज्ञानसाधनत्वेन सर्वविषयत्वेऽपि मध्यमत्वमिति भावः । भाष्येऽनुमाद्या इत्याद्यपदेनार्थापत्यादयस्तद्विशेषा गृह्यन्ते ।

## तत्त्वसुबोधिनी

यदन्यद्द्यावोश्चान्तरिक्षाच्चैतत्सत् वायुरन्तरिक्षं वा सदिति श्रुत्यनुसारेण 'नासदासीन्नोसदा-सीत्तदानीम्' इति पदं व्याचष्टे ॥ **तदानीमित्यादिना** ॥ रजःशब्दः उपलक्षकः इत्यभिप्रेत्य **गुणत्रयम्'** इत्युक्तम् । परं व्योमाकाशमित्यन्यत्र व्याख्यातत्वेऽपि साधनसत्वाक्षेपप्रकरणादत्र परं व्योम प्रकृतिरिति व्याख्यातम् । न मृत्युरासीदित्यर्धं व्याचष्टे ॥ **मृत्युरिति** ॥ तर्हि तदानीमिति श्रौतपदं स्पष्टार्थम् । प्रकेतशब्दार्थ **प्रभावः इति** ॥ किमावरीव इत्यर्थं व्याचष्टे ॥ **एतदभावा-दिति** ॥ कुहेत्यस्यार्थः **कुत्रेति** ॥ शर्मन् शर्मणि तादर्थ्ये सप्तमीत्यभिप्रेत्य **सुखार्थम्** इत्युक्तम् । आवरीवरित्यस्यार्थः **आवृणोदिति** ॥ आवर्तते इति । आनीदवातमित्यर्धं व्याचष्टे ॥ **किं त्वित्यादिना** ॥ अव्यक्त(त्व)परतन्त्रावरत्वव्यपदेशः क्व दृष्टः इत्यत आह ॥ **अव्यक्तादाविति** ॥

(तत्त्वसुबोधिनी)

**अपरिमितमिति** अप्रकेतमित्यस्य, आ इत्यस्य व्याख्यानं **आसीदिति** ॥ अस्ते र्लङि तिपि, 'इतश्च' इति इकारलोपे, आडजादीनाम्' इति आडागमे, 'बहुलं छन्दसि' इति इडभावे हलूङ्याभ्यः 'इति तूलोपे' 'तिप्यनस्तेः' इति दत्वाभावे आ इति रूपसिद्धिरिति द्रष्टव्यम् । 'तद्वशस्य भावो नापरः' इत्यनुव्याख्यानं मनसि निधायाऽह- **अन्यथेति** ॥ 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सुरूपाम्' इति पूर्वार्धसाहित्येन उदाहृतार्धं व्याचष्टे ॥ रज **इत्यादिना** ॥ नन्वत्र जीवेश्वरभेदानुक्तेः कथं तदभेदे एतद्विरोध इत्यत आह ॥ **अत्रेश्वरोऽपीति** ॥ अद्वैतिमते मुक्तेश्वरयोरभेदादजोऽन्य इति श्रुत्यैव ब्रह्मणः संसारिभ्यो भेदोऽपि सिद्ध इत्यर्थः । न चेश्वरस्य प्रकृतिभोगत्यागयोरयोग इति वाच्यम् । ऋतं पिबन्तौ' इति, 'श्रोत्रं चक्षुः स्पर्शनं च' इत्याद्युक्तरीत्या प्रकृतिभोगस्य क्रियाप्रबन्धे लडिति सर्वदा प्रकृत्यबद्धत्वरूपप्रकृतित्यागस्य सत्त्वादिति भावः । सदेत्यस्य प्रकृतौ अनुपयोगादाह ॥ **नित्यमबाध्यमिति** ॥ एतेनेति ॥ दृष्टानुसारेणेत्यनेनेत्यर्थः ॥ **श्रुतियुक्तिभ्यामिति** ॥ प्राक् प्रबला युक्तिः श्रुतिश्च शङ्किता, अत्र तु श्रुतिसहिता युक्तिरिति भेदः ॥ **ततोऽपीति** ॥ श्रुतियुक्तिभ्यामपीत्यर्थः । साक्षिप्रत्यक्षस्य सर्वस्मात् प्रबलत्वेऽपि प्रत्यक्षमात्रस्य श्रुतितो दुर्बलत्वात् पूर्वत्रारुच्या दृष्टशब्दं प्रकारान्तरेण व्याचष्टे ॥ **द्रष्टुमिति** ॥ अत एव अनाद्यनन्तमित्यादिबहुप्रमाणोदाहरणमिति ज्ञेयम् । अनुभवस्य शास्त्रविशिष्टत्वासम्भवादाह ॥ **तदनुकूल इति** ॥ शास्त्रविषयतया शास्त्रानुकूल इत्यर्थः । शास्त्रानुकूलकरणानामपि उत्तमत्वादनुभवस्यैव तत्कृत इत्यत आह ॥ **साक्षादर्थविषयत्वादिति** ॥ **तत्साधनीभूतस्येति** ॥ यथार्थज्ञानसाधनीभूतस्येत्यर्थः । प्रत्यक्षानुमानयोः अनुप्रमाणमिति विशेषणं फलरूपप्रमाणव्यावृत्त्यर्थं, आगमे तु तत्साधनीभूतस्येत्यनेनैव तद्व्यावृत्तिः इति भावः ।

## वाक्यार्थविवरणम्

**अव्यक्तत्वं** कार्यानुन्मुखत्वम् ॥ **अव्यक्तादाविति** ॥ अव्यक्ते परतन्त्रे अधमे विकृतरूपे विनष्टे च वस्तुनीत्यर्थः । **तद्व्यपदेशस्य** असत्त्वव्यपदेशस्य । सलिलं भूत्वा आसीदिति । 'तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम्' इत्यत्र सर्वम् आ इदमिति पदच्छेदः । इमामृचं व्याचष्टे **यत्तम इत्यादिना** ॥ **अप्रकेतम्** इत्यस्य **अपरिमितम्** इति व्याख्यानम् । आ इत्यस्य आसीदित्यर्थः इति वेदभाष्ये साधितत्वात् । जीवेश्वरयोर्भेदाप्राप्तेरसङ्गतमेतदित्यत आह ॥ **अत्रेति** ॥

(वाक्यार्थविवरणम्)

ननु बन्धध्वंसाधिकरणत्वं मुक्तत्वम् । अतः कथमीश्वरस्य मुक्तत्वमिति चेन्न । बन्धा-भावाधिकरणत्वमेव मुक्तत्वं विवक्षितम् । स चाभावः क्वचिद् ध्वंसः क्वचिदत्यन्ताभाव इत्यर्थः । एतेनेत्युक्तं विशदयति ॥ **प्रत्यक्षस्येति** ॥ **ततोऽपि** ॥ **श्रुतितोऽपि** ॥

ननु 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इत्युक्तत्वेन दृष्टशब्दोक्तप्रत्यक्षस्य कथं श्रुतितः प्राबल्यमित्यतः 'प्रमाणैर्बहुभिर्ज्ञेया' इति वक्ष्यमाणप्रमाणानुसारेण दृष्टशब्दं प्रकारान्तरेण व्याचष्टे ॥ **द्रष्टुमितीति** ॥ अत एव सत्यतासाधनानि बहुप्रमाणान्युदाहृतानीति ध्येयम् । **सर्व-विषयत्वादिति** ॥ अतीतानागतातीन्द्रियादिसर्वविषयकत्वादित्यर्थः ॥ **असर्वविषयस्येति** ॥ चक्षुरादेरतीताद्यविषयकत्वादिति भावः ॥ **असर्वविषयमिति** ॥ अतीतादिविषयकत्वेऽपि यज्ञादौ पूर्वाभिमुखतया दूर्वास्थापनस्य पुण्यविशेषसाधनत्वं न ह्यनुमातुं शक्यमित्यसर्वविषयमित्यर्थः । अस्य सर्वावरत्वेऽसर्वविषयत्वं न हेतुः । प्रत्यक्षेऽनुप्रमाणेऽतिप्रसक्तेः । किन्तु अनुमानशब्द-वाच्यत्वम् । अनुसृत्य मानं ह्यनुमानम् । यथोक्तं 'प्रत्यक्षशब्दानुसारादनुमेति प्रकीर्तिता' इति । एतदेव अभिप्रेत्यैव अत्र 'प्रमाणान्तरसाहाय्ययुक्तम्' इत्युक्तमिति ज्ञेयम् ।

## वाक्यार्थमञ्जरी

न ह्येतद्द्वयं प्रकारान्तरेण युक्तम् । अतः स्वातन्त्र्येण नास्ति तदधीनतयाऽस्तीत्येवाङ्गीकार्यं तथा चेदमपि नन्वित्यादि चोद्योत्तरमित्यर्थः । नासदासीदिति प्रलये सर्वासत्वप्रतिपादनेन साधनस्यैवाभावान्न तस्येश्वराधीनत्वमिति चेन्न । स्वतन्त्रत्वादिधर्मान्तरेणैवासत्वव्यपदेशो न स्वरूपेण । तदभावात्कुतः तम आसीदिति वाक्यशेषे प्रकृत्यादिसत्त्वप्रतिपादनेन तदन्यथानु-पपत्तेरित्यर्थः । 'नासदासीन्नोसदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् । किमावरीवः कुहकस्य शर्मन्नंभः किमासीद्गहनं गभीरम् । न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्नपरः किं च नास' इति श्रुतिं व्याचष्टे ॥ **तदानीमिति** ॥ यदन्यद्द्यावोश्चान्तरिक्षाच्चेत्तत्सदिति वाय्वन्तरिक्षं चासदिति श्रुत्यनुसारेणासच्छब्दस्य वाय्वाकाश-परत्वात्सच्छब्दस्य पृथिव्यप्तेजःपरत्वादाह ॥ **पञ्चभूतानीति** ॥ रजःशब्दउपलक्षक इति भावेनाह ॥ **गुणत्रयमिति** ॥ परं व्योमाव्याकृताकाशमिति तत्वोद्योतटीकायां व्याख्यातत्वेऽपि साधन-सत्वाक्षेपप्रकरणादत्र परं व्योम प्रकृतिरिति व्याख्यातम् । तर्हि तदानीमिति स्पष्टत्वान्नोक्तम् ।

(वाक्यार्थमञ्जरी)

प्रकेत इत्यस्यार्थः प्रभाव इति कुहेत्यस्य कुत्रेति शर्मन्नित्यस्य सुखार्थमिति आवरीव इत्यस्या-वर्तेतेति निवातं वातप्रेरणां विना ॥ **विकृतेति** ॥ महदाद्यात्मना परिणतरूपं नासेत्यर्थः ॥ **धर्मान्तरापेक्षयेति** ॥ व्यक्तं नासीदित्यादि ध्येयम् । 'तम आसीत्तमसा गूळ्हमग्रे प्रकेतं सलिलं सर्वमा इदम्' इति वाक्यं व्याचष्टे ॥ **यत्तम इति आ** इत्यस्यार्थो **अपरिमितमिति** अप्रकेतं प्रभाव-रहितमिति स्फुटम् । अन्यथा स्वरूपतो असत्वे व्यवहारं अयं भोक्ता इदं भोग्यमिति लौकिकैः क्रियमाणम् ॥ **वाचारम्भणमिति** ॥ विकारो नामधेयं विकारि सर्वं जगत् वाचारम्भणं वागा-लम्बनमात्रं न वस्तुतो ब्रह्मव्यतिरेकेणास्तीति तदभिमतोऽर्थः । 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्' इति पूर्वार्धेन सहाजो ह्येक इति श्रुतिं व्याचष्टे ॥ **रजःसत्वेति** ॥ तर्हि जीवेशभेदे किमायातमित्यत आह ॥ **अत्रेति** ॥ तस्यापि गुहाधिकरणन्यायेन भोगस्य सर्वदा तदबद्धत्वरूपत्यागस्य च सद्भावात् क्रियाप्रबन्धे लडिति स्मरणादिति भावः । प्रकृतोप-योगमाह ॥ **नित्यमबाध्यमिति** ॥ **एतेन दृष्टानुसारेणेत्यनेन** ॥ **श्रुतियुक्तिभ्यामिति** ॥ एकैकया असिद्धत्वेऽपि समुचितयोरनेकत्वेन प्राबल्यात्तत्सिद्धिर्भविष्यतीति भावः ॥ **ततोऽपीति** ॥ अनेकत्वापेक्षया स्वभावबलीयस्त्वस्य तयोः स्वभावो बलवानिति प्रमाणसिद्धत्वादिति भावः ॥ **आभासत्वाच्चेति** ॥ तथा च नानेकत्वेऽपि प्राबल्यमिति भावः । अनाद्यनन्तमित्यादि-बहुप्रमाणोदाहरणानुरोधेनाह ॥ **प्रबलबहुप्रमाणेति** ॥ विभज्य विविच्य तदर्थे प्रतीयमानार्थेऽनु-भवस्य शास्त्रविशिष्टत्वाभावादाह ॥ **तदनुकूल इति** ॥ शास्त्रार्थविषयतया शास्त्रानुकूल इत्यर्थः ॥ **तत्साधनत्वेति** ॥ ज्ञानावरत्वे हेतुः एवमनुप्रमाणस्येत्याद्यपि सर्वविषये प्रत्यक्षादुत्तमत्वे प्रमाणान्तरत्वेति प्रत्यक्षावरत्वे हेतुः ।

## सूत्रभाष्यम्

**॥ ॐ युक्तेः शब्दान्तराच्च ॐ ॥ १९ ॥**

**'साधनानां साधनत्वं यदात्माधीनमिष्यते ।**
**तदा साधनसम्पत्तिरैश्वर्यद्योतिका भवेत्' इत्यादेः साधनान्तरेण सृष्टिर्युक्ता ।**

**'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ'** (म.ना.उ.१-१२) **इत्यादि शब्दान्तराच्च ।**

## सत्तर्कदीपावली

सत्वाच्चावरस्येति यदुक्तं तत्प्रपञ्चयति । युक्तेरित्यादिना साधनसत्तादेरीश्वराधीनत्वेऽपि साधन-सम्पत्तेरीशितव्यतया भगवदैश्वर्यद्योतकत्वेनोपयुक्तत्वात् 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इत्यादि-शब्दान्तर्गतघटादीनां कर्तृप्रयोज्यसाधनजन्यत्वदर्शनात् । प्रकृत्यादिसाधनैरीश्वरो जगत्सृजतीति युक्तमेव ।

## तत्त्वप्रदीपिका

अष्टौ लोकपालाः ।

## तत्त्वप्रकाशिका

ननु साधनान्तरमभ्युपगम्य तस्येश्वराधीनत्वकथनाद्वरं साधनाभावकथनमेव साधनशून्यस्य सृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्यलाभादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। **युक्तेरिति** ।। न महिमाधिक्यलाभाय साधनाभावोऽभ्युपेयः । साधनान्तरेण सृष्टेरपि युक्तत्वात् महिमाविरोधित्वात् स्वाधीनसाधनैः प्रवृत्तेरप्यैश्वर्यद्योतकत्वस्य साधनानामिति वाक्यसिद्धत्वाल्लोकसिद्धत्वाच्च । तर्ह्यु-भयथापि महिमोत्कर्षसिद्धौ किं साधनसत्त्वपक्षाग्रहेणेति चेन्न । निरपेक्षतया स्रष्टृत्वस्योभयपक्षेऽपि साम्येन महिमोत्कर्षलाभसाम्येऽपि साधनसत्वाभ्युपगमेनैकाकिनः सकाशात्सोपस्करस्याधिकोत्कर्ष-लाभात् 'अभ्यः सम्भूतः' इत्यादौ प्रतीतेश्च तत्राग्रह इति भावः । प्राचीनश्रुतिसङ्ग्रहार्थं शब्दान्तरा-दित्युक्तम् ।

## गुर्वर्थदीपिका

लोकसिद्धत्वादित्यस्य एकाकिराजापेक्षया स्वाधीनचतुरङ्गसैन्यसहितस्य राज्ञो महिमा-दर्शनादिति भावः ।

## भावबोधः

**अद्भ्यः सम्भूत इत्यादौ प्रतीतेश्चेति** ।। ईश्वरकर्तृकहिरण्यगर्भसृष्टावेव साधनान्तरप्रतीते-रित्यर्थः ।। **प्राचीनश्रुतिसङ्ग्रहार्थमिति** ।। हिरण्यगर्भपदोपेतैतच्छ्रुतिसमाख्यानात् 'अद्भ्यः सम्भूतः' 'पृथिव्यै रसाच्च' इति श्रुतेरपि ईश्वरकर्तृकतत्पुरुषपदोक्तहिरण्यगर्भसृष्टावेव साधनान्तर-प्रतिपादकत्वमिति भावः । अत एव पूर्वं वाक्यद्वयसङ्ग्रहार्थमभ्यः सम्भूत इत्यादावित्येवोक्तम् ।

(भावबोधः)
सुधायां तु– पूर्वोदाहृतशब्दविलक्षणः शब्दः शब्दान्तरम् । तेनेदमुक्तं भवति । यद्यपि प्रागुदाहृताः शब्दाः कथञ्चिदन्यथा नेतुं शक्यन्ते । तथाप्ययं न तथा । अत्र ईश्वरकर्तृकायामेव सृष्टौ कारणान्तरसद्भावश्रवणात् । न हि हिरण्यगर्भसृष्टिरनीश्वरकर्तृका तस्य प्रथमजत्वादिति शब्दान्तरशब्दः प्रकारान्तरेण व्याख्यातः ।

अत्राद्ये– स्वतन्त्रकारणस्य ब्रह्मानन्यत्वं प्रतिज्ञाय तत्र श्रुतियुक्तिरूपप्रमाणोक्तिः । द्वितीये– स्वतन्त्रसाधनसद्भावाङ्गीकारे बाधकोक्तिः । तृतीये– द्वितीयोक्ततर्कस्येष्टापादनरूपत्व-परिहाराय 'अद्भ्यः सम्भूतः' इत्यादिश्रुतेः परतन्त्रसाधनपरत्वोक्तिः । चतुर्थे– साधनस्वरूप-स्यैवाभावेन श्रुतेः परतन्त्रसाधनपरत्वासम्भव इत्याशङ्कापरिहाराय 'नासदासीत्' इति श्रुति-विरोधमाशङ्क्य तस्याः सावकाशत्वोक्तिः । पञ्चमे– परतन्त्रसाधनानभ्युपगम एव महिमाधिक्य-लाभान्नासदासीदिति श्रुतेः स्वरूपनिषेधपरत्वमेवास्त्विति शङ्कापरिहाराय साधनसद्भावाङ्गीकारे उक्तानुपपत्त्यभावस्य श्रुतिरूपप्रमाणस्य चोक्तिः । षष्ठे– तत्रैव युक्तिरूपसाधकोक्तिः । सप्तमे– पटादिदृष्टान्तेनैव महदादेः स्वतन्त्रसाधनजन्यत्वादिकमपि स्यादित्याशङ्कापरिहाराय प्रकृत्यादेः परमात्मतन्त्रत्वे प्राणादिदृष्टान्तोक्तिरिति सूत्रक्रमः ।

## भावदीपः

युक्तेरिति सौत्रहेतोर्योग्यसाध्यान्वयायोक्तचोद्यं निराह ॥ **न महिमेति** ॥ भाष्यं सौत्रानु-गुण्याय हेतुत्वेन व्याचष्टे ॥ **साधनान्तरेणेति** ॥ युक्तत्वादित्येतद्व्यनक्ति ॥ **महिमेति** ॥ कुत इत्यत इत्यादेरित्यन्तभाष्यार्थमाह ॥ **स्वाधीनेति** ॥ आदिपदार्थमाह ॥ **लोकेति** ॥ लोके नानाशिल्पेषु निपुणस्य स्वयमेव साधनसम्पादनेन कार्यकारणदर्शनादिति भावः ॥ **प्राचीनेति** ॥ सत्वाच्चेत्यत्रोक्त 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इति श्रुतेः तथा 'तम आसीत्' इति श्रुतेश्च सङ्ग्रहार्थमित्यर्थः । प्राचीनश्रुतिसत्वेऽप्येतदुक्तिः सुधोक्तदिशा कथञ्चित्प्राचीनश्रुतेरन्यथानयन-शङ्कायामपि नेह तथा हिरण्यगर्भसृष्टावेवाबादिसाधनप्रतीतेरिति सूचनायेति भावः । हिरण्यगर्भः अद्भ्यः सम्भूतः इत्यष्टौ दिक्पाला अपि अद्भ्यः सम्भूता इति तत्त्वप्रदीपे ।

## अभिनवचन्द्रिका

**अभ्यः सम्भूत इत्यादाविति** ॥ पूर्वटीकासु लोकानां प्रवृत्त्युच्छेदो मा भूदिति अष्टाविति न व्यख्यातम् । तत्वप्रदीपे तु अष्टौ लोकपाला इति व्याख्यातमिति तथैव बोध्यमिति भावः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु** – विप्रतिपन्ना सृष्टिः स्वतन्त्रबहुसाधनसापेक्षा सृष्टित्वात् घटादिसृष्टिवत् । तथा चेश्वरः स्वतन्त्रसाधनापेक्षयैव सृष्ट्यादिकर्तेति न तस्य जगज्जन्मादिकारणत्वेन सर्वगुण-पूर्णत्वसिद्धिरिति ।

**सिद्धान्तस्तु** – नाऽनुमानबलेनेश्वरसृष्टेः स्वतन्त्रबहुसाधनसाध्यत्वं वक्तुं शक्यम् । 'किं स्विदासीत्' इति श्रुत्या 'ईश्वरः स्वतन्त्रसाधनविधुरः साधनान्तरमपहाय स्रष्टुं शक्यत्वात्, व्यतिरेकेण कुलालवत् । तथा 'ईश्वरः स्वतन्त्रसाधनशून्यः, स्वेच्छयोपात्तसाधनत्वात् यः स्वतन्त्रसाधनशून्यः नासौ स्वेच्छयोपात्तसाधनः, किन्तु विपक्षे कार्यानुत्पत्तिभयोपात्तसाधनः, यथा कुलालः । तथा ईश्वरः स्वतन्त्रसाधनरहितः साधनसत्ताप्रदत्वात् व्यतिरेकेण कुलालवत्, इत्यादियुक्तिभिश्च विरुद्धत्वात् । किञ्च यदीश्वरातिरिक्तं स्वतन्त्रं साधनं स्यात्तर्हि वेदादि-प्रमाणैरुपलभ्येत न चोपलभ्यते तस्मान्नास्तीति । ननु 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इत्यादिना ईश्वरातिरिक्तस्वतन्त्रसाधनप्रतीतेः इष्टापादनम्' एतदिति चेत्, न अवरस्यैव साधनस्य सत्त्वेन श्रुतेस्तद्विषयत्वात् । एवं च यस्योपलब्धिरापाद्यते न तस्योपलब्धिः, यच्चोपलभ्यते न तत् स्वतन्त्रं साधनमिति नेष्टापादनमिति ।

ननु 'नासदासीत्' इति श्रुत्या सर्वस्यासत्त्वाभिधानात् साधनान्तरमङ्गीकृत्य तस्ये-श्वराधीनत्ववर्णनमयुक्तमिति चेत्, न 'नासदासीत्' इति श्रुतौ अव्यक्तत्वपरतन्त्रत्वाधमत्वविकृत-रूपविनाशादिधर्मापेक्षया असत्त्वमुच्यते, अव्यक्तादौ तद्व्यपदेशस्य लोके दृष्टत्वात्, न तु सर्वथाऽसत्त्वाभिप्रायेण । कुतः 'तम आसीत्' इति वाक्यशेषे साधनान्तरस्य सत्त्वाभिधानात् । ननु साधनान्तरमभ्युपगम्य तस्येश्वराधीनत्वकथनाद्वरं साधनाभावकथनमेव । साधनशून्यस्य सृष्ट्यादिकर्तृत्वाभ्युपगमे महिमाधिक्यलाभादिति चेत्, न । स्वाधीनसाधनान्तरेण प्रवृत्तेरपि परमैश्वर्यज्ञापकत्वस्य 'साधनानाम्' इत्यागमसिद्धत्वेनाविरोधकत्वात् । स्वाधीनसाधनसाहित्येनापि सृष्टेर्युक्तेः । 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति श्रुतौ साधनान्तराभिधानाच्च । 'विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसापेक्षा सृष्टित्वात् पटसृष्टिवत्' इत्यादियुक्तिसिद्धत्वाच्च । नन्वेवं सति विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वात् पटसृष्टिवत्' इत्यादिना साधनानां स्वातन्त्र्यमपि स्यादिति चेत्, न देहेन्द्रियादाविव प्रकृत्यादावपि परमात्मप्रवेशस्य 'प्रकृतिं पुरुषं च' इत्यागमसिद्धत्वात् । अनुप्रवेशस्य प्रेरणार्थत्वेन साधनानामस्वातन्त्र्येण

(अभिनवचन्द्रिका)
बाधितविषयत्वात् । अतो भगवतः स्वातन्त्र्येण सर्वकर्तृत्वे विरोधगन्धाभावात् युक्तं सर्वगुण-परिपूर्णत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे अवरस्य सर्वं नेति नेत्यनुवर्तते । साधनान्तरेण सृष्टेरिति शेषः इत्यभिप्रेत्य भाष्यार्थं सूत्रारूढतया दर्शयति **महिमाधिक्येति** ॥ एतेन युक्तेरित्यस्याविरोधित्वाद्युक्तियुक्तवाक्यसिद्धत्वा-ल्लोकसिद्धव्याप्तिकानुमानसिद्धत्वादिति त्रेधा व्याख्यातं भवति । लोके हि 'नानाशिष्येषु निपुणाः साधनं स्वयमेव हि । सम्पाद्यते स्वकार्याणि कुर्वन्नाशकतां व्रजेत्' । 'स्वाधीनसाधनादानमीशस्य न विरुध्यते । प्रमितत्वाच्च लीलात्वादीशत्वाघातकत्वतः । लीलया दण्डमालम्ब्य गच्छन् किं पङ्गुतां व्रजेत्' इति । भाष्ये इत्यष्टावित्यस्यैवमेवाष्टौ लोकपालाः सम्भूता इति तत्वप्रदीपेऽर्थ उक्तः ॥ **प्राची-नेति** ॥ 'अभ्द्यः सम्भूत' इति श्रुतिसंग्रहार्थमित्यर्थः । एतेनेश्वरातिरिक्तकर्तृकतत्पुरुषनामकपुरुष-विशेषसृष्टावबादिकारणसद्भावपरत्वं प्राचीनश्रुतेर्निरस्तमिति भावः ।

## तत्त्वसुबोधिनी

**लोकेति** ॥ लोके स्वाधीनसाधनैर्विचित्रकार्यनिर्माणे माहात्म्यातिशयस्य दृष्टत्वादित्यर्थः ॥ **अभ्द्यः सम्भूतः इत्यादाविति** ॥ ईश्वरकर्तृकहिरण्यगर्भसृष्टावेव साधनान्तरप्रतीतेरित्यर्थः ॥ **प्राचीन-श्रुतिसङ्ग्रहार्थमिति** ॥ हिरण्यगर्भपदोपेते तच्छ्रुतिसमाख्यानात् 'अभ्द्यः सम्भूतः पृथिव्यै रसाच्च' इति श्रुतेरपि ईश्वरकर्तृकतत्पुरुषपदोक्तहिरण्यगर्भसृष्टावेव साधनान्तरप्रतिपादकत्वमिति भावः । अत्राद्ये सूत्रे स्वतन्त्रकारणस्य ब्रह्मानन्यत्वे श्रुतियुक्तिरूपप्रमाणोक्तिः । द्वितीये स्वतन्त्रसाधनान्तराङ्गीकारे बाधकोक्तिः । तृतीये अद्भ्यः सम्भूत इत्यादेः पारतन्त्र्यसाधनत्वोक्तिः । चतुर्थे नासदासीदिति श्रुतिविरोधपरिहारः । पञ्चमे साधनसत्वे उक्तानुपपत्त्यभावस्य, श्रुतिरूपप्रमाणस्य चोक्तिः । षष्ठे प्रकृत्यादेः परतन्त्रत्वे प्राणादिदृष्टित्वोक्तिः इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

कला काष्ठा इत्युक्ता अष्टौ देवाः 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इत्यत्र अष्टशब्दे-नोच्यन्ते । 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इत्यत्र हिरण्यगर्भः अबाद्युपलक्षितभूतैः परमेश्वरात्

(वाक्यार्थविवरणम्)
सम्भूतः । 'कला महूर्ताः काष्टाश्चाहोरात्राश्च सर्वशः । अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम्' इत्यत्रोक्ताः कलाद्यष्टौ देवाश्चोत्पन्ना इति श्रुत्यर्थः तत्त्वप्रदीपिकानुसारेण द्रष्टव्यः ।

## वाक्यार्थमञ्जरी

स्वेच्छया साधनान्तरोपादानस्य युक्तेः युक्तत्वात् महिमाऽविरोधित्वादिति यावत् । प्रागुक्त-शब्दतोऽन्यस्य शब्दस्य तदावेदकस्य सत्वाच्च न साधनाभावो वाच्य इत्यर्थः ॥ **लोकसिद्ध-त्वादिति** ॥ स्वाधीनभृत्यादिसापेक्षप्रवृत्तेः राजादौ दृष्टत्वादिति भावः ॥ **साम्येनेति** ॥ दृढाङ्गस्य लीलया दण्डं गृहीत्वा गच्छतस्तन्निरपेक्षत्वप्रसिद्धेरिति भावः ॥ **अधिकोत्कर्षेति** ॥ सकलवैभवेन राजगमनस्य तद्धेतुत्वदर्शनादिति भावः । राज्ञस्तत्सत्वात्तथाऽस्तु प्रकृते साधनमेव नेत्यत उक्तम् ॥ **साधनसत्वाभ्युपगमेनेति** ॥ उक्तरीत्येति शेषः । 'अद्भ्यः सम्भूतो हिरण्यगर्भ इत्यष्टौ' इति श्रुतिः । हिरण्यगर्भः अबुपलक्षितैः भूतैः सम्भूत इति । 'कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम्' इत्यनेनोक्ताः कलाद्यष्टौ देवताश्च सम्भूता इति तत्त्वप्रदीपे व्याख्याता ॥ **प्रतीतेश्चेति** ॥ ईश्वरकर्तृकहिरण्यगर्भसृष्टावेवादिसाधनान्तरप्रतीतेरित्यर्थः ॥ **प्राचीनेति** ॥ 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इत्यादीत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ पटवच्च ॐ ॥ २० ॥**

**साधनान्तरेण हि पटादिसृष्टिर्दृष्टा ।**

## तत्त्वप्रदीपिका

**यथा पटादिसृष्टिः साधनान्तरकृता तथा जगत्सृष्टिरपि युक्ता । विरोधाभावात् । स्वातन्त्र्यस्यैव निषिद्धत्वात् । यत्राविरोधस्तत्र दृष्टानुसारस्साधुरिति ।**

## तत्त्वप्रकाशिका

**साधनसद्भावस्य युक्तिसिद्धत्वाच्च तत्राग्रह इत्यर्थप्रतिपादकं सूत्रमुपन्यस्य व्याचष्टे ॥ पटवच्चेति ॥ विप्रतिपन्ना सृष्टिः कर्तृव्यतिरिक्तसाधनसाध्या सृष्टित्वात्पटसृष्टिवदित्यर्थः ।**

## वाक्यार्थमुक्तावली

अत्राप्यवरस्य सत्त्वमित्यनुवर्तते । पटवच्चेति पटसृष्टाविवेत्यर्थ इत्यभिप्रेत्यावतार्य व्याचष्टे-**साधनसद्भावस्येति** ॥

## वाक्यार्थमञ्जरी

पटसृष्टिवत्साधनान्तरसापेक्षेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ यथा प्राणादिः ॐ ॥ २१ ॥**

तच्च साधनजातं तेनानुप्रविष्टमेव यथा शरीरेन्द्रियादिः ।

'प्रकृतिं पुरुषं चैव प्रविश्य पुरुषोत्तमः ।
क्षोभयामास भगवान् सृष्ट्यर्थं जगतो विभुः' ॥ इति कौर्मे ।

## सत्तर्कदीपावली

साधनानां साधनत्वमिति हि उक्तं तत्स्पष्टयति यथेत्यादिना । यः पृथिवीमन्तरो यमयतीत्यादिना सर्वान्तर्यामित्वश्रवणाद्विष्णोर्युक्तं तदधीनत्वं प्रकृत्यादिसाधनानामित्यर्थः ।

## तत्त्वप्रदीपिका

अत्र स्वतन्त्रकारणं विषयः । तत्किं ब्रह्मणोऽन्यदप्यस्त्युत नेति सन्दिह्यते । अत्राऽयं पूर्वपक्षः । अस्त्यन्यदपि कारणं बहु स्वतन्त्रं जगतः लौकिककार्येषु तथा दृष्टेः । न हि केवलकुलालमहिम्नैव करीरकरकादीनां सृष्टिः । मृद्दण्डचक्रसलिलादिसामर्थ्यसहकृतैव । यद्यपि तेषामचेतनानां तत्र व्यापारस्तदधीनः । तथाऽपि न तेषां प्रातिस्विककार्यसाधनसामर्थ्यं कर्तृनियतं, येन पारतन्त्र्यमखिलमधिगच्छेम । अतः स्वतन्त्रबहुसाधनैव सृष्टिर्दृष्टा । तथेयमपि सृष्टिः सृष्टित्वादेष्टव्या, याऽत्र विमतिमध्यासिता । न च जगन्निर्मातुस्तादृक् स्वातन्त्र्ये प्रमाणमुपलभामहे । येनाऽस्मिन्साधने प्रतिज्ञाविरोधदोषेणोपालभेमहि । तादृक्स्वातन्त्र्ये चान्यनिरपेक्षनिर्माणात्कर्मकालादिवैयर्थ्यप्रसङ्गः । तस्मान्न ब्रह्मैव स्वतन्त्रकारणमिति प्राप्ते प्रतिविधत्ते । स्वतन्त्रकारणस्य ब्रह्मव्यतिरेकेणाभावः, ब्रह्मैव स्वतन्त्रकारणमित्यर्थः । 'किंस्विदासीदधिष्ठानमारम्भणं कतमत्स्वित्' इत्यारम्भणशब्दादिभ्यः,

(तत्त्वप्रदीपिका)
आरम्भणाक्षेपाधिष्ठानाक्षेपशब्दादिभ्यः । न ह्यत्रोपादानाद्युक्तिः येन किंशब्दः प्रश्नविषयोऽभ्युपेयेन । न च लोकन्यायः श्रुतिसिद्धमर्थं चालयितुमलम् । विरोधे स्वयमाभासत्वापातात् । न चान्यश्रुति-विरोधः । तासां परतन्त्रविषयत्वेन सावकाशत्वात् ।

'वर्जितस्सर्वदोषैर्यो गुणसर्वस्वमूर्तिमान् ।
स्वतन्त्रो यद्वशाः सर्वे स विष्णुः परमो मतः' ॥

'द्रव्यं कर्म च कालश्च' इत्यादिभ्यश्च ।

ॐ भावे चोपलब्धेः ॐ । यथैकः स्वतन्त्रो भगवानुपलभ्यते तथाऽन्यस्वतन्त्रभावे तच्चोपलभ्येतेत्येषा दिक् ।

## तत्त्वप्रकाशिका

तर्हि विमता सृष्टिः कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षा सृष्टित्वात्पटसृष्टिवदिति । विप्रतिपन्नं वा साधनं स्वतन्त्रं साधनत्वात्तुर्यादिवदित्यपि स्यादित्याशङ्क्यं परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **यथेति** ॥ न तत्साधनं स्वतन्त्रं प्रेरणार्थं भगवताऽनुप्रविष्टत्वात् यथा शरीरेन्द्रियप्राणादिः । 'यः प्राणे तिष्ठन्' इत्यादेरीश्वरेणानुप्रविष्टत्वान्न स्वतन्त्रम् । अन्यथाऽनुप्रवेशवैयर्थ्यादिति भावः । साधनानां भगवदनुप्रविष्टत्वमेव कुत इत्यत आह ॥ **प्रकृतिमिति** ॥ क्षोभयामास उन्मुखीचकार । अतो भगवतः स्वातन्त्र्येण सर्वकर्तृत्वे विरोधगन्धाभावाद्युक्तं सर्वगुणपूर्णत्वमिति सिद्धम् ।

## गुर्वर्थदीपिका

शरीरेन्द्रियप्राणादिरिति वदता सूत्रगतादिपदेन शरीरेन्द्रियादिकं गृह्यत इति सूचितम् ।

## भावदीपः

पटादिसृष्टिरिति पूर्वभाष्यानुरोधादाह ॥ **विमता सृष्टिरिति** ॥ तच्च साधनजातमिति भाष्यदिशाऽऽह ॥ **विप्रतिपन्नं वा साधनमिति** ॥ **न स्वतन्त्रमिति** ॥ तथा च प्राचीनानु-मानस्यैतदनुमानबाध इति भावः । समस्तसूत्रार्थं फलोक्त्योपसंहरति ॥ **अत इति** ॥ कर्त्रन्य-साधने स्वातन्त्र्यस्याप्रामाणिकत्वाच्छ्रुतियुक्तिबाधितत्वात् । साधनश्रुतेरीशाधीनसाधनपरत्वात्तद-भावपरश्रुतेः स्वातन्त्र्यादिधर्मपरत्वात् । साधनसद्भावस्य च श्रुतियुक्तिसिद्धत्वात्स्वाधीनसाधनैः

(भावदीपः)
सृष्टेर्युक्तत्वाच्चेत्यर्थः ॥ **विरोधगन्धेति** ॥ साधनस्वातन्त्र्ययुक्तिविरोधो वा अद्भ्य इत्यादि-साधनसत्त्वश्रुतिविरोधो वा महिमोत्कर्षविरोधादिर्वा कोऽपि नास्तीत्यर्थः ।

## वाक्यार्थमुक्तावली

यद्यपीश्वरसृष्टेः स्वतन्त्रसाधनसापेक्षत्वेऽनुमानं प्रागेव युक्तितर्कविरोधेन निरस्तं तथापीह तदाक्षेपेण प्रत्यवतिष्ठते ॥ **तर्हीत्यादिना** ॥ यदि साधनमस्ति साधनत्वात्तन्त्वादिवत्स्वतन्त्रं भवत्। पारतन्त्र्ये मानाभावात् । न चाक्षेपतस्तत्सत्तोक्त्यन्यथानुपपत्तिः प्रमाणम् । किंस्वि-दित्यस्य प्रश्नत्वसम्भवात् । अद्भ्य इति वाक्यसामर्थ्येन परिहाराध्याहारसम्भवात् । काल आसी-दित्यत्र कालपुरुषयोरावृत्तत्वमुक्त्वानावृतेन पुरुषेण जगदुत्पत्तिरित्युच्यते न तु सृष्ट्युपकरणानां तदायत्तशक्तिकत्वम् । 'न परः किं च नास' इति वाक्यशेषोऽपि तदन्यस्य परत्वनिषेधपरो नेश-साम्यस्य । भावे चोपलब्धेरिति तर्कस्तु दृष्टापादानः । अनुमानानां विद्यमानत्वादिति । सूत्रे तत्साधनमवरमेवेत्यनुवर्तते । दृष्टान्तविशेषोपादानाद्धेतुलभ्य इति भावेन सूत्रार्थमाह ॥ **न तदिति** ॥ विपक्षे बाधकमाह **अन्यार्थेति** ॥ अत्राद्ये स्वतन्त्रसाधनानपेक्षत्वरूपस्वपक्षे श्रुति-र्युक्त्युक्तिः । द्वितीये परपक्षसाधकाभावस्य बाधकतर्कस्य च । तृतीये तर्कस्येष्टापादानत्व-निरासायाद्भ्य इति श्रुतेः परतन्त्रसाधनपरत्वेन सावकाशत्वस्य ततःपरं तटस्थाक्षेपपरिहारमिषेण सूत्रे एव साधनपारतन्त्र्यस्यैवोक्तिः । तत्राप्याद्ये सत्वव्यपदेशबलादसत्वमाशङ्क्य वाक्यशेषविरोधेन स्वातन्त्र्येण सत्वपरत्वोक्तिः । द्वितीये साधनसत्तामभ्युपेत्य परतन्त्रोक्तौ महिमाविरोधपूर्वकं सजातीयवाक्यान्तरबलेनासद्व्यपदेशस्य स्वतंत्रसाधननिषेधपरत्वोक्तिः । तृतीये बहिरङ्गयुक्तिबलेन तस्यैवार्थस्योपपादनपर्यवसानम् । सप्तमे सर्वाक्षेपपरिहरणपूर्वकस्वोक्तार्थस्थापनमिति सूत्रक्रमः ।

## वाक्यार्थमञ्जरी

यथा प्राणदेहेन्द्रियादिकं प्रेरणार्थमीशेनानुप्रविष्टत्वेनास्वतन्त्रं तथेदं साधनजातमपीत्यर्थः । ननु तत्र प्रवेशमात्रमुच्यते न प्रेरणार्थमित्यत आह ॥ **अन्यथेति** ॥

**॥ इति आरम्भणाधिकरणम् ॥ ६ ॥**

# ७. अथ इतरव्यपदेशाधिकरणम्

## सूत्रभाष्यम्

जीवकर्तृत्वपक्षः श्रुतिप्राप्तो विस्तरान्निराक्रियते –

॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ २२ ॥

जीवकर्तृत्वपक्षे हिताकरणमहितकरणं च न स्यात् ।

## सत्तर्कदीपावली

यदन्तर्यामिप्रेर्यत्वं तद्युक्तं जडानामेव । न जीवस्य चेतनत्वादिति वाच्यम् । हिताकरणादहितकरणाच्च । अहितकारिणि ज्ञातेऽपि क्वचित्प्रवृत्तिदर्शनात् । हितकारिणि ज्ञातेऽपि क्वचिदप्रवृत्तेः नाज्ञानकृतं हिताकरणादिकमिति वक्तुं शक्यते । न च कर्मकारितं तदिति वाच्यम् । कर्मणोऽचेतनस्य प्रेरकेश्वरमन्तरेण कार्यकारणत्वायोगात् । तस्मादस्वतन्त्रो जीवः । तदाह **जीवकर्तृत्वपक्ष** इत्यादिना ।

## तत्त्वप्रदीपिका

ब्रह्मण इतरस्य जीवस्य स्वतन्त्रकर्तृत्वं यदि व्यपदिश्यते तर्हि तस्य हिताकरणमहितकरणं दुःखप्राप्तिः सुखाप्रप्तिश्च न युज्यते । परतन्त्रत्वे तु युज्यते, अपरिहार्यत्वात् । अन्यथा हिताकरणादयो दोषाः प्रसज्येरन् । अतस्ते जीवे दृश्यमानास्तस्य स्वातन्त्र्यं निवारयन्ति ।

## तत्त्वप्रकाशिका

अन्यथानुमितौ च ज्ञशक्तिवियोगादिति जीवकर्तृत्वस्य निराकरिष्यमाणत्वादेतेन शिष्टा अपरिग्रहा अपि व्याख्याता इति निराकृतत्वाच्च नैतदधिकरणारम्भो युक्त इत्याशङ्कापरिहारायाधिकरणार्थमाह ॥ **जीवेति** ॥ अत्र 'जीवाद्भवन्ति भूतानि' इति श्रुतिप्राप्तो जीवकर्तृत्वपक्षो निराक्रियते । उत्तरत्र तु समयप्राप्त इत्यर्थभेदः । श्रुतिप्राप्तस्य सङ्क्षेपतो निरस्तस्य विस्तरान्निराकरणाच्चावैयर्थ्यमिति भावः । न च वाच्यं तदनन्तरमेव निराक्रियतामिति । अत्र 'यथा प्राणादिः' इत्युक्ते पुनराशङ्कोदयात् । अत एवात्र विष्णोर्जगत्कारणत्वे जीवकर्तृत्वसाधक-

(तत्त्वप्रकाशिका)

**युक्तिविरोधस्य परिह्रियमाणत्वादस्ति शास्त्रादिसङ्गतिः । विष्णोर्जगत्स्रष्टृत्वादिकमुक्तम् । तस्य च जीवकर्तृत्वसाधकयुक्तिविरोधे लक्षणत्वायोगात्स निराकार्य एव । तज्जगत्कर्तृत्वादि विषयः । विष्णोर्युक्तमयुक्तं वेति सन्देहः । श्रुतिविप्रतिपत्तिः श्रुत्यनुभवविप्रतिपत्तिर्वा सन्देहबीजम् । न विष्णोर्जगत्कर्तृत्वं युक्तमिति पूर्वः पक्षः । जीवस्यैव कर्तृत्वानुभवात् । स हि यत्कार्यमारभते तत्समापयतीत्यनुभूयते । न चायमनुभवो भ्रान्तः । बाधकाभावात् । न च वाच्यमस्तु जीवस्य कर्तृत्वम् । तच्चेश्वरप्रेरितमिति कल्पनागौरवापत्तेः । तथा हि ईश्वरस्तावदनुपलभ्यमानो नास्त्येव स च कल्पनीयस्तस्य च जीवप्रेरकत्वं कल्पनीयमप्रामाणिकमिति जीवस्यैव स्वतन्त्रकर्तृत्वाङ्गीकारे लाघवम् । एवं च परिदृश्यमानकार्याणां स्वतन्त्रजीवकर्तृत्वे समस्तजगतोऽपि तथात्वं सिद्ध्यति । तथा च श्रुतिः । 'जीवाद्भवन्ति भूतानि' इत्यादि । न चेश्वरविषयत्वं श्रुतेः । तस्यैवाभावात् । अतः श्रुत्यादिबलाज्जीवस्यैव स्वतन्त्रकर्तृत्वादसम्भवि जन्मादिकारणत्वलक्षणं ब्रह्मण इति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ इतरेति ॥ यदि जीवकर्तृत्वस्य श्रुतौ व्यपदेशादिसिद्धत्वाज्जीवः स्वतन्त्रकर्तेत्युच्यते तर्हि तस्य हिताकरणमहितकरणं च न स्यात् । न हि स्वतन्त्रस्य ते सम्भवतः । विद्येते च ते जीवे अतोऽसौ न स्वतन्त्रकर्ता अपि तु परमेश्वर एवेति भावः ।**

## गुर्वर्थदीपिका

अन्यथानुमितौ च ज्ञशक्तिवियोगादिति वक्ष्यमाणसूत्रस्यायमभिसन्धिः । अन्यथाऽनुमितौ प्रकृत्युपसर्जनपुरुषानुमितौ क्रियमाणायां च जानातीति ज्ञः जीवः । तस्य शक्तिवियोगात् शरीर-प्रवेश एव स्वतः शक्त्यभावात् । भावे चान्यत्रापि स्वत एव प्रवृत्तिसम्भवात् शरीरप्रवेशवैयर्थ्य-मित्युभयथाऽपि जीवकर्तृत्वं न घटते इति । पुनराशङ्कोदयादिति वदता 'यथा प्राणादिः' इति सूत्रे प्राक् भगवतोऽनुप्रवेशः कथितः । स मास्तु । जीवानुप्रविष्टमेव शरीरं प्रवर्तितामिति पुनराशङ्कोदय इति सूचितम् । विद्येते च ते जीव इत्यत्र बहुकालं सुखेन जीवामीति यद्धितं, तस्याकरणं मध्य एव मरणात् । भुञ्जानस्य यदृच्छया स्वजिह्वादंशनादिकं यदहितं तस्य करणं चेत्यर्थः ।

## भावबोधः

अनन्तरसङ्गतिं दर्शयति– **अत्र यथा प्राणादिरित्युक्त इति** ॥ 'यथा प्राणादिः' इति सूत्रे प्राणादिदृष्टान्तेन प्रकृतिपुरुषपदोक्तजीवरूपसाधनजातस्य परमात्माधीनत्वोक्तौ न जीवस्य

(भावबोधः)

परमात्माधीनत्वं युक्तं तस्य स्वातन्त्र्येण कर्तृत्वस्यानुभवसिद्धत्वादिति शङ्कोदयादित्यर्थः ॥ **युक्तिविरोधस्येति** ॥ श्रुतिसंवादयुक्तिविरोधस्येत्यर्थः । तेन 'श्रुतिगुणयुक्तयः' इत्यनेनैवैतदधिकरणोपाधिसङ्ग्रहोऽनुव्याख्याने कृत इति बोद्धव्यम् ॥ **विष्णोरिति** ॥ अत्र जगज्जन्मादिकारणत्वं विष्णोर्युक्तिविरुद्धं भवत्युत नेति चिन्ता । तदर्थं महदादिकार्यं स्वतन्त्रजीवकर्तृकं कार्यत्वात् घटादिवदिति युक्तिः जीवाद्भवन्तीति श्रुतिसंवादाज्जीवस्य जगत्कर्तृत्वसाधिकोत दृष्टान्तस्य साध्यविकलत्वेनासाधिकेति । तदर्थं जीवस्य स्वतन्त्रकर्तृत्वे बाधकं नास्त्युत हिताक्रियादिकृत्स्नप्रसक्त्यादिरूपबाधकमस्तीति । तदर्थं जीवकर्तृत्वपक्षवत् ब्रह्मकर्तृत्वपक्षेऽपि श्रमचिन्ताप्राप्तिकल्पनागौरवादिबाधकमस्त्युत नास्तीति । तदर्थमीश्वरे उक्तदोषपरिहारहेतुविशेषो नास्त्युतास्तीति ॥ **कर्तृत्वानुभवादिति** ॥ घटादिकार्येष्वित्यर्थः । ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति न्यायविवरणाभिप्रेतं दूषणमाह– **कल्पनागौरवापत्तेरिति** ॥ इदानीं न्यायविवरणं योजयति **जीवस्यैवेति** ॥ **एवं चेति** ॥ महदादिकमनन्याधीनजीवकर्तृकं कार्यत्वात् घटवदिति प्रयोगो ज्ञातव्यः ।

नन्वेवं न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्याशङ्कितम् । किं तु घटादिकर्तृत्वं तावदनुभवसिद्धत्वात् कुलालादीनां न त्यक्तुं शक्यम् । तत्रेश्वरस्यापि कर्तृत्वाङ्गीकारे कल्पनागौरवं स्यादित्यतो नेश्वरस्य सर्वकर्तृत्वमिति सुधाग्रन्थविरोध इति चेत्, न; ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति न्यायविवरणस्य सर्वथेश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकार इति च योजनायां पक्षद्वयसाधारण्यमभिप्रेत्य 'देवादिवदपि लोके' इति सूत्रनिवर्तनीयतयाऽप्रामाणिकेश्वराङ्गीकारे कल्पनागौरवप्रसङ्गेन ईश्वर एव नास्तीति महदादिकार्येऽपि जीव एव कर्तेति पूर्वपक्ष्यभिप्रायोन्नयनेन टीका । अस्तु वा ईश्वरः, प्रामाणिकत्वात्; तथापि न तस्य जन्मादिसूत्रोक्तं सकलजगत्कारणत्वम्; किन्तु महदादिकार्यकर्तृत्वमेव । न तु घटादिकर्तृत्वमपि । उभयोरपि तदङ्गीकारे गौरवप्रसङ्गादित्यभ्युपगमवादेन सुधायाः प्रवृत्तेर्विरोधशङ्काया एवाभावात् । भाष्ये दोषप्रसक्तिरिति सौत्रपदानुसारेणेतरव्यपदेशादित्यनन्तरं जीवकर्तृत्व इत्यापादकाध्याहारः कृत इत्यभिप्रेत्य तद्व्याचष्टे– **यदि जीवेत्यादिना** ॥

## भावदीपः

भाष्ये श्रुतिप्राप्त इति विस्तरादिति चोक्तपदद्वयव्यावर्त्यं क्रमेणाह ॥ **अन्यथेति** ॥ समयपाद

(भावदीपः)

इत्यर्थः ॥ **श्रुतिप्राप्त इति** ॥ आपाततः श्रुतिमूलयुक्तिप्राप्त इत्यर्थः । वेदवादरतो न स्यान्न पाषण्डी न हैतुकीत्युक्तवेदवादनिरासद्योतनाय श्रुतिप्राप्त इत्येवानुवादः कृतः ॥ **पुनराशङ्को-दयादिति** ॥ यथा प्राणादिरिति पूर्वाधिकरणोक्तं प्राणादिजीवानामस्वातन्त्र्यं न युक्तम् । जीव-कर्तृत्वस्यानुभवादिति शङ्कोदयादव्यवधानेनात्र' निराकरणमित्यर्थः । एतेन विस्तरेण निराकरणं व्यर्थमिति प्रत्युक्तम् । अत एव शङ्काया उत्पन्नत्वादेवेत्यर्थः ॥ **युक्तीति** ॥ श्रुत्यनुभवसंवादि-युक्तीत्यर्थः । व्यपदेशादिति सौत्रोक्त्यनुरोधादाह ॥ **श्रुतीति** ॥ 'यतो वा इमानि भूतानि जायन्ते' इति 'जीवाद्भवन्ति भूतानि' इति श्रुत्योर्विप्रतिपत्तिर्विरोध इत्यर्थः । उपसंहारदर्शनादित्युक्त्यनु-रोधादाह ॥ **श्रुत्यनुभवेति** ॥ उपसंहारसूत्रे भाष्योक्तं हेतुं तद्भाष्यं विवृण्वन्नाह ॥ **जीवस्यैवेति** ॥ ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति न्यायविवरणोक्तं च हेतुं देवादिवदिति सूत्रव्यावर्त्यमत्र योजयितुं व्यावर्त्यशङ्कामाह ॥ **न च वाच्यमिति** ॥ कर्ता शास्त्रार्थवत्त्वादित्यत्र तथा वक्ष्यमाणत्वादिति भावः ॥ **कल्पनेति** ॥ एतेन कर्ता शास्त्रार्थवत्त्वादिति वक्ष्यमाणन्यायेन जीवस्य कर्तृत्वेऽप्यनुभवादिसामञ्जस्येनेश्वरकर्तृत्वे विरोधाभावादयं विचारो व्यर्थ इति परास्तम् । तस्यैवेह गौरवेणाक्षेपादिति भावः । कर्तुरीश्वरस्य दृष्टिविरोध इति भाष्यदिशा विवृणोति ॥ **तथा हीति** ॥ **नास्त्येवेति** ॥ अनुपलब्धिर्हि धर्मादिवदयोग्यत्वाद्वा मेर्वादिवद्देशकालादिव्यवहितत्वेन वाऽभिमानिनयन्यायेनान्तर्धानशक्त्या वा शशशृङ्गादिवदसत्त्वेन वा । नाद्यः । आपरोक्ष्याभावा-पातात् । न द्वितीयः । अदृश्यत्वनयोक्तदिशा नित्यसर्वगतत्वात् । न तृतीयः । तदव्यक्तमाह हीत्यव्यक्तैकस्वभावत्वोपगमात् । अतः परिशेषादसत्त्वमेवेति भावः ।

ननु जीवकर्तृत्वपक्षे अनवस्थितेरसम्भवाच्च नेतर इत्युक्तदोषः स्यादित्यत उक्तम् ॥ **जीवस्यैव स्वतन्त्रेति** ॥ एतेन न्यायविवरणे स्वतन्त्रेति विशेषणं योज्यमिति दर्शितम् । एतेन वक्ष्यमाण-चेतनत्वयुक्तेरनुकूलतर्को दर्शितः । कार्यत्वयुक्तेर्दृष्टान्तश्चोपपादितः । अस्त्वेवं घटादौ जीवः कर्ता महदादौ क इत्यत आह ॥ **एवं चेति** ॥ महदादिकं जीवकर्तृकं कार्यत्वात् घटवदिति भावः । युक्तिसंवादिनीं श्रुतिमाह ॥ **तथा चेति** ॥ इयं च एतेन शिष्टा अपरिग्रहा इत्यत्र भाष्योक्ता ॥ **तस्यैवेति** ॥ एतेन युक्तेः श्रुतिबाधोऽपि परास्तः । अत इत्यस्यार्थः **श्रुत्यादीति** ॥ यद्वा ईश्वरस्यैवाभावेन श्रुतेस्तत्परत्वायोगादित्यर्थः । आदिपदेन युक्त्यनुभवौ ग्राह्यौ । न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्यैव शङ्कितमिति सुधावाक्याविरोधश्चन्द्रिकायां

(भावदीपः)

स्फुटः। जीवकर्तृत्व इति भाष्यस्थमापादकं सूत्रारूढं कुर्वन्सूत्रार्थमाह ॥ यदीति ॥ अस्मद्व्यपदेशान्नेति चेदित्यतश्चेदिति वर्तते । स च यद्यर्थः । यदितर्ह्योश्च नित्यान्वय इति भावः । श्रुतौ व्यपदेशादीति नित्यसाकाङ्क्षत्वात्समासः । आदिपदेन वक्ष्यमाणयुक्त्यनुभवौ ग्राह्यौ । एतेन हिताकरणादिदोषापादनं श्रुत्यनुभवयुक्तीनां तिसृणामप्याभासत्वासाधकं तासां स्वतो जीवकर्तृत्वविषयकत्व इति सूचितमिष्टापत्तिं निराह ॥ विद्येते चेति ॥ अन्यथा सर्वो जनः पूर्णानन्दो निर्दुःखश्च सदा स्यादिति भावः । तर्ह्यनवस्थितेरसम्भवाच्चेत्युक्तदोषः स्यादित्याशङ्क्याह ॥ अपि त्विति ॥

## अभिनवचन्द्रिका

**अर्थभेद इति** ॥ ननु प्रापकभेदादर्थभेदाभिधानमयुक्तम्, एकस्यैव वह्नेः भेदाभावेऽपि प्रत्यक्षाऽनुमानाऽऽगमरूपप्रापकभेददर्शनादिति चेत्, न ब्रूमो वयमर्थभेदो विषयभेद इति, येनोक्तदोषः स्यात्, किं नाम श्रुतिप्रामाण्यवादिना श्रुत्या जीवकर्तृत्वे शङ्किते तस्या अर्थान्तरवर्णनेन तदीयाऽऽशङ्कापरिहारोऽस्याधिकरणस्य प्रयोजनम् । समयप्रामाण्यवादिना पुनर्जीवकर्तृत्वे शङ्किते समयाप्रामाण्यव्युत्पादनं वक्ष्यमाणाधिकरणस्य प्रयोजनमिति प्रयोजनभेदोऽर्थभेदो इति ॥ **अत एवेति** ॥ श्रुतिप्राप्तस्य विस्तरान्निराकरणाय प्रवृत्तादस्मादेवाधिकरणाद्युक्तिविरोधस्य परिह्रियमाणत्वादित्यर्थः ॥ **जीवस्यैवेति** ॥ कर्तृत्वं जीवस्यैव नान्यस्येत्यनुभवादित्यर्थः । ननु जीवस्य कर्तृत्वमात्रमनुभूयते न त्वन्यव्यवच्छेदः, ततश्चासिद्धिरित्यत आह– **स हीति** ॥ स हि जीवो यत्कार्यमारभते तत्समापयति आरब्धान्तगामित्वमनुभूयते । ततश्च जीव एव कर्ता नान्य इत्यनुभवो भवेदेवेति भावः ।

ननु कुलालस्य मृत्पिण्डादिवत् नेश्वरः सहकारीत्यभ्युपगम्यते । येनानुभवविरोधः स्यात् किं नाम अन्तर्यामितया इत्याशङ्क्य निषेधति – **न च वाच्यमस्त्विति** ॥ **अनुपलभ्यमान इति** ॥ जीवशरीर इति शेषः । जीवान्तर्यामितया जीवशरीरस्थत्वे जीवेनोपलभ्येत, न हि तन्नियम्यः पटुकरणः तत्र पश्यतीति सम्भवति । राजनियम्येषु भृत्येषु राजद्रष्टृत्वनियमात्, अनुपलम्भबाधितत्वात् जीवान्तर्यामितया जीवस्थित्यभिधायकं वाक्यमपि प्रतीतार्थे अप्रमाणमेवेति भावः । अत्र पूर्वपक्षिणा नेश्वरस्य सर्वथा सत्त्वमुच्यते किन्तु जीवप्रेरणाय

**(अभिनवचन्द्रिका)**

जीवस्थित्यादिरूपैश्वर्यविशिष्टतया सत्त्वमुच्यते । अनुपलम्भाभिधानात् । यद्देशेऽनुपलम्भस्तद्देशे तदभावसाधनस्यैव युक्तत्वात् । अवश्यं चैतदेवं विज्ञेयम् ब्रह्मणो जगत्कारणत्वाक्षेपस्य पूर्वपक्षफलत्वात् । अन्यथा तन्न स्यात् । ब्रह्माभावेन तज्जगत्कारणत्वाक्षेपसम्भवे ब्रह्माभावेन जीवस्य स्वातन्त्र्यं प्रसाध्य तत्फलतया ब्रह्मकारणत्वाक्षेपाभिधानवैयर्थ्यात् ॥ **समस्तजगतोऽपीति** ॥ **तथात्वं** जीवकर्तृत्वम्, अनीश्वरकर्तृत्वमिति यावत् । अयं भावः । घटादिकार्याणां स्वतन्त्रजीवकर्तृत्वे सिद्धे महदादिकार्यकर्तुः परमेश्वरस्य कुलालादिनियामकत्वरूपपरमैश्वर्यवैधुर्याज्जीवत्वं नेश्वरत्वमिति । अवश्यं चैतदेवं विज्ञेयम् जीवस्य सशरीरस्यैव कर्तृत्वं घटादौ दृष्टमिति महदाद्युत्पत्तिसमयेऽशरीरस्य तस्य तत्कर्तृत्वायोगात् । तदुक्तं सुधायाम् – 'न ह्यत्राधिकरणे महदादिसकलकार्यकर्तृत्वं जीवस्याशङ्कितं, किन्तु घटादिकर्तृत्वमिति नेश्वरस्य सर्वकर्तृत्वम्' इति च ॥ **तस्यैवाभावादिति** ॥ परमैश्वर्यादिविशिष्टस्यैवाभावादित्यर्थः । इदमत्राकूतम् । 'जीवाद्भवन्ति' इति श्रुतेरीश्वरपरत्वं वदन् प्रष्टव्यः किं जीवसाधारणब्रह्मपरत्वं श्रुतेरभिमतम्, आहोस्वित् परमैश्वर्यादिविशिष्टब्रह्मपरत्वम् । आद्ये न नो हानिः । सर्वजीवानां सम्भूय सर्वजगत्कारणत्वं वदद्भिरस्माभिरपि 'जीवाद्भवन्ति' इति श्रुतिः घटादीनां कुलालजन्यत्वमिव महदादीनां जीवतुल्यब्रह्मजन्यत्वं वक्तीत्यङ्गीकारात् । द्वितीये त्विदमुपतिष्ठते **तस्यैवाभावादिति** ॥ **जीवस्यैव स्वतन्त्रकर्तृत्वादिति** ॥ घटादाविति शेषः ॥ **असम्भवीति** ॥ ब्रह्मणो महदादिकारणत्वेऽपि जन्मादिसूत्रोक्तं सर्वकारणत्वमसम्भवीति भावः ।

ननु अत्र सूत्रे हिताकरणादिर्दोष उच्यते, भाष्ये तु हिताकरणम्, अहितकरणं च न स्यादिति तदभाव आपाद्यते, अतोऽपव्याख्यानमित्यत आह **यदि जीवस्येति** ॥ 'जीवाद्भवन्ति भूतानि' इति व्यपदेशबलात् जीवः स्वतन्त्रकर्तेत्युच्यते, तर्हि राजाद्यनधीनत्वादिरूपहिताकरणं तदधीनत्वादिरूपाहितकरणं च न स्यादित्यर्थः । इदमुक्तं भवति । स्यादयं सूत्रभाष्ययोर्विसंवादः, यदि सूत्रस्य हिताकरणरूपदोषप्रसक्तिरित्यर्थो भवेत्, न चैवम् हिताकरणादेः प्रामाणिकत्वेन तदापादने इष्टापादनप्रसङ्गात्, किं नाम हिताक्रियादेः **दोषप्रसक्तिः** असत्त्वप्रसक्तिरित्यर्थोऽभिमतः, भाष्यकृता च हिताकरणं अहितकरणं च न स्यादिति तदेवोक्तमिति न विसंवादः ॥ **न हि स्वतन्त्रस्य ते सम्भवत इति** ॥ स्वेष्टं कर्तुं अनिष्टमकर्तुं यत् स्वकारणायातं तच्चान्यथाकर्तुं

(अभिनवचन्द्रिका)
समर्थस्यैव स्वतन्त्रत्वेन जीवः स्वतन्त्रः, असमर्थश्च स्वेष्टकरणे अनिष्टाकरणे चेत्यस्य व्याहतत्वादिति भावः ।

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिं दर्शयति **अत्रेति** ॥ ननु श्रुतिप्राप्तस्य निरासो हि तृतीयपादे सङ्गतः तत्कथमत्रेत्यत आह **अत एवेति** ॥ **यथा प्रणादिरिति** ॥ पूर्वाधिकरणोक्तप्राणादिजीवानामस्वतन्त्रत्वमयुक्तं जीवकर्तृत्वस्यानुभवात् । अत एव जीवाद्भवन्तीत्यस्यार्थान्तरपरत्वायोगादिति श्रुत्यनुभवसंवादेनाधिकहेतुना पुनर्जीवमात्रविषयाभ्यधिकाशङ्कायाः प्राप्तत्वादेव श्रुत्यनुभवसंवादियुक्तिविरोधस्य परिह्रियमाणत्वादेवेत्यर्थः । अत एव सिद्धान्ते इतरव्यपदेशादित्यत्र पूर्वपक्ष्यभिमता श्रुतिः । उपसंहारदर्शनादित्यत्रानुभवः अश्मादिवदित्यत्र युक्तिर्निरस्यत इति भावः ॥ **विष्णोरिति** ॥ अत्र जन्मादिसूत्रोक्तं ब्रह्मण एव स्वतन्त्रकर्तृत्वं श्रुत्यनुभवयुक्तिविरुद्धं न वेति चिन्ता । तदर्थं हिताकरणादिकृत्स्नदोषप्रसक्त्यादिबाधकवशात् श्रुतेरन्यार्थत्वम् । अनुभवस्य भ्रान्तत्वं युक्तेराभासत्वं कल्पयितुं न शक्यते उत शक्यते वेति । तदर्थं जीवकर्तृत्वपक्ष इव ब्रह्मकर्तृत्वपक्षेऽपि श्रमचिन्तादिकल्पनागौरवादिबाधकमस्त्युत नास्तीति ॥ **श्रुतिविप्रतिपत्तिरिति** ॥ 'जीवाद्भवन्ति' 'यतो वा' इत्यादि श्रुतिविप्रतिपत्तिरित्यर्थः । उपसंहारदर्शनादित्युक्तपूर्वपक्षमाह **जीवस्यैवेति** ॥ घटादिकार्येष्वित्यर्थः । हिताकरणादिदोषप्रसक्तिः कृत्स्नप्रसक्तिरिति सूत्रव्यावर्त्यमाह **बाधकाभावादिति** ॥ यथाप्राणादिरित्यनेन गतार्थतामाशङ्क्य परिहरन् देवादिवदपि लोक इति सूत्रव्यावर्त्यं दर्शयन् लघुतेत्युक्तन्यायं विवृणोति **न च वाच्यमित्यादिना** ॥ कर्ता शास्त्रार्थेति नये तथा वक्ष्यमाणत्वादिति भावः । एतेन कर्तेत्यत्र वक्ष्यमाणन्यायेन जीवस्य कर्तृत्वेऽपीश्वरकर्तृत्वे विरोधाभावादयं विचारो व्यर्थ इति परास्तम् । तस्यैवेह गौरवेणाक्षेपादिति ॥ **नास्त्येवेति** ॥ अनुपलब्धिर्हि धर्मादिवदयोग्यत्वाद्वा मेर्वादिवद्धदेशव्यवहितत्वाद्वा अभिमानिनयन्यायेनान्तर्धानशक्त्या वा नृशृङ्गादिवदसत्वेन वा । नाद्यः । अपरोक्षाभावापातात् । न द्वितीयः । अदृश्यत्वनयरीत्या नित्यसर्वगतत्वात् । न तृतीयः । तदव्यक्तमाह हीत्यव्यक्तस्वभावत्वोपगमात् । अतः परिशेषादसत्वमेवेति भावः ।

ननु जीवस्यैव कर्तृत्वाङ्गीकारेऽनवस्थितेरसम्भवाच्च नेतर इत्युक्तं चेन्नोक्तदोष इत्यतः कर्तृत्वं

(वाक्यार्थमुक्तावली)

**विशिनष्टि जीवस्यैव स्वतन्त्रेति** ॥ एवं चेति महदादिकमन्यानधीनजीवकर्तृकं कार्यत्वाद्धटवदिति प्रयोगो द्रष्टव्यः । नन्वेवं न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्य शङ्कितं किन्तु घटादिकर्तृत्वं तावत् कुलालादीनां न त्यक्तुं शक्यम् । तत्रेश्वरस्यापि कर्तृत्वाङ्गीकारे कल्पनागौरवमित्यतो नेश्वरस्य कर्तृत्वमिति सुधाविरोध इति चेन्न । ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति न्यायविवरणस्य सर्वथेश्वरत्यागेन महदादिकार्ये जीवस्यैव कर्तृत्वाङ्गीकार इति घटादिकार्ये ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकार इति योजनाद्वयमभिप्रेत्य प्रामाणिकेश्वराङ्गीकारे कल्पनागौरवप्रसंगेनेश्वर एव नास्तीति महदादिकार्येऽपि जीव एव कर्ता । अदृष्टद्वारोपपत्तेः । युक्तं चोपादानाद्यपरोक्षं विनापि कर्तृत्वम् । चैत्रः शब्दं करोतीत्यादौ दर्शनादिति । आद्ययोजनानुसारेण टीकाप्रवृत्तेः । अस्तु वेश्वरः प्रामाणिकत्वात्तथापि तस्य जन्मादिसूत्रोक्तं सर्वकर्तृत्वं किन्तु महदादिकर्तृत्वमेव न तु घटादिकर्तृत्वमपि । उभयोरपि तदङ्गीकारे गौरवमित्यभ्युपगमवादेन द्वितीययोजनानुसारेण सुधाप्रवृत्त्युपपत्तेरिति । अत एव टीकायां यद्वेति पक्षान्तरं वक्ष्यतीति ज्ञेयम् । इतरव्यपदेशादिति सूचितपूर्वपक्षमाह **तथा चेति** ॥ **अत** इति ॥ ईश्वरस्यैवाभावेन श्रुतेस्तद्विषयत्वायोगादित्यर्थः । दोषप्रसक्तिरित्यापादनानुसारेणेतरव्यपदेशादित्यनन्तरं तदेव इतरव्यपदेश इति सप्तम्यन्तं विपरिणम्यते । इतरस्य जीवस्य कर्तृत्वव्यपदेशे कर्तृत्वे उच्यमान इति तदर्थ इति भावेन जीवकर्तृत्वपक्षे इत्यापादकमुक्तं भाष्य इत्यभिप्रेत्य तद्व्याचष्टे **यदीत्यादिना** ॥ सौत्रस्येतरशब्दस्य प्रस्तुतब्रह्मकर्तृत्वादितरो जीवकर्तृत्वमर्थः । तथा च जीवकर्तृत्वस्य श्रुतौ व्यपदेशात्स एव स्वतन्त्रः कर्तेति यद्युच्यते तर्हि हिताकरणादेर्जीवे भासमानस्य विरोधलक्षणदोषप्रसक्तिः स्यात् । तस्यास्वतन्त्रे उचितस्य स्वतन्त्रे विरोधात् । तथा च तत्र स्यादिति यावत् । विद्यते च एतज्जीव इति वाऽसौ स्वतन्त्र इति पूर्वसूत्रार्थ इति भावः । हिताकरणादिरूपदोषप्रसक्तिरिति व्याख्याने सूत्रभाष्ययोर्विरोधः स्यात् । हिताकरणादिदोषापादनं श्रुतियुक्त्यनुभवानां त्रयाणामप्याभासतासाधक इति सूचयितुं व्यपदेशादित्युक्तम् ॥ **विद्यते चेति** ॥ अन्यथा सर्वोऽपि परमानन्दो निर्दुःखश्च स्यादिति भावः ।

## तत्त्वसुबोधिनी

ननु च तथापि श्रुतिप्राप्तजीवकर्तृत्वस्य एतेनेत्यत्र निराकृतत्वाद्व्यर्थं इत्यत आह ॥ **श्रुतिप्राप्तस्येति** ॥ अनन्तरसङ्गतित्वादत्रोक्तमित्याह अत्र **यथा प्राणादिरित्युक्त इति** ॥ यथा प्राणादिरिति

(तत्त्वसुबोधिनी)

सूत्रे प्राणादिदृष्टान्तेन प्रकृतिपुरुषपदोक्तजीवरूपसाधनजातस्य परमात्माधीनत्वोक्तौ न जीवस्य परमात्माधीनत्वं युक्तम् । तस्य स्वातन्त्र्येण कर्तृत्वस्य अनुभवसिद्धत्वादिति शङ्कोदयादित्यर्थः ॥ **अत एवेति** ॥ श्रुतिप्राप्तजीवकर्तृत्वस्य । एतदधिकरणे(ति)करिष्यमाणत्वादेवेत्यर्थः ॥ **युक्तिविरोधस्येति** ॥ श्रुतिसंवादियुक्त्यविरोध एव एतदधिकरणोपाधिरिति भावः ॥ **श्रुत्यनुभवविप्रतिपत्तिर्वेति** ॥ विष्णुकर्तृत्वप्रापकश्रुतेः जीवकर्तृत्वप्रापकानुभवस्य च विप्रतिपत्तिरित्यर्थः । अनुभवमेव दर्शयति ॥ **स हि इति** ॥ **एवं चेति** ॥ महदादिकं अन्यानधीनजीवकर्तृकं कार्यत्वात् घटवदिति प्रयोगादिति भावः ।

भाष्ये दोषप्रसक्तिरिति सौत्रापादनानुसारेण, इतरव्यपदेशादित्यनन्तरं जीवकर्तृक इत्यापादकाध्याहारः कृतः इत्यभिप्रेत्य तद्व्याचष्टे ॥ **यदि जीवेत्यादिना** ॥ स्वतन्त्रकर्तृत्वेऽप्यस्य हिताकरणादिकमतः आह **न हीति** ॥ जीवे हिताकरणादिकं नास्त्येवेत्यतः आह ॥ **विद्यते चेति** ॥

## वाक्यार्थविवरणम्

ननु श्रुतिप्राप्तस्यापि पूर्वं निराकृतत्वाद्वैय्यर्थमित्यत आह ॥ **श्रुतिप्राप्तस्येति** ॥ **नास्त्येवेति** ॥ यन्नोपलभ्यते तन्नास्त्येवेति व्याप्तेरिति भावः ॥ **लाघवमिति** ॥ धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायादिति भावः ॥ **श्रुतिरिति** ॥ भूतानीति बहुवचनसत्त्वेन उक्तार्थसिद्धिरिति भावः । नन्वितरस्य जीवकर्तृत्वस्य श्रुतौ व्यपदेशाज्जीवः स्वतन्त्रकर्तेत्यङ्गीक्रियते तर्हि जीवस्य हिताकरणमहितकरणं च न स्यादिति भाष्योक्ततर्कः सङ्गच्छते । अनिष्टापादनरूपत्वात्। विद्येते च ते जीवे । अतो न स्वतन्त्रकर्तेति विपर्ययपर्यवसानसम्भवाच्च । न तु सूत्रोक्तस्तर्कः । 'यदि इतरव्यपदेशाज्जीवः स्वतन्त्रकर्ता स्यात्तदा जीवस्य हिताक्रियादिदोषप्रसक्तिः स्यात्' इत्यापादने इष्टापत्तिः । विपर्ययपर्यवसानं न स्यादिति । भाष्येण सूत्रव्याख्यालाभश्च कथमिति चेदुच्यते । सूत्रे 'इतरव्यपदेशात्' इत्यनन्तरं 'स्वतन्त्रकर्तुः' इति शेषः कार्यः । तथा च 'इतरव्यपदेशाद्यदि जीवः स्वतन्त्रकर्ता स्यात्तदा स्वतन्त्रकर्तुश्च हिताक्रियादिदोषप्रसक्तिरनिष्टा। न हि स्वतन्त्रस्य हिताक्रियादिके सम्भवतः । विद्येते च ते जीवे । अतो न स्वतन्त्रकर्ता इति विपर्यये पर्यवसानस्यापि सम्भवात् । एतदभिप्रेत्यैव टीकायां 'न हि स्वतन्त्रस्य ते

सम्भवतः। विद्यते च ते जीवेऽतोऽसौ न स्वतन्त्रकर्तेत्यभिहितम्। भाष्यं तु न सूत्रव्याख्यानपरं किं नाम सूत्रतात्पर्यकथनमात्रपरमिति ध्येयम्। एतद्भाष्यमनुसृत्यैव टीकाकारैरपि। तर्हि तस्य हिताकरणमहितकरणं च न स्यादित्युक्तमिति न कश्चिद्दोष इति सम्प्रदायविदः।

## वाक्यार्थमञ्जरी

**तदनन्तरं** एतेनेत्यनन्तरम्। **अत एव** शङ्कोदयादेव। **अनुभवात्**॥ घटादिकार्ये भ्रान्त इति भावे क्तः भ्रान्तिरित्यर्थः॥ **एवं चेति**॥ महदादिकमन्यानधीनजीवकर्तृकं कार्यत्वाद्घटवदिति प्रयोगादिति भावः। इतरस्य जीवस्य जीवाद्भवन्तीत्यत्र कारणत्वेन व्यपदेशात्तस्य स्वतन्त्र-कारणत्वमिति यदि तर्हि हिताकरणाहितकरणयोर्दोषत्वप्रसक्तिः ते तस्य न स्यातामिति यावत्। न हि स्वतन्त्रस्य तद्द्वयं युक्तम्। ईश्वराधीनकर्तृकत्वे च स यथा कारयति तथा करोतीति न दोषत्वमिति भावः।

## सूत्रभाष्यम्

### ॥ ॐ अधिकं तु भेदनिर्देशात् ॐ ॥ २३ ॥

**न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिः। अधिकशक्तित्वात्। 'श्रोता मन्ता द्रष्टाऽऽदेष्टा घोष्टा विज्ञाता सर्वेषां भूतानामन्तरपुरुषः' (ऐ.आ.३-२-४) 'एष त आत्मा सर्वान्तरः' (बृ.उ.५-५-१) 'योऽशनायापिपासे शोकं जरां मृत्युमत्येति' (बृ.उ.५-५-१) इत्यादि-विशेषनिर्देशात्।**

## सत्तर्कदीपावली

एतेन शिष्टा अपरिग्रहा अपि व्याख्याता इत्यत्र संक्षेपेण निराकृतत्वात् श्रुतिप्राप्तजीव-कर्तृत्वपक्षस्य विस्तरान्निराक्रियेत्युक्तम्। परमेश्वरस्यैव स्वातन्त्र्यमिति प्रतिपादयितुं जीवस्वातन्त्र्ये दूषिते परश्चोदयति। बहुकार्यव्यापृतस्य कर्तुः श्रमचिन्तादिदोषदर्शनाज्जगत्कर्तुरपि श्रमचिन्तादि-दोषप्रसक्तेः जीववत्पारतन्त्र्यमिति। तन्न वाच्यम्। जगत्कर्तुरीश्वरस्य ग्राहकेण वेदेन सर्वसामर्थ्य-युक्तत्वेन सर्वदोषरहितत्वेन गृहीतत्वात्। धर्मिग्राहकप्रमाणविरोधापत्तेः। तथाहि। 'श्रोतामन्ता' इत्यादि-श्रुत्या परमात्मनो युगपत्सर्वश्रोतृत्वसर्वमन्तृत्वसर्वद्रष्टृत्वसर्वादेष्टृत्वादि सर्वसामर्थ्यं श्रूयते। 'एष त

(सत्तर्कदीपावली)
आत्मा सर्वान्तरः' इत्यादिश्रुत्या एतस्यैव अशनायापिपासादिसर्वदोषराहित्यं श्रूयते । 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सो पिपासः सत्यकामः सत्यसङ्कल्पः' इत्यादिश्रुत्या दृढीक्रियते । मूकोऽहमिति वदीश्वरः श्रमचिन्तादिमानिति प्रतिज्ञापदव्याघातश्च स्यात् । कर्तुमकर्तुमन्यथाकर्तुं सर्वकर्तृत्वादीश्वरस्य । एतदाह । अधिकमित्यादिना ।

## तत्त्वप्रदीपिका

ननु ब्रह्मणोऽपि सर्वदा सृष्ट्यादिकरणात् श्रमस्तत्र तत्रोपायादिचिन्ता च स्याल्लोकवत्, स्वविद्वेषिनिर्माणायुक्तिश्चेत्यत आह– **अधिकं तु भेदनिर्देशात् ॥** चिन्तादीत्यादिशब्दाद्विद्वेषिनिर्माणादिनाऽपि नास्य दोषो भवति । अधिकशक्तित्वात् निर्दोषगुणपूर्णहेयोपादेयरहितत्वात् । अल्पशक्तीनां हि दोषा भवेयुः । अधिकशक्तित्वमधिकं च प्रमाणतः प्रख्यापयिष्यति 'सर्वोपेत' इति । श्रोत्रादिशब्दैस्सर्वश्रोतृत्वादिकमत्र विवक्षितं स्वातन्त्र्येण च । सङ्कोचकारणाभावान्मुख्यस्वीकारोपपत्तेः । नाश्रुतत्वश्रोतृत्वादिकं जीवानां युक्तम् । 'नान्योऽतोऽस्ति श्रोता' इत्यादि च स्वातन्त्र्यापेक्षया ह्युच्यते । 'एष त आत्मा अन्तर्याम्यमृत' इत्युक्तेरतोऽधिकत्वेन वैलक्षण्यनिर्देश एवायम् । भूतानामान्तरत्वं चाधिकशक्तित्वोपपादकं वैलक्षण्यम् । न हि दुःखिनां सर्वेषामन्तःस्थित्वा रमणमधिकशक्तित्वमन्तरेण सम्भवति ।

## तत्त्वप्रकाशिका

यदि यत्किञ्चिद्दोषमात्रेण जीवकर्तृता निराक्रियते तर्हि ब्रह्मणोऽपि कर्तृत्वं न प्राप्नोति । तस्यापि श्रमादिदोषनियमात् । एवं च पक्षयोः साम्येऽनुभवादिसिद्धं जीवकर्तृत्वमेवाश्रयणीयमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अधिकमिति** ॥ तुशब्दः साम्यव्यावर्तकः । भवेद् ब्रह्मप्रतिबन्ध्या जीवस्य कर्तृत्वसमर्थनम् । यदि ब्रह्मणि श्रमचिन्तासाधनस्मरणदुःखादिदोषा भवेयुः । न च ते तत्र सन्ति । श्रुतिषु तस्य सर्वेभ्योऽखिलश्रोतृत्वान्तर्यामित्वाशनायाद्यतीतत्वाद्यतिशयस्य निर्देशात् । न ह्येवंविधस्य ते दोषाः शङ्कितुमपि शक्यन्त इति भावः ।

## भावदीपः

सौत्रतुशब्दव्यावर्त्यं व्यञ्जयन्नवतारयति ॥ **यदि यत्किञ्चिदिति** ॥ न च ब्रह्मणः श्रमचिन्तादिदोषप्राप्तिरिति भाष्यमुत्सूत्रमिति भ्रमनिरासायाह ॥ **तुशब्द इति** ॥ एतमेवार्थं भाष्यविवरणेन व्यनक्ति ॥ **भवेदिति** ॥ आदिपदार्थोक्तिः साधनेत्यादि । आत्मेत्यस्यार्थ **अन्तर्यामित्वेति** ।

## अभिनवचन्द्रिका

**यदि यत्किञ्चिद्दोषमात्रेणेति** ॥ दोषस्य यत्किञ्चित्त्वोक्तिः तर्कस्य श्रुतिविरोधेनाभासत्व-सूचनायेति बोध्यम् । उभयत्रापि तर्कविरोधसाम्ये किं जीवस्वातन्त्र्याग्रहेणेत्यत आह– **अनुभवादि-सिद्धमिति** ॥ ईश्वरस्वातन्त्र्यं श्रुतिमात्रसिद्धं जीवस्वातन्त्र्यं तु श्रुत्यनुभवसिद्धमिति भावः ॥ **एवंविधस्येति** ॥ शोकाद्यभाववत्तया प्रमाणसिद्धस्येत्यर्थः ।

## वाक्यार्थमुक्तावली

न च ब्रह्मग इति भाष्यमुत्सूत्रमिति भ्रमनिरासायाह **तुशब्द इति** ॥ तुशब्दो विशेषार्थः । स च श्रमाद्यभावरूप इति भावः । न ह्येवंविधस्य श्रुतिसिद्धसर्वश्रोतृत्वादिप्रयोजकातिशयवत अशनायाद्यतीतत्वादितत्प्रयोज्यातिशयवत इत्यर्थः । श्रमवतः श्रवणादिकर्तृत्वायोगात् । चिन्ता-साधनस्मरणादिदोषाणां सर्वज्ञेऽयोगात् । दुःखस्यानन्दोद्रेकेण सर्वनियामकत्वादिशक्तिमत्वा-योगात् इति भावः । ततश्च ब्रह्मजीवाद्विशेषवत् तद्वच्छ्रमादियुक्तं न भवति । अधिकमिति पदं हेतुगर्भमेतत् अधिकशक्तित्वात् । न च तदसिद्धम् । भेदनिर्देशात् । भेदस्य सर्वश्रोत्रत्वादि-शक्त्यतिशयस्य । अत एव श्रमचिन्ताशनायातीतत्वादिदोषाभावरूपस्य जीवाद्विशेषस्य श्रुतौ निर्देशादिति सूत्रार्थः ।

## सूत्रभाष्यम्

**॥ ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ॥ २४ ॥**

**चेतनत्वेऽप्यश्मादिवदस्वतन्त्रत्वात्स्वतः कर्तृत्वानुपपत्तिर्जीवस्य ।**

**'यथा दारुमयीं योषां नरः स्थिरसमाहितः ।**
**इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः'** इति भारते ॥

## सत्तर्कदीपावली

**जीवास्वातन्त्र्यं यदुक्तं दृढीकरोति ॥ अश्मादिवदित्यादिना ॥ चेतनप्रेरिताचेतनदृष्टान्तेन जीवानां ईशप्रेर्यत्वे प्रमाणमाह ॥ यथेति ॥ नरो यथा दारुमयीं योषां नियमयति । तदङ्गानि च इङ्गयति तथा हरिः इङ्गयतीमाः प्रजा इत्यर्थः ।**

## तत्त्वप्रदीपिका

ननु यदश्मादीनां कर्तृत्वविरोध्यचेतनत्वं न तज्जीवानामस्ति । तस्माद्वैलक्षण्यात्तेभ्योऽधिकशक्तित्वात्कर्तृत्वं च स्यादित्यत आह– **ॐ अश्मादिवच्च तदनुपपत्तिः ॐ ॥** यद्यपि चेतनत्वविशेषस्तथाऽपि पारतन्त्र्ये न कश्चिद्विशेष इत्यभिप्रेत्यश्मदार्वादिकमुदाहरन् । अश्मादिवदल्पमपि न स्वतः कर्तृत्वम् । किं पुनर्जगद्विषयमिति । 'समाहितं' समाधानम् । 'नपुंसके भावे क्तः' इति सूत्राद्भावेऽपि क्तप्रत्यय-दर्शनात् । स्थिरसमाधान इत्यर्थः । अङ्गं हस्तादि, अङ्गानि अङ्गुल्यादीनि । न चास्वतन्त्रत्वादित्य-सिद्धो हेतुः । हिताकरणादिना साधितत्वात् । आनुभविकत्वाच्च सर्वस्य ।

## तत्त्वप्रकाशिका

अथापि जीवोऽन्यनिरपेक्षतया कर्ता चेतनत्वादीश्वरवदिति किं न स्यात् । न चेश्वराभ्युपगमानभ्युपगमाभ्यां विरोधः । परसिद्धेनैव न्यायेन परस्य बोधनादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अश्मादिवच्चेति** ॥ न चेतनत्वहेतुना जीवस्यान्यानपेक्षकर्तृत्वं साध्यम् । अस्वातन्त्र्येण हेतुना अश्मादिवत्तदभावस्यापि साधयितुं शक्यत्वात् । स्वतन्त्रो ह्यन्यनिरपेक्षः कार्यं करोति चेतनत्वं त्वप्रयोजकमिति भावः । चोऽपिशब्दार्थः । एतेन कर्मसापेक्षतया हिताक्रियादिदोषपरिहारोऽपि परास्तः । तस्याप्यस्वतन्त्रत्वात् । अस्वातन्त्र्यमेव जीवस्य कुत इत्यत आह ॥ **यथेति** ॥ अस्वातन्त्र्यस्य हिताक्रियादिनैव सिद्धौ सूत्रार्थे सम्मतिर्वा ।

## गुर्वर्थदीपिका

इङ्गयत्यङ्गमङ्गानीत्यत्र कृत्रिमप्रतिमायाः एकैकावयवचलनमात्रे अपेक्षिते तदङ्गमेवेङ्गयति । नर्तनविशेषादौ सर्वाङ्गचालने अपेक्षिते अङ्गानि इङ्गयतीति सम्बन्धः ।

## भावबोधः

**ईश्वराभ्युपगमेति** ॥ अभ्युपगमे दृष्टान्तधर्मिग्राहकमानविरोधः, अनभ्युपगमे दृष्टान्ताभाव इत्यर्थः ॥ **परसिद्धेनैवेति** ॥ तथा च नेदं साधनानुमानम् किन्तु दूषणानुमानम् । यदीश्वरोऽन्यापेक्षया जगत्कर्ता तर्हि चेतनत्वाविशेषाज्जीवोऽपि तथैव जगत्कर्ता स्यादिति परसिद्धेनैव परस्य बोधनादित्यर्थः । यथोक्तमनुव्याख्याने–

(भावबोधः)

'स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणम्'

इति । 'च' शब्दोऽपिशब्दार्थ इति । तथा **चापीत्यस्य** तथापीत्यर्थः । तस्यार्थः- चेतनत्वेऽपीति भाष्येऽभिहित इति भावः ॥ **कर्मसापेक्षतयेति** ॥ जीवस्य स्वतन्त्रकर्तृत्वेऽपि न हिताक्रियादिदोषप्रसक्तिः । स्वीयहितप्रतिबन्धकाहितकारणीभूतकर्मवशात्तदुपपत्तेरिति भावः ।

## भावदीपः

**विरोध इति** ॥ अभ्युपगमे अन्यनिरपेक्षतयेत्युक्तिविरोधः । अनभ्युपगमे ईश्वरवदित्युक्ति-विरोध इत्यर्थः । भाष्यं व्याचष्टे ॥ **न चेतनत्वेति** ॥ स्वतःशब्दार्थोऽन्यानपेक्षेति । हेतार-प्रयोजकत्वमाशङ्क्यानुपपत्तिपदतात्पर्यमाह ॥ **स्वतन्त्रो हीति** ॥ हेतूच्छित्तिरेव विपक्षे बाधिकेति भावः । उक्तहेतोः का गतिरित्यत आह ॥ **चेतनत्वं त्विति** ॥ प्रागुक्तलाघवतर्कस्तु निरसिष्यत इति भावः । चेतनत्वेऽपीति भाष्यमुत्सूत्रमिति भ्रमनिरासायाह ॥ **चोऽपीति** ॥ अनुक्तसमुच्चय इति भावः ॥ **एतेनेति** ॥ अश्मादिवदित्युक्तिलब्धास्वातन्त्र्यहेतुनेत्यर्थः ।

## अभिनवचन्द्रिका

**ईश्वरवदिति** ॥ कुलालादिजीवनियामकेश्वरवदित्यर्थः ॥ **ईश्वराभ्युपगमानभ्युपगमाभ्यामिति** ॥ कुलालादिजीवान्तर्यामीश्वराङ्गीकारानङ्गीकाराभ्यामित्यर्थः ॥ **अस्वातन्त्र्येण हेतुरिति** ॥ अन्याधीनत्वेन हेतुना परनिरपेक्षकर्तृत्वाभावस्यापि साधयितुं शक्यत्वादित्यर्थः ॥ **स्वतन्त्रो हीति** ॥ अन्यानधीनत्वाद्धीश्वरः अन्यमनपेक्ष्य कार्यं करोति न तु चेतनत्वात् । ततश्च तदप्रयोजक-मिति भावः ॥ **एतेन कर्मसापेक्षतयेति** ॥ ईश्वरस्य कर्मसापेक्षत्वाद्वैषम्यनैर्घृण्ययोः दोषत्वपरिहारवत् जीवस्यापि कर्मसापेक्षत्वात् हिताक्रियादीनामसत्त्वपरिहारोऽपि परास्त इत्यर्थः ॥ **तस्याप्यस्वतन्त्र-त्वादिति** ॥ तस्यापि कर्मानुसरणस्यापि अस्वतन्त्रत्वादस्वातन्त्र्यनिमित्तकत्वादित्यर्थः । अयं भावः भवेदीश्वरस्य कर्मसापेक्षत्वेऽपि स्वातन्त्र्यं तस्य स्वेच्छयैव वेदप्रामाण्यपरित्राणाय कर्म-सापेक्षत्वस्वीकारात्, न जीवस्य कर्मसापेक्षत्वे स्वातन्त्र्यम् । तदीयकर्मसापेक्षत्वस्य स्वेच्छा-निमित्तत्वाभावात् । न हि स्वानिष्टं कुर्वन् जीवः तत्कर्म ज्ञात्वा स्वेच्छयैव तदुपादाय दुःखं भुङ्क्ते । किन्तु विष्टिगृहीतवत् अजानन्नेव, कर्मानुसारि फलं भुङ्क्ते इति वैषम्यात् नेश्वरप्रतिबन्ध्या

(अभिनवचन्द्रिका)

तस्य स्वातन्त्र्यसिद्धिरिति । पक्षे पराधीनत्वमेव कुतः प्रमाणात् सिद्धमिति पृच्छति – **अस्वातन्त्र्यमेवेति ॥**

## वाक्यार्थमुक्तावली

**न चेश्वरेति ॥** ईश्वराभ्युपगमदृष्टान्तधर्मिग्राहकविरोधोऽनुमानस्य । तदनभ्युपगमे दृष्टान्ताभाव इति भावः **॥ परसिद्धेनैवेति ॥** तथा च नेदं साधनानुमानं किंतु दूषणानुमानमेव । दूषणानुमानं चेह इष्टमयोगरूपं प्रमितिसाधनं प्रयोगरूपं वा । यदीश्वरः अन्यानिरपेक्षकर्ता स्यात्तर्हि जीवोऽपि स्यात् । चेतनत्वाविशेषादित्यापादनरूपं वा । अत एव प्रयोगं प्रदर्श्य किं न स्यादितुक्तं ज्ञेयम् । चेतनत्वेऽपीति भाष्यमुत्सूत्रमिति भ्रमनिरासायाह– **चोऽपीति ॥** ततश्च सूत्रे इतरस्येत्यनुवर्तते । चोऽप्यर्थस्तथापीत्यर्थे वर्तते । ततश्च जीवस्य चेतनत्वेऽप्यश्मादिवत् दृष्टान्तविशेषोपादानादस्वतन्त्रत्वादिति लभ्यते । तदनुपपत्तिः कर्तृत्वानुपपत्तिरिति सूत्रार्थः **॥ एतेनेति ॥** जीवस्येशाधीनकर्तृत्वेऽपि न हिताक्रियादिविरोधप्रसक्तिः । स्वीयहिताहितप्रापककर्मवशात्तदनुपपत्तेरित्यप्येतेनास्वातन्त्र्यहेतुनाऽपास्तमित्यर्थः । **तस्यापि** कर्मणोऽपि । तथा चेशतन्त्र एव हिताक्रियादिविरोधः परिहरणीय इति भावः । स्थिरसमाहितः स्थिरसमाधानयुक्तः । अङ्गं हस्तादि । अङ्गानि अङ्गुल्यादीनि ।

## तत्त्वसुबोधिनी

**ईश्वराभ्युपगमेति ॥** अभ्युपगमे दृष्टान्तधर्मिग्राहकमानविरोधो नाभ्युपगमे दृष्टान्ताभाव इत्यर्थः **॥ परसिद्धेनैवेति ॥** तथा च नेदं साधनानुमानं किन्तु दूषणानुमानम् । यदीश्वरोऽनन्यापेक्षया जगत्कर्ता तर्हि चेतनत्वाविशेषाज्जीवोऽपि जगत्कर्ता स्यादिति परसिद्धेनैव परस्य बोधनादित्यर्थः । यथोक्तमनुव्याख्यानं 'स्वन्यायैः साधनं कार्यं परन्यायैस्तु दूषणम्' इति । च शब्दोऽपिशब्दार्थ इति । तथा च अपीत्यस्य सर्वत्रापीत्यर्थः । तदर्थश्चेतनत्वेऽपीति भाष्ये अभिहित इति भावः **॥ कर्मसापेक्षतयेति ॥** जीवस्य स्वतन्त्रकर्तृत्वेऽपि न हिताक्रियादिदोषप्रसक्तिः स्वीयहितप्रतिबन्धकाहितकारणीभूतकर्मवशात् तदुपपत्तेरित्यर्थः । एतेनेति परामृष्टहेतुमाह **॥ तस्यापीति ॥** कर्मणोऽपीत्यर्थः ।

## वाक्यार्थविवरणम्

इङ्गयतीति भाष्यस्य यद्येकाङ्गचेष्टाऽपेक्षिता तर्ह्येकमङ्गं इङ्गयति, अनेकाङ्गचेष्टाऽपेक्षिता चेद-नेकानीङ्गयतीत्यर्थः। यद्वा 'अङ्गमङ्गी समादाय' इति शरीरस्याङ्गत्वेन प्रसिद्धत्वादयं शरीरं तदङ्गानि हस्तादीनिङ्गयतीत्यर्थः । 'जीवोऽन्यनिरपेक्षतया न कर्ता, अस्वतन्त्रत्वात् ॥ **अश्मादिवत्** ॥ इत्यनुमानेऽस्त्वस्वातन्त्र्यम्, अन्यनिरपेक्षतयैव कर्तृत्वमस्तु इत्यप्रयोजकतायां यदि जीवोऽन्य-निरपेक्षतया कर्ता स्यात्तर्हि स्वातन्त्र्यं न स्यादिति तर्कोऽभिप्रेतः। तत्र च योऽन्यनिरपेक्षतया कर्ता स स्वतन्त्र इति व्याप्तिर्वाच्यताम्। व्याप्तिं रीत्यन्तरेणोपपादयति– **स्वतन्त्रो हीति** ॥ तथा च वह्निमत्त्वादेव धूमवत्त्वमन्यथा तन्न स्यादित्युक्ते यथा धूमे व्याप्यत्वं वह्नौ व्यापकत्वं च लभ्यते। एवं स्वतन्त्रो ह्यन्यनिरपेक्षतया कार्यं करोति। अन्यथा तन्न स्यादित्युक्ते हिशब्दमहिम्ना स्वातन्त्र्यस्य व्यापकत्वम्, अन्यनिरपेक्षकर्तृत्वस्य व्याप्यत्वं च लभ्यत इत्याशयः।

ननु मदीयचेतनत्वानुमानेन सत्प्रतिपक्षितं भवदनुमानमित्यत आह ॥ **चेतनत्वं त्विति** ॥ परिहारे जीव इति शेषः। एतेनेत्यस्य विवरणम् **तस्यापीति** ॥ **कर्मणोऽपीत्यर्थः**। तथा च तस्य तदापादकत्वाभावे जीवस्य दोषप्रसक्त्या न कर्तृत्वमिति भावः।

## वाक्यार्थमञ्जरी

**ईश्वराभ्युपगमेति** ॥ अभ्युपगमे तत्साधकमानविरोधः। तेन कर्तृत्वेनैव सिद्धेः अनभ्युपगमे दृष्टान्ताभाव इत्यर्थः ॥ **परसिद्धेनैवेति** ॥ तथाच नेदं साधनानुमानं किं तु दूषणानुमानं यदीश्वरो अन्यापेक्षया जगत्कर्ता तर्हि चेतनत्वाज्जीवोऽपि तथैव जगत्कर्ता स्यादिति परसिद्धेनैव परस्य बोधनादित्यर्थः । यथाहुः **परसिद्धेर्दूषणमिति** ॥ जीवस्य चेतनत्वेऽप्यश्मादिवत् पाषाणादि-वदस्वतन्त्रत्वेन स्वतन्त्रकारणत्वानुपपत्तिरित्यर्थः। तर्हि कथं निर्णय इत्यत आह ॥ **स्वतन्त्रो हीति** ॥ स्वरूपप्रमितिप्रवृत्तिषु परानपेक्षत्वं हि स्वतन्त्रत्वम्। कार्यकरणे परानपेक्षत्वं च तदेक-देशभूतं प्रवृत्तौ परानपेक्षरूपत्वात्समुदायत्वेनैकदेशसाधनं च सङ्गतम्। शतवत्त्वेन पञ्चाशत्त्व-साधनात् अतस्तदेव प्रयोजकमित्यर्थः ॥ **अपिशब्दार्थ इति** ॥ तथापीत्यर्थः। एतेन जीवस्या-स्वातन्त्र्यप्रयुक्ताकर्तृत्वकथनेन ॥ **कर्मसापेक्षतयेति** ॥ जीवस्य स्वतन्त्रकर्तृत्वेऽपि न हिता-क्रियादिदोषप्रसक्तिः स्वीयहितक्रियादिप्रतिबन्धकवशात्तदुपपत्तिरित्यर्थः । भाष्ये इच्छानुसारेण

(वाक्यार्थमञ्जरी)
कदाचिदेकमङ्गं कदाचित्सर्वाण्यङ्गानि इंगयति चेष्टयत इत्यर्थः । पूर्वारुचिं सूचयन्नेवाह ॥ अस्वातन्त्र्यस्येति ॥

## सूत्रभाष्यम्

**॥ ॐ उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॐ ॥ २५ ॥**

जीवेन कार्योपसंहारदर्शनात्तस्य कर्तृत्वमिति चेन्न । यथा गोषु क्षीरं दृश्यमानमपि प्राणादेव जायते, 'अन्नं रसादिरूपेण प्राणः परिणयत्यसौ' इति वचनात् । एवं जीवे दृश्यमानोऽपि कार्योपसंहारोऽस्वातन्त्र्यात्परकृत एव । 'य आत्मानमन्तरो यमयति' । 'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' इत्यादेः ।

## सत्तर्कदीपावली

एतमर्थमाक्षिप्य दृष्टान्तान्तरेण य आत्मानमन्तरो यमयतीत्यादिवचनैश्चानुभवारूढं करोति ॥ उपसंहारेति ॥

## तत्त्वप्रदीपिका

जीवेन कार्योपसंहारो दृश्यते । इदं कार्यमेवमुपसंहरिष्यामीति बुद्ध्या निरूप्यते । स च कार्योपसंहारस्तेन तथा क्रियमाणो दृश्यते । अतस्तस्य कर्तृत्वमिति चेन्न । यथा गोषु दृश्यमानं क्षीरं गोव्यतिरिक्तकर्तृकम्, एवमित्थं करिष्यामीति जीवे दृश्यमानो जीवेऽन्यैर्दृश्यमानश्चापि कार्योपसंहारः परकृत एव । तथाहि श्रुतिस्मृतयः ।

## तत्त्वप्रकाशिका

जीवस्य स्वतःकर्तृत्वाभावमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ उपसंहारेति ॥ न जीवस्य स्वतः कर्तृत्वाभावो वक्तव्यः । अनुभवविरोधात् । स हि यत्कर्तुमारभते तदवसाययतीत्यनुभूयत इत्यर्थः । परिहारांशं व्याचष्टे ॥ नेति ॥ कार्योपसंहारदर्शनेन जीवस्यान्यानपेक्षतया न कर्तृत्वसिद्धिः । तत्कार्योपसंहारस्येश्वरनिमित्तत्वात् । न च जीवे दृश्यमानत्वेन जीवस्यैवासाविति वाच्यम् । गोषु वर्तमानस्यापि क्षीरस्यान्नं रसादिरूपेणेति वचनात्प्राणाधीनत्ववदत्राप्युपपत्तेः । न च बाधकवचन-

(तत्त्वप्रकाशिका)
**बलात्क्षीरस्यान्याधीनत्वेऽपि कार्योपसंहारस्य बाधकाभावाज्जीवकर्तृत्वमिति वक्तव्यम्** । जीवस्या-**स्वातन्त्र्येण कार्योपसंहारकर्तृत्वानुपपत्तेरेव बाधकत्वादिति भावः । ननु जीवस्यास्वातन्त्र्या-त्कार्योपसंहारकर्तृत्वाभावेऽपि कुतोऽसावीश्वरकृत इत्यत आह ॥ य इति ॥**

## गुर्वर्थदीपिका

'अन्नं रसादिरूपेण' इत्यत्र गोभिर्भुक्ततृणादिरूपमन्नं तदुदरे तिष्ठति, तस्यान्नस्य रसं 'व्यानः सर्वशरीरग' इति वचनात् नाडीस्थितो व्यानः ऊधोभारे आनयति । नारीभिर्भुक्तमन्नं तदुदरे तिष्ठति तस्य च रसम् ऊर्ध्वनाडीद्वारा तासां स्तनद्वये प्रवेशयति । गवां नारीणां चान्तर-स्वातन्त्र्यान्न तत्कर्तृत्वमिति भावः । कार्योपसंहारकर्तृत्वानुपपत्तेरित्युपलक्षणं, कृषीवलानां योद्धृणां राज्ञां वणिजां च मध्ये कार्यविच्छेददर्शनादित्यपि द्रष्टव्यम् ।

## भावदीपः

भाष्ये साक्षात्सौत्रहेत्वन्वयाय तस्य कर्तृत्वमिति साध्योक्तिः फलगत्येति मत्वा सूत्रे अनुवृत्ततदनुपपत्तिपदेन नञन्वयमुपेत्य तत्र सौत्रहेतुं परम्परया योजयन्सूत्रार्थमाह ॥ **न जीव-स्येति** ॥ भाष्ये इति चेन्नेत्यध्याहृत्योक्तनञा प्राचीनभाष्यस्यान्वयमाह ॥ **कार्येति** ॥ **अन्या-नपेक्षतयेति** ॥ भाष्ये स्वतःपदानुवृत्तिरिति भावः । एवं जीव इत्यादिभाष्योक्तमेव हेतुमाह ॥ **तत्कार्येति** ॥ यथेत्यादिभाष्यदिशा क्षीरवदिति सूत्रांशार्थमाह ॥ **गोष्विति** ॥ एवं जीव इत्यादिभाष्यतात्पर्यमत्राप्युपपत्तेरिति । अस्वातन्त्र्यादिति भाष्योक्तं हेतुमवतार्य व्याचष्टे ॥ **न च बाधकेति** ॥ अयं च हेतुरश्मादिवच्चेति सूत्रलब्ध इति भावेनानुपपत्तेरेवेत्येवकारप्रयोगः ।

## वाक्यार्थमुक्तावली

सूत्रे तदनुपपत्तिरिति अनुवर्तते । इतरस्य इतरेणैति बुद्ध्या विवेकेनानुवर्तते । तथाच जीवेन कार्योपसंहारदर्शनाज्जीवस्य स्वतःकर्तृत्वानुपपत्तिर्नेति पूर्वपक्षांशमभिप्रेत्य प्रवृत्तं जीवेनेत्यादिभाष्यं व्याचष्टे– **जीवस्येति** ॥ **अवसाययति** समापयति । उपसंहारपदार्थकथनमेतत् ॥ **परिहारांश-मिति** ॥ अत्रापि नेत्युपसंहार इति चानुवर्तते । प्रकृत एवेति शेषः । हिशब्दो हेतौ । दृष्टान्त-दार्ष्टान्तिकयोः परकृतत्वे प्रमाणमंसिद्धिद्योतकश्च । अश्मादिवदित्यत्रोक्तास्वातन्त्र्यादिति

(वाक्यार्थमुक्तावली)

हेतुश्चान्वेतीति भावेन प्रवृत्तं न यथा गोष्वित्यादिभाष्यं व्याचष्टे **कार्योपसंहारेत्यादिना** ॥ ततश्चान्नं रसादिरूपेणेत्यादिप्रमाणाद् गोषु दृश्यमान क्षीरवज्जीवेषु दृश्यमानः कार्योपसंहारः हि यस्मादस्वातन्त्र्याद्बाधकान्न जीवकर्तृकः किन्तु 'य आत्मानमन्तरा यमयति' इत्यादेः परकृत एव तस्मात् कार्योपसंहारदर्शनेन जीवस्यान्यानपेक्षतया कर्तृत्वसिद्धिरिति सिद्धान्तांशार्थ इति भावः ।

## वाक्यार्थविवरणम्

**अवसाययति** समापयति ।

## वाक्यार्थमञ्जरी

जीव उपसंहारस्य आरब्धकार्यसमापनस्य दर्शनान्न स्वतन्त्रकर्तृत्वानुपपत्तिरिति चेन्न । क्षीरवत् यथा गोषु दृश्यमानं क्षीरं प्राणाधीनं तथा जीवे प्रतीयमानमपि तदीशाधीनमित्यर्थः । **अवसाययति** समापयति ।

## सूत्रभाष्यम्

**॥ ॐ देवादिवदपि लोके ॐ ॥ २६ ॥**

**न च कर्तुरीश्वरस्यादृष्टिविरोधः । देवादिवददृश्यत्वशक्तियोगात् । लोकेऽपि पिशाचादीनां तादृशी शक्तिर्दृष्टा, किम्वीश्वरस्य ।**

'न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचित् ।
विरोध एव वाक्यानां युक्तयो न तु युक्तय' ॥ इति वृहत्संहितायाम् ।

## सत्तर्कदीपावली

न च सर्वकर्तुरीश्वरस्य वेदसिद्धस्य प्रत्यक्षेणानुपलम्भवाधः शङ्कनीयः । देवादिवद्दृष्टिप्रतिबन्ध-सामर्थ्यात् चक्षुरादीन्द्रियवदतीन्द्रियत्वाच्च । न च योग्यत्वे सत्यदृश्यमानत्वात् खपुष्पवदीश्वरो नास्तीति वाच्यम् । विशेषणासिद्धत्वाद्धेतोः । न च युक्तिप्रयोगेणेश्वराभावस्साधयितुं शक्यते । ईश्वरग्राहकमानबाधितत्वायुक्तेः । अतो युज्यन्ते परस्परविरोधपरिहारेण व्यवस्थाप्यन्ते वाक्यानि एभिरिति युक्तयो न्याया वक्तव्याः । न तु अप्रतिष्ठितशुष्कतर्काः प्रमाणवाधिता युक्तयः । तदेतदाह ॥ **देवादिवदित्यादिना** ॥

## तत्त्वप्रदीपिका

ननु जीवादन्यः कर्ताऽस्ति चेद्दृश्येत । दृश्यन्ते हि लोके दृश्यमानानां घटादीनां कर्तार इत्यत आह– **देवादिवदपि लोके ॥** वाक्यानां परस्परविरोध एव युक्तयो भवन्ति । न तु केवलयुक्तयः स्वतन्त्रा युक्तयः स्युः, युक्त्याभासा एव प्रतिसाधनसम्भवात् । यथा विमतः कर्ता नास्ति, योग्यत्वे सत्यनुपलभ्यमानत्वात्सम्प्रतिपन्नवदित्येतस्मिन्नेव, जगतः कर्ताऽस्ति तस्य कार्यत्वात्, यत्कार्यं तस्य कर्ताऽस्ति यथा घटस्येति नैवमनुमानयिष्यते, आश्रयासिद्धत्वाद्धेतोः । न । निषेधहेतोरसतोऽप्याश्रयत्वात्, अन्यथाऽऽश्रयत्वनिषेधस्यैव निर्हेतुकत्वेनासाध्यत्वप्रसङ्गात् । अस्तु तर्हि निषेधहेतोरसदाश्रयत्वम् । तथाऽपि न परकीयहेतोस्तादृक्त्वं युक्तम् । यदि पक्षादन्य आश्रयः, अहो तर्हि महानेष्वेष दोषः । न हि भिन्नाधिकरणत्वं साध्यसाधनयोः साम्प्रतम् । जगन्निर्मातुः खल्वस्तित्वं साध्यते । साधनधर्मो निर्मेयाधिकरण इत्यसिद्धः । पक्षवृत्त्यभावात् । तदपि प्रलापमात्रम् । व्याप्तिसद्भावे साध्यसाधनयोरधिकरणभेदस्याकिञ्चित्करत्वात् । तदभावे तदेव दूषणं, नान्वेषणीयमपरम् । व्याप्त्यभावादेव शब्दनित्यत्वादौ घटकृतकत्वादेरहेतुत्वं न व्यधिकरणत्वात् । अधिकरणभेदेऽपि व्याप्यस्य हेतुत्वदर्शनात् । उक्तं च गुरुभिः–

> 'रोहिण्युदय आसन्नः कृत्तिकाऽभ्युदिता यतः ।
> इत्युक्ते साधनं नो किं न ह्याङ्गैवात्र साधिका' इति ॥

अतो व्याप्तिरेव प्रयोजिका । न च जगतः कर्तारमन्तरेण कार्यत्वं युक्तम् । न चात्र सशरीरत्वमुपाधिः । प्रतिसाधनस्यैवोपाधित्वात् । तस्य चात्रादृष्टत्वात् । 'न तस्य कार्यं करणं च विद्यते' 'सदेहस्सुखगन्धश्च' इत्यादि श्रुतेर्जगत्कर्तुरशरीरत्वात्स्वरूपचैतन्यदेहत्वाच्च श्रुत्यवसिते कर्तरि वः किमनुमानं फलतीति चेन्मैवम् । प्रमाणबाहुल्ये दार्ढ्यदर्शनात् । मानसिद्धेऽपि हि मानान्तरमाद्रियन्ते परीक्षकाः । श्रुत्यननुसारे चोपाधिदोषो दुर्निवार इत्यवादिष्म । नन्वेवं परस्परापेक्षत्वेन श्रुतियुक्त्योः साम्यमेव । तथाहि– यथा श्रुतिनिरपेक्षाया युक्तेर्विरोधितदन्तरसद्भावेनाऽऽभासत्वं, श्रुत्यनुसारिण्याः प्रामाण्यं प्रतिसाधनस्य कालात्ययापदिष्टत्वेन, एवं युक्तिनिरपेक्षश्रुतेर्विरोधितदन्तरसद्भावे गौणार्थत्वं, युक्त्यनुसारिण्या मुख्यार्थत्वं, विरोधेऽप्यननुसारिण्याः दुर्बलत्वेनेति । विषम उपन्यासः । दृश्यते हि युक्तेस्तदन्तरविरोधो दुर्वारः । केवलस्य तर्कस्याप्रतिष्ठानात् । न च मिथो विरुद्धयोर्युक्त्योरेकतरयाऽपि केवलयाऽर्थसिद्धिः । सप्रतिपक्षत्वात् । न च श्रुतियुक्त्योर्मिथो विरोधे श्रुतेरप्रामाण्यम् । क्लृप्तं च युक्तेराभासत्वम्, अत एतदाह– **न युक्तियोगाद्वाक्यानि निराकार्याण्यपि क्वचिदिति ॥** वदिष्यति

(तत्त्वप्रदीपिका)
च- यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्कचिदिति । न च विरोधादर्थान्तरकल्पनेति दौर्वल्यम् । युक्तिमात्रविरोधाद्वाक्यस्य यथाश्रुतार्थादचलनात् । अग्नीषोमीयादेः पापहेतुत्वगोचरस्येव स्वयमाभासस्य तस्य विरोद्धुमसामर्थ्यात् । तदाह स्म नावाक्या युक्तिरिष्यत इति । श्रौतेऽर्थे वाक्यरहिता युक्तिर्नेष्यत इत्यर्थः । प्रत्यक्षे तु तन्मूला सा प्रवर्ततां नाम । अत एव तद्विरोधादभिमानिव्यपदेश उक्तः । न च तद्विरोधादर्थान्तरकल्पनेति दौर्वल्यम् । न ह्येक एव स्वार्थश्शब्दानाम् । रूढयौगिकगौणादीनां शाब्दिकपरिगृहीतानामनेकत्वात् । तत्र चोपजीव्यविरोधे प्रत्यक्षस्याभासत्वम् । श्रुतेस्तु स्वार्थ एवान्यस्मिन्वृत्तिरिति निर्णयः । न च श्रुतीनां मिथो विरोधः । निर्दोषत्वेन प्रबलप्रमाणत्वात् ।

'न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे ॥'

'सर्वोत्कर्षे देवदेवस्य विष्णोर्महातात्पर्यं नैव चान्यत्र सत्यम् ।'

'ततो वेदास्तत्परास्सर्व एव ।'

'सर्वज्ञं सर्वकर्तारं नारायणमनामयम् ।
सर्वोत्तमं ज्ञापयन्ति महातात्पर्यमत्र हि ।
सर्वेषामपि वेदानामितिहासपुराणयोः' ॥ इत्यादि श्रुतिस्मृतिभ्यश्च ।

'ॐ तत्तु समन्वयात् ॐ' 'ॐ गतिसामान्यात् ॐ' 'ॐ एतेन सर्वे व्याख्याता ॐ' इत्यादि सूत्रैश्चाविरोधः । अयमेव च प्रतिपादयिष्यते समयनिरासादूर्ध्वमाऽध्यायपरिसमाप्तेः । अहं ब्रह्मास्मीत्यत्र चाहंशब्दो युक्त्यागमविरोधाज्जीवस्वरूपं त्यक्त्वाऽहेयत्वयोगेन ब्रह्माभिधत्त इति श्लिष्यते । प्रसिद्धश्चायमर्थः श्रुतिस्मृतिषु । 'तस्योपनिषदहमिति । अ इति ब्रह्म, तत्राऽगतमहमिति' । अत्र च ब्रह्मण्यागतमहमिति नाम वाचकत्वेनेत्यर्थः । अन्तर्यामित्वाच्च । 'सर्वान्तर्यामको विष्णुः सर्वनाम्नाऽभिधीयत' इत्यादेः । तन्नियामके च तच्छब्दोऽतिमुख्य इति तदधीनत्वादित्यादावुदितम् । न चास्मीत्यनेन विरोधः । 'अहेयत्वादहंनामाऽस्म्यसनान्मिनुतेरपि' । अस्तीति मेयं चास्मीत्युच्यते । प्रसिद्धश्चायमर्थभेदः, 'पयः पास्यामि गोपाला' इत्यादौ शब्दस्य । मैव चात्र क्लिष्टताशङ्का । अविद्वद्रूढेर्योगोपबृंहिताया विद्वद्रूढेरतिबलिष्ठत्वात् । अतो न क्वापि श्रुतीनां विरोधः । अत एवाऽह स्म- 'विरुद्धवत्प्रतीयन्त' इत्यादि । परस्परविरोध इत्यादौ च विरोधे प्रतीत इत्यर्थः ।

'यथा विरुद्धता न स्यात्तथाऽर्थः कल्प्य एतयोः' इति च । अतस्सूक्तं-

'प्रत्यक्षयोरागमयोर्विरोधे निश्चयाय तु ।
अनुमाद्या न स्वतन्त्राः प्रामाण्यपदवीं ययुः' ॥ इति ।

## तत्त्वप्रकाशिका

न जीवस्येऽश्वराधीनकर्तृत्वं वाच्यम् । तस्यैवाभावात् । न च श्रुत्या तत्सिद्धिः । तस्यानुपलब्धिबाधितत्वात् । अथ च कल्पने गौरवं स्यात् । अतो जीव एव लाघवाज्जगत्कर्तेत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ देवेति ॥ नेश्वरस्य कर्तृत्वाङ्गीकारे गौरवम् । स हि कर्तेत्यादि श्रुतिसिद्धत्वात् । नाप्यनुपलब्धिविरोधः । अदृष्टानामपि देवादीनां विद्यमानत्वात् तच्च प्रतिपादितम् । देवादीनामदृश्यत्वशक्तिमत्त्वायुक्तानुपलब्धिरिति चेत् सममीश्वरस्यापि । तादृशशक्तियुक्तत्वात् । कुतः । लोके पिशाचादीनामनीश्वराणां तादृशशक्तिमत्वे सर्वेश्वरस्य सुतरां तत्सिद्धेः । अतो नेश्वरस्य कर्तृत्वाङ्गीकारे गौरवं किं त्वश्रौतजीवकर्तृत्वाङ्गीकार एव तद्भवति । तदभावात्सिद्धान्ते लाघवमेवेति भावः । यदभिप्रेतं श्रुतिसिद्धः परमेश्वरो नानुपलब्धियुक्त्या निराकार्य इति तत्र स्मृतिं चाह ॥ नेति ॥ युक्तियोगायुक्त्युपायात् । वाक्यानां विरोधे युक्तीनां जाते सति ता एव युक्तयो न युक्तयः किं त्वाभासा इत्यर्थः । वाक्यानां परस्परविरोधे युक्तयोऽर्थसाधिका न तु केवलयुक्तय इति वा ।

## गुर्वर्थदीपिका

तस्यानुपलब्धिबाधितत्वादित्यत्र तस्या ईश्वरसाधकश्रुतेः । अनुपलब्धिः कापि केनापि यः ईश्वरस्यानुपलम्भः तद्बाधित्वादित्यर्थः । न तु श्रुतेरेवानुपलम्भः । तच्च प्रतिपादितमित्यत्र अभिमान्यधिकरणे इति शेषः ।

## भावबोधः

श्रुतिसिद्धत्वेनाकल्पनादिति न्यायविवरणं व्याचष्टे– **नेश्वरस्येति** ॥ **स हि सर्वस्य कर्तेति** ॥ उपलक्षणमेतत् । 'नान्यः कर्ता स हि स्वतन्त्रः परमात्परो हरिरादिरनादिः' इति न्यायविवरणोदाहृतश्रुतिरप्यत्र द्रष्टव्या ॥ **प्रतिपादितमिति** ॥ अभिमान्यधिकरण इत्यर्थः । अश्रुतजीवकर्तृत्वाङ्गीकारे गौरवमेव तदभावः सिद्धान्ते लघुतेति न्यायविवरणं व्याचष्टे– **अश्रुतेति** ॥ युक्तीनामित्यध्याहारं विना योजयति **वाक्यानामिति** ॥

## भावदीपः

नन्वाद्ये सर्ववेदसमन्वयोक्त्या ईश्वरस्य सिद्धत्वादत्र पुनस्तदभावशङ्का न युक्तेति भावेनाशङ्क्य कर्तुरीश्वरस्यादृष्टिविरोध इति भाष्योक्तं हेतुमाह ॥ **न च श्रुतेति** ॥ **बाधितत्वादिति** ॥ प्रागुक्तरीत्या तदभावनिश्चयादिति तात्पर्यं बोध्यम् । तथा च प्रागुक्तस्यैवात्राक्षेप इति भावः । न चेत्यादिभाष्यात्पूर्वश्रुतिसिद्धत्वेनाकल्पनादिति न्यायविवरणं साध्योक्तिपूर्वं योजयति ॥ **नेश्वरस्येति** ॥ न्यायविवरणे नान्यः कर्तेत्यादेरिव साक्षात्कर्तृश्रुतेरनुक्तेः स्वयमाह ॥ **स हि कर्तेति** ॥ न च कर्तुरित्यादिभाष्यं व्याचष्टे ॥ **नापीति** ॥ **प्रतिपादितमिति** ॥ अभिमानिनय इति भावः । अपिशब्दार्थमाह ॥ **अनीश्वराणामिति** ॥ **अत इति** ॥ श्रुतिसिद्धत्वादित्यर्थः । अश्रौतजीवकर्तृत्वाङ्गीकारे गौरवमेव । तदभावादेव सिद्धान्ते लघुतेति न्यायविवरणं योजयति ॥ **किं त्विति** ॥ प्रकृतोपयोगितयार्थमाह ॥ **युक्तीनां जाते सतीति** ॥ एवकारो युक्तय एवेत्यन्वेतीति भावेनाह ॥ **ता एवेति** ॥ तर्हि मीमांसाव्याघात इत्यत आह ॥ **वाक्यानामिति** ॥ **परस्परेति** ॥ न तु वाक्यान्तरविरोधे वा एकवाक्येऽपि पूर्वोत्तरविरोधे वा इत्यर्थः । अर्थसाधिकेति शेषोक्तिः ।

## अभिनवचन्द्रिका

**तस्यैवाभावादिति** ॥ जीवनियमनाय जीवप्रवेशयुक्तस्य तस्यैवाभावादित्यर्थः ॥ **न च श्रुत्येति** ॥ 'य आत्मानमन्तरो यमयति' 'स हि कर्ता' इत्यादिश्रुत्येत्यर्थः ॥ **स हि कर्तेतीति** ॥ 'य आत्मानमन्तरो यमयति' इति श्रुतिरपि ग्राह्या । ननु भवेद्देवानामदृश्यत्वाशक्तिमत्त्वम् । अदृश्यत्वशक्तेः देवत्वानन्तर्गतत्वात् देवत्वसाधिकाया उपासनाया एव अदृश्यत्वशक्तिसाधकत्वेन कारणसद्भावात् न त्वीश्वरस्य उपासनाशून्यस्य तस्य कारणाभावेन कार्यस्याप्ययोगादित्याक्षिपति – **कुत इति** ॥ कारणाभावान्न कुतोऽपीत्यर्थः । उत्तरमाह – **लोके पिशाचादीनामिति** ॥ अत्र वक्तव्यम् अदृश्यत्वशक्तिः उपासनासाध्या तद्विधुरपरमेश्वरस्य नेति वदता उपासनाविधुराणां पिशाचादीनां कुतः कारणात् सेति । यदि तस्याः प्रामाणिकत्वात् उपासनारूपकारणासम्भवेऽपि कारणान्तरं कल्प्यते, हन्त तर्हि परमेश्वरस्याप्यदृश्यत्वशक्तेः 'यत्तदद्रेश्यम्' इत्यादिनिरवकाशप्रमाणसिद्धत्वात् सा कुतो नाङ्गीकार्या? पिशाचादीनां उपासनारूपकारणासम्भवे कारणान्तरकल्पनवत् इह सर्वथा कारणासम्भवे स्वाभाविकाया एव शक्तेरभ्युपगन्तव्यत्वादिति भावः ।

(अभिनवचन्द्रिका)

अनीश्वराणामिति विशेषणं पिशाचानामदृश्यत्वशक्तिहेतूपासनाभावात् कारणान्तरं कल्प्यमिति द्योतनार्थम् । सर्वेश्वरस्येति विशेषणं तु ईश्वरशक्तेः स्वाभाविकत्वेनाकारण-कत्वद्योतनार्थमिति बोध्यम् ॥ **न केवलमिति** ॥ न केवलं जीवकर्तृत्वपक्षे हिताक्रियार्दीना-मसत्त्वमापाद्यते किं तर्हि सूत्रार्थतया वक्ष्यमाणश्च दोष आपततीत्यर्थः ॥ **अंशेन** वेति ॥ क्वचिदिति शेषः । क्वचित् सामस्त्येन क्वचिदंशेनेत्यर्थः । आद्ये कृत्स्नप्रसक्तिरिति दूषणमापाद्यत इति भावेनाह – **नाद्य इति** ॥ आद्यपक्षे कृत्स्नप्रसक्तेः सद्भावादाद्यपक्षो नेत्यर्थः ॥ **न च स्यादेवमिति** ॥ आद्यपक्षे दूषणत्वेन यदापादितं तदिष्टमिति न वाच्यमित्यर्थः । द्वितीये तु निरवयवत्वशब्दव्याकोपः स्यादिति दूषणमुपतिष्ठत इति भावेनाह– **न द्वितीय इत्यादिना** ॥ **अंशाभावादिति** ॥ नन्विदमयुक्तम्, अंशेन प्रवृत्तेरनुभवसिद्धत्वस्य भवद्भिरेवाभिधानात् । न ह्यनुभवसिद्धं प्रमाणशतेन नेति शक्यते वक्तुम्, अतिप्रसङ्गात् । किञ्च आत्मनः दशदिक्षु दशपरमाणुसंयोगा भवन्ति, तेषां चाऽव्याप्यवृत्तित्वात् जीवस्यांशाः स्वीकार्याः । प्रदेशवृत्तित्वस्यैव अव्याप्यवृत्तित्वरूपत्वादिति चेत्, न ब्रूमो वयं सर्वथा जीवस्यांशा एव न सन्तीति, येनोक्तदोषः स्यात् । किं नाम रात्रिभोजनमन्तरा दिवा अभुञ्जानस्य पीनत्ववत् अनंशतया श्रुतिसिद्धस्यांऽशा-पादकपरमस्वतन्त्रा घटितघटकपरमेश्वरमन्तरा अनुभवसिद्धा अपि नोपपन्ना इति ॥ **न च सांशत्वमिति** ॥ अघटितघटकपरमेश्वरमन्तरेति शेषः ॥ **व्याकोपादिति** ॥ श्रुतेः स्वतः कार्योपयोग्यंशाभावप्रतिपादकत्वादिति भावः । अतः परं टीकायां श्रूयमाणं 'एतेन कार्यानुसारेण प्रवृत्तिरित्यपि परास्तम्' इत्यन्तं वाक्यं प्रक्षिप्तम् । अस्यैवांशे न वेति द्वितीयपक्षत्वात् । अत एव सुधायां तृतीयप्रकाराभावात्' इत्युक्तम् । ततश्चैवं टीकापाठः 'श्रुतिव्याकोपादिति भावः' इति । घटकान्तरमाशङ्क्य निषेधति – **नेति** ॥

**पूर्वपक्षस्तु** – 'स्वतन्त्र एव जीवो घटादिकार्याणां कर्ता । जीवो हि यत् कार्यं करोमीति सामग्रीं मेलयति तत् करोतीत्यनुभवात् । कुलालः घटादिकर्ता तद्विषयकृतिमत्त्वात् यथाऽहम्' इत्यनुमानाच्च । न चानुभवबलादस्तु जीवः कर्ता तथापि नासौ स्वतन्त्रः, किं नाम स्वान्तर्याम्य-धीन इति वाच्यम् । जीवशरिरे जीवनियामकेश्वरस्याभावात्, भावे चोपलभ्येत । न हि जीवशरीर ईश्वरोऽस्ति । जीवश्च तन्नियम्यः, तथापि नासौ तं पश्यतीति शक्यते वक्तुम् । नियम्यानां नियामकदर्शनावश्यम्भावात् एवमपीश्वरकल्पने कल्पनागौरवम् । अप्रामाणिकस्य

(अभिनवचन्द्रिका)

जीवशरीरस्थत्वस्य तन्नियामकत्वस्य कल्पनात् । एवं च परिदृश्यमानघटादीनां जीवकर्तृत्वे सिद्धे महदादिकार्याणामपि अनीश्वरब्रह्मकर्तृत्वं सिध्यति । 'न कुलालादयो ब्रह्मवशाः, ब्रह्म तु सर्वनियामकम्' इत्यस्य तु व्याहतत्वात् । तथा च श्रुतिः 'जीवाद्भवन्ति भूतानि' इति । नन्वियं श्रुतिः ईश्वरविषयेति चेत्, अत्र वक्तव्यं, किं जीवसाधारण्येन श्रुतेः ब्रह्मपरत्वमुच्यते, आहोस्वित् परमैश्वर्यादिविशिष्टब्रह्मपरत्वम् । आद्ये न नो हानिः । सर्वजीवानां सम्भूय सर्वजगत्कारणत्वं वदद्भिरस्माभिरपि 'जीवाद्भवन्ति' इति श्रुतिः घटादीनां कुलालजन्यत्वमिव महदादीनां जीवतुल्यब्रह्मजन्यत्वं वदतीत्यङ्गीकारात् । न द्वितीयः । तस्यैवाभावात् । अतः श्रुत्यादिबलाज्जीवस्यैव स्वतः कर्तृत्वादसम्भवि द्वितीयसूत्रोक्तं सर्वजगज्जन्मादिकारणत्वलक्षणं ब्रह्मण इति ।

**सिद्धान्तस्तु** – न जीवः स्वातन्त्र्येण कर्ता, अपि तु परमेश्वरः, तर्कविरुद्धत्वात् । तथा हि यदि स्वातन्त्र्येण कर्ता स्यात्तर्हि हिताकरणम्, अहितकरणं च न स्यात् । विद्येते च ते । अतो नासौ स्वतन्त्रः कर्ता । ननु यदि यत्किञ्चिद्दोषमात्रेण जीवकर्तृता निराक्रियते तर्हि ब्रह्मणोऽपि कर्तृत्वं न प्राप्नोति । तस्यापि श्रमादिदोषनियमात् । एवं पक्षयोः साम्येऽनुभवादिसिद्धं जीवकर्तृत्वमेवाश्रयणीयमिति चेत्, न ईश्वरे श्रमाद्यभावस्य प्रमाणसिद्धत्वेन तदभावापादनस्येष्टापादनत्वात् । जीवे च हिताकरणादीनां प्रामाणिकत्वेन तदभावापादनस्यानिष्टत्वेन वैषम्यात् । नन्वथापि जीवः अन्यनिरपेक्षकर्ता चेतनत्वात् ईश्वरवत् इत्यनुमानात् स्वातन्त्र्यमिति चेत्, न अस्वातन्त्र्येण हेतुना अन्यनिरपेक्षत्वाभावस्यापि साधयितुं शक्यत्वात् । चेतनत्वहेतोरप्रयोजकत्वाच्च ।

ननु न जीवस्य स्वतःकर्तृत्वाभावो युक्तः । स हि यत् कार्यमारभते तत् समापयतीत्युपसंहारदर्शनादिति चेत्, न गोषु क्षीरदर्शनेऽपि प्रामाणिकत्वेन प्राणाधीनत्ववत् एतस्य परमात्माधीनत्वोपपत्तेः । न जीवस्येश्वराधीनकर्तृत्वं वाच्यम् । ईश्वरस्य जीवनियामकत्वेन जीवशरीरेऽनुपलब्धेः । न हि जीवः तन्नियम्यः सन् तदाज्ञया प्रवर्तते, तं च न जानातीति सम्भवति । अतो जीवनियामकत्वेन नास्त्येव जीवशरीरस्थ ईश्वर इति चेत्, न देवादिवदन्तर्धानशक्त्या प्रत्यक्षेणाऽनुपलभ्यमानत्वेऽपि आगमेनोपलभ्यमानत्वात् । न चेश्वरस्य देवादिवदन्तर्धानशक्तित्वं युक्तम् । तस्या उपासनासाध्यत्वेनेश्वरे तदभावादिति चेत्, हन्त

(अभिनवचन्द्रिका)

तर्हि पिशाचादीनां तन्न स्यात् । उपासानाभावात् । अथ प्रमाणसिद्धाऽन्तर्धानशक्तिः पिशाचादीनां न हातुं शक्येति कारणान्तरं कल्प्यते, तर्हि 'यत्तदद्रेश्यम्' इत्यादिप्रमाणसिद्धा सा न हातुं शक्येति नित्या सा कल्प्यताम् । किञ्च जीवः स्वतन्त्रः कर्तेति वदन् प्रष्टव्यः, जीवः सामस्त्येन सर्वस्वकार्यकर्ता, उत कश्चिदंशेन । आद्ये यदि जीवः सामस्त्येन सर्वस्वकार्यकर्ता स्यात् सामस्त्येन तृणादानादावपि कर्ता स्यादिति तर्कविरोधः । द्वितीये यदि जीवः अंशेन स्वकार्यकर्ता स्यात्तर्हि निरंशत्वप्रतिपादकश्रुत्यप्रामाण्यं स्यादिति तर्कविरोधः । तथा च कर्तृत्वं सामस्त्येन अंशेन वा प्रवृत्तिव्याप्यमिति जीवस्य स्वातन्त्र्याङ्गीकारे व्यापकीभूतप्रवृत्त्ययोगात् कर्तृत्वमेव न स्यादिति स्वातन्त्र्यं त्याज्यम् । न जीवस्य स्वतःकर्तृत्वेऽपि दोषावकाशः । तस्योपाधिकृतांशवत्त्वेन कृत्स्नप्रसक्त्ययोगात् । स्वाभाविकांशाभावेन श्रुतिविरोधाभावादिति चेत्, तत्र वक्तव्यम् किं जीवः सर्वोऽप्युपहितः तदंशो वा । नाद्यः सर्वजीवस्योपहितत्वे सर्वस्य ग्रस्तत्वेनांशस्यौपाधिकत्वायोगात् । द्वितीये नौपाधिकत्वम्, उपाधिसम्बन्धात् प्रागपि अंशस्य वक्तव्यत्वात्, तस्याप्युपाध्यन्तरकृतत्वेऽनवस्थानात् ।

ननु जीवस्य कर्तृत्वं युक्तिविरुद्धत्वादविचारितरमणीयाविद्यानिमित्तमस्त्विति चेत्, न अविद्यानिमित्तत्वस्याप्रामाणिकत्वात् । 'यद्धि युक्त्या विरुध्येत' इति प्रमाणविरुद्धत्वाच्च । तस्माज्जीवस्य स्वतःकर्तृत्वानुपपत्तेः, युक्त हरेर्जगज्जन्मादिकारणत्वलक्षणमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

न च कर्तुरीश्वरस्येति पूर्वपक्षमाशङ्क्य निषेधकभाष्यानुसारेण शङ्कते **न जीवस्येति** ॥ ईश्वरस्यैवाभावात्तस्य कर्तृत्वं जीवस्य तदायत्तकर्तृत्वविरोध इति भाष्यार्थ इत्युक्तं भवति । **अनुपलब्धीति** ॥ एतेन कर्तुरीश्वस्य प्रत्यक्षेणादृष्ट्याऽश्रुतेरनुपलब्धिलिङ्गबाध इति भाष्यार्थ उक्तो भवति ॥ **अथ चेति** ॥ अप्रमाणिकत्वेऽपीत्यर्थः । एतेनेश्वरस्यादृष्ट्या प्रामाणिकत्वेन कल्पनागौरवलक्षणतर्कविरोध इति भाष्यार्थ उक्तो भवति । कल्पनागौरवपरिहारकतया तावद्भाष्यं योजयति ॥ **नेश्वरस्येति** ॥ तत्र हेत्वाकाङ्क्षायां न युक्तियोगाद्वाक्यानीति भाष्यसूचितं श्रुतिसिद्धत्वेनाकल्पनादिति न्यायविवरणोक्तं हेतुनाऽन्यः कर्ता स हि स्वतन्त्रः परात्परो हरिरित्यादेश्चेति तत्रैवादिपदोपात्तस्य स्पष्टश्रुतिपठनपूर्वमाह ॥ **स हीति** ॥ श्रुतेरनुपलब्धिबाध-

(वाक्यार्थमुक्तावली)

निरासकतयाऽपि देवादिवदित्यन्तभाष्यं व्याचष्टे ॥ **नापीति** ॥ देवादिवदित्यस्यौत्तरेणापि सम्बन्धं मत्वा व्याचष्टे ॥ **देवादीनामिति** ॥ कुत इति दृष्टान्तमात्रस्य साधकत्वात् कुतः प्रमाणादित्यर्थः । अपिशब्दः कैमुत्यद्योतक इति भावेनाह ॥ **अनीश्वरणामिति** ॥ भाष्याभिप्रेतश्रुतिषु जीवकर्तृत्वसाधकाभावात् प्रत्युत बाधकसद्भावाच्च पूर्वपक्ष एव कल्पनागौरवमिति भावेन श्रौतजीवकर्तृत्वाङ्गीकारे गौरवमेव । तदभावादेव सिद्धान्ते लघुर्तेति न्यायविवरणोक्तं बाधकमाह ॥ **किं त्विति** ॥ वाक्यविरोधेन युक्तीनामाभासत्वे मीमांसानारम्भप्रसङ्ग इत्यतो युक्तीनामित्यध्याहारं विना प्रकारान्तरेण योजयति– **वाक्यानामिति** ॥ अत्राप्यर्थसाधका इति केवलेति चाध्याहार्यत्वात्पूर्वव्याख्यानम् । सूत्रे अपिपदं साध्यहेत्वोः समुच्चायकं लोकेऽपीति कैमुत्यसूचकं च । देवादिवत् देवोपदेवानामिवेश्वरस्य श्रुतिसिद्धत्वाद्विद्यमानत्वेऽप्यनुपलम्भसम्भवात्तद्धटकशक्तिमत्वाल्लोकेऽप्यनीश्वरपिशाचादीनामपि शक्तिदर्शनेनेश्वरशक्तेः कैमुत्यसिद्धत्वाच्च । न च सर्वकर्तुरीश्वरस्यादृष्टिविरोधादिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**अनुपलब्धीति** ॥ यदि ईश्वरः स्यात् तर्हि उपलभ्येत, नोपलभ्यते तस्मान्नास्तीति अनुपलब्धिबाधितेत्यर्थः । स हि सर्वस्येति स्थिरं यथा भवति तथा समाधानयुक्तः दारुमयीं योषां कृत्वा तस्याः एकमङ्गयति चेष्टा, उपलक्षणमेतत् । नान्यः कर्ता स हि स्वतन्त्र इत्यादि श्रुतिरपि द्रष्टव्या । अदृष्टदेवादयः सन्तीत्यत्र किं प्रमाणमतः आह ॥ **तच्चेति** ॥ अदृष्टदेवादयः सन्तीत्येतदभिमान्यधिकरणे प्रतिपादितमित्यर्थः ॥ **अत इति** ॥ ईश्वरकर्तृत्वस्य श्रौतत्वादिति भावः ॥ **तदभावादिति** ॥ श्रौतत्वेन गौरवाभावादित्यर्थः ।

## वाक्यार्थविवरणम्

यन्नोपलभ्यते तन्नास्तीति व्याप्तेः व्यभिचारमाह ॥ **अदृष्टानामपीति** ॥ देवादीनामेव विद्यमानत्वम् ॥ **अश्रौतेति** ॥ जीवाद्भवन्तीति श्रुतेरीश्वरपरत्वादित्याशयः ॥ **तदभावादिति** ॥ ईश्वरकर्तृत्वस्याश्रौतत्वाभावादित्यर्थः । तथा चेश्वरकर्तृत्वयोरुभयोरपि प्रामाणिकत्वान्न गौरवमिति भावः ।

## वाक्यार्थमञ्जरी

देवादीनामिव सतोऽपि ईश्वरस्यानुपलम्भो युक्तः । तेषां तादृशसामर्थ्येनादृश्यत्वेऽपीशस्य तत्कुत इत्यत उक्तम् ॥ **अपि लोक इति** ॥ पिशाचादीनामपि तादृशसामर्थ्यमस्ति किम्वीश-स्येत्यर्थः ॥ **तच्चेति** ॥ अभिमान्यधिकरणे तादृशदेवसत्वं प्रतिपादितमित्यर्थः । तदभावात् अश्रुतकल्पनाभावात् । युक्तीनामित्यध्याहारं विना योजयति ॥ **वाक्यानामिति** ॥

## सूत्रभाष्यम्

**॥ ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॐ ॥ २७ ॥**

**अयं च दोषो जीवकर्तृत्वपक्षे । एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि पूर्णप्रवृत्तिस्स्यात् । न च तद्युज्यते, सामर्थ्यैकदेशदर्शनात् । न चैकदेशेन, निरवयवत्वात् । 'अथ यः स जीवः स नित्यो निररवयवो ज्ञाताऽज्ञाता सुखी दुःखी शरीरेन्द्रियस्थ' इति भाल्लवेयश्रुतिः । न चोपाधि-कृतोंऽशः स एवांश उपहित इति, द्वित्वापेक्षत्वात् न चान्यत्कल्प्यम् । 'यद्धि युक्त्या विरुध्येत तदीशकृतमेव हि' इति गत्यन्तरोक्तेः ।**

## सत्तर्कदीपावली

हिताकरणादिदोषैर्जीवस्यापरप्रेरितकर्तृत्वं दूषितम् । तदेव प्रकारान्तरेण दूषयति ॥ **कृत्स्ने-त्यादिना** ॥ कार्येषु प्रवर्तमानो जीवो न तावत्सर्वशक्त्या प्रवर्तते । एकाङ्गुल्या तृणोत्थापने सर्वशक्त्यदर्शनात् । न च तत्र शक्त्येकदेशेन प्रवर्तत इति वक्तुं शक्यते स्वगतभेदरहितत्वेन जीवस्य । अथ यः स जीवः स नित्यो निरवयव इति निरवयवत्वश्रवणात् । तदुक्तम् । 'अंशिनो हि घटाद्या ये भिन्नैरेव परस्परम् । अंशैरंशिन उच्यन्ते नैवमेव हि चेतनाः । अतोऽनंशिन इत्येव श्रुतिरेतेषु वर्तत' इति । न च निरंशस्य जीवस्य उपाधिसम्बन्धकृतोंऽशोऽस्तीति वाच्यम् । अंशः उपाधि-सम्बद्धस्यैवैकदेशवृत्तित्वेन उपाधिसम्बद्धांशासम्बद्धांशयोरवश्यम्भावित्वेन निरवयवत्वव्याकोपात् । न च सर्वशक्त्येकदेशशक्तिविकल्पासहत्वात् न जीवप्रवृत्तिर्वाच्येति कल्प्यम् । 'यद्धि युक्त्या विरुध्येत तदीश कृतमेव हि' इति गत्यन्तरोक्तेः । शून्यानिर्वाच्यस्य कल्पनस्यायुक्तत्वात् । अघटितघटकत्वं हीश्वरस्यैव युक्तं नान्यस्य । तदुक्तम् । 'अनंशस्यापि जीवस्य किञ्चित्सामर्थ्ययोजनाम् । कार्येषु यः करोत्यद्धा नमस्तस्मै स्वयम्भुवे । यदि भागेन कार्येषु जीवशक्तिं न योजयेत् । अतस्तदा हि

(मततर्कदीपावली)

सर्वत्र कृत्स्नप्रयत्नोंशितापि च' इति । कृत्स्नप्रयत्न आपद्येतांशिता वा आपद्येतेत्यर्थः । कृत्स्नप्रसक्ति-निरवयवत्वशब्दकोपो वेति विकल्पेन यज्जीवप्रवृत्तेः अघटनमुक्तं तदीश्वरप्रवृत्तेरपि समानमिति न वाच्यम् । अचिन्त्यशक्तेरीश्वरस्यान्यस्मिन्नघटितं घटयतः स्वस्मिन्नघटितघटने का शङ्का । अघटित-घटकत्वं च ईशस्य 'योऽसौ विरुद्ध' इत्यादिश्रुतिसिद्धमिति न तर्केण धर्मिग्राहकप्रमाणविरुद्धेन बाध्यते ।

## तत्त्वप्रदीपिका

एकेनाङ्गुलिमात्रेण प्रवर्तमानोऽपि कृत्स्नां प्रवृत्तिशक्तिं विनियुञ्जीत । एकदेशविनियोग एव च दृश्यते । न चैकदेशेन प्रवृत्तिरेकदेशेनाप्रवृत्तिरिति युक्तम् । निरवयवत्वात् । न चोपाधिकृतोंऽशः स एवांश उपहित इति द्वित्वापेक्षत्वात् । अयमर्थः न च निरंशस्योपाधिकृतोंऽशः कल्प्यः । उपहितोऽपि स एवांशो भवति, नापर इत्युपाधिकृतांशसद्भावस्य पूर्वमेव द्वित्वापेक्षत्वात् । न ह्युपाधिर्निरंशस्यांशमुत्पादयेत्, अभिन्नस्य वा भेदम् । विद्यमान एवांश आकाशेऽप्युपाधिना व्यज्यते । यदि च कृत्स्न उपाधीयेत तर्ह्युपहित एवास्तीति नोपाधिकृतोंऽशः । तत्सद्भावस्योपहितानुपहितविभागेन द्वित्वापेक्षत्वात् । एकदेशश्चेत्पूर्वं विद्यमान एवांश उपहित इति नोपाधिकृतोंऽशः । द्वित्वमपेक्ष्यैवोपाधेः प्रवृत्तेः । द्वित्वस्योपाध्यपेक्षायां परस्पराश्रयप्रसङ्गात् । अथ नोत्पद्यते नापि सन्नेव व्यज्यतेंऽशभेदः । मायामयोपाधिना प्रतीयत एव । न च मायायां परस्पराश्रयताद्यनुपपत्तिः । दुर्घटत्वस्य भूषण-त्वादित्यत आह– **न चान्यत्कल्प्यमित्यादि** ।। यद्धि युक्त्या विरुद्ध्यते तन्नानिर्वाच्या-विद्याशक्तिकृतमिति कल्प्यम् । अनिर्वाच्ये मानाभावस्यासकृद्वर्णितत्वात् । 'यद्धि युक्त्या विरुद्ध्येत तदीशकृतमेव हि' इति गत्यन्तरोक्तेः ।। मानदृष्ट एवैतन्नामाने । 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी' इत्यादि च तच्छक्तौ प्रमाणं समीप एव पठिष्यति । अज्ञानं चाशक्त्यात्मकमेव । यदि च दुर्घटत्वं भूषणमविद्यायास्तर्हि सत्यत्वमनिवृत्तिर्ब्रह्मत्वं च स्यात् ।

## तत्त्वप्रकाशिका

युक्त्यन्तरेण जीवस्य स्वतः कर्तृत्वं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ।। **कृत्स्नेति** ।। न केवलं हिताक्रियादिदोषो जीवस्य स्वतः कर्तृत्वे किं त्वयं वक्ष्यमाणश्च । तथा हि । किं जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्ततेंऽशेन वा । नाद्यः । एकेनाङ्गुलिमात्रेण तृणादानादावपि पूर्णशक्त्या प्रवृत्ति-प्रसक्तेः । न च स्यादेवमिति वाच्यम् । अनुभवविरोधात् । न द्वितीयः । अंशाभावात् । न च सांशत्वमङ्गीकर्तुं शक्यम् । अथेति निरवयवत्वश्रुतिव्याकोपात् । एतेन कार्यानुसारेण प्रवृत्तिरित्यपि

(तत्त्वप्रकाशिका)

**निरस्तमिति भावः । न जीवस्य स्वतःकर्तृत्वेऽपि दोषावकाशः । तस्योपाधिकृतांशवत्त्वेन** कृत्स्न-**प्रसक्त्ययोगात् । स्वाभाविकांशाभावेन श्रुतिविरोधाभावादिति चेत् तत्र प्रष्टव्यम् ।** किं जीवः **सर्वोऽप्युपहितस्तदंशो वा । आद्यं निराह ॥ न चेति ॥ स एव समस्तो जीव** उपहितश्चेत्तर्हि **उपाधिकृतांशो न भवति । सर्वस्य ग्रस्तत्वादिति भावः । द्वितीयं पराह ॥ अंश इति ॥** अंश **उपहित इति च न युक्तम् । उपाधिसम्बन्धार्थं स्वाभाविकद्वित्त्वापेक्षत्वात् । तथा च श्रुतिविरोधः। तस्याप्यौपाधिकत्वेऽनवस्थेति भावः । तर्ह्येतज्जीवस्य कर्तृत्वं युक्तिविरुद्धत्वादविचारितरमणीया-विद्यानिमित्तमस्त्वित्यत आह ॥ न चेति ॥ यत्प्रतीतमपि युक्तिविरुद्धं तदीश्वरकृतमिति** न्यायेन **जीवकर्तृत्वमयुक्तं चेत्तस्येश्वराधीनत्वेनोपपत्तेस्तदेव प्रामाणिकं ग्राह्यं न त्वप्रमाणिकमविद्यानिमित्तं नापि तेनोपपत्तिरिति भावः । यद्वा महदादिकार्यकारणत्वमीश्वरस्याङ्गीकृत्य घटादिविषय** एव पूर्वः **पक्षः सिद्धान्तश्च प्रवृत्त इति ज्ञातव्यम् । तस्माज्जीवस्य स्वतः कर्तृत्वानुपपत्तेर्युक्तं** हरेर्जन्मादि-**कारणत्वलक्षणमिति सिद्धम् ।**

## गुर्वर्थदीपिका

अविचारितरमणीयाविद्येत्यत्र अविचारिते सति रमणीया, विचारिते सति अन्ततोऽघटित-बहुप्रमेयघटितेत्यर्थः । सेश्वरवादेऽपि निरवयवत्वशब्दव्याकोपस्य कः परिहार इत्यतोऽपीदमुदितम् । यद्धि युक्त्येति ईश्वरस्याघटितघटकत्वशक्तेः ईशशब्देनैव सूचितत्वात् । अनीशस्य तु जीवस्येश्वर-विषयकज्ञानमात्रात् स्वविनाशे प्राप्ते स्वात्मानमेव रक्षितुमप्यसमर्थाया अविद्यायाश्च तदसम्भवा-दिति भावः ।

## भावबोधः

**ईश्वराधीनत्वेनोपपत्तेरिति** ॥ तथा चेश्वर एव स्वरूपस्वभावविशेषणानां नियामकश्चैतन्यम-वच्छेदकं विधाय विशेषं निमित्तीकृत्य विरुद्धे अप्यभेदबहुत्वे समावेश्याभेदेन निरवयवत्व-शब्दकोपमपास्य बहुत्वेन कृत्स्नप्रसक्तिं न्यक्कृत्य कार्यानुरूपं सामर्थ्यविशेषं योजयतीति भावः ।

अत्राद्ये– जीवस्य स्वतः कर्तृत्वे बाधकोक्तिः । द्वितीये– ईश्वरकर्तृत्वपक्षस्य तत्समानयोग-क्षेमतापरिहाराय श्रमचिन्तादिदोषाभावे सामर्थ्यविशेषलक्षणहेतूक्तिः । तर्हि चेतनत्वाविशेषा-ज्जीवस्यापि ईश्वरवदेव स्वतन्त्रकर्तृत्वं स्यादित्याशङ्कापरिहाराय तृतीये जीवस्वातन्त्र्यानु-पपत्त्युक्तिः । चतुर्थे– कथं स्वतन्त्रकर्तृत्वस्यैवानुभवात्, जीवस्य स्वातन्त्र्यानुपपत्तिरित्याशङ्क्य

(भावबोधः)

कर्तृत्वस्येश्वराधीनत्वेन स्वातन्त्र्यांशेऽनुभवस्य भ्रमत्वोक्तिः । नन्वीश्वरस्यैवानुपलम्भेनाभावात् कथं जीवकर्तृत्वस्य तदधीनत्वमित्याशङ्कापरिहाराय पञ्चमे ईश्वरानुपलम्भस्य सदृष्टान्तमन्यथा-सिध्युक्तिः । षष्ठे– अस्त्वेवमीश्वरस्तथापि जीवकर्तृत्वस्य तदधीनत्वं कुतः इत्याशङ्कापरिहाराय तदधीनत्वानङ्गीकारे बाधकोक्तिरिति सूत्रक्रमः ।

## भावदीपः

अयं चेति भाष्योक्तेराह ॥ **युक्त्यन्तरेणेति** ॥ भाष्योक्तचशब्दसमुच्चेयमाह ॥ **न केवलमिति** ॥ सौत्रवाशब्दसूचितपक्षभेदं व्यञ्जयन् भाष्यं व्याचष्टे ॥ **किं जीव इति** ॥ न चैकदेशेनेत्यादि व्याचष्टे ॥ **न द्वितीय इति** ॥ न चोपाधिकृतोंशः स एवोपहित इत्येतद् व्याचष्टे ॥ **स एवेति** ॥ तस्यार्थः समस्तो जीव इति ॥ **इति च न युक्तमिति** ॥ न चेत्यस्यावृत्तिरिति भावः ॥ **स्वाभाविकेति** ॥ विवृतमे-तदुपाधिखण्डनतट्टीकादाविति भावः । एतेनोपाधेः कृत्स्नप्रसक्तिः सर्वजीवसम्बन्धः स्यात् । अंशसम्बन्धे निरवयवत्वशब्दकोपो वेति सूत्रस्य वृत्त्यन्तरं दर्शितम् ॥ **ईश्वराधीनत्वेनेति** ॥ ईश्वरस्य वक्ष्यमाणदिशाऽघटितघटकाचिन्त्यानेकशक्तित्वादिति भावः । पूर्वं परिदृश्यमानकार्याणां स्वतन्त्र-जीवकर्तृत्वे समस्तजगतोऽपि तथात्वं सिध्यतीत्यनेन घटादौ महदादौ च सर्वत्र जीव एव कर्ता नत्वीश्वरः । तस्यैवानुपलब्ध्यभावादिति पूर्वपक्षं कृत्वा अनुपलब्धस्यापि देवादिवच्छ्रुतिप्रमितत्वात् स एव सर्वजगतः कर्तेति सिद्धान्तः कृतः । अधुना महदादावस्त्वीश्वरः कर्ता घटादौ जीव एव न त्वीश्वरोऽपि कर्ता । तस्य तत्र कर्तृत्वे नानुपलब्धिबाधितस्य कर्तृत्वेन कल्पने कल्पनागौरवाज्जीव-मात्रकर्तृत्वस्यानुभवसिद्धस्य कल्पने लाघवादिति पूर्वपक्षे अनुपलब्धोऽपि स हि सर्वस्य कर्ता नान्यः कर्तेत्यादिश्रुतिसिद्धत्वाद्घटादावपीश्वर एव स्वतन्त्रकर्ता न जीव इति महदादावीशकर्तृत्वमुपेत्य घटादावेवेशकर्तृत्वाक्षेपसमाधिपरत्वेनाधिकरणं योज्यमित्याह ॥ **यद्वेति** ॥ ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति न्यायविवरणस्य जीवकर्तृत्वेत्यादिभाष्यस्य च पक्षद्वयेऽपि साम्यादिति भावः । अत्र प्राचीनपक्षे जीवस्य महदादिकर्तृत्वेऽनुभवविरोधः । अस्मिन्पक्षे तु नेत्ये-तत्पक्षोत्थापनमिति बोध्यम् ॥ **तस्मादिति** ॥ हिताक्रियादिकृत्स्नप्रसक्त्यादिबाधकभावात् । अनुभवादेराभासत्वेन साधकाभावाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

**अंशेन वेति** ॥ सामर्थ्यैकदेशेन वेत्यर्थः । नाद्य इत्यनन्तरं तथासतीत्यापादकमध्याहार्यम् ।

(वाक्यार्थमुक्तावली)

तर्कस्येष्टापादनत्वमाशंक्यापाकरोति ॥ न चेति ॥ निरवयवत्वेति ॥ यद्यपि जीवस्य निरंशत्वं श्रुतावुच्यते । तथापि सामर्थ्यस्य तदभिन्नत्वान्नानुपपत्तिः । तदुक्तं सुधायाम् । न हि सामर्थ्यापरपर्यायं प्रयत्नादिरूपं कर्तृत्वं जीवाद्भिन्नमस्माकम् । येन तस्य सांशत्वेऽपि जीवस्यानंशत्वं न व्याहन्यत इति । ननु श्रुतौ किमंशस्य सर्वथा निषेधः उत भिन्नांशस्य । नाद्यः । दशादिक्सम्बन्धेनांशानां न्यायप्राप्तत्वात् । व्यतिरेको गन्धवदिति तत्सद्भावस्य वक्ष्यमाणत्वाच्च । द्वितीयस्तु स्यादेव । तदुक्तमनुव्याख्याने– 'अंशिनो हि पटाद्याये भिन्नैरेव परस्परम् । अंशैरंशिन उच्यन्ते एवमेव हि चेतनाः' । अतोऽनंशिन इत्येव श्रुतिरेतेषु वर्तते इति । तथा च सर्वथांशराहित्याभावात्प्रसिद्धांगवैधर्म्यात् श्रुतिप्रवृत्तेः । स्वतोंऽशसद्भावेनैकदेशक्रियोपपत्तौ कृत्स्नप्रसक्तेरभावाद्विभिन्नांशानङ्गीकारेण निरवयवत्वशब्दकोपाभावात् कथमेतत्सूत्रमिति चेन्न । अंशांशिनोरत्यन्ताभेदे एकदेशेन प्रवर्तते नैकदेशान्तरेणेति वक्तुं न शक्यते । एकदेशे द्वयस्याप्यत्यन्ताभेदस्य यद्येनात्यन्तभिन्नं तदत्यन्ताभिन्नस्य तदत्यन्ताभिन्नतेति न्यायप्राप्तत्वेनैकदेशस्यैवैकदेशान्तरत्वेन व्याघातप्रसङ्गात् । अतोंऽशस्य भिन्नत्वे भिन्नाभिन्नत्वे वाङ्गीकार्ये तन्निषेधकश्रुतिव्याकोप इत्यभिप्रायात् । अस्मत्पक्षे तु स्वरूपस्वभावविशेषाणां नियामकश्चैतन्यमवच्छेदकं विधाय विशेषं निमित्तीकृत्य विरुद्धेऽप्यभेदबहुत्वे समावेश्याभेदेन निरवयवत्वशब्दकोपमपास्य बहुत्वे कृत्स्नप्रसक्तिं न्यक्कृत्य कार्यानुरूपं सामर्थ्यविशेषं योजयन् जीवेन कारयतीत्यङ्गीकर्तव्यमिति सुधोक्तरीत्या समाधानमवधातव्यम् ।

एतेनेति ॥ निरवयवत्वश्रुतिविरोधेनेत्यर्थः । सूत्रे इतरव्यपदेशात् जीवस्य कर्तृत्व इति पूर्वानुवृत्या सामर्थ्येन प्रवृत्तावंशेन प्रवृत्ताविति पदद्वयाध्याहारेण चार्थो बोध्यः ।

न जीवस्येत्यारभ्यानवस्थेति भाव इत्यंशेन जीवस्योपाधिकृतांशाङ्गीकारे उपाधेः कृत्स्नप्रसक्तिः सर्वजीवसम्बन्धः स्यात् । अंशेन सम्बन्धाङ्गीकारे निरवयवत्वशब्दकोपो वेति सूत्रस्य वृत्यन्तरमुक्तं ज्ञेयम् ॥ ईश्वराधीनत्वेनैवोपपत्तेरिति ॥ उपपादनप्रकारस्तु सुधावाक्योपन्यासेन कृतो ज्ञेयः । नापीति अविद्ययैव विरोधपरिहार एवेति प्रसङ्गात् । अविद्यानिमित्तत्वं नापि न विरोधशान्तिरित्यर्थः । देवादिवदपीति सूत्रभाष्ये न च कर्तुरीश्वरस्येत्यत्र न चेश्वरस्येतावता पूर्तेः कर्तृपदस्वारस्याय प्रकारान्तरेण पूर्वपक्षमाह यद्वेति ॥ प्राङ्निरीश्वरमतावष्टम्भेन कुत्रापीश्वरप्रवेशो नास्तीति पूर्वपक्षितम् । यद्वा महदादिकर्तृत्वमीश्वरस्याङ्गीकृत्य परादिविषयेऽवश्याभ्युपेयेन जीवेनैवेश्वरोपपत्तावदृष्टेश्वरकल्पने कल्पनागौरवप्रसङ्ग इति पूर्वपक्ष इत्यर्थः ।

(वाक्यार्थमुक्तावली)

अत्राद्ये परकीयश्रुतेर्बाधकोक्तिः । द्वितीये स्वीयश्रुतेः प्रतिबन्ध्याशङ्कितबाधकोद्धारः । तृतीये परोक्तचेतनत्वानुमानस्य सत्प्रतिपक्षतोक्तिः । चतुर्थे परोक्तानुभवस्य भ्रमत्वोक्तिरिति । पञ्चमे तद्भ्रमत्वकल्पकश्रुतेरनुपलब्ध्या युक्तिविरोधपरिहारः । षष्ठेऽप्यनुभवादेर्भ्रमत्वसिद्ध्ये प्रबल-बाधकोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अयं चेति भाष्यस्थचशब्दार्थमाह ॥ **न केवलमिति** ॥ नन्वल्पकार्ये जीव एकदेशेन प्रवर्तते, महति कार्ये सर्वांशेन प्रवर्तते, तथा च न दोषः इत्यतिदेशेन दूषयति ॥ **एतेनेति** ॥ निरवयवत्वशब्दव्याकोपेनेत्यर्थः । कुतो नेत्यतः, स्वाभाविकद्वित्वापेक्षत्वादुपाधिसम्बन्धस्ये-त्याह ॥ **उपाधीति** ॥ न तु औपाधिकद्वित्वसद्भावात् । उपाधिसम्बन्धो भविष्यतीत्यत आह ॥ **तस्यापीति** ॥ ईश्वराधीनत्वेनोपपत्तेरिति ईश्वर एव स्वरूपस्वभावविशेषाणां नियामकश्चैतन्यम्, अवच्छेदकं विधाय विशेषं निमित्तीकृत्य विरुद्धः अप्यभेदबहुत्वे समावेश्य अभेदेन निरवयवत्व-शब्दकोपमपास्य बहुत्वेन कृत्स्नप्रसक्तिं न कृत्यकार्यानुरूपं सामर्थ्यविशेषं योजयतीति भावः । ननु सुधायाम् पूर्वपक्षिणा ईश्वरस्य महदादिकार्यकर्तृत्वमङ्गीकृत्य घटादिकार्येष्वेव जीवस्य स्वातन्त्र्येण कर्तृत्वमङ्गीकृत्य कृत्स्नमित्युक्तत्वेन कथमत्र महदादिकार्येषु जीवस्य स्वातन्त्र्येण कर्तृत्वमिति पूर्वपक्षकरणतद्विरोधि इत्यत आह ॥ **यद्वेति** ॥ तथा च वर्णपरत्वादस्य न तद्विरोधः इति भावः । अत्राद्ये सूत्रे जीवस्य स्वतःकर्तृत्वे बाधकोक्तिः । असद्व्यपदेशान्नेति चेदित्यनुवर्तते स चेत् यद्यर्थे । यदितर्ह्योश्च नित्यसम्बन्धः । तथा च यदि जीवकर्तृत्वव्यपदेशात् जीवः स्वतन्त्रः कर्ता तर्हि हिताकरणादिदोषप्रसङ्गः इति सूत्रार्थः । द्वितीये श्रमाद्यभावे सामर्थ्य-विशेषरूपहेतूक्तिः । तृतीये जीवस्य स्वातन्त्र्यानुपपत्त्युक्तिः । चतुर्थे जीवकर्तृत्वस्य ईश्वराधीनत्वेन स्वातन्त्र्यानुभवस्य श्रमत्वोक्तिः । पञ्चमे ईश्वरानुपलम्भस्य सदृष्टान्तमन्यथासिद्ध्युक्तिः । षष्ठे जीवकर्तृत्वस्य तदधीनत्वाङ्गीकारे बाधकोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**कार्येति** ॥ अल्पकार्ये अल्पां शक्तिमादत्ते गुरुतरकार्ये बह्वीमिति कार्यानुसारत इत्यर्थः । एतेन **निरस्तमिति** ॥ तथात्वे सांशत्वप्राप्त्या निरवयवत्वश्रुतिव्याकोप इत्यर्थः । तस्य । जीवस्य ।

(वाक्यार्थविवरणम्)
उपाधिकृतांशत्वेनेत्यनन्तरं कार्यानुसारेण प्रवृत्त्युपपत्तेरिति शेषः ॥ **उपहितः** ॥ उपाधिना ग्रस्त इत्यर्थः। ग्रस्तत्वादुपाधिनेति शेषः । **अंश** उपहितः । उपाधिना सन्नद्धः । कुत इत्यत आह ॥ **उपाधीति** । उपाधिः अंशं सम्बध्य अंशं सम्पादयतीति वक्तव्यम् । तथा चोपाधिसम्बन्धार्थम् अंशान्तरमङ्गीकरणीयम् । तथा च जीव एकः स्वाभाविकः, तदंश एकः स्वाभाविक इति स्वाभाविकवस्तुनो द्वित्वमपेक्षितम् । स्वाभाविकोंऽशोऽङ्गीकरणीय इति यावत् । अस्त्विति चेत्तर्हि निरवयवत्वश्रुतिव्याकोप इत्यत आह ॥ **तथा चेति** ॥

ननु न श्रुतिव्याकोपः । तस्याः स्वाभाविकांशाभावपरत्वात् । उपाधिसम्बन्धार्थस्वीक्रियमाणोऽप्यौपाधिक एवाङ्गीक्रियते । अतो नोक्तदोष इत्यत आह ॥ **तस्यापीति** ॥ उपाधिसम्बन्धार्थस्वीक्रियमाणस्याप्यंशस्येत्यर्थः । सोऽप्युपाधिः सर्वजीवं सम्बध्य तमंशं सम्पादयति, उत अशान्तरम् इति प्रष्टव्यम् । आद्ये नोपाधिकृतोंऽशः सम्भवति । सर्वस्याप्युपाधिना ग्रस्तत्वात् । द्वितीये तदुपाधिसम्बन्धार्थं पुनरंशान्तरं कल्पनीयम् । तस्य स्वाभाविकत्वे श्रुतिविरोधादौपाधिकत्वेऽङ्गीकार्येऽनवस्थेति भावः ॥ **तदेव** ॥ ईश्वराधीनत्वमेव ॥ **नापि तेनेति** ॥ अविद्याकल्पितत्वकल्पनेन जीवकर्तृत्वं मिथ्याभूतमित्येवोक्तं स्यात् । न सत्यत्वम् । न चेष्टापत्तिः। अनुभवसिद्धत्वात् सत्यतायाः । अतोऽविद्याकल्पितत्वकथनेन जीवकर्तृत्वसत्यताया नोपपत्तिरित्यर्थः ।

## वाक्यार्थमञ्जरी

जीवः सर्वकार्येषु सर्वसामर्थ्येन प्रवर्तते एकदेशेन वा । नाद्यः तृणादानादावपि कृत्स्नसामर्थ्यप्रसक्तेः । न द्वितीयः निरंशत्वप्रतिपादकश्रुतिविरोधादित्यर्थः । अयमित्यनुवादः । **एतेन** निरंशत्वश्रुतिव्याकोपेन ॥ **कार्यानुसारेणेति** ॥ शिलोद्धरणे सर्वशक्त्या प्रवृत्तिस्तृणोद्धरणे एकदेशेन प्रवृत्तिरित्यर्थः । **उपहितः** उपाधिसम्बद्धः ॥ **सर्वस्येति** ॥ स्वासम्बद्धभागादेव भेदकत्वादिति भावः ॥ **स्वाभाविकद्वित्वेति** ॥ अन्यथोपाधिसम्बन्धात्पूर्वम् अंशव्यवहारायोगादिति भावः ॥ **अनवस्थेति** ॥ तस्याप्यौपाधिकांशसम्बन्धस्यैव वक्तव्यत्त्वादिति भावः ॥ **नापीति** ॥ अविद्याया अपि अस्वतन्त्रत्वादिति भावः ।

**॥ इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥**

## ८. अथ शब्दमूलत्वाधिकरणम्

॥ ॐ श्रुतेस्तु शब्दमूलत्वात् ॐ ॥ २८ ॥

न चेश्वरपक्षेऽयं विरोधः । 'योऽसौ विरुद्धोऽविरुद्धो मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिः स परः परमात्मा' इति पैङ्ग्यादिश्रुतेरेव । शब्दमूलत्वाच्च न युक्तिविरोधः ।

'यद्वाक्योक्तं न तद्युक्तिविरोद्धुं शक्नुयात्क्वचित् ।
विरोधे वाक्ययोः क्वापि किञ्चित्साहाय्यकारणम्' इति ॥

पुरुषोत्तमतन्त्रे ।

## सत्तर्कदीपावली

तर्को न्यायरूपः वाक्ययोः परस्परविरोधपरिहारेण विषयव्यवस्थापनाया उपयुक्तो न स्वतन्त्रः परवस्तुनि प्रवर्तते । तदेतदाह ॥ **श्रुतिरित्यादिना** ॥

## तत्त्वप्रदीपिका

न चेश्वरपक्षे कृत्स्नैकदेशविकल्पेन कर्तृत्वविरोधः । श्रुतेस्तु शब्दमूलत्वात् ॥ विरुद्धः लौकिककर्तृविरुद्धलक्षणः । अविरुद्धः प्रमाणतः । अस्यान्यो मन्ता नास्तीत्यमनुः । अवाक् स्वतन्त्रवक्त्रन्तररहितः । अनिन्द्रः अन्येश्वरवर्जितः । अप्रवृत्तिः प्रवर्तकशून्यः । आदिशब्दः शाखान्तरद्योतकः ।

## तत्त्वप्रकाशिका

अत्र विष्णोः सर्वकर्तृत्वे कृत्स्नप्रसक्त्यादियुक्तिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । सर्वकर्तृत्वं विष्णोरुक्तम् । तस्य च युक्तिविरोधे लक्षणसूत्रानुपपत्तेरवश्यमसौ निराकर्तव्यः । तत्स्रष्टृत्वं विषयः । किं विष्णोर्युक्तमयुक्तं वेति सन्देहः । उक्तन्यायो दोषदर्शनं च सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । जीवकर्तृत्वपक्षोक्तदोषस्यात्रापि सम्भवति । तथा हि । किमीश्वरः कार्येषु सर्वशक्त्या प्रवर्तते तदेकदेशेन वा । नाद्यः । तृणादानादावपि कृत्स्नप्रसक्तेः । न द्वितीयः । 'नेह नानास्ति किञ्चन' इत्यादि श्रुतिव्याकोपात् । न हि वक्तुं युक्तमयं दोषो जीवपक्ष एव नेश्वरपक्ष इति । ईश्वरे तदस्पर्शनिमित्तस्य जीवादतिशयस्यादर्शनात् । विशेषमन्तरेणापि दोषास्पर्शे किं जीवेनापराद्धम् ।

(तत्त्वप्रकाशिका)

**एतेन जीवस्येश्वराधीनकर्तृत्वाङ्गीकारेण कृत्स्नप्रसक्त्यादिदोषपरिहारः प्रागुक्तोऽप्ययुक्तः । अतो युक्तिविरोधान्न विष्णोर्जगत्कर्तृत्वलक्षणं युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ श्रुतेरिति ॥ नेश्वरकर्तृत्वे युक्तिविरोधः । 'योऽसौ विरुद्धः' इत्यादिश्रुतौ लोकविरुद्धधर्माणामीश्वरेऽविरुद्धत याव-स्थानोक्तेः । ननु श्रुत्युक्तत्वेऽपि युक्तिविरुद्धं कथमुपैतुं शक्यम् । अन्यथा जीवेऽपि प्रत्यक्षवलादभ्युप-गन्तव्यमविशेषादिति चेत् । मैवम् । भवेज्जीवप्रतिबन्धेश्वरे युक्तिविरोधो यदि विशेषाभावो भवेत् । न चैवं शब्दैकसमधिगम्यत्वस्य युक्तिविरोधपरिहारोपयोगिनः परमेश्वरे श्रुत्यादिसिद्धत्वाज्जीवे तदभावात् । न हि शब्दैकसमधिगम्यवस्तुनि युक्तिविरोधः । यथा प्रत्यक्षाविषये न प्रत्यक्षविरोध इति भावः । विरुद्धो लोकदृष्ट्या अविरुद्धः प्रमाणैः न मन्ता वक्ता स्वामी प्रवर्तको यस्यासौ तथोक्तः । शब्दैकसमधिगम्ये न युक्तिविरोध इत्यत्र स्मृतिं चाह ॥ यदिति ॥**

## गुर्वर्थदीपिका

'योऽसौ विरुद्ध' इत्यत्राणुत्वमहत्त्वे यौगपद्येन कथ्यमाने यः परमात्मा लोकदृष्ट्या विरुद्धः, विरोधवान् । 'अणोरणीयान्महतो महीयान्' इत्यादिप्रमाणैरविरुद्धः । लोकदृष्ट्या मनुः मनन-योग्यः, 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' 'नाहं विदाम्यहममी मुनयः सुरेशाः' इत्यादिप्रमाणैरमनुः आन्तं मननायोग्यः लोकदृष्ट्या वाक् वक्तुं योग्यः, 'सन्त्यश्रुता अपि नैवात्र शङ्का' । 'यतो वाचो निवर्तन्त' इत्यादिप्रमाणैरवाक् आन्तं वक्तुमयोग्यः । लोकदृष्ट्या इन्द्रः । अर्शवान् अर्श इतिवत् इन्द्रवान् । कृष्णरामाद्यवतारेषु विश्वामित्रनारदादीनामभिवादनदर्शनात् । 'मत्तः परतरं नान्यत्' 'न दैवं केशवात्परम्' इत्यादिप्रमाणैरनिन्द्रः न विद्यते इन्द्रो यस्येति विग्रहः । लोकदृष्ट्या प्रवृत्तिः प्रवर्तकत्वात्, 'नाहं किञ्चिदुपाश्रित' इत्यादिप्रमाणैरप्रवृत्तिरिति योजना । न हि शब्दैकसमधिगम्येत्यनेन यथा शब्दो वक्ति तथैव सोऽङ्गीकार्यः । न तु लोक-दृष्ट्या विरोधः शङ्कनीय इति सूचितम् ।

## भावबोधः

**कृत्स्नप्रसक्त्यादियुक्तिविरोधपरिहारादिति** ॥ अत्रादिपदेन निरवयवत्वशब्दकोप-शरीरेन्द्रियादिविकलत्वाधिष्ठानराहित्यादिलक्षणविरोधिबहुयुक्तिग्रहणम् । ततश्चानुव्याख्याने 'बहुयुक्तयः' इत्यनेनैवैतदधिकरणोपाधिरपि सङ्गृहीत इति भावः । अनेन 'कृत्स्नप्रसक्तिः' इति

(भावबोधः)

पूर्वसूत्रे जीवकर्तृत्वपक्षोक्तदोषस्येश्वरपक्षे उद्धारादनन्तरसङ्गतिरपि सूचिता । **किं विष्णोरिति** ॥ अत्र विष्णोर्जगज्जन्मादिकर्तृत्वं किं युक्तिविरुद्धम् उत नेति चिन्ता । तदर्थमीश्वरकर्तृत्वपक्षेऽपि कृत्स्नप्रसक्त्यादिदोषः प्राप्नोत्युत नेति । तदर्थमन्यत्र विरुद्धत्वेन दृश्यमानं किमीश्वरेऽपि विरुद्धमेवोताविरुद्धमिति । तदर्थं शब्दैकसमधिगम्यत्वविचित्रशक्तिरूपविशेषेण तत्र विरोधपरिहारो न सम्भवत्युत सम्भवतीति । तदर्थमीश्वरपक्षवदेव जीवपक्षेऽपि चेतनत्वादिविशेषेण विरोधपरिहारः स्यादित्यतिप्रसङ्गः किं प्राप्नोत्युत नेति । तदर्थमीश्वर एव प्रतीतविरोधस्यादोषत्वे जीवे प्रतीतविरोधस्य दोषत्वे च प्रमाणं नास्त्युतास्तीति । न जीवाद्विशेषादर्शनं परमेश्वर इति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे– **न हि वक्तुमिति** ॥ **शब्दैकसमधिगम्यत्वस्येति** ॥ युक्तिविरोधनिरासकविचित्रशक्तिसद्भावादित्यनेन च शब्दैकसमधिगम्यत्वसर्वशक्तित्वादीनां विशेषाणामदर्शनं जीव इति न्यायविवरणमपि व्याख्यातम् ॥ **तथोक्त इति** ॥ 'अमनुरवागनिन्द्र अप्रवृत्तिरित्युक्त' इत्यर्थः ।

## भावदीपः

ईश्वरपक्षेऽयं विरोध इति भाष्यानुरोधादाह ॥ **कृत्स्नप्रसक्त्यादीति** ॥ निरवयवत्वमादिपदार्थः ॥ **युक्तीति** ॥ व्याघातपर्यवसायियुक्तीत्यर्थः । एतच्चिन्तायाः सङ्गतिसाफल्ये वक्ति ॥ **सर्वकर्तृत्वमिति** ॥ न चेश्वरपक्षेऽयं विरोध इति भाष्यं नञ्परित्यागेन व्याचष्टे ॥ **जीवकर्तृत्वेति** ॥ **कृत्स्नप्रसक्तेरिति** ॥ न चेष्टापत्तिः । प्रेक्षावत्त्वभङ्गप्रसङ्गादिति भावः । जीवाद्विशेषादर्शनं परमेश्वर इति न्यायविवरणस्य शब्दमूलत्वादित्यादिसूत्रव्यावर्त्यमत्र शङ्कापूर्वं योजयति ॥ **न हीति** ॥ नन्वेवं यद्धि युक्त्या विरुध्येत तदीशकृतमेव हीति प्राचीननयभाष्येण कथं जीवकर्तृत्वोपपत्तिरुक्तेत्यत आह ॥ **एतेनेति** ॥ ईश्वरे जीवाद्विशेषादर्शनेनेत्यर्थः । एतत्सिद्धान्तसिद्धमचिन्त्यशक्तित्वं तस्योपेत्य तदीशकृतमेवेति समाधानस्य शिष्यहितार्थं तत्रोक्तावप्यत्र पूर्वपक्षे तस्यासंमतेरिति भावः ॥ **अत इति** ॥ कृत्स्नप्रसक्त्यादिदोषसम्भवात्तदपवादकस्य विशेषस्य चादर्शनादित्यर्थः । यद्वा जीवाद्विशेषादर्शनेन कृत्स्नप्रसक्त्यादियुक्तिविरोधादित्यर्थः । पूर्ववदत्रापि तुशब्दो जीवसाम्यव्यावर्तक इति भावेन न चेश्वरेत्यादिभाष्यं तस्य प्रागेव विवृतत्वात्तद्भावविवरणफलं न युक्तिविरोध इत्येतदेवानुवदन् भाष्यं व्यनक्ति ॥ **नेश्वरेति** ॥ शब्दैकसमधिगम्यत्वसर्वशक्तित्वादीनां विशेषाणामदर्शनं जीवे । न जीवाद्विशेषादर्शनं परमेश्वरे विशेषश्रुतेरेवेति न्यायविवरणरीत्या

(भावदीपः)

शब्दमूलत्वाच्चेत्येतच्छङ्कापूर्वं व्यनक्ति ॥ **नन्विति** ॥ **श्रुत्यादीति** ॥ 'नावेदविन्मनुते' तमित्यादि श्रुतिस्मृतिसिद्धत्वादित्यर्थः । एतेन विशेषश्रुतेरेवेति श्रुतिपदमुपलक्षणमिति दर्शितम् । भाष्योक्त-श्रुत्यर्थमाह ॥ **विरुद्ध इति** ॥ **तथोक्त इति** ॥ अमनुरवागनिन्द्रोऽप्रवृत्तिरित्युक्त इत्यर्थः ।

## अभिनवचन्द्रिका

**कृत्स्नप्रसक्तेति** ॥ नन्विष्टापादनमेतत् । कृष्णकेशस्यापि पूर्णब्रह्मत्ववत् तृणादानादिशक्तेरपि पूर्णशक्तित्वादिति चेत्, न । यद्येकदेशोऽपि पूर्णः स्यात्, तर्हि एकदेश एव न स्यात्, एकदेशः कृत्स्नश्चेत्यस्य व्याहतत्वात् । तथा च परेणाङ्गीकृतत्वेऽपि तस्य प्रमाणविरुद्धत्वेन अनिष्टत्वेनापादनसम्भवात् । नन्वयं दोषः जीवस्वातन्त्र्याङ्गीकार एव न तु परमेश्वरस्वातन्त्र्याङ्गी-कारे । तस्य परमैश्वर्यसम्पन्नत्वेन जीवादुत्कृष्टत्वात् । न हि परमाशक्तस्य मुमूर्षोः गुरुतर-भारोद्वहनादिकर्तृत्वाङ्गीकारे यो दोषः स दृढाङ्गस्यापि तदङ्गीकारे भवतीत्याशङ्क्य निषेधति– **न हि वक्तुं युक्तमिति** ॥ कुतो न युक्तमित्यत आह – **ईश्वरे तदस्पर्शनिमित्तस्येति** ॥ सत्यमीश्वरस्य परमैश्वर्यं जीवव्यावृत्तमस्ति, नासौ ईश्वरस्वातन्त्र्याङ्गीकर्तुः कृत्स्नप्रसक्त्यादि-दोषनिरासहेतुः, किन्तु कार्त्स्न्यप्रवृत्त्यवयवप्रवृत्ती विना प्रकारान्तरेणेश्वरस्य प्रवृत्तिमत्त्वमेव तत्स्वातन्त्र्याङ्गीकर्तुर्दोषनिरासहेतुः, न चासावीश्वरेऽस्तीति कृत्स्नप्रसक्त्यादिदोषानिरास इति भावः ॥ **शब्दैकसमधिगम्य इति** ॥ अनुमानं तावत् न स्वातन्त्र्येणार्थं साधयति, किन्तु प्रत्यक्षमनुमानं वोपजीव्यैवार्थं साधयतीत्यविवादम् । ततश्च परमेश्वरस्यातीन्द्रियत्वादाग-मोपजीव्यनुमानमेव विरोधीति वक्तव्यम् । न च तत् सम्भवति । उपजीव्यविरुद्धत्वेन स्वस्यैवा-प्रामाण्यादिति भावः ॥ **प्रत्यक्षाविषय इति** ॥ रामकृष्णादौ दोषग्राहिप्रत्यक्षवदित्यर्थः । 'अमनुः, अवाक्, अनिन्द्रः, अप्रवृत्तिरिति' पदचतुष्टयं युगपद्व्याचष्टे – **न मन्तेत्यादिना** ॥ न विद्यते मन्ता यस्यासावमनुः । न विद्यते वक्ता यस्यासाववाक् । न विद्यते इन्द्रः स्वामी यस्यासावनिन्द्रः । न विद्यते प्रवर्तको यस्यासावप्रवृत्तिरिति विवेकः ।

## वाक्यार्थमुक्तावली

कृत्स्नप्रसक्त्यादीत्यादिपदेन निरवयवत्वशब्दकोपाशरीरेन्द्रियादिविकलत्वाधिष्ठानादि-राहित्यादिलक्षणविरोधिबहुयुक्तिग्रहणम् । ततश्चानुव्याख्याने बहुयुक्तय इत्यनेनैतदधिकरणोपाधिरपि

(वाक्यार्थमुक्तावली)

सङ्गृहीत इति भावः । न चारम्भाधिकरण एवोपलक्षणत्वेन बहुयुक्तिविरोधानामशेषाणां परिहृतत्वाद्व्यर्थमिदं **सूत्रमिति** वाच्यम् । अखण्डे ब्रह्मण्येकदेशैकदेशिभावस्य व्याहतत्वात् व्याघातपर्यवसायित्वेनातिप्रबलयुक्तिविरोधस्यात्राशङ्कित्वादिति भावेन कृत्स्नेतिसूत्रे जीवकर्तृत्वोक्तदोषस्येश्वरपक्षे उद्धारानन्तरसङ्गतिरप्युक्ता भवतीति ज्ञेया ॥ **किं विष्णोरिति** ॥ अत्र पूर्वोक्तं विष्णोः सर्वकर्तृत्वं न युक्तमुतयुक्तमिति चिन्ता । तदर्थं तस्य सर्वकर्तृत्वे कृत्स्नप्रसक्त्यादिदोषोऽस्त्युत नेति। तदर्थमन्यत्र युक्तिविरुद्धं ब्रह्मण्यपि तद्विरुद्धं न वेति । तदर्थं ब्रह्मणि तद्विरोधः तस्य तर्कागोचरत्वाद्यटितघटनाशक्तिभ्यां सुपरिहर उत नेति । न चेश्वरपक्षेऽयं दोष इति भाष्यसूचितपक्षमाह ॥ **जीवकर्तृत्वपक्ष इति** ॥ **कृत्स्नप्रसक्तिरिति** ॥ न चेष्टापत्तिः प्रेक्षावत्वभङ्गप्रसङ्गात् । तथा चेश्वरस्य व्याघात इति भावः ॥ **श्रुतिव्याकोपादिति** ॥ भिन्नांशाभावादिति भावः । न च विशेषबलादंशांशिभावः । जीवेश्वरमनुपेत्य विशेषबलादेवाविरोधो तदंशांशस्यापि शब्दमूलत्वात् । आत्मनि चैवमित्यादि सूत्रव्यावर्त्यं विशेषादर्शनमित्युक्तपूर्वपक्षं व्यनक्ति ॥ **न हीति** ॥ **प्रागुक्त इति** जीवस्येश्वराधीनकर्तृकृत्स्नप्रसक्त्यादिदोषप्रसङ्गः । न चैतद्युक्तमत ईश्वराधीनकर्तृत्वमङ्गीकार्यमिति तर्कस्य विपर्ययपर्यवसानेन सूचित इत्यर्थः । न च यत्तु युक्त्या विरुध्येत तदीशकृतमेव हीतीश्वरस्याचिन्त्यशक्त्युक्त्या दोषस्य प्रागपाकृतत्वात् कथं तदापकरणमगतार्थता चेति वाच्यम् । एतदधिकरणप्रमेयस्य भाष्यकृता शिष्यहितार्थं तत्रोक्तत्वात् । स्पष्टमेतत्सुधायाम् ॥ **लोके विरुद्धधर्माणामिति** ॥ अखण्डत्वैकदेशित्वादिविरुद्धधर्माणामित्यर्थः ॥ **यदि विशेषाभावो भवेदिति** ॥ एतेन सौत्रस्तुशब्दो विशेषोऽर्थोऽपीत्युक्तं भवति ॥ **श्रुत्यादीति** ॥ एतेन श्रुतेरित्येतदावर्तत इत्युक्तं भवति ॥ **जीव इति** ॥ एतेन शब्दैकसमधिगम्यत्वसर्वशक्तित्वादिविशेषाणामदर्शनं जीव इति न्यायविवरणोक्तरीत्या सिद्धान्तन्यायोऽप्युक्तो भवति । अमनुरित्यादौ विग्रहमर्थं वदन् युगपदेन दर्शयति ॥ **न मन्ता वक्तेति** ॥ न मन्ता यस्य सोऽमनुः। न वक्ता यस्य सोऽवागित्यादि द्रष्टव्यम् । सूत्रे ईश्वरपक्ष इति शेषः । उप सहानदर्शनादित्यतो नेति वर्तते । कृत्स्नप्रसक्तिसूत्रं चात्रानुषज्यते । तुशब्दोऽवधारणे विशेषे च । ततश्च नेश्वरपक्षे कृत्स्नप्रसक्तिः निरवयवत्वशब्दकोपो वा युक्तिविरुद्धधर्माणामप्यविरोधेनावस्थानप्रतिपादकश्रुतेरेव विद्यमानत्वात् न पुनर्जीव इव प्रत्यक्षमित्येवार्थः । न च प्रापकसाम्यात्पक्षद्वयसाम्यम् । किं त्वात्मनि तु जीवाद्विशेषोऽस्ति । कुतः आत्मनः शब्दमूलत्वात् । शब्दैकसमधिगम्यत्वात् तथा श्रुतेरिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**कृत्स्नप्रसक्त्यादियुक्तिविरोधपरिहारादिति** ॥ अत्र आदिपदेन निरवयवत्वशब्दव्याकोप-शरीरेन्द्रियादिविकलत्वाधिष्ठानराहित्यादिलक्षणविरोधि बहुयुक्तिग्रहणम् । अत्र यदि कृत्स्न-प्रसक्तिर्निरवयवत्वशब्दव्याकोपादिदोषदुष्टत्वात् न जीवस्य कर्तृत्वं तर्हि कृत्स्नप्रसक्त्यादिदोषाणां ईश्वरपक्षेऽपि साम्यान्नेश्वरस्य जगत्कर्तृत्वमिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **जीवेति** ॥ जीवकर्तृत्वाङ्गीकारे उक्तस्य कृत्स्नप्रसक्त्यादेः विष्णुपक्षेऽपि साम्यादित्यर्थः ॥ **तृणादानादाविति** ॥ न चेष्टापत्तिः । लोके दृष्टत्वेनानुभवविरोधादिति भावः ॥ **नेहेति** ॥ तत्रैकदेशाद्यभावस्योक्तत्वादिति भावः ॥ ननु कृत्स्नप्रसक्त्यादिदोषः जीवकर्तृपक्षस्यैव बाधको, नेश्वरपक्षस्येत्यत आह ॥ **न हि वक्तुमिति** ॥ कुतो नेत्यत आह **ईश्वरे इति** ॥ जीवापेक्षया ईश्वरे विशेषाभावेऽप्यस्तु दोषास्पर्शः इत्यत आह ॥ **विशेषमिति** ॥ यदुक्तं जीवे स्वातन्त्र्येण कर्तृत्वेऽपि कथं कृत्स्नप्रसक्त्यादिदोषाभावः इति शङ्कायां ईश्वराधीनत्वात् न दोषः इति तदप्य-युक्तमित्याह ॥ **एतेनेति** ॥ ईश्वरपक्षस्य कृत्स्नप्रसक्त्यादिदोषदुष्टत्वोपपादनेनेत्यर्थः ॥ **अन्यथेति** ॥ युक्तिविरुद्धमप्यङ्गीक्रियते चेदित्यर्थः ॥ **जीवेऽपीति** ॥ कर्तृत्वमिति शेषः ॥ **श्रुत्यादिसिद्ध-त्वादिति** ॥ 'नेन्द्रियाणि नानुमानम्' इत्यादिश्रुत्यादिसिद्धत्वादित्यर्थः ॥ **तदभावादिति** ॥ शब्दैकसमधिगम्यत्वाभावादित्यर्थः । अस्तु शब्दैकसमधिगम्यत्वं, तथापि युक्तिविरोधः कुतो नेत्यत आह ॥ **न हीति** ॥ तथा च युक्त्यविषयत्वात्र युक्तिविरोधः प्रसरतीति भावः । युक्त्य-विषयेऽपि कुतो न विरोधः इत्यतः कुत्राप्यदृष्टत्वादित्याह ॥ **यथेति** ॥ विरुद्धः अविरुद्धः इत्येतत् व्याहृतमतो व्याचष्टे ॥ **विरुद्धो लोकदृष्ट्येति** ॥ **तथोक्तः इति** ॥ अमनुरवाग-निन्द्रोऽप्रवृत्तिरित्युक्त इत्यर्थः ।

## वाक्यार्थविवरणम्

**नेहेति** ॥ तत्रैकदेशाद्यभावस्योक्तत्वादिति भावः । ननु कृत्स्नप्रसक्त्यादिदोषो जीवकर्तृत्व-पक्षस्यैव बाधको नेश्वरपक्षस्येत्यत आह ॥ **न हि वक्तुमिति** ॥ **प्रत्यक्षबलात्** ॥ **अनुभव-बलात्** ॥ अभ्युपगन्तव्यम् । कृत्स्नप्रसक्त्यादियुक्तिविरुद्धमपि कर्तृत्वमित्यर्थः ॥ **अविशेषात्** ॥ युक्तिविरुद्धत्वाविशेषादित्यर्थः ।

## वाक्यार्थमञ्जरी

**उक्तन्याय इति** ॥ प्रथमाध्यायोक्तप्रमाणानीत्यर्थः ॥ **नेह नानेति** ॥ इह ब्रह्मणि नाना अंशादि विभागो नेत्यर्थः ॥ **एतेनेति** ॥ ईश्वरस्य दोषित्वप्रतिपादनेनेत्यर्थः । न हि स्वदोष-परिहाराक्षमः परदोषं परिहरतीति युक्तमिति भावः । नेश्वरस्य कर्तृत्वे युक्तिविरोधः । श्रुतेस्तु लोकविरुद्धधर्माणामीशे अविरुद्धत्वप्रतिपादकयोसाविति श्रुतेरेव । श्रुत्युक्तमपि युक्तिविरुद्धं कथ-मभ्युपेयमित्यत उक्तम् ॥ **शब्दमूलत्वादिति** ॥ शब्दैकप्रमाणगोचरत्वादीश्वरस्य न तत्र युक्ति-विरोधः शङ्क्य इत्यर्थः ॥ **शब्दैकसमधिगम्यत्वस्येति** ॥ शब्देतरप्रमाणागोचरत्वस्येत्यर्थः ॥ **तथोक्त इति** ॥ अमनुरवागनिन्द्रोऽप्रवृत्तिरित्युक्त्येत्यर्थः । स्वयं तु मंतृत्वादेर्मनुरित्याद्युक्त इत्यपि ध्येयम् ।

## सूत्रभाष्यम्

**॥ ॐ आत्मनि चैवं विचित्राश्च हि ॐ ॥ २९ ॥**

**परमात्मनो विचित्राश्च शक्तयस्सन्ति, नान्येषाम् ।**

**'विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः ।**
**एको वशी सर्वभूतान्तरात्मा सर्वान्देवानेक एवानुविष्ट' ॥**

इति श्वेताश्वतरश्रुतिः ॥

## सत्तर्कदीपावली

यदुक्तमघटितघटकत्वमीश्वरस्यैव तद्दृढीकरोति ॥ **आत्मनि चेत्यादिना** ॥

## तत्त्वप्रदीपिका

श्रमचिन्तायाशङ्कानिवृत्त्यर्थमधिकशक्तित्वमुक्तम् । न च तावदेव । परमात्मनो विचित्राश्च शक्तयः सन्ति । सर्वस्रष्टृत्वादिकं भिन्नावयवशून्यानां जीवानामेकदेशेन प्रवृत्तिप्रदत्वं स्वस्य तु तादृशस्यान्यनिरपेक्षा प्रवृत्तिः कर्त्रन्तरवैलक्षण्यमित्यादिकमुक्तं यथा युज्यते । एवं विधा एवमेवानुक्तविषयाश्च न चान्येषां सन्ति, परमात्मन्येव । तथाहि श्रुतिः – विचित्रशक्तिरित्यादिका ।

## तत्त्वप्रकाशिका

जीव एव युक्तिविरोधो नेश्वर इत्येतमर्थं युक्त्यन्तरेण प्रतिपादयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **आत्मनीति** ॥ युक्तिविरोधनिरासकविचित्रशक्तिसद्भावादीश्वरे न युक्तिविरोधः । तदभावाज्जीव एव चासावित्यर्थः । आद्यश्चशब्द एवार्थः । तेन नान्येषामिति सिद्ध्यति । तदुक्तम् । 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' । इति ईश्वरस्यैव विचित्रशक्तित्वं नान्येषामित्येतत्कुत इत्यतो हीति सूचितां श्रुतिं दर्शयति ॥ **विचित्रेति** ॥

## भावबोधः

**विचित्रशक्तिसद्भावादिति** ॥ न चेदम् 'अधिकं तु भेदनिर्देशात्' इत्यनेन पुनरुक्तमिति वाच्यम्, तत्र साधनास्मरणश्रमचिन्तादिदोषपरिहारहेतुश्रोतृत्वमन्तृत्वाद्यतिशयसद्भावे प्रमाणोक्तिः, अत्र तु कृत्स्नप्रसक्त्यादिदोषपरिहारहेत्वघटितघटकविचित्रशक्तिसद्भावे प्रमाणोक्तिरिति मानमेयभेदसत्त्वात् । यथोक्तम्–

'मानमेयविशेषेण पुनरुक्तिर्न जायते'

इति विचित्रशक्तेर्युक्तिविरोधनिरासकत्वे स्वयं प्रमाणमाह– **तदुक्तमिति** ॥ 'ही' इति सूचित-मिति । अनेन विशेषश्रुतेरेवेति न्यायविवरणमपि व्याख्यातम् ।

## भावदीपः

विचित्राश्चेति चशब्दादाह ॥ **युक्त्यन्तरेणेति** ॥ न केवलं शब्दमूलत्वादित्यर्थः । सौत्रैवंशब्दार्थमाह ॥ **युक्तिविरोधनिरासकेति** ॥ न युक्तिविरोध इति पूर्वभाष्योक्तसाध्ये परमात्मन इत्यादिभाष्यं हेतुत्वेन व्याचष्टे ॥ **विचित्रेत्यादिना** ॥ नान्येषामित्येतत्सूत्रारूढं करोति ॥ **आद्य इति** ॥ उक्तहेत्वोरप्रयोजकत्वशङ्कानिरासाय नियामकमाह ॥ **तदुक्तमिति** ॥ एकादशगीताभाष्योक्तविष्णुपुराणवाक्य इत्यर्थः ॥ **श्रुतिं दर्शयतीति** ॥ एतेन विशेषश्रुतेरेवेत्येतद्विवृतं ध्येयम् ।

## अभिनवचन्द्रिका

**न तांस्तर्केण योजयेदिति** ॥ अचिन्त्यधर्मसाधनाय, बाधनाय वा, तर्को न प्रयोक्तव्य इत्यर्थः । शब्दमूलत्वादित्यस्य न हि शब्दैकसमधिगम्ये वस्तुनि युक्तिविरोधः ।

## वाक्यार्थमुक्तावली

**युक्त्यन्तरेणेति** ॥ प्रमाणस्य ज्ञापकत्वेनाविरोधाकारकत्वात् घटकयुक्त्यंतरेणेत्यर्थः । भाष्ये न चान्येषामिति श्रुत्यनुसारात्कुण्डवदरवदाधारत्वमात्रप्रतीतेः परमात्मन इति परिणामेनार्थ उक्तः। द्वितीयश्चशब्दो युक्तिसमुच्चय इति स्पष्टत्वाट्टीकायां न व्याख्यातः । विचित्रशब्दश्चालौकिकत्ववाची । विचित्रशक्तिसद्भावादिति पञ्चमीप्रयोगेन हिशब्दो यस्मादिति हेत्वर्थकोऽपीत्युक्तं ज्ञेयम् । हि यस्मादात्मन एव विचित्राः शक्तयः । विचित्रशक्तिः पुरुष इति श्रुतेः सन्ति। नान्येषाम् । अतश्च नेश्वरपक्षे युक्तिविरोध इति सूत्रार्थः । न चेदमधिकन्तु भेदनिर्देशादित्यनेन पुनरुक्तमिति वाच्यम् । तत्र साधनास्मरणश्रमचिन्तादिदोषपरिहारहेतुश्रोतृत्वमन्तृत्वाद्यतिशयसद्भावे प्रमाणोक्तिः ।

अत्र तु कृत्स्नप्रसक्त्यादिदोषपरिहारे त्वघटितघटकविचित्रशक्तिसद्भावे प्रमाणोक्तिरिति मानमेयभेदसद्भावात् । विचित्रशक्तेर्युक्तिविरोधपरिहारकत्वे स्वयं प्रमाणमाह ॥ **तदुक्तमिति** ॥ **न तांस्तर्केणेति** ॥ अचिन्त्यधर्मसाधनाय बाधनाय वा तर्को न प्रयोक्तव्य इत्यर्थः ।

## तत्त्वसुबोधिनी

ननु नान्येषामिति भाष्ये उक्तं तदेतत् कस्य सौत्रपदस्यार्थः इत्यतः आह ॥ **आद्यः इति** ॥ शब्दैकसमधिगम्य(त्वे)न युक्तिविरोध इत्यत्र अनुव्याख्यानसंमतिमाह ॥ **तदुक्तमिति** ॥

## वाक्यार्थमञ्जरी

आत्मनि च परमात्मन्येव एवंविधयुक्तिविरोधनिरासकाः विचित्राः अघटितघटकाः शक्तयः सन्ति न जीवे विचित्रशक्तिरिति श्रुतेरित्यर्थः । विचित्रशक्तेर्युक्तिविरोधनिरासकत्वं कुत इत्यत आह ॥ **तदुक्तमिति** ॥ गीताभाष्ये इति शेषः ।

## सूत्रभाष्यम्

**॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ३० ॥**

**'ये दोषा इतरत्रापि ते गुणाः परमे मताः ।**
**न दोषः परमे कश्चिद्गुणा एव निरन्तरा' ।**

(सूत्रभाष्यम्)

इति वचनाज्जीवपक्ष एव दोषो न परपक्षे । 'अथ यस्स दोषः साञ्जनः सजनिः स जीवोऽथ यः स निर्दोषो निष्कलः सगुणः परः परमात्मा' इति काषायणश्रुतिः ।

## सत्तर्कदीपावली

अत्र यद्विचित्रशक्तित्वमुक्तं विष्णोः तद्विश्वतश्चक्षुरित्यादिश्रुत्या 'सर्वतः पाणिपादं तत्' इति भगवद्वाक्येन चावगम्यते । अतो बहुभुक्त्वं यथा दोषो नृषु नैव हरौ क्वचिदित्ययमेव न्यायः साधीयानित्याह ॥ **स्वपक्षेत्यादिना** ॥

## तत्त्वप्रदीपिका

स्वयमेव जीवः कर्ता न स्वस्मादन्य ईश्वर इति वादिनां स्वपक्षे दोषश्च भवति । न हि सर्वो-त्पादकत्वं सर्वभुक्त्वं च जीवानां गुणो भवति । ये दोषा इतरत्र तेऽपि गुणाः परमेश्वरे भवन्ति । न हि तत्र दोषः । जीवेशयोः सदोषत्वनिर्दोषत्वश्रुतिविरोधदोषश्च तत्पक्षे । दुःखाल्पज्ञतादिना सदोषः साञ्जनः पुण्यपापादिसङ्गी ।

## तत्वप्रकाशिका

ननु यथा शब्दैकसमधिगम्यत्वादिना विष्णोर्युक्तिविरोधोऽप्यविरोधतां नीयते तथा चेतनत्वादिना जीवेऽपि किं न नीयते । अन्यथेश्वरेऽपि न नेतव्य इत्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **स्वपक्षेति** ॥ जीवपक्षे युक्तिविरोधो दोष एव न त्वदोषतां नेतव्यः किं तु परमेश्वरपक्ष एव । कुतः । 'ये दोषाः' इति वचनेन सयुक्तिकमुक्तत्वादिति भावः । दोषा भगवदितरत्र प्रतीताश्चेत्तर्हि ते दोषा एव न तु कयाचन विधया दोषतां नेतव्याः । तत्र दोषाणां सम्भवेन कल्पकाभावात् । त एव चेद्विष्णौ प्रतीयन्ते तर्हि तेऽचिन्त्यशक्त्यादिना गुणा एव कल्पनीया न दोषाः । भगवतो निर्दोष-निर्भेदगुणतया श्रुतिसिद्धत्वेन कल्पकसद्भावादिति वचनार्थः । ईश्वरवज्जीवस्यापि निर्दोषत्वात्तत्र प्रतीतदोषोऽन्यथैव नेतव्य इत्यत आह ॥ **अथेति** ॥ साञ्जनः पुण्यपापादिलेपयुक्तः । चशब्द एवार्थोऽतो न परपक्ष इत्याह ।

## भावबोधः

सौत्र'श्च'शब्दोऽवधारणार्थे । तस्य परपक्षव्यावृत्त्यर्थं स्वपक्ष इत्यनेनान्वय इत्यभिप्रेत्य भाष्ये

(भावबोधः)
जीवपक्ष एवेत्युक्तम् । स्वयं त्वदोषतानयनव्यावृत्त्यर्थं सूत्रे यथाश्रुतसम्बन्धमप्यभिप्रेत्याह– **युक्तिविरोधो दोष एवेति ॥ पुण्येति ॥** तथा च न पुनरुक्तिरिति भावः ।

## भावदीपः

सौत्रचशब्दोऽवधारणे भाष्ये च भिन्नक्रम इति भावेन जीवपक्ष एवेत्यादि वाक्यं व्याचष्टे ॥ **जीवपक्ष इति** ॥ अप्रतीतेरुक्तार्थपरतया श्रुतिं योजयति ॥ **दोषा इति** ॥ निरन्तरा इत्यस्यार्थो ॥ **निर्भेदेति** ॥

## अभिनवचन्द्रिका

यथा प्रत्यक्षाविषये प्रत्यक्षाविरोध' इति टीकोक्ताशयमजानन् अचिन्त्यशक्तिमत्त्वं चाऽ-प्रयोजकमिति मन्यमानः शब्दैकसमधिगम्यत्वादिहेतुना यदि विरोधानामविरोधत्वं तर्हि जीवेऽपि चेतनत्वेन हेतुना विरोधानामविरोधत्वं वक्तव्यमिति शङ्कते – **नन्विति** ॥

## वाक्यार्थमुक्तावली

**चेतनत्वादिनेति** ॥ कर्तृत्वेनेत्यादिपदार्थः । ईश्वरदृष्टान्तेनेति शेषः । उक्तशङ्कापरिहारकतया भाष्येऽप्येवकारक्रमं भित्वा युक्तिविरोध इत्यध्याहृत्य व्याचष्टे ॥ **जीवपक्षे युक्तिविरोध इति** ॥ तर्हि युक्तिविरोधः कुत्रादोषतया नेतव्य इति शङ्कते ॥ **किं त्विति** ॥ **परमात्मेति** ॥ अदोषतां नेतव्य इति वर्तते ॥ **सयुक्तिकमिति** ॥ उत्तरार्धे युक्तिकथनादिति भावः । प्रकृतोपयोगाया-वृत्याध्याहारपूर्वं वचनार्थमाह ॥ **दोषा इति** ॥ अचिन्त्यशक्त्यादिनेत्यादिपदेन शब्दमूलत्व-ग्रहणम् ॥ **कल्पकेति** ॥ ज्ञापकघटकयोः सत्त्वादित्यर्थः ॥ **पुण्येति** ॥ **लेपः** तत्फलभोगः । दोषशब्दस्तु कामादिदोषपर इत्यपौनरुक्त्यमिति भावः ।

ननु जीवपक्षे युक्तिविरोधो दोष एव नत्वदोषतां नेतव्य इति भाष्यस्यैवशब्दव्याख्यानेन परपक्षं भाष्यमलग्नं स्यात् । अन्ययोगव्यवच्छेदकत्व एव तल्लग्राच्च शब्दात्सूत्रस्य दूषणान्तरपरत्वप्रतीतेः । शङ्कापरिहारायावतारणं चायुक्तमित्याह ॥ **चशब्द इति** ॥ अयोगान्ययोगव्यवच्छेदकैर्वाऽर्थो न तु समुच्चयार्थो नाप्ययोगव्यवच्छेदकैर्बाध इति भावः । तत्रान्ययोगव्यवच्छेदकत्वे ज्ञापकमाह ॥ **अत**

**इति** ॥ तेनैतां भाष्ययोजनां सूचयति । युक्तिविरोधो दोष एव नत्वदोषतां नेतव्य इत्येतज्जीवपक्ष एव न परपक्ष इति । ततश्च सूत्रे चोऽवधारणे । यथा सूत्रं दोषादित्यत्र विपरिणते न दोष इत्यनेन बुध्यादिविविक्तेन स्वपक्ष इत्यनेनान्वेति । कृत्स्नप्रसक्तिसूत्रोक्तो युक्तिविरोध इति च सम्बध्यते । जीवपक्ष इत्यनुक्त्वा स्वपक्ष इत्युक्तिस्तु स्वयमेव जीवः कर्ता न स्वस्मादन्य ईश्वर इति वादिनां पक्ष इति द्योतनायेति तत्त्वप्रदीपरीत्या घटनीया । दोषादित्यस्य दोषवचनाच्चेत्यर्थः । ततश्च कृत्स्नप्रसक्त्यादियुक्तिविरोधः दोष एव नत्वदोषतां नेतव्य इत्येतज्जीवपक्ष एव न परमेश्वरपक्षे कुतः जीवपक्ष एव दोषत्ववचनादिति सूत्रार्थः ।

## वाक्यार्थविवरणम्

**तत्र** । **जीवे** ॥ **कल्पकेति** ॥ अदोषत्वकल्पकाचिन्त्यशक्त्यभावादित्यर्थः ॥ **निर्दोषनिर्भेदेति** ॥ निरन्तरशब्दव्याख्यानमिदम् । अन्तरशब्दस्य दोषभेदवाचितया प्रसिद्धत्वादित्यर्थः ।

## वाक्यार्थमञ्जरी

जीवपक्षे कृत्स्नप्रसक्त्यादिदोषादेव युक्तिविरोधो नाविरोधतां नेतव्य इत्यर्थः । निरन्तरशब्दार्थो **निर्भेद इति** ॥ **पुण्यपापेति** ॥ तेन सदोष इत्यनेन न पुनरुक्तिरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ सर्वोपेता च तद्दर्शनात् ॐ ॥ ३१ ॥**

**'सर्वैर्युक्ता शक्तिभिर्देवता सा परेति यां प्राहुरजस्रशक्तिम् ।**
**नित्यानन्दा नित्यरूपाऽजरा च या शाश्वताऽत्मेति च यां वदन्ति' ॥**

**इति च चतुर्वेदशिखायाम् । अतो न केवलं विचित्रशक्तिः, किन्तु सर्वशक्तिरेव ।**

## सत्तर्कदीपावली

**विचित्रशक्तिर्भगवानित्युक्तम् । न केवलं विचित्रशक्तिर्भगवान् किं तु सर्वशक्तिरेवेत्याह । सर्वोपेतेत्यादिना ।**

## तत्त्वप्रदीपिका

**न च कतिपया विचित्राः शक्तय एव केवलं परस्य सर्वाः शक्तय-स्सन्त्येव नित्याश्च ता इत्यभिप्रायः ।**

## तत्त्वप्रकाशिका

**यदुक्तं विचित्रशक्तितत्त्वान्नेश्वरे विरोध इति तदसत् । सा विचित्रशक्तिर्यदाल्पविषया भवति यदा च नश्यति तदा तत्र विरोधनियमादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। सर्वेति ।। न केवलं सामान्यतो विचित्रशक्तिरीश्वरः किं तु सर्वविषये सर्वदा विद्यमानविचित्रशक्तिः । यतः । 'सर्वैर्युक्ता' इति श्रुतौ तथोक्तमिति भावः । सर्वैः सर्वविषयाभिः । अजस्रशक्तिं नित्यशक्तिम् । श्रुत्यनुसारेण स्त्रीलिङ्गप्रयोगः ।**

## गुर्वर्थदीपिका

विचित्रशक्तिर्यदाल्पविषया भवतीत्यत्र नृत्तगानादौ विचित्रशक्तिमतोऽपि नटस्य शास्त्राभ्यासे तदभावः, तस्या एव शक्तेः वार्धके नाशश्च लोके दृष्ट इति भावः । 'सर्वोपेता च' इत्यत्र सर्व-विषयिण्यः सर्वदा विद्यमानाश्च सर्वाः शक्तयस्ताभिः शक्तिभिरुपेतेत्यर्थः । श्रुत्यनुसारेण स्त्रीलिङ्ग-प्रयोग इत्यत्र सूत्रे 'आत्मनि' इति प्रागात्मन एव प्रस्तुतत्वादत्रापि सर्वोपेत इत्येव वक्तव्यं, स्त्रीलिङ्गप्रयोगस्तु 'सर्वोपेता' इति श्रुत्यनुसारेणेत्यर्थः । 'न तस्य कार्यं करणं च विद्यत' इत्यत्र कार्यम् उत्पत्तिमत् करणं नास्तीति 'अपाणिपादः' इत्यादेस्तात्पर्यमुक्तम् । चशब्देन अकार्य-कारणमस्ति चेति 'जवनो गृहीता' इत्यादेर्घटना कृता । अशरीरिणी वागित्युक्ते वागाख्या-लौकिककार्यवशादलौकिकशरीरकल्पनवत् 'अपाणिपादो जवनो गृहीता' इत्यादावपि दृष्ट-कारणविधुरधावनग्रहणदर्शनाद्यलौकिककार्योक्तिबलादलौकिकपादादिकरणान्युक्तप्रायाणि । अन्यथा अकारणकार्योक्तिप्रसङ्गात् । उक्तरीत्या अनुक्तसमुच्चायकचशब्दबलात् कार्यकारणाख्य-विशेषनिषेधबलाच्च स्पष्टमुक्तानीति ज्ञेयम् । अत एव सूत्रकृताऽपि 'तदुक्तम्' इत्यत्र तत्करण-मुक्तमिति स्वोक्तकरणवत्त्वे श्रुतिरियमुदाहृता । 'कार्यं करणं च न विद्यते' इत्यर्थं तु जवनो गृहीतेत्यस्यामेव श्रुतावुक्तं, पद्भ्यां धावनं कराभ्यां ग्रहणं चेत्यादिभगवन्निष्ठकार्यमेव निरुणद्धि ।

## भावबोधः

आत्मनीति प्रकृतत्वात् सर्वोपेत इति सूत्रे पुंलिङ्गनिर्देशः स्यादित्यत आह– **श्रुत्यनुसारेणेति** ॥

## भावदीपः

व्युत्क्रमेण भाष्यं व्याकुर्वन् सूत्रार्थमाह ॥ **न केवलमिति** ॥ चः समुच्चय इति भावः । प्रकृतोपयोगितां श्रुतेर्दर्शयितुं पदद्वयार्थमाह ॥ **सर्वैरिति** ॥ आत्मनीति प्रकृतत्वात्कथं सर्वोपेतेति सूत्रे प्रयोग इत्यत आह ॥ **श्रुतीति** ॥

## अभिनवचन्द्रिका

**श्रुत्यनुसारेण स्त्रीलिङ्गप्रयोग इति** ॥ सूत्र इति शेषः ।

**पूर्वपक्षस्तु** – नेश्वरस्य स्वातन्त्र्येण कर्तृत्वं युक्तम् । यदीश्वरः कर्ता स्यात्, तर्हि कार्त्स्न्येनांशेन वा प्रवृत्तिमान् स्यात् । न च तदीश्वरे सम्भवतीति तर्कबाधितत्वात् । न च वाच्यमयं दोषो जीवकर्तृत्वाङ्गीकार एव, नेश्वरकर्तृत्वाङ्गीकार इति । दोषनिरासोपयुक्तायाः प्रकारान्तरेण प्रवृत्तेरीश्वरेऽभावात् । अन्यथा स दोषो न स्यात् । ननु विचित्रशक्तिवशात् नेश्वरे विरोध इत्ययुक्तम् । सा विचित्रशक्तिः यदाऽल्पविषया यदा च नश्यति तदा दोषावश्यंभावनियमात् । किञ्च नेश्वरस्य कर्तृत्वं युक्तम् । हस्तादिकरणशून्यत्वात् । अतो युक्तिविरोधात् न विष्णोर्जगत्कारणत्वं युक्तमिति ।

**सिद्धान्तस्तु**– नेश्वरस्य स्वातन्त्र्येण कर्तृत्वे युक्तिविरोधः । विरोधयुक्तेर्धर्मिग्राहकागमोपजीव्यत्वेन तद्बाधेन युक्तेरेवाप्रामाण्यात् । किञ्च ईश्वरस्याचिन्त्यशक्तियुक्तत्वात्तद्बलेन अनंशत्वेऽपि अंशकार्यकारितोपपन्ना । न चैवं सति जीवस्यापि स्वातन्त्र्येण कर्तृत्वं वक्तुं शक्यम् । दोषित्वेन कल्पकाभावेन तद्दोषस्य अदोषतया नेतुमशक्यत्वात् । नन्वथापि विकरणत्वान्नेश्वरस्य कर्तृत्वं युक्तमिति चेन्न 'अपाणिपाद' इति श्रुतौ पाण्यादिरहितस्यापि हरेः ग्राहकत्वादिकमुक्त्वा 'न तस्य कार्यम्' इत्यादिना पाण्यादिरहितत्वस्य प्राकृतविषयत्वेन सर्वोत्तमत्वेन परमशक्तित्वेन च उपपादितत्वात् । अतो विष्णोर्जगत्कर्तृत्वे विरोधाभावाद्युक्तं लक्षणसूत्रमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे चशब्दः समुच्चयेऽवधारणे च । परमात्माख्यदेवतेति विशेष्यं बोध्यमित्याशयेन अतो न केवलं विचित्रशक्तिः किन्तु सर्वशक्तिरेषेति भाष्यं व्याचष्टे **न केवलमित्यादिना** ॥ अत इति परामर्शः । अत इति परामर्शसिद्ध्यै चतुर्वेदशिखायामित्यतः पदमध्याहरति **यतः श्रुतौ तथोक्त-मिति** ॥ आत्मनीति प्रकृतत्वात्कथं स्त्रीलिङ्गप्रयोग इत्यत आह ॥ **श्रुतीति** ॥

## तत्त्वसुबोधिनी

**यदाल्पविषयेति** ॥ यत्कार्यविषयेत्यर्थः ॥ **तदा तत्रेति** ॥ तत्कार्यविषये । एकदेशेन वा वर्तते सर्वदेशेन वेत्यादिनियमादित्यर्थः ॥ सर्वैरित्यस्य पुल्लिङ्गत्वेन स्त्रीलिङ्गेन शक्तिभिरित्यनेन अन्वयासम्भवादाह ॥ **सर्वैः सर्वविषयाभिरिति** ॥ कथमेतच्छ्रुत्या भगवच्छक्तेर्नित्यत्वलाभः इत्यतोऽजस्रशक्तिमित्येतन्नित्यत्वपरतया व्याचष्टे ॥ **अजस्रशक्तिं नित्यशक्तिमिति** ॥ आत्म-नीति प्रकृतत्वात् सर्वोपेतसूत्रे पुल्लिङ्गनिर्देशः स्यादित्यत आह ॥ **श्रुत्यनुसारेणेति** ॥

## वाक्यार्थविवरणम्

सर्वैरित्येतल्लिङ्गव्यत्ययेन व्याख्यातम् ॥ **सर्वविषयाभिरिति** ॥ **स्त्रीलिङ्गप्रयोग इति** ॥ सर्वोपेता चेति सौत्रस्त्रीलिङ्गप्रयोगः सर्वैर्युक्तेति श्रुत्यनुसारेण कृत इत्यर्थः ।

## वाक्यार्थमञ्जरी

आत्माख्यदेवता सर्वाभिः शक्तिभिरुपेता । तथाच ज्ञापका सर्वैर्युक्तेति श्रुतेरित्यर्थः । आत्मनीति प्रकृतत्वात्सर्वोपेत इति पुँल्लिङ्गनिर्देशः स्यादित्यत आह ॥ **श्रुत्यनुसारेणेति** ॥

## सूत्रभाष्यम्

**॥ ॐ विकरणत्वान्नेति चेत्तदुक्तम् ॐ ॥ ३२ ॥**

**न च करणाभावादनुपपत्तिरिति युक्तम् ।**

**'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।**
**स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्'** (श्वे.उ.३-१९)

(सूत्रभाष्यम्)

'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.उ.६-८)

इत्यादि श्रुतिभ्यः । 'सर्वोपेता च' इति सामान्यपरिहारेऽपि विशेषयुक्त्यर्थं पुनराशङ्का ।

## सत्तर्कदीपावली

प्राकृतदेहेन्द्रियकरणवतामेव कर्तृत्वदर्शनात्करणरहितस्य चेश्वरस्य कर्तृत्वं न युज्यत इति न वाच्यम् । अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स श्रुणोत्यकर्णः । न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादि श्रुत्या प्राकृतदेहेन्द्रियरहितस्येश्वरस्याचिन्त्यशक्तित्वेन तद्व्यापारोक्तेः जगत्कर्तृत्वाविरोधात् । सर्वोपेता च' इत्यत्र सामन्यतः सर्वशक्त्युपेतत्वोक्त्या जवनग्रहणादिशक्तिसिद्धेर्विकरणत्वान्नेति चेदित्येतच्चोद्य-परिहारो भवत्येव । तथापि विकरणस्यापीश्वरस्य विशेषतो जवनग्रहणादिशक्तिप्रतिपादकश्रुत्युद्भावनार्थं पुनराशंक्य परिहृतमित्यदोषः । पुनरुक्तिपरिहारश्च प्रमेयैक्ये प्रमाणोपन्यासात् प्रमाणैक्ये प्रमेय-विशेषोपन्यासात् भवत्येव । तदुक्तं 'मानमेयविशेषेण पुनरुक्तिर्न जायत' इति । तदेतदाह– **विकरणत्वादिति ॥**

## तत्त्वप्रदीपिका

न च चक्षुरादिकरणाभावाद्दर्शनादिशक्त्यनुपपत्तिरिति युक्तम् । अपाणिपाद इत्यादिश्रुतेः । अप्राकृतपाण्यादित्वादपाण्यादिर्भण्यते । जवनो गृहीतेति तत्तदर्थक्रियावत्त्वकथनाद्विलक्षणा-नामभिन्नानां चिद्रूपाणां तेषां सद्भावोऽभ्युपेतः । सर्वशक्तित्वसाधनेनैवाकरणत्वादिविरोधोऽपि परिहृतः । तथाऽपि विशेषप्रमाणोपन्यासार्थं पुनराशङ्का ।

## तत्त्वप्रकाशिका

विष्णोर्जगत्कर्तृत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्य व्याचष्टे ॥ **विकरणत्वादिति ॥** नेश्वरस्य कर्तृत्वं युक्तम् । 'अचक्षुः श्रोत्रं तदपाणिपादम्' इति श्रुतेस्तस्य हस्तादिकरणशून्यत्वात् । न हि हस्तादिविरहिणो मृतस्य कर्तृत्वमिति न मन्तव्यम् । 'अपाणिपादम्' इति श्रुतौ पाण्यादि-विरहिणोऽपि हरेर्ग्रहणादिकमुक्त्वा 'न तस्य कार्यम्' इति पाण्यादिरहितत्वस्य प्राकृतविषयत्वेन सर्वोत्तमत्वेन परमशक्तित्वेन चोपपादितत्वादिति भावः । ननु पूर्वसूत्र एव विचित्राशेषशक्तिबलेन

(तत्त्वप्रकाशिका)

**निखिलविरोधानां परिहृतत्वात्कथमेतच्छङ्कावकाश इत्यत आह ॥ सर्वेति ॥ सामान्यतः सर्वविरोधानां परिहृतत्वेऽपि विशेषतोऽस्यैव चोद्यस्य परिहाराय युक्तिबुभुत्सया पुनः शङ्केत्याशयः । विशेषयुक्तिस्तु प्राकृतशरीराभावेऽपि चिदानन्दाद्यात्मकविग्रहत्वादिः प्रमाणविशेष एव वा । अतो विष्णोर्जगत्कारणत्वे विरोधाभावाद्युक्तं लक्षणसूत्रमिति सिद्धम् ।**

## भावबोधः

'मानमेयविरोधेन पुनरुक्तिर्न जायते' इत्यनुव्याख्यानं मनसि निधायाह– **युक्तिबुभुत्सयेति** ॥ युक्तिविशेषबुभुत्सयेत्यर्थः ।

अत्राद्ये कृत्स्नप्रसक्त्यादिदोषपरिहाराय लोकविरुद्धधर्माणां विष्णौ सहावस्थाने श्रुतिरूप-प्रमाणस्य युक्तिविरोधपरिहारोपयोगिनो शब्दैकसमधिगम्यत्वस्य चोक्तिः । द्वितीये युक्तिविरोध-परिहारोपयोगिविचित्रशक्त्युक्तिः । तृतीये जीवस्येश्वरप्रतिवन्द्युद्धारः । चतुर्थे द्वितीयसूत्रोक्तशक्तेः सर्वविषयत्वे नित्यत्वे च प्रमाणोक्तिः । पञ्चमे प्रकारान्तरेण जगत्कर्तृत्वाक्षेपपरिहार इति सूत्रक्रमः ।

## भावदीपः

करणाभावादनुपपत्तिरिति भाष्यं विवृण्वन् विकरणत्वान्नेति सूत्रखण्डार्थमाह ॥ **नेश्वर-स्येति** ॥ **इति श्रुतेरिति** ॥ तद्दर्शनादित्यनुवृत्तिं वा तात्पर्यलब्धतां वा मत्वैवमुक्तम् । मृतस्य त्यक्तदेहस्य न च युक्तमित्यस्यार्थो न मन्तव्यमिति । सूत्रे नञः आवृत्तिर्वा अध्याहारो वेति भावः । भाष्योक्तवाक्यचतुष्टयस्याप्युपयोगमाह ॥ **अपाणिपाद इतीति** ॥ **प्रमाणाविशेष एवेति** ॥ विशेषयुक्तिशब्दार्थ इति शेषः । अपाणिपाद इत्याद्युक्तरूप इति भावः । अन्यभाव-व्यावृत्तेश्चेत्यत्राप्राकृतविग्रहस्योक्तत्वाशयेन द्वितीयपक्षोक्तिः ॥ **अत इति** ॥ श्रौतत्वशब्द-मूलत्वादेर्जीवादतिशयस्य भावादित्यर्थः ।

## वाक्यार्थमुक्तावली

अत्रात्मन इति दर्शनादिति चानुवर्तते । योग्यतया कर्तृत्वमित्यन्वेतीति भावेन न चेत्यंशं विहाय पूर्वपक्षविवरणपरत्वेन व्याचष्टे ॥ **नेश्वरस्येति** ॥ चेदित्यनन्तरं न चानुवृत्या सिद्धान्तांश-

(वाक्यार्थमुक्तावली)
विवरणपरं न चेत्यादिभाष्यं व्याचष्टे ॥ **इति न मन्तव्यमिति** ॥ **न तस्य कार्यमितीति** ॥ तस्य जन्यं कारणं नास्तीति । पाण्यादिरहितत्वस्य प्राकृतविग्रह विषयत्वेनोपपादितत्वादित्यन्वयः ॥ **तदुपपादकप्रदर्शनं सर्वोत्तमत्वेन परमशक्तित्वेन चेति** ॥ एतेन तत्पाण्यादिविरहिणोऽपि ग्रहणादिकर्तृत्वमुक्तम् । तत्प्रामाण्यादिकरणशून्यत्वं च प्राकृतविग्रहविषयत्वेनोपपादितमिति सूत्र-खण्डार्थ उक्तो भवति । अग्र्यं अग्रे प्रलये भवम् । अत एव महान्तमुत्तमम् । यद्वा अग्र्यं कालज्येष्ठम् । महान्तं देशतोऽनन्तम् ॥ **ननु पूर्वसूत्र एवेति** ॥ यो हि साक्षात्कारकाधिष्ठानस्य नेष्टे स शरीरव्यवधानमपेक्षते । यस्यागन्तुकं ज्ञानं तदर्थमिन्द्रियाणि । यस्तु गुरुशरीरो न स्थातुं शक्नोति स हीत्यादिकमाधारम् ।

भगवांस्तु सर्वशक्तिः सर्वज्ञः किमर्थमपेक्षत इति पूर्वसूत्र एव परिहृततदभ्यधिकाशङ्का-नवकाशात्पुनरारम्भो व्यर्थ इति भावः । किमुक्तार्थोक्तिमात्रं दोषः किं वोक्तानतिरिक्तोक्तिः । नाद्यः । उक्तपरिहारातिदेशोक्तेरपि दोषानुषङ्गात् । द्वितीयस्तु प्रकृते न सिद्धः । प्रमाणप्रमेय-भेदसद्भावादिति भावेनाह ॥ **सामान्यत इति** ॥ पूर्वसूत्रैः सामान्यविषयप्रमाणान्याश्रित्य सामान्यत एव सर्वानुपपत्तिपरिहारोऽभिहितः । इह विशेषविषययुक्त्या विशेषानुपपत्तिपरिहारः क्रियत इति कथं न पुनरुक्तिदोषः ॥ **तथाप्याक्षेपो नोपपद्यत इति** ॥ विशेषयुक्त्यवष्टम्भेन पूर्वपक्षस्य सिद्धान्ते विशेषयुक्तिबुभुत्सयोपपत्तेरिति भावः । स्पष्टमेतत्सुधायाम् । अन्यभाव-व्यावृत्तेश्चेत्यत्राप्राकृतविग्रहस्योक्तत्वान्न तद्बुभुत्सोपपद्यत इत्यतः पक्षान्तरमाह ॥ **प्रमाणविशेप इति** ॥ अपाणिपाद इत्याद्युक्तरूप इति भावः । अत्र जीवप्रतिबन्धाशङ्कितयुक्तिविरोध-परिहारोपयोगिनी श्रुतिः । तर्कगोचरत्वयुक्तिः । अघटितघटनाशक्तिश्च विवक्षिताः । तत्राद्ये विरोधज्ञापकयोः श्रुतिद्वयोरुक्तिः । द्वितीये विरोधकैकाऽचिन्त्यशक्त्युक्तिः । तृतीये जीवे तरतमाभावोक्तिः । चतुर्थे सूत्रोक्तघटकशक्तेः सर्वविषयत्वनित्यत्वयोः प्रमाणोक्तिः । पञ्चमेऽप्याक्षेपसमाधानमुखेन प्रमाणविशेषेण शक्तेर्विशदीकरणमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

अस्तु हस्तादिकरणशून्यत्वम्, तथापि कुतो न कर्तृत्वमित्यत आह ॥ **न हीति** ॥ **न तस्येति** । श्रुतौ पाण्यादिरहितत्वस्य प्राकृतविषयत्वेनोपपादितत्वादित्यन्वयः । तत्र हेतुद्वयं,

(तत्त्वसुबोधिनी)
सर्वोत्तमत्वेन, परमशक्तित्वेन चेति कासौ विशेषयुक्तिरित्यत आह ॥ **विशेषेति प्रमाणविशेष एव वेति** ॥ अपाणिपादः न तत्र स्वकार्यमिति प्रमाणविशेषः इत्यर्थः । अत्राद्ये सूत्रे श्रुतिरूप-प्रमाणस्य, शब्दैकसमधिगम्यत्वस्य चोक्तिः । तत्र विष्णुपक्षे कृत्स्नप्रसक्त्यादियुक्तिविरोधो न कुतः इत्यत उक्तम् **श्रुतेस्त्विति** ॥ श्रुतेरेव । ईश्वरस्य विरुद्धगुणवत्तया श्रुत्युक्तत्वादेवेत्यर्थः । ननु श्रुत्युक्तत्वेऽपि युक्तिविरुद्धं कर्तृत्वं कथं अङ्गीक्रियते इत्यतः उक्तम् ॥ **शब्दमूलत्वादिति** ॥ शब्दैकसमधिगम्यत्वादित्यर्थः । तथा च शब्दैकसमधिगम्ये युक्तिविरोधो नेत्यक्षरार्थः । द्वितीये विचित्रशक्त्युक्तिः तृतीये जीवस्य ईश्वरप्रतिबन्ध्युद्धारः । चतुर्थे शक्तेः सर्वविषयत्वे, नित्यत्वे च प्रमाणोक्तिः । पञ्चमे प्रकारान्तरेण जगत्कर्तृत्वाक्षेपपरिहारः इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**अस्यैव चोद्यस्येति** ॥ कारणाभावादनुपपत्तिरित्यस्यैव चोद्यस्येत्यर्थः ॥ **प्रमाणविशेष इति** ॥ 'अपाणिपाद' इत्यादिप्रमाणविशेषकथनमेवेति विशेषयुक्तिरित्यर्थः ।

**इति शब्दमूलत्वाधिकरणम् ॥ ८ ॥**

## ९. अथ न प्रयोजनाधिकरणम्

यत्प्रयोजनार्थं सृष्ट्यादिस्तदूनत्वान्न पूर्णतेत्यत आह–

**॥ ॐ न प्रयोजनवत्त्वात् ॐ ॥ ३३ ॥**

'अथैष एव परम आनन्द' (बृ.उ.६-३-३३) इत्यादिना कृतकृत्यत्वान्न प्रयोजनाय सृष्टिः।

## तत्त्वप्रदीपिका

ननु सृष्ट्यादावीश्वरस्य प्रयोजनमस्ति वा न वा। आद्ये कल्पे यस्य प्रयोजनस्य प्राप्तये सृष्ट्यादिस्तत्पूर्वं तदूनत्वान्न पूर्णता। अपूर्णस्य चानीश्वरत्वादसृष्टिः। अन्योऽपि नोपादेयः। प्रयोजनार्थं हि लोके सृष्ट्यादि। न हि प्रयोजनमनुद्दिश्य बुद्धिमन्तः प्रवर्तन्ते। अतस्तदूनत्वा-न्निष्फलत्वान्न पूर्णता तस्य सृष्ट्यादिप्रवृत्तेः। अतो व्यर्थाया अनारम्भ एव स्यादित्यत आह– **न प्रयोजनवत्त्वात् ॥** न भविष्यत्प्रयोजनवत्त्वेन सृष्टिः। प्राप्तप्रयोजनत्वात्।

## तत्त्वप्रकाशिका

अत्रेश्वरस्य जगत्कर्तृत्वे निष्फलत्वादियुक्तिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः। जगत्कर्तेश्वर इत्यभिहितम्। तस्य च युक्तिविरुद्धत्वे लक्षणासम्भवप्रसङ्गादसौ निराकरणीयः। जन्मादिकर्तृत्वं विषयः। ईश्वरस्य युक्तमयुक्तं वेति संशयः। उक्तरीतिरफलत्वं च सन्देहबीजम्। सयुक्तिकं पूर्वपक्षयति **॥ यदिति ॥** न विष्णोः स्रष्टृत्वादि युक्तम्। तथा हि। किमसौ प्रयोजनमपेक्ष्य सृष्ट्यादिकं करोति प्रयोजनमनपेक्ष्यैव वा। नोभयथापि सर्वकर्तृत्वम्। प्रयोजनापेक्षितत्वे सृष्ट्यादेः पूर्वमपूर्णत्वप्रसङ्गात्। अपूर्णस्य च न सर्वकर्तृत्वं यज्ञदत्तवत्। प्रयोजनानुद्देशेन प्रवृत्तिरेव न दृष्टा कुतः सर्वकर्तृत्वम्। अतः प्रकारद्वयेनापि विष्णोः सर्वकर्तृत्वाद्यनुपपत्तेर्विधान्तरस्य चाभावादयुक्तं जन्मादिकारणत्व-लक्षणमिति भावः। सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे **॥ अत इति ॥** युक्तमेव विष्णोः सर्वकर्तृत्वादि। न चोक्तदोषः। तस्य पूर्णानन्दत्वेन प्राप्तप्राप्तव्यत्वात्फलानुद्देशेन प्रवृत्त्यभ्युपगमादित्यर्थः।

## भावबोधः

**निष्फलत्वादिति ॥** अत्रादिपदेनापूर्णत्वरूपविरोधियुक्तिग्रहणेनानुव्याख्याने बहुशब्द-

(भावबोधः)

स्यानेकपरत्वादेतदधिकरणोपधिरपि 'बहुयुक्तयः' इत्यनेनैव सङ्गृहीत इति भावः । 'सर्वोपेत' इति पूर्वसूत्रे नित्यानन्देत्युक्तपूर्णानन्दत्वलब्धस्य प्रयोजनवत्त्वादिति सिद्धान्तहेतुत्वेनोपादानादनन्तर-सङ्गतिरिति ज्ञातव्यम् ॥ **ईश्वरस्येति** ॥ अत्र विष्णोः जगज्जन्मादिकारणत्वं किं युक्तिविरुद्धमुत नेति चिन्ता । तदर्थं कर्तृत्वे सृष्ट्यादिसाध्यादिफलाभावप्राप्त्यापूर्णत्वं प्राप्नोत्युत नेति । तदर्थं किं सृष्ट्यादिकं फलार्थमुत केवललीलारूपमिति । तदर्थं चेतनप्रवृत्तिः प्रेक्षावत्प्रवृत्तिर्वा स्वप्रयोजन-वत्त्वेन व्याप्नोत मत्तदयालुप्रवृत्त्यादौ व्यभिचारात्तदव्याप्तेति ।

ननु यद्यत्र भाष्ये कर्तृत्वेन प्रयोजनवत्त्वं प्रसाध्यापूर्णत्वसाधनं विवक्षितं स्यात् । तदा प्रथमसूत्रमयुक्तं स्यात् । अपूर्णतासाधकं प्रकृतकृतकृत्यत्वरूपप्रयोजनवत्त्वहेतोरसिद्धत्वात् । अथ कर्ता चेत् प्रयोजनवान् स्यात्, तथा चापूर्णः स्यादित्यापादनं विवक्षितं तदा व्यर्थमेवेदं सूत्रम् । न चापूर्णस्ततो न प्रयोजनवानिति परेणैवाङ्गीकृतत्वात् । अन्यथा विपर्ययापर्यवसानात् । द्वितीयसूत्रं तु पक्षद्वयेऽप्ययुक्तम् । साधनापादनदूषणस्यानुद्भावनादित्याशङ्कापरिहाराय विकल्पं कृत्वाऽद्यपक्षोत्तरत्वेन भाष्यं योजयति– **तथा हीत्यादिना** ॥ द्वितीयपक्षोत्तरत्वेन प्रयोजनाभावो कर्तृत्वे कारणमिति न्यायविवरणाभिप्रायमाह– **प्रयोजनानुद्देशेनेति** ॥ प्रयोजनवत्त्वादिति सौत्रहेतु-व्याख्यानपरम् । कृतकृत्यत्वादिति भाष्यं व्याचष्टे– **प्राप्तेति** ॥ तस्यासिद्धिपरिहारार्थं तत्साधन-प्रदर्शनाय श्रुत्युदाहरणमित्यभिप्रेत्य तस्य पूर्णानन्दत्वेनेत्युक्तम् । नेति सौत्रप्रतिज्ञाभाग-व्याख्यानपरं न प्रयोजनाय सृष्टिरिति भाष्यं व्याचष्टे– **फलानुद्देशेनेति** ॥ तथा च द्वितीय-पक्षस्यैवाभ्युपगमात्र प्रथमपक्षोक्तदोषावकाश इति भावः ।

## भावदीपः

**निष्फलत्वादीति** ॥ भाष्योक्तापूर्णत्वयुक्तिरादिपदार्थः । अग्न्यादेः स्वभावादेवोर्ध्वज्वलनादि-प्रवृत्तिनिवृत्तिवदप्रयोजनसृष्ट्यादेरपि सम्भवेन फलनिर्धारणेन कथं भाष्ये अपूर्णतापादनमित्यतो विकल्प्याद्ये फला(पे)काङ्क्षिणस्त्वपूर्णत्वादेव न सर्वकर्तृत्वादिशक्तिरिति न्यायविवरणरीत्या भाष्यभावमाह ॥ **किमसावित्यादिना** ॥ द्वितीये प्रयोजनाभावो कर्तृत्वे कारणमिति न्याय-विवरणभावमाह ॥ **प्रयोजनेति** ॥ **प्रवृत्तिरेव न दृष्टेति** ॥ चेतनस्य प्रेक्षावतो निष्फलप्रवृत्तेर-दर्शनादित्यर्थः ॥ **अत इति** ॥ फलोद्देशोऽनुद्देशो च सृष्टेर्युक्तिविरुद्धत्वादित्यर्थः । इतरस्य

(भावदीपः)

पूर्णत्वादेवानन्तशक्तित्वाल्लीलयैव कर्तृत्वमिति न्यायविवरणदिशा साध्यमध्याहृत्योक्तशङ्का-निरासकत्वेन भाष्यं योजयति ॥ **युक्तमिति** ॥ प्रयोजनवत्त्वादिति सौत्रपदस्य भाष्यं **कृतकृत्यत्वादिति** ॥ तस्य व्याख्या **प्राप्तप्राप्तव्यत्वादिति** ॥ अथैष इति वाक्यस्यार्थः **पूर्णानन्दत्वेनेति** ॥ नेत्यस्य भाष्यं न प्रयोजनाय सृष्टिरिति । तस्यार्थः **फलानुद्देशेनेति** ॥

## अभिनवचन्द्रिका

**निष्फलत्वादियुक्तिपरिहारादिति** ॥ अत्र निष्फलत्वं उद्देश्यविधुरत्वम् । आदिशब्देनापूर्णत्वप्रसङ्गो गृहीतः । अत एव भाष्ये तदूनत्वादिति प्रयोजनविशेषशून्यत्वमुक्तम् ।

## वाक्यार्थमुक्तावली

**निष्फलत्वादीति** ॥ अत्रादिपदेनापूर्णत्वयुक्तिर्गृह्यते । तेन बहुयुक्तय इत्यनुव्याख्यानं बहुपदमनेकत्वोपलक्षणमित्येतदधिकरणोपाधिरप्युक्त इत्युक्तं भवति । पूर्वहेतुमुखयुक्तिविरोधोऽपास्तः । इह तु प्रयोजनोद्देशोऽनुद्देश इति विशेष इति बहुमुखफलमुखादृढानेकयुक्तिविरोधो निरस्यत इत्यनन्तरसङ्गतिः ॥ **युक्तमयुक्तं वेति** ॥ अत्र पूर्वोक्तं विष्णोः स्रष्टृत्वादिकं न युक्तमिति चिन्ता । तदर्थं सृष्टृत्वे सृष्ट्यादिसाध्यस्य फलस्य पूर्वमभावादपूर्णत्वमापतति उत नेति। तदर्थं किं सृष्ट्यादिकं फलार्थमुत लीलारूपमिति । तदर्थं चेतनस्य प्रवृत्तिः प्रेक्षावत्प्रवृत्तिवत्स्वप्रयोजनवत्वेन व्याप्तोन्मत्तदयालुप्रवृत्तौ व्यभिचारादव्याप्तेति ।

ननु यद्यत्र भाष्ये कर्तृत्वेन प्रयोजनवत्वं प्रसाध्यापूर्णत्वसाधनं विवक्षितं स्यात्तदा प्रथमसूत्रमयुक्तं स्यात् । अपूर्णतासाधकं प्रति कृतकृत्यत्वरूपप्रयोजनत्वहेतोरप्यसिद्धत्वात् । अथ कर्ता चेत्प्रयोजनवान्स्यात् । तथा चापूर्णः स्यादित्यापादनं विवक्षितं तदा व्यर्थमेवेदं सूत्रम् । न चापूर्णस्ततो न प्रयोजनवानिति परेणैवाङ्गीकृतत्वात् । अन्यथा विपर्ययपर्यवसानात् । द्वितीयसूत्रं तु पक्षद्वयेऽप्युक्तम् । साधनोपादानदूषणस्यानुद्भावनादित्याशङ्कापरिहाराय विकल्पं कृत्वा पक्षद्वयोत्तरत्वेन भाष्यं योजयति ॥ **तथा हीति** ॥ तत्राद्यपक्षोत्तरत्वेन योजयति ॥ **प्रयोजनेति** ॥ सृष्ट्येश्वरस्य प्रयोजनमस्तीति पक्षे यस्य प्रयोजनस्य प्राप्तये सृष्ट्यादिस्तत्पूर्वं तदूनत्वादपूर्णतेति भाष्यार्थ इति भावः । द्वितीयपक्षोत्तरत्वेन भाष्यं योजयति ॥ **फलानुद्देश इति** ॥ प्रयोजनं नास्तीति पक्षे यत्प्रयोजनार्थं लोके सृष्ट्यादिस्तदूनत्वात्तादृशप्रयोजनविकलत्वान्निष्फलत्वान्न

(वाक्यार्थमुक्तावली)

पूर्णता । सृष्ट्यादिप्रवृत्तेरपर्यवसानमकरणमिति यावदिति तत्वप्रदीपानुसारेण भाष्यार्थ इति भावः। तदुक्तं न्यायविवरणं योजयति फलानुद्देशे इतीत्यवधारितम् ॥ **न चोक्तदोष इति** ॥ विकल्प्य पक्षद्वयोक्तदोषो नेत्यर्थः । कुतो नेत्यर्थः । द्वितीयपक्षं सयुक्तिकमभ्युपगमत्सूत्रे प्रयोजनवत्वादित्यावर्तते । सृष्टिरिति शेषः । ततश्च प्रयोजनवत्वात् प्रयोजनत्वेन पूर्णानन्दत्वेन प्रयोजनवत्वात् । प्रयोजनं कृत्यं प्राप्तव्यं तद्वत्वात् प्राप्तप्राप्तव्यत्वात् । प्रयोजनवत्वेन भविष्यत्प्रयोजनत्वेन एष्यत्प्रयोजनाय सृष्टिरित्यर्थमभिप्रेत्य अथैष एवेत्यादि भाष्यं प्रवृत्तम् । तत्र कृतकृत्यत्वादित्यस्य कृतं पूर्णमानन्दो यस्य स कृतकृत्यस्तस्य भावः कृतकृत्यमित्येकोऽर्थः । कृतं प्राप्तं कृत्यं प्राप्तव्यं येनेत्यपरः । तयोश्च हेतुहेतुमद्भावः । पूर्णानन्दस्यासिद्धिपरिहाराय श्रुत्युदाहरणमिति अभिप्रेत्य व्याचष्टे ॥ **तस्येति** ॥ न प्रयोजनाय सृष्टिरिति प्रतिज्ञाविवरणपरभाष्यस्यार्थः । तस्य **फलानुद्देशेनेति** ॥

## तत्त्वसुबोधिनी

निष्फलत्वादीत्यत्रादिपदेनापूर्णत्वरूपयुक्तिविरोधपरिग्रहः । अत्र सर्वोपेतेति सूत्रे नित्यानन्देत्युक्तपूर्णानन्दत्वेन लब्धस्य कृतकृत्यत्वरूपप्रयोजनवत्वस्यात्र प्रयोजनवत्वादिति सिद्धान्तहेतुत्वेनोपादानादनन्तरसङ्गतिः इति भावः । ननु यद्यत्र भाष्ये कर्तृत्वेन प्रयोजनवत्त्वं प्रसाध्य पूर्णत्वसाधनं विवक्षितं स्यात्तदा प्रथमसूत्रमयुक्तं स्यात् । अपूर्णतासाधकं प्रति कृतकृत्यत्वरूपप्रयोजनवत्वहेतोः असिद्धत्वात् । अथ कर्ता चेत् प्रयोजनवान् स्यात् तथा चापूर्णः स्यादित्यापादनं विवक्षितं तदा व्यर्थमेवेदं सूत्रं, न चापूर्णः ततो न प्रयोजनवान् इति परैरेवाङ्गीकृतत्वात्, अन्यथा विपर्ययापर्यवसानात् । द्वितीयसूत्रं तु पक्षद्वयेऽप्ययुक्तम् । साधनापादनदूषणस्यानुद्भावनादित्याशङ्कापरिहाराय विकल्पं कृत्वाद्यपक्षोत्तरत्त्वेन भाष्यं योजयति ॥ **तथा हीत्यादिना** ॥ द्वितीयपक्षोत्तरमाह ॥ **प्रयोजनानुद्देशेनेति** ॥ प्रयोजनमपेक्ष्यैवेति पक्षे प्रयोजनाभावे कारणमेव, आद्यपक्षे तु तदभावेऽपि कारणमिति भावः । उभयथापि प्रयोजनापेक्षा आगतेति न पक्षद्वयं युक्तमित्याह ॥ **नोभयथापीति** ॥ ननूक्तप्रकारद्वयेन स्रष्टृत्वासम्भवेऽपि प्रकारान्तरेण स्रष्टृत्वं (सं)भविष्यति इत्यत उक्तम् **विधान्तरस्येति** ॥ प्रयोजनवत्त्वादिति सौत्रहेतुव्याख्यानपरं कृतकृत्यत्वादिति भाष्यं व्याचष्टे ॥ **प्राप्तेति** ॥ तस्यासिद्धिपरिहारार्थं तत्साधकप्रदर्शनाय श्रुत्युदाहरणमित्यभिप्रेत्य तस्य पूर्णानन्दत्वेनेत्युक्तम् । तेनेति सौत्रप्रतिज्ञा-

(तत्त्वसुबोधिनी)
व्याख्यानपरं, न प्रयोजनाय सृष्टिरिति भाष्यं व्याचष्टे ॥ **फलानुद्देशेनेति** ॥ तथा च द्वितीय-पक्षस्यैवाभ्युपगमात् न प्रथमपक्षोक्तदोषावकाशः इति भावः ।

## वाक्यार्थविवरणम्

**अपूर्णत्वप्रसङ्गादिति** ॥ ततः किमित्यत उक्तम् ॥ **अपूर्णस्य चेति** ॥

## वाक्यार्थमञ्जरी

**अपूर्णत्वप्रसङ्गादिति** ॥ सृष्ट्यादिना यत्प्रयोजनं तदूनत्वादिति भावः । नेश्वरप्रवृत्तिः स्वप्रयोजनार्था कुतः प्रयोजनवत्वात् । प्रवृत्त्या यत्प्रयोजनं प्रागेव तद्वत्वादिति भावः ॥ **प्राप्त-प्राप्तव्येति** ॥ प्राप्तं प्राप्तव्यं येनासौ तथोक्तस्तस्मादित्यर्थः ।

## सूत्रभाष्यम्

**किन्तु–**

**॥ ॐ लोकवत्तु लीलाकैवल्यम् ॐ ॥ ३४ ॥**

**यथा लोके मत्तस्य सुखोद्रेकादेव नृत्तगानादिलीला न तु प्रयोजनापेक्षया, एवमेवेश्वरस्य। नारायणसंहितायां च–**

'सृष्ट्यादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु ।
कुरुते केवलानन्दाद्यथा मत्तस्य नर्तनम् ॥
पूर्णानन्दस्य तस्येह प्रयोजनमतिः कुतः ।
मुक्ता अप्याप्तकामाः स्युः किमु तस्याखिलात्मन' ॥ इति ।

'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' (मां.उ.२-९) इति च श्रुतिः ।

## सत्तर्कदीपावली

प्रयोजनोद्देशाभावे सृष्ट्यभावात् उद्दिश्यैव प्रयोजनं यदि जगदीश्वरः सृजति, तथा सत्यनाप्त-कामत्वाद्यज्ञदत्तवदनीश्वरः स्यात् इति न वाच्यम् । प्रयोजनोद्देशाभावेऽपि अग्नेर्दाहकत्ववत् सृष्ट्यादि-लीलास्वभाववत्वादीश्वरस्य जगत्सृष्ट्याद्युपपत्या अवाप्तकामत्वाविरोधात् । तथाहि श्रुतिः । क्रीडार्थं

(मन्त्रार्थदीपावली)
सृष्टिरित्यन्ये भोगार्थमिति चापरे । 'देवस्यैषः स्वभावोऽयमाप्तकामस्य का स्पृहा' इति । जगत्सृष्ट्यादिलीलास्वभावत्वाज्जगत् सृष्ट्यादिकमीश्वरः करोति । न तु भोगार्थम् । आप्तकामत्वात् । आसमन्तादिष इत्येष इत्युच्यते युतस्वभाव इत्यर्थः ।

## तत्त्वप्रदीपिका

लीलामात्रत्वं सृष्ट्यादेर्नाण्वपि प्रयोजनमीश्वरस्य । एष स्वभावः आ समन्तादिष्टः स्वभावः । का स्पृहा का फलस्पृहेत्यर्थः । 'इच्छामात्रं प्रभोः सृष्टिः' इति निश्चितसिद्धान्तकथनान्नेच्छा-मात्रनिषेधः ।

## तत्त्वप्रकाशिका

फलानुद्देशे प्रवृत्त्यनुपपत्तिरिति भावेन पृच्छति ॥ **किं त्विति** ॥ तत्परिहाराय सूत्रमुपन्यस्य व्याचष्टे ॥ **लोकवदिति** ॥ प्रयोजनानुद्देशे कीदृशी प्रवृत्तिरिति चेत्पृच्छसि तर्हि तस्याः केवल-लीलात्वं ब्रूमः । न हि लीला प्रयोजनान्तराय भवति । मत्तादिलीलायाः फलानुद्देशेन सुखोद्रेकादेव दर्शनात् । अतः **पूर्णानन्दोऽपि** भगवान् लोकानुग्रहाय सृष्ट्यादिक्रीडां करोतीति न किञ्चिदयुक्तमिति भावः । अत्रैव स्मृतिश्रुती दर्शयति ॥ **नारायणेति** ॥ अखिलस्वामिनस्तस्याप्तकामता किमु वक्तव्येत्यर्थः । तस्माद्विरोधाभावाद्युक्तं लक्षणमिति सिद्धम् ।

## गुर्वर्थदीपिका

मत्तादिलीलाया इत्यत्र मत्तो मधुपानमत्तो राजादिर्न तून्मत्तः । आदिपदेन स्तनपानतृप्तो बालो गृह्यते ।

## भावबोधः

अतः **पूर्णानन्दोऽपीति** ॥ अनेनेतरस्य पूर्णत्वादेवानन्तशक्तित्वाल्लीलयैव कर्तृत्वमिति न्यायविवरणमप्युक्ततात्पर्यकं भवति । सूत्रक्रमः स्पष्टः ।

## भावदीपः

एवमेवेश्वरस्येति भाष्यरीत्या लीलाकैवल्यमिति सूत्रांशस्यार्थमाह ॥ तस्या इति ॥

(भावदीप:)
यथेत्यादेरर्थो मत्तेति । सौत्रस्तुरेवार्थ इति भावेन सुखोद्रेकादेवेत्युक्तम् । तस्य विवरणं फला-नुद्देशेनेति ॥ सर्वथा नैष्फल्यभ्रमं निरस्यन्समग्रभाष्यभावमाह ॥ अत इति ॥ प्राप्तप्राप्त-व्यत्वादित्यर्थः ॥ लोकेति ॥ स्वप्रयोजनार्थत्वाभावेऽपि दयालुप्रवृत्ताविव परप्रयोजनार्थत्वमस्तीति भावः । किमु तस्याखिलात्मन इत्यस्यार्थोऽखिलेति ॥ तस्मादिति ॥ ईशप्रवृत्तेः केवल-लीलात्वोपगमादित्यर्थः ।

## अभिनवचन्द्रिका

**लोकानुग्रहायेति** ॥ लोकवत्तु लीलाकैवल्यम्' इत्यनेन स्वप्रयोजनमेव निराकृतं न तु परप्रयोजनमिति भावः ।

**पूर्वपक्षस्तु–** विष्णोर्न सर्वकर्तृत्वादि युक्तम् । तथा हि किं विष्णुः प्रयोजनोद्देशेन सृष्ट्यादिकं करोति तदनुद्देशेन वा । नोभयथापि सर्वकर्तृत्वम् । आद्ये अपूर्णत्वात् । द्वितीये प्रवृत्तेरेवायोगेन सर्वकर्तृत्वस्य सुतरामयोगात् । विधान्तरस्य चाऽभावेऽनुपपन्नमेव सर्वकर्तृत्वमिति ।

**सिद्धान्तस्तु–** युक्तमेव विष्णोः सर्वकर्तृत्वम् । तस्य पूर्णानन्दत्वेन प्राप्तप्राप्तव्यतया फलोद्देशेन प्रवृत्त्यनङ्गीकारात् । न च फलानुद्देशेन प्रवृत्त्यनुपपत्तिरिति वाच्यम् । लोकवल्लीलयैव प्रवृत्त्युप-पत्तेः । न हि लीला प्रयोजनान्तराय भवति । मत्तस्य नृत्तगानादिलीलायाः प्रयोजनाभावेऽपि दर्शनात् । अतो विरोधाभावाद्युक्तं लक्षणसूत्रमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**प्रयोजनानुद्देशे कीदृशी प्रवृत्तिरिति चेत् पृच्छसि तर्हीति** ॥ अयं भावः । न च प्रयोजना-नुद्देशेऽपि अग्नेरुर्ध्वज्वलनादाविव स्वभावादेव प्रवृत्तिः चेतनत्वात् न चेतनत्वेऽपि मत्तस्य नृत्य-गानादाविव निष्फलैव प्रवृत्तिः प्रेक्षावत्वात् । नापि प्रेक्षावत्वेऽपि दयया प्रवृत्तिः दयासाध्यफला-भावात् । आप्तकामत्वात् तदनुद्देशे च प्रेक्षावत्वं न स्यादिति । सूत्रे तुशब्दोऽवधारणे । ईश्वर-प्रवृत्तेरिति शेषः । लोकवत्सुखोद्रेकहेतुकमत्तनृत्तगानादिप्रवृत्तिवदेवेश्वरप्रवृत्तेः । लीलाकैवल्यं केवललीलात्वं न तु प्रयोजनोद्देशत्वं इत्यर्थमभिप्रेत्य तद्भाष्यं व्याचष्टे ॥ **तर्हीति** ॥

नन्वेवं सति प्रेक्षावत्वं मत्तवदेव न स्यादिति चेत् । स्वप्रयोजनानुद्देशित्वेऽयं दृष्टान्तः ।

(वाक्यार्थमुक्तावली)
वस्तुतस्तु दयालुप्रवृत्तिवल्लोकानुग्रहाय सृष्ट्यादिप्रवृत्तिरुपपद्यते । न च पूर्णानन्दस्य दययापि प्रवृत्तिर्नास्तीति वाच्यम् । पूर्णानन्दतया दयोद्देशस्वप्रयोजनशून्यस्यापि परप्रयोजनमपि स्व-प्रयोजनमिव मन्यमानस्य स्वाभाविकक्रियापारवश्यादेव वाश्यादेर्वत्सादाविव प्रवृत्त्युपपत्तेरिति भावेनाह ॥ अत इति ॥ कृतकृत्यत्वादित्यर्थः । अत्राद्ये प्रयोजनोद्देशेन प्रवृत्त्यङ्गीकारेऽ-पूर्णत्वपरिहाराय तदनुद्देशेन प्रवृत्त्युक्तिः । द्वितीये तु अप्रेक्षावत्त्वनिरास इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

लीलापि किमर्थमित्यत आह ॥ न हीति ॥ कुतो नेत्यत आह ॥ मत्तेति ॥ ऐक्य-प्रतीतिनिरासायाह ॥ अखिलेति ॥ सूत्राक्षरार्थस्तु न ईश्वरप्रवृत्तिः अन्येषामिव स्वप्रयोजनार्थं कुतः प्रयोजनवत्त्वात् । यदर्थं प्रवृत्तिः तस्य प्रयोजनस्य आप्तकामत्वेन प्रागेव सिद्धत्वादिति । दयालुप्रवृत्ताविव परप्रयोजनवत्वादिति । नञः आवृत्त्या स्वप्रयोजनार्थं न, कुतः, न प्रयोजन-वत्त्वात् व्याख्यानादौ हस्तचलनादाविव, सुखोद्रेकात्, गानादाविव च प्रयोजनवत्वादित्यादीति चेति त्रिधा दृष्टव्यम् ।

## वाक्यार्थविवरणम्

लोकानुग्रहायेत्युक्त्या । परप्रयोजनार्थं च सृष्ट्यादिरित्युक्तं भवति । यथोक्तम् । 'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतय' इति । योग्यानां स्वगुणज्ञानार्था पारमेश्वरी सृष्टिरित्यस्ति परप्रयोजनमिति ध्येयम् ।

## वाक्यार्थमञ्जरी

लोकस्य मत्तादेर्नृत्यादिक्रिया यथा तथेशस्यापि सृष्टिक्रिया लीलायाः कैवल्यं केवलत्वं प्रयोजनं विना लीलैवेत्यर्थः ॥ लोकानुग्रहेति ॥ अनेन कृपालूनां केवलं परप्रयोजनोद्देशेन प्रवृत्तेर्दृष्टत्वात्परमकृपालोरीश्वरस्य परप्रयोजनोद्देशेन प्रवृत्तिरित्यपि समाधानं सूचितम् ।

॥ इति न प्रयोजनाधिकरणम् ॥ ९ ॥

## १०. अथ वैषम्यनैर्घृण्याधिकरणम्

## सूत्रभाष्यम्

सर्वकर्तृत्वे वैषम्यनैर्घृण्ये तस्येत्यतो वक्ति–

**॥ ॐ वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ ॥ ३५ ॥**

कर्मापेक्षया फलदातृत्वान्न तस्य वैषम्यनैर्घृण्ये। 'पुण्येन पुण्यं लोकं नयति पापेन पापम्' (प्र.उ.३-७) इति हि श्रुतिः।

## सत्तर्कदीपावली

सुकृतिनः स्वर्गादिस्थान् दुष्कृतिनो नरकादिस्थान् सृजतीति विषमो निर्घृण इति न शङ्कनीयम्। न ह्यदण्ड्याननुगृह्णन् दण्ड्यान् दण्डयन् राजा विषमो निर्घृण इत्युच्यते लोके। तथाहि श्रुतिः। पुण्येन पुण्यं लोकं नयति पापेन पापमिति।

## तत्त्वप्रदीपिका

यद्येवं सर्वकर्तृत्वमीश्वरस्य बोभूयते, कांश्चिदिष्टं भोजयति कांश्चिदनिष्टमिति न समत्वमीश्वरस्य स्यात्। निरये पतितानतिबाधाविह्वलानाक्रन्दतोऽनन्यनाथाननुज्जिहीर्षोर्नैर्घृण्यं चेत्यतो वक्ति ॐ **वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॐ।** तत्तत्कर्माणि वीक्ष्य तदानुकूल्येन फलं ददाति न विपर्ययेणेति नोक्तदोषः।

## तत्त्वप्रकाशिका

अत्र विष्णोः सर्वकर्तृत्वे वैषम्यादिदोषप्राप्तियुक्तिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः। जगज्जन्मादिकर्तृत्वं हरेरुक्तम्। तस्य युक्तिविरोधे लक्षणस्यासम्भवित्वं स्यादतोऽसौ निराकर्तव्य एव। जन्मादिकर्तृत्वमेव विषयः। ईश्वरस्य युक्तमयुक्तं वेति सन्देहः। श्रुतिविरोधदर्शनं च सन्देहबीजम्। सयुक्तिकं पूर्वपक्षयति ॥ **सर्वेति** ॥ न विष्णोः सर्वकर्तृत्वं युक्तम्। तथा हि। किमसौ प्राणिकर्म-सापेक्षः सृष्ट्यादि करोति तदनपेक्षो वा। नाद्यः। नियमेन कर्मापेक्षया प्रवर्तमानस्यास्वातन्त्र्या-पातात्। अस्वतन्त्रस्य च सर्वकर्तृत्वानुपपत्तिः। द्वितीये वैषम्यनैर्घृण्ये स्याताम्। निर्निमित्तं विभागेन सुखादिप्रदानात्। वैषम्यादिदोषवतश्च न सर्वकर्तृत्वम्। कर्मानपेक्षया सर्वकर्तृत्वे च 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवेदप्रामाण्यं च स्यात्। अतो हरेः सर्वकर्तृत्वायोगान्न युक्तं लक्षणमिति

(तत्त्वप्रकाशिका)
भाव: । **सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ अत इति ॥** युक्तमेव विष्णोः सर्वकर्तृत्वम् । न चोक्तदोषप्रसङ्गः । कर्मापेक्षया फलदातृत्वाङ्गीकारे वैषम्यादिदोषाभावादिति भावः ।

## गुर्वर्थदीपिका

वैषम्यनैर्घृण्ये इत्यत्र एकस्य सुखदानादपरस्य दुःखदानात् वैषम्यम् । स्वदत्तदुःखोद्रेकात् रुदतो दृष्ट्वा तदुपरि कृपाया अकरणात् नैर्घृण्यमित्यर्थः ।

## भावबोधः

**वैषम्यादिदोषेति ॥** अत्राप्यादिपदेनास्वातन्त्र्यादिविरोधियुक्तिग्रहणेन 'बहुयुक्तयः' इत्यनेनैव तदधिकरणोपाधिरपि सङ्गृहीत इति भावः । पूर्वाधिकरणे लोकानुग्रहाय सृष्ट्यादिक्रीडां करोतीत्युक्ते तर्हि सर्वेषां सुखमेव दद्यात्; न तु केषाञ्चित् सुखं केषाञ्चित् दुःखम् । वैषम्याद्यापत्तेरित्याक्षेपोत्थानादनन्तरसङ्गतिरिति ज्ञेयम् ॥ **ईश्वरस्येति ॥** अत्र विष्णोः सर्वकर्तृत्वं युक्तिविरुद्धं भवत्युत नेति चिन्ता । तदर्थं प्राणिसुखदुःखादिसर्वकर्तृत्वे वैषम्यादिप्राप्नोत्युत नेति । तदर्थमीश्वरः प्राणिनां सुखदुःखादिदाने तत्तदनादिकर्मयोग्यतादिकं किं नापेक्षत उतापेक्षत इति । तदर्थं कर्माद्यपेक्षायामीश्वरस्यास्वातन्त्र्यं प्राप्नोत्युत नेति । तदर्थं कर्मयोग्यतादिकं विष्ण्वनधीनसत्तादिकम् उत तदधीनसत्तादिकमिति । तदर्थं कर्मादिकारयितृत्वनिबन्धनं वैषम्यादिकं दोषावहं भवत्युत नेति । तदर्थं वैषम्यादिकं किं तत्त्वेनैव दोष उत वेदाप्रामाण्याद्यनिष्टहेतुत्वेनेति । ईशस्य पूर्णत्वादिसिद्धिरिति न्यायविवरणं व्याचष्टे– **न विष्णोरिति ॥** अनेन पूर्णत्वं सर्वकर्तृकत्वमिति व्याख्यातं भवति । कर्मसापेक्षत्वेऽनीशत्वमिति न्यायविवरणं व्याचष्टे– **नियमेनेति ॥** सर्वकर्तृकत्वेति भाष्यं व्याचष्टे– **द्वितीय इति ॥** अनेन पक्षत्वे श्रुतेरप्रामाण्यमिति न्यायविवरणं व्याचष्टे– **कर्मापेक्षतयेति ॥**

## भावदीपः

**युक्तीति ॥** कर्मसापेक्षत्वेऽनपेक्षत्वे च दोषप्राप्तिरिति बहुमुखदृढयुक्तीत्यर्थः । सापेक्षत्वेन वैषम्यादिनिराससम्भवात्कथं भाष्ये दोषनिर्धारणमित्यतः कर्मसापेक्षत्वेऽनीश्वरत्वमनपेक्षत्वे श्रुतेरप्रामाण्यमिति न्यायविवरणं विवृण्वन्पक्षभेदेन भाष्यं योजयितुं विकल्पयति ॥ **किमसाविति ॥**

(भावदीपः)

कर्मसापेक्षत्वेनेश्वरस्यास्वातन्त्र्यमिति वक्ष्यमाणदिशाऽस्वातन्त्र्यापातादित्युक्तम् । भाष्ये सर्व-कर्तृत्वे इत्युक्तेराह ॥ **सर्वकर्तृत्वानुपपत्तिरिति** ॥ पूर्णत्वासिद्धिरिति न्यायविवरणोक्तिस्तु सर्वकर्तृ-त्वानुपपत्तिफलाशयेति भावः । भाष्यं योजयति ॥ **द्वितीय इति** ॥ अन्यत्रोक्तं दोषान्तरं चाह ॥ **कर्मेति** ॥ अप्रामाण्यं चेति समुच्चयोक्त्याऽनपेक्षत्वपक्षे दोषभेदोक्तिपरयोर्ग्रन्थयोरविरोधश्चोक्तो ध्येयः ॥ **अत इति** ॥ कर्मसापेक्षत्वेऽनपेक्षत्वे च युक्तिविरोधादित्यर्थः । उक्तदोषनिरासकतया भाष्यसूत्रे तात्पर्यतो व्याचष्टे ॥ **कर्मेति** ॥ अत्रोक्तदोषोऽग्रे निरसिष्यत इति भावः ।

## अभिनवचन्द्रिका

**सृष्ट्यादि करोतीति** ॥ प्राणिनामिति शेषः । आदिशब्देन सुखदुःखादिकं ग्राह्यम् । प्राणिनां कर्मसापेक्षः सुरनरतिर्यगादिनीचोच्चयोनिषु सृष्टिं करोति । विभागेन सुखदुःखादिकं च ददातीत्यर्थः । द्वितीयपक्षं परिशेषयितुं आद्यं दूषयति – **नाद्य इति** ॥ इष्टापत्तिरित्यत आह – **अस्वतन्त्रस्येति** ॥ यद्यसौ सहकार्यभावे स्रष्टुमशक्तः, तर्हि आदिकाले सहकारिवैधुर्येण महदादिसृष्टृत्वं न स्यादिति स्वाभिलाषितसर्वकर्तृत्वविरोधित्वान्नास्वातन्त्र्यमिष्टमिति भावः । द्वितीये त्विदं भाष्यमुपतिष्ठत इति भावेनाह– **द्वितीय इति** ॥ कुत इत्यत आह– **निर्निमित्त-मिति** ॥ अत्रेमौ प्रयोगौ ईश्वरो विषमः, निर्निमित्तं कांश्चिद्देवादिषूत्पाद्य सुखदातृत्वात् । तथा 'ईश्वरो निर्घृणः, निर्निमित्तमेव कांश्चिद्दैत्यादिषूत्पाद्य दुःखदातृत्वात्' इति । यदर्थं वैषम्यनैर्घृण्ये साधिते तदाह– **वैषम्यादिदोषवतश्चेति** ॥ 'ईश्वरो न महदादिस्रष्टा, वैषम्यादिदोषित्वात् देवदत्तवत्' इति प्रयोगो द्रष्टव्य इति । एतेन किमिदमापादनमुत साधनम् । नाद्यः वैषम्य-नैर्घृण्याभावस्य पूर्वपक्षिणाप्यङ्गीकृतत्वेन 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इत्यनेन सिद्धान्तेन तदभाव-साधनवैयर्थ्यात् । किञ्च अस्मिन् पक्षे वैषम्यादिदोषवतश्च न सर्वकर्तृत्वमित्युत्तरवाक्यमसङ्गतं प्राप्नोति । न चाऽऽपाद्यस्येष्टत्वपरिहारार्थमुत्तरवाक्यमिति वाच्यम् यदि प्राणिनां कर्मानपेक्षयैव सर्वकर्ता स्यात्, तर्हि वैषम्यनैर्घृण्ये स्यातामिति आपादयित्रैव आपाद्यापादकयोर्व्याप्तेरङ्गीकृतत्वेन इह पुनर्वैषम्यादिदोषवतश्च न सर्वकर्तृत्वमित्यापाद्यस्य तदभावव्याप्यत्वकथनविरोधात् । अत एव न द्वितीयः वैषम्यादिदोषतश्च न सर्वकर्तृत्वमित्युत्तरवाक्यायोगप्रसङ्गात् । कर्मानपेक्षयैव सर्वकर्तृत्वलिङ्गोपजीवनेन सिद्धस्य वैषम्यादेः तद्विघातकत्वायोगात् । न हि व्यापकेन व्याप्या-भावसाधनमिति परास्तम् । कर्मनैरपेक्ष्येण सुखदुःखदातृत्वहेतुना वैषम्यनैर्घृण्ये प्रासाध्य ताभ्यां

(अभिनवचन्द्रिका)

तदन्यस्यैव महदादिसर्वकर्तृत्वस्य निराकरणाङ्गीकारात् । युक्तिविरोधन सर्वकर्तृत्वं दूषयित्वा प्रमाणाभावेन दूषयितुमाह– **कर्मानपेक्षयेति** ॥ सर्वप्राणिगतसुखदुःखकर्तृत्वे चेत्यर्थः । ज्योतिष्टोमादिवाक्यमप्रमाणं सुखाद्यसाधनस्यापि पुण्यादेः तत्साधनत्वाभिधायित्वादिति प्रयोगात् ज्योतिष्टोमादिवाक्याप्रामाण्यं स्यात् । ततश्च 'विष्णोः सर्वकर्तृत्वाभिधायको वेदः अप्रमाणं वेदत्वात् ज्योतिष्टोमादिवाक्यवत्' इति प्रयोगसम्भवेन प्रमाणाभावात् न विष्णोः सर्वकर्तृत्वमिनि भावः ।

## वाक्यार्थमुक्तावली

**वैषम्यादिदोषेति** ॥ अत्रादिपदेन स्वातन्त्र्यादिविरोधियुक्तिग्रहणेन बहुयुक्त्य इत्यनेनैवैतदधिकरणोपाधिरपि संगृहीतः । अत्र कर्मादिसापेक्षत्वेन पक्षत्वे च दोष इति बहुमुखदृढयुक्तिविरोधो निरस्यते । पूर्वं बहुमुखयुक्तिविरोधपरिहारेऽपि उपपद्यते चेति सूत्रे फलमुखवैषम्यस्याङ्गीकारेणैव प्रमाणमुखस्य वैषम्यादेर्निरासात् प्राबल्यमभिप्रेत्य पुनरारम्भ इति भावः । पूर्वाधिकरणे लोकानुग्रहाय सृष्ट्यादिक्रीडां करोतीत्युक्ते तर्हि सुखमेव सर्वेषां दद्यान्न तु केषांचित्सुखं केषांचिद्दुःखं वैषम्यापत्तेरित्याक्षेपेणोत्थानादनन्तरसङ्गतिः ॥ **ईश्वरस्येति** ॥ अत्र विष्णोः सर्वकर्तृत्वं न युक्तमिति चिन्ता । तदर्थमीश्वरः कर्मादिक्रमयोग्यतादिनिरपेक्ष उत सापेक्ष इति । तदर्थं कर्मयोग्यताद्यपेक्षायामस्वातन्त्र्यं प्राप्नोत्युत नेति । तदर्थं कर्मयोग्यतादिकं विष्ण्वधीनसत्ताकमुत नेति उत तदधीनं चेति । तदर्थं तस्येश्वराधीनत्वे पुनरापन्नं स्वाधीनानादिसिद्धयोग्यतानुसारेण सुखदत्वलक्षणवैषम्यादिकमित्येव दोषः । किं वा वेदाप्रमाण्याद्यापादकतयेति ।

ननु तत्तत्पूर्वपुण्यपापं कर्मनिमित्तीकृत्य फलदाने वैषम्याद्यभावात्कथं भाष्ये दोषनिर्धारणमित्यतो विकल्पमुखेन भाष्यं योजयितुं विकल्पयति । कर्मसापेक्षत्वेनेश्वरस्यास्वातन्त्र्यमित्येतद्भाष्यं हृदि कृत्वाऽद्यस्योत्तरमाह ॥ **नाद्य इति** ॥ तथा च न्यायविवरणे कर्मसापेक्षत्वेनेश्वरमिति । द्वितीयोत्तरत्वेन भाष्यं योजयति ॥ **द्वितीय इति** ॥ कर्मानपेक्षतया सर्वकर्तृत्व इत्यर्थः ॥ **निर्निमित्तमिति** ॥ निर्निमित्तं कांश्चित्सुखयन् विषमः स्यात् । कांश्चिन्निर्निमित्तं दुःखयन्निर्घृणः स्यादिति सुधानुसारेणार्थो बोध्यः । द्वितीये दूषणान्तरपरत्वेन भाष्यं योजयति ॥ **कर्मानपेक्षत्वेति** ॥ कर्मानपेक्षतया सुखदुःखकर्तृत्वे वेदाप्रामाण्यकारणवैषम्यनैर्घृण्य इति भाष्यार्थः इति भावः । उक्तं च न्यायविवरणे । अनपेक्षत्वे श्रुतेरप्रामाण्यमिति ॥ **वैषम्यादीति** ॥

(वाक्यार्थमुक्तावली)

कर्मानुसारेण न स्वतो वैषम्यादिदोषाभावात् वेदाप्रामाण्यापादकतयापि दोषाभावादित्यर्थः । सूत्रे ईश्वरस्य फलदान इति शेषः । उत्तरसूत्रात्कर्मेति सापेक्षत्वादित्यतः पूर्वं सम्बध्यत इति ज्ञेयम् ।

## तत्त्वसुबोधिनी

**वैषम्यादिदोषेति** ॥ अत्राप्यादिपदेन अस्वातन्त्र्यादिविरोधियुक्तिग्रहणम् । अत्र पूर्वाधिकरणे लोकानुग्रहाय सृष्ट्यादिक्रीडां करोतीति उक्ते तर्हि सर्वेषां सुखमेव दद्यात् न तु केषाञ्चित्सुखं, केषाञ्चिद्दुःखं वैषम्याद्यापत्तेरित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः । अस्तु अस्वातन्त्र्यं ततः किमित्यत आह ॥ **अस्वतन्त्रस्येति** ॥ सर्वकर्तृत्वेति भाष्यं व्याचष्टे ॥ **द्वितीय इति** ॥ कुतः इत्यत आह ॥ **निर्निमित्तमिति विभागेनेति** ॥ कस्यचिदेव दुःखं कस्यचिदेव सुखमिति विभागेनेत्यर्थः । द्वितीये दूषणान्तरमाह ॥ **कर्मेति** ॥ तेन वेदेन स्वर्गादिसुखस्य ज्योतिष्टोमादिकर्मफलत्वस्योक्तत्वादिति भावः ।

## वाक्यार्थमञ्जरी

निर्दयत्वमित्यर्थः । विभागेन विषमतया । नेश्वरस्य वैषम्यनैर्घृण्ये कर्मसापेक्षत्वात् हि यस्मात्तथा प्रस्तुतार्थं दर्शयति । पुण्येन पुण्यमिति श्रुतिरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ न कर्माविभागादिति चेन्नानादित्वात् ॐ ॥ ३६ ॥**

**यदपेक्षयाऽसौ फलं ददाति न तत्कर्म । 'एष ह्येवैनं साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधुकर्म कारयति तं यमधो निनीषत'** (कौ.उ.३-८) **इति श्रुतेः कर्मणोऽपि तन्निमित्तत्वादिति चेन्न । तस्यापि पूर्वकर्म कारणमित्यनादित्वात्कर्मणः । भविष्यत्पुराणे च–**

> **'पुण्यपापादिकं विष्णुः कारयेत्पूर्वकर्मणा ।**
> **अनादित्वात्कर्मणश्च न विरोधः कथञ्चन'** ॥ इति ।

## सत्तर्कदीपावली

**एष ह्येव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवासाधुकर्म कारयति**

(सत्तर्कदीपावली)

तं यं अधो निनीषत इति वचनादपि न वैषम्यादिकमाशङ्कनीयमीश्वरस्य । 'पुण्यपापादिकं विष्णुः कारयेत् पूर्वकर्मणा । अनादित्वात्कर्मणश्च न विरोधः कथंचनेति वचनात् । अनादित्वात्कर्मण इति कर्मपरंपराया इत्यर्थः ।

## तत्त्वप्रदीपिका

न कर्माविभागादिति चेन्नानादित्वात् । यदपेक्षयाऽसौ फलं ददातीत्युच्यते न तज्जीवस्य कर्मेश्वरमन्तरेणास्ति, अविभागादस्वातन्त्र्यादिति चेन्न । तस्यापि पुण्यादेः कर्मणस्तादृशं पूर्वं कर्म कारणमित्येवमनादित्वात्कर्मसमुदायस्य ।

## तत्त्वप्रकाशिका

कर्मापेक्षया फलदातृत्वमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ **न कर्मेति** ॥ कर्मापेक्षया फलं ददातीश्वर इत्ययुक्तम् । यदपेक्षया फलं दद्यात् तस्यापेक्ष्यस्य कर्मण एवाभावात् । अस्ति पूर्वं कर्मेति चेत् । सत्यम् । तस्याप्येष ह्येवेति श्रुतौ भगवदधीनत्वश्रवणात्स्वकृतापेक्षया फलदानेन वैषम्यादेरनिस्तारात् । अतो न कर्मापेक्षा सम्भवतीति भावः । **उन्निनीषते** ऊर्ध्वं नेतुमिच्छति । परिहारांशं व्याचष्टे ॥ **नेति** ॥ नापेक्ष्य कर्माभावो वक्तव्यः । पूर्वकर्मणः सत्त्वात् । न च वाच्यं तस्यापि भगवन्निमित्तत्वेनानपेक्ष्यतेति । भवेदेतद्यदि पूर्वतनं कर्मेश्वरेण निरपेक्षेण क्रियेत । नैतदस्ति । ततोऽपि पूर्वतनकर्मापेक्षया तस्य कारितत्वात् । तादृशस्य चापेक्ष्यतोपपत्तेः । न च पूर्वतरस्यापीश्वरनिर्मितत्वादनपेक्षता । तस्यापि पूर्वतनकर्मापेक्षयैव कारितत्वात् । न च मन्तव्यं यत्रैव पर्यवसानं तदारभ्य दोष इति । अनादित्वात्कर्मपरम्पराया इति भावः ।

## गुर्वर्थदीपिका

तस्यापेक्ष्यस्य कर्मण एवाभावादित्यत्र राज्ञा स्वभटे दीयमानस्य कशाताडनादिदुःखस्य तदैव तत्कृतापराधरूपकर्मवत् ईश्वरेण दीयमानरोगादिरूपदुःखादौ निमित्तभूततात्कालिककर्म नास्तीत्यर्थः । अनेन तत्कर्मेति भाष्यस्यास्मिन्जन्मनि तत्कर्मैव नेत्यर्थ उक्तो भवति । 'तं यमुन्निनीषते तं यमधो निनीषत' इत्यत्र यमुन्निनीषते तं साधु कर्म कारयति, यमधो निनीषते तमसाधु कर्म कारयतीत्यर्थः । 'कर्मणोऽपि तन्निमित्तत्वात्' इति भाष्ये प्राचीनकर्मणोऽपि भगवत्सृष्टत्वेन भगवदधीनतया भगवदधीनजगतो विभागाभावादिति सौत्राविभागपदस्यार्थः

(गुर्वर्थदीपिका)

सूचितो भवति । स्वकृतापेक्षयेत्यत्र स्वकृतं स्वसृष्टमित्यर्थः । तादृशस्य चापेक्ष्यतोपपत्तिरित्यत्र केवलं स्वेच्छयैव कारितस्य वैषम्यपरिहारायापेक्ष्यत्वासम्भवेऽपि तत्प्राचीनकर्म निमित्तीकृत्य कारितस्यापेक्ष्यत्वसम्भवादित्यर्थः ।

## भावबोधः

अविभागादिति सौत्रपदव्याख्यानरूपस्य कर्मणोऽपि तन्निमित्तत्वादित्येतस्यार्थः ॥ भगव-**दधीनत्वेति** ॥

## भावदीपः

असङ्गतिनिरासाय शेषपूर्त्या भाष्यं व्यनक्ति ॥ **कर्मेति** ॥ लोकेऽविभक्ते स्वतन्त्र इति प्रयोगादविभागादिति पदस्य कर्मणोऽपि तन्निमित्तत्वादिति भाष्यम् । तदर्थः **भगवदधीनत्वेति** ॥ नञो न कर्मेत्यनेनान्वयमुपेत्याह ॥ **नापेक्ष्य कर्माभावो वक्तव्य इति** ॥

## वाक्यार्थमुक्तावली

अपेक्षकथने अविभागादीश्वरनियमव्यतिरेकेण कर्मणोऽभावात्कर्मणोऽपि तन्निमित्तत्वादिति यावदिति भाष्यस्य सूत्रारोहं मत्वा पूर्वाक्षेपपूर्वं व्याचष्टे ॥ **कर्मापेक्षयेति** ॥ अविभागादित्यस्यै-तावद्भगवदधीनमेतावन्नेति विभागाभावादित्यप्यर्थमाहुः । श्रुतौ यमुन्निनीषते तमित्यन्वयः । नानादित्वादित्यत्र न कर्मेति नेति पूर्वानुवृत्तिमभिप्रेत्य व्याचष्टे ॥ **नापेक्ष्य कर्माभावे वक्तव्य इति** ॥ अनादित्वादित्यत्र कर्मण इति विभक्तिविपरिणामेनान्वेति कर्मपदेन च कर्मपरंपरोच्यत इति भावेन भाष्यार्थं कक्ष्याक्रमेणाह **पूर्वकर्मण इत्यादिना** ॥

## तत्त्वसुबोधिनी

**कर्मण एवेति** ॥ स्वातन्त्र्येणाभावादित्यर्थः । अन्यथा कर्मणः प्रत्यक्षसिद्धत्वात् सर्वथा तदभावो न सम्भवतीति भावः । (कर्मणः एवेति स्वातन्त्र्येणाभावादित्यर्थः) अस्य कर्मणः स्वातन्त्र्येणाभावेऽपि पूर्वकर्मणः स्वातन्त्र्येण सत्त्वात् तदपेक्षया फलदानोपपत्तिरित्याशङ्कते ॥ **अस्ति पूर्वं कर्मेति चेदित्यादिना** ॥ (वेदेति अविभागादिति सौत्रपदव्याख्यानरूपस्य कर्मणोऽपि तन्निमित्तत्त्वादित्यस्यार्थः ।) **भगवदधीनत्वेति** ॥ नन्वस्तु कर्ममात्रस्य भगवदधीनत्वम्,

(तत्त्वसुबोधिनी)
तथापि तदपेक्षया फलदानात् न वैषम्यादीत्यत आह ॥ **स्वकृतेति । तादृशस्येति** ॥ ततोऽपि पूर्वकर्मणः इत्यर्थः ।

## वाक्यार्थविवरणम्

**भगवदधीनत्वश्रवणादिति** ॥ तथा चाविभागादित्यंशस्य विभागेनाभावादीश्वरं विना पृथगभावात् तदधीनतयैव भावादित्यर्थ उक्तो भवति ।

## वाक्यार्थमञ्जरी

ईश्वरापेक्ष्यं कर्म नास्ति कुतः अविभागात् अस्वतन्त्रत्वात् तस्यापीशकृतत्वादिति यावत् । स्वकृतकर्मापेक्षया फलदाने वैषम्याद्यनिस्तारादिति चेन्न । कर्मप्रवाहस्यानादित्वेन पूर्वपूर्वकर्मानुसारेणोत्तरोत्तरं कर्म कारयित्वा तदनुसारेण फलदाने दोषाभावादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥ ३७ ॥**

**न च कर्मापेक्षत्वेनेश्वरस्यास्वातन्त्र्यम् ।**

**'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।**
**यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया'**

**इत्यादिना कर्मादीनां सत्त्वस्यापि तदधीनत्वात् । न च पुनर्वैषम्याद्यापातेन दोषः । तादृशवैषम्यादेरुपलभ्यमानत्वात् ।**

**'स कारयेत्पुण्यमथापि पापं न तावता दोषवानीशिताऽपि ।**
**ईशो यतो गुणदोषादिसत्त्वे स्वयं परोऽनादिरादिः प्रजानाम्'**

**इति चतुर्वेदशिखायाम् ।**

## सत्तर्कदीपावली

**स्वाधीनविचित्रानादिकर्मपरम्परां लीलयैवानुसृजति जगद्वैचित्र्यं सृजतीश्वरः न तु स्वतोऽसामर्थ्येन ।**

(सत्तर्कदीपावली)

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इत्यादि वचनविरोधात् । पुण्यस्य शोभनमेव फलं पापस्याशोभनमेव फलमित्येतदन्यथाकर्तुं समर्थोऽपि न करोतीत्येतत् वैषम्यं नैर्घृण्यं च अस्तीश्वरस्य तदङ्गीकारे बाधकाभावात् । तदुक्तम् । 'वैषम्यं चैव नैर्घृण्यं वेदप्रामाण्यकारणम् । नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम्' इति । तदाह सर्वकर्तृत्व इत्यादिना ।

## तत्त्वप्रदीपिका

कर्मापेक्ष्यत्वे तस्यास्वातन्त्र्यादीश्वरत्वानुपपत्तिरित्यत आह– **ॐ उपपद्यते चाप्युपलभ्यते च ॐ ॥** उपपद्यते च तस्य स्वातन्त्र्यम् । कारणभूतानां कर्मणां जडत्वात् । जीवस्य चास्वातन्त्र्यस्य दर्शितत्वात् । ऋते च स्वतन्त्रादखिलव्यवहारानुपपत्तेः । कर्मादीनां सत्त्वस्यापि तदपेक्षत्वमुपलभ्यते च श्रुतिस्मृत्योः । अतः कुतोऽस्वातन्त्र्यम् ? नित्यस्यानाशित्वं च यदनुग्रहादेवेत्यर्थः । न च पुनः स्वोत्पादितकर्मानुकूल्येन कर्मान्तरं कारयतीति वैषम्याद्यापातेन दोषः । उपपद्यत एव तादृशं वैषम्यादि, उपलभ्यत्वात् । न हि प्रमाणोपलभ्यमनुपपन्नं भवति । अयं श्रुत्यर्थः । पुण्यं पुण्यं कारयेत्, पापं पापं, मिश्रकर्माणमथापि मिश्रमेव । न चैवमेव कारयतीत्येतावता दोषवान् । अन्यथा कर्तुमीशिता सन्नपि दोषाद्यापादने तेषां दोषादित्वापादने च । परः स्वयमेवेश इति यतः । न चायं सकर्तृकः, येन पराधीनतया दोषसम्भवः । प्रजानां चायमेव सर्वकर्ता । न च कस्यापि स्वदोषेच्छा भवति । अतो न दोषवान्परमेश्वरः । सर्वस्वातन्त्र्यात्सर्वगुणपरिपूर्ण एव । एवं स्वाभाविकीं योग्यतामनपोह्य त्रिविधांस्त्रिधा कारयतीत्यभ्युपगमः श्रुत्याद्यनुग्रहाच्चोपपद्यते । वक्ष्यन्ते च नियमातद्रूपाभावाः । उपपद्यते चैवं नियमत्वं स्वतन्त्रस्य । उपलभ्यते चैवं स्वभावत्वं 'देवस्यैष स्वभावोऽयम्' इति श्रुतौ ।

## तत्त्वप्रकाशिका

तथापि नियमेन कर्मापेक्षयैव फलदातुरीश्वरस्यास्वातन्त्र्यं प्रसज्यत इत्यादिशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ उपपद्यत इति ॥** नेश्वरस्य कर्मापेक्षयाऽस्वातन्त्र्यं किं तूपपद्यते च तत् । अपेक्ष्यकर्मसत्तादेरपि स्वाधीनत्वात् । न हि स्वाधीनसत्तादिमदपेक्षायामस्वातन्त्र्यं भवति । अपेक्षा तु वैषम्याद्यप्राप्तये स्वेच्छानिमित्तैव । यदि कर्मादि सत्तापि तदधीना तर्हि तदपेक्षा नामानपेक्षैवार्थाद्भवति । तथा च पुनर्वैषम्याद्यापातः स्यात् । तेन च दोषित्वमिति चेन्न । स्वाधीनकर्मापेक्षया फलदानरूपवैषम्यादेरीश्वरेऽदोषतयैव श्रुतावुपलभ्यमानत्वादिति भावः । कासौ श्रुतिरिति तामुदाहरति **॥ स इति ॥** स स्वाधीनकर्मापेक्षया पुण्यादि कारयेत् । एवं तस्य कर्मण ईशितापि तावता न वैषम्यादिदोषवानित्यर्थः । एवं तर्हि कर्मापेक्षाऽपि निष्फला तदभावेऽपि दोषाभावसम्भवादिति ।

(तत्त्वप्रकाशिका)

**मैवम् । कर्मानपेक्षत्वे वेदप्रामाण्यप्रसङ्गात् । तदुक्तम् । 'वैषम्यं निर्घृणत्वं च वेदप्रामाण्यकारणम् । नाङ्गीकार्यमतोऽन्यत्तु न वैषम्यादिनामकम्' इति । अतो हरेः सर्वकर्तृत्वे विरोधाभावाद्युक्तं लक्षण-मिति सिद्धम् ।**

## गुर्वर्थदीपिका

वेदप्रामाण्यप्रसङ्गादित्यत्र स्वतन्त्रस्य वेदेनापि किमिति चोद्यं स्वमहिमप्रतिपादकत्वेन परम-प्रेमास्पदत्वादेव न तु तदधीनत्वादिति परिहरणीयम् ।

## भावबोधः

**अपेक्ष्यकर्मसत्तादेरिति** ॥ अनेन कर्मणोऽपि तदधीनत्वमिति न्यायविवरणमप्युक्तार्थं भवति ॥ **कर्मानपेक्षत्वे वेदप्रामाण्यप्रसङ्गादिति** ॥ अनेन तथापि तदनुसारेण फलदानमित्यनङ्गीकार एवेष्टश्रुतिप्रामाण्यासिद्धिरिति न्यायविवरणमपि व्याख्यातं भवति । अत्राद्ये– कर्मादिसापेक्षस्य कर्तृत्वमभ्युपेत्य वैषम्यनैर्घृण्ये परिहृते । द्वितीये अपेक्षणीयं कर्मेश्वरायत्तं न वा । नेति पक्षे सर्व-कारणत्वहानिः । आद्ये, निर्निमित्तं विषमाणां कर्मणां कारयितुर्वैषम्यनैर्घृण्ये स्यातामित्याक्षिप्य कर्मादीनामनादिताभ्युपगमेन समाधानोक्तिः । तृतीये– एवं तर्हि नियमेन कर्मादिसापेक्षस्य स्वातन्त्र्यं न स्यादित्याशङ्क्योक्तम् 'उपपद्यते च' इति । अपेक्ष्यकर्मणः परमात्माधीनत्वे तदपेक्षा नामानपेक्षैव । तथा च पुनर्वैषम्याद्यापत्तिरित्याशङ्क्योक्तम् 'उपलभ्यते च' इतीति सूत्रक्रमः ।

## भावदीपः

पूर्वोक्तचोद्यमाशङ्कते ॥ **तथापीति** ॥ सापेक्षत्वाङ्गीकारेण वैषम्यादिदोषनिरासेऽपीत्यर्थः । भाष्यमनुवदन् तच्छेषतया सूत्रांशं योजयति ॥ **नेश्वरस्येति** ॥ भाष्यशेषं व्याचष्टे ॥ **अपेक्ष्येति** ॥ किमर्थं नियमेन तदपेक्षत इत्यत आह ॥ **अपेक्षा त्विति** ॥ न च पुनरित्यादिभाष्यं व्याचष्टे ॥ **यदीति** ॥ कर्मणोऽपि तदधीनत्वं तथापि तदनुसारेण फलदानमित्यङ्गीकार एव श्रुतिप्रामाण्य-सिद्धिरिति न्यायविवरणं शङ्कापूर्वं व्यतिरेकमुखेनोपपादयति ॥ **एवं तर्हीति** ॥ **वेदेति** ॥ ज्योति-ष्टोमेन स्वर्गकाम इत्यादिवेदेत्यर्थः । तदुक्तम् अनुव्याख्यान इत्यर्थः ॥ **अत इति** ॥ स्वाधीन-कर्मापेक्षयैवेश्वरस्य फलदातृत्वाङ्गीकारात् तन्निमित्तवैषम्यादेरदोषत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**अतोऽन्यत्त्विति ॥** नाङ्गीकार्यमिति वर्तते । ततोऽन्यत्तु वेदाप्रामाण्यकारणादन्यत् वैषम्यादि-नामकं नाङ्गीकार्यं न अङ्गीकार्यमेवेत्यर्थः ।

**पूर्वपक्षस्तु–** न विष्णोः सर्वकर्तृत्वं युक्तम्, वैषम्यादिदोषवत्त्वात् । तथा हि विष्णुः सर्वकर्तेति वदन् प्रष्टव्यः, ईश्वरः सुरनरतिर्यगादिनानायोनिषु प्राणिनो जनयित्वा विभागेन सुखदुःखे ददाति, तत्किं तेषां कर्मानुसारेण, उत तन्नैरपेक्ष्येण । नाद्यः अस्वातन्त्र्यापातात् । नियमेन कर्मसापेक्षस्यास्वातन्त्र्यनियमात् । द्वितीये तु वैषम्यनैर्घृण्ये प्राप्नुतः, निर्निमित्तं विभागेन सुखदुःखदातृत्वादिति । किञ्च नेश्वरस्य सर्वकर्तृत्वे मानमीक्षामहे, मानत्वेनाभिमतस्य वेदस्य ज्योतिष्टोमादिप्रतिपादकवेदवदमानत्वात् । ज्योतिष्टोमादिवेदामानत्वं तु सुखदुःखसाधनत्वेन तदुक्तानां धर्मादीनां नैरपेक्ष्येण सुखादिप्रदत्वात् सिद्धम् । अतो हरेः सर्वकर्तृत्वायोगान्न युक्तं लक्षणसूत्रमिति ।

**सिद्धान्तस्तु–** युक्तमेव विष्णोर्जगत्स्रष्टृत्वादिकम्, तत्तत्कर्मानुसारेण फलदातृत्वाङ्गीकारेण वैषम्यनैर्घृण्याभावात् । नन्वपेक्ष्यकर्मणोऽभावात् न तदपेक्षया वैषम्यादिदोषपरिहारः सम्भवति । न चास्ति पूर्वकर्मेति वाच्यम् । 'एष ह्येव' इति श्रुतौ तस्यापि भगवदधीनत्वश्रवणात् । स्वकारितापेक्षया फलदाने वैषम्यादेरनिस्तारादिति चेत्, भवेदयं दोषः पूर्वतनं कर्म ईश्वरेण यदि निरपेक्षेण कारितं स्यात्, न चैवम् किं तर्हि प्राचीनकर्मानुसारेण कारितम् । न च वाच्यं यत्रैव पर्यवसानं तदारभ्य दोष इति कर्मपरम्पराया अनादित्वात् । नन्वथापि नेश्वरस्य कर्मापेक्षया फलदातृत्वं युक्तं अस्वातन्त्र्यप्रसङ्गादिति चेत्, उपपद्यते खलु ईश्वरस्य कर्मसापेक्षत्वेऽपि स्वातन्त्र्यं, स्वाधीनसापेक्षायाः स्वातन्त्र्याऽविरोधित्वात् । न च तथा सति पुनर्वैषम्यादिकं स्यादिति वाच्यम् । इष्टत्वात् । तदुक्तम्–

'वैषम्यं निर्घृणत्वन्तु वेदाप्रामाण्यकारणम् ।<br>
नाङ्गीकार्यं ततोऽन्यत्तु न वैषम्यादिनामकम् ॥ इति ।

अतो हरेः सर्वकर्तृत्वे युक्तिविरोधाभावाद्युक्तं लक्षणसूत्रमिति सिद्धम् ।

# वाक्यार्थमुक्तावली

**तथापीति ॥** वैषम्याद्यभावेऽपीत्यर्थः । ईश्वरस्य स्वातन्त्र्यमिति शेषः । कर्मादीनां सत्वस्यापि तदपेक्षत्वादिति युक्तिसमुच्चये । तदसिद्धिवारणाय द्रव्यं कर्म चेति श्रुतिसमुच्चये चापि पदम् । ततश्च कर्मसापेक्षत्वेऽपीश्वरस्य स्वातन्त्र्यमुपपद्यत एव । कर्मसत्ताया अपि तदधीनत्वात् । न चासिद्धिः । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इति श्रुतेरिति सूत्रार्थमभिप्रेत्य प्रवृत्तं न वेत्यादिभाष्यं किंत्वित्याद्युपस्कारपूर्वं व्याचष्टे ॥ **नेश्वरस्येति ॥ तेन च दोषित्वमिति ॥** प्राकृतवदीश्वरस्यैव दोषित्वमित्यर्थः । कुतो न दोषित्वमित्यत उपलभ्यते चेति सूत्रांशः प्रवृत्तः । तत्र वैषम्यनैर्घृण्य इति प्रकृतं वैषम्यादीत्यन्वेति । चो यस्मादित्यर्थे । अदोषितयेति शेषः । ततश्च यस्मात्तादृशवैषम्याद्यदोषितया श्रुतावुपलभ्यते तस्मान्न दोषित्वमिति मत्वा प्रवृत्तं तादृशेत्यादिभाष्यं व्याचष्टे ॥ **स्वाधीनेति ॥ स स्वाधीनकर्मापेक्षयेति ॥** एतेन पुण्यं पुण्यकर्मिणं पुण्यं कारयेदिति पापं पापकर्मिणं पापं कारयेदिति व्याख्यातं भवति । अन्यथा कर्मापेक्षयेत्यस्यालाभात् । तदुक्तं तत्वप्रदीपे । 'पुण्यं पुण्यं कारयेत्पापं पापं कारयेत्' इत्यादिना ॥ **अतोऽन्यत्तु न वैषम्यादिनामकमिति ॥** अयं भावः वैषम्यादिकं न तावत्स्वरूपेण दोषः । किन्तु दोषहेतुतया । न चेदं वेदाप्रामाण्यदोषापादकतयाशेषकर्मादिसापेक्षत्वाङ्गीकारात् । नापि जीवानामिवेश्वरस्य प्रत्यवायहेतुतया तदभावात् । नापि 'समोऽहं सर्वभूतेषु' इति शास्त्राप्रामाण्यापादकतया । तत्र तत्तद्योग्यतानुसारित्वस्यैव समशब्दार्थत्वात् । 'न हि मातृकलत्रादौ गुरुशिष्यादिके तथा । वसिष्ठपुल्कसादौ च समधीः सम उच्यते' । अत एव नापि सर्वसमत्वरूपसद्गुणविरोधित्वेन । किञ्च तद्धि किं विविधतत्स्वभावकारणात् वैषम्यम् । अथवाऽनादिसिद्धतत्तस्वभावस्यान्यथाकरणे शक्तत्वेऽपि अकरणात् अथवा तथैव नियमात् । नाद्यः अनादित्वात् । न द्वितीयः । तस्य सर्वसमत्वरूपसद्गुणाविरोधित्वात् । 'समर्थोऽपि च हंसादीन्काकी कर्तुं च यो मुनिः । न काकी कुरुते यं किं लोके विषम उच्यते' । न तृतीयः । स्वभावनियामकत्वस्य निरतिशयस्वातन्त्र्यरूपमहागुणानुगुणत्वेन नीचत्वानापादकत्वात् । तदुक्तम् । 'विषमत्वं तु दोषाय शुभाशुभविनिर्णये । शुभाशुभनियन्तृत्वं न दोषो गुण एव स' इति । 'न विष्णोर्विषमत्वं तु योग्यतापेक्षया क्वचित् । योग्यतायास्तन्नियत्या विषमत्वं क्वचिद्भवेत्' इति च । तथा च वेदाप्रामाण्यकारणातिरिक्तं वैषम्यादि न दोषापादकमिति सिद्धम् । विस्तरस्तु चन्द्रिकायाम् । अत्राद्ये

(वाक्यार्थमुक्तावली)

कर्मसापेक्षत्वेन वेदाप्रामाण्यापादकवैषम्यादिदोषाभावोक्तिः । द्वितीये कर्मप्रतिभानादीत्यनादित्वोक्त्या तस्यैवोपपादनम् । तृतीये नियमेनापेक्षणीयत्वे कर्मणामस्वातन्त्र्यनिरासः । कर्मसत्तादेरारम्भणाधिकरणन्यायेनेश्वराधीनत्वेन स्वातन्त्र्यनिर्वाहे पुनर्दोषतादवस्थ्यशङ्कानिरासश्चेति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**उपपद्यते च तदिति** ॥ तत्कर्मापेक्षायां अपि स्वातन्त्र्यमुपपद्यते इत्यर्थः । कथमुपपद्यते इत्यत आह ॥ **'न हि' इति** ॥ कर्मादिसत्त्वस्य तदधीनत्वे पुनः वैषम्याद्यापत्तिरिति शङ्कते ॥ **यदि कर्मादीति** ॥ **तदभावेऽपीति** ॥ कर्मापेक्षाभावेऽपीत्यर्थः ॥ **कर्मेति** ॥ वेदाप्रामाण्यकारणं वैषम्यादिनाङ्गीकार्यमिति भावः । अत्रैव संमतिमाह ॥ **तदुक्तमिति** ॥ अत्राद्ये सूत्रे वैषम्यनैर्घृण्यपरिहारः । द्वितीये तदाक्षेपपरिहारः । तत्र यत्कर्मापेक्षया ईश्वरः फलं प्रयच्छति तत् कर्म स्वातन्त्र्येण नास्ति । नन्वस्ति पूर्वकर्मेति अत उक्तं, **अविभागादिति** ॥ पूर्वकर्मणोऽपि तदधीनत्वादित्यर्थः । तथा च वैषम्याद्यापादनमित्याक्षेपार्थः । अनादिपूर्वकर्मापेक्ष्यफलदानान्न विरोध इति अक्षरार्थः । तृतीये, एवं तर्हि नियमेन कर्मादिसापेक्ष्यस्य स्वातन्त्र्यम् न स्यात् इत्याशङ्क्योक्तम् **उपपद्यते चेति** ॥ अपेक्ष्यकर्मणः परमात्माधीनत्वे तदपेक्षा नामानपेक्षैव तदा सर्वैः वैषम्याद्यापत्तिरिति आशङ्क्य उक्तं उपलभ्यते चेति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**तदभावेऽपीति** ॥ कर्मसापेक्षत्वाभावेऽवैषम्यादिदोषाभावसम्भवात् । तददोषत्वप्रतिपादकश्रुतिसद्भावादित्यर्थः ।

## वाक्यार्थमञ्जरी

कर्मापेक्षणेऽपि स्वातन्त्र्यमुपपद्यत एव तस्य स्वाधीनत्वात् स्वाधीनकर्मापेक्षा नामानपेक्षैवेति पुनर्वैषम्यादीत्यत उक्तम् ॥ **उपलभ्यते चेति** ॥ तादृशं वैषम्यादिकं स कारयेदित्यादिश्रुतावदोषत्वेनोपलभ्यत एवेत्यर्थः । तदुक्तमनुव्याख्याने वेदाप्रामाण्यकारणमेव वैषम्यादिकं नाङ्गीकार्यम् । अन्यत्तु स्वाधीनकर्मसापेक्षत्वेन प्राप्तं वैषम्यादिनामकं दोषो नेत्यर्थः ॥

॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥

# ११. अथ सर्वधर्मोपपत्त्यधिकरणम्

## सूत्रभाष्यम्

अवशिष्टैरुपसंहरति ।

**॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ३८ ॥**

'गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुता अपि नैवात्र शङ्का ।
चिन्त्या अचिन्त्याश्च तथैव दोषाः श्रुताश्च नाज्ञैर्हि तथा प्रतीता' इति सर्वगुणोपपत्तिश्रुतेश्च ॥

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये
द्वितीयाध्यायस्य प्रथमः पादः ॥

## सत्तर्कदीपावली

अवशिष्टशङ्कोद्धारेण पादार्थमुपसंहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सर्वधर्मोपपत्तेरित्यादिना** ॥ चिन्त्या अचिन्त्याश्च गुणाः विष्णौ वेदे सन्तीत्यर्थः । तदुक्तम् । 'यदधीना गुणाश्चैव दोषा अपि च सर्वशः । गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनः' इति ।

इति श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतब्रह्मसूत्रभाष्यटीकायां
सत्तर्कदीपावल्यां श्रीपद्मनाभतीर्थभट्टारकविरचितायां द्वितीयाध्यायस्य प्रथमः पादः ।

## तत्त्वप्रदीपिका

वेदे श्रुता गुणा लोके विरुद्धा अपि देवे सन्ति । न च तेषां विरुद्धतया मिथ्यात्वमाशङ्कनीयम् । अश्रुता अपि ततश्चिन्त्याः सन्ति । न च यावन्तश्चिन्तयितुं शक्यन्ते रमादीनां तावन्त एव । किन्तु अचिन्त्याश्च तथैव सन्ति, यथा श्रुताश्चिन्त्याश्च । न च देवे दोषाः श्रुताः नापि चिन्त्याः सन्ति । किं पुनरचिन्त्याः । अज्ञैर्हि श्रुता इति प्रतीताः, न तु ज्ञानिनामिति सर्वगुणोपपत्तिश्रुतेः कयाऽपि

(तत्त्वप्रदीपिका)

विधया दोषलेशस्पर्शानुपपत्तिश्रुतेश्च निखिलगुणगणपरिपूर्णो निर्दोषो नारायणः सर्वकारणमिति सिद्धम् ।

यत्तु मन्यन्ते, यद्यपि स्रष्टृत्वादयो धर्मा ब्रह्मणः सन्ति, तथाऽप्यनुपपद्यमानत्वेन मायामया न सत्या इति तदप्येतेन परिहृतम् । प्रमाणदृष्टत्वमेव ह्युपपत्तिः । न ततोऽन्योपपत्तिरन्वेषणीया । उक्ता चोपपत्तिरतः सत्या इत्यभिप्रायः ।

॥ इति तत्त्वप्रदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥

## तत्त्वप्रकाशिका

सर्वेषां युक्तिविरोधानां परिहृतत्वात्किमुत्तरसूत्रेणेत्यतस्तात्पर्यमाह ॥ **अवशिष्टैरिति** ॥ विशिष्य प्रतिपादितेभ्यः स्रष्टृत्वादिगुणेभ्योऽवशिष्टैः सर्वगुणैः प्रतिपादितैरुपसंहरति । किमुक्तं भवति । उक्तावशिष्टान् सर्वगुणान् युक्तिविरोधपरिहारेण समर्थ्य विष्णोः पूर्णगुणत्वं निगमयत्यत्र सूत्रकर्तेत्यर्थः । अत एवात्र विष्णोः पूर्णगुणत्वे युक्तिविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । समस्तगुणसम्पूर्णो विष्णुरित्युक्तम् । तस्य च युक्तिविरुद्धत्वे पूर्वाध्यायो बाधितः स्यात् । अतोऽसौ परिहर्तव्यः । विष्णोर्गुणपूर्णत्वं विषयः । युक्तमयुक्तं वेति सन्देहः । पूर्वाध्यायोऽन्यत्रादर्शनं च सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । सर्वचेतनानामपूर्णत्वनियमात् । अस्यापि चेतनत्वेनापूर्णताया अवश्यं भावित्वात् । अन्यथातिप्रसङ्गादिति प्राप्ते सिद्धान्तयत्सूत्रं पठित्वा व्याचष्टे ॥ **सर्वेति** ॥ नायुक्तं विष्णोः पूर्णत्वम् । तस्य चेतनत्वेऽपि स्वातन्त्र्यादिना सर्वगुणोपपत्तेः । स्वातन्त्र्यादिमतः पूर्णगुणत्वनियमात् । न केवलं युक्त्या सर्वधर्मोपपत्तिः किं तर्हि 'गुणाः श्रुताः' इति सर्वधर्मोपपादकश्रुतेश्चेति भावः । सुविरुद्धा लोकदृष्ट्या । अश्रुता अपि रमादिचिन्त्यास्तदचिन्त्याश्चेत्यर्थः । अतो विष्णोः सर्वगुणपूर्णत्वे युक्तिविरोधगन्धाभावादुक्तं सर्वमुपपन्नमिति सिद्धम् ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां द्वितीयाध्यायस्य प्रथमः पादः ॥

## गुर्वर्थदीपिका

अवशिष्टैः सर्वगुणैरित्यत्र आनन्दादिसर्वगुणैरित्यर्थः । अन्यथातिप्रसङ्गादित्यत्र सकलचेतनेष्वदृष्टं पूर्णत्वमीश्वराख्यचेतनेऽङ्गीक्रियते चेत्तेष्वदृष्टजडत्वानित्यत्वादेरप्यङ्गीकारप्रसङ्ग इत्यर्थः । यद्वा सकलस्वजातीयेभ्यः एकस्य वैलक्षण्याङ्गीकारे काचिद्गौः सास्नादिरहिताऽपि स्यादित्यर्थः । स्वातन्त्र्यादिमतः पूर्णगुणत्वनियमादित्यनेन सार्वज्ञ्यादिगुणानां स्वमहिमसम्पादकत्वात्तत्प्रेप्सुस्तावद्भगवान्, स्वातन्त्र्यात्तत्र समर्थश्च । अतः सकलगुणप्रेप्सुत्वे सति तत्र समर्थत्वात् सकलशुभगुणवान् हरिरिति युक्तिं सूचयन् उपपत्तेर्भगवान् सर्वधर्मा भवत्येवेति सूत्रयोजनां दर्शयति । उपपद्यत अनेनेत्युपपत्तिरिति व्युत्पत्तिं मनसि निधायार्थान्तरमाह **न केवलमिति** ।। अश्रुता अपि इत्यत्र सन्तीति शेषः ।

**।। इति श्रीमत्कविकुलतिलक श्रीमद्वादिराजतीर्थमुनिविरचितायां तत्त्वप्रकाशिकाव्याख्यायां गुर्वर्थदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः ।।**

## भावबोधः

उपसंहरतीत्यधिकरणतात्पर्ये वक्तव्ये सौत्रसर्वपदानुरोधेन भाष्ये अवशिष्टैरित्युक्तम् । प्रकरणवशात् विशिष्य प्रतिपादितेभ्य इति लभ्यते ।

ननु प्रतिपादनं विनोपसंहाराभावात् कथमवशिष्टैः सह विशिष्य प्रतिपादितानामुपसंहार इत्यतः प्रतिपादितैरित्युक्तम् । अवशिष्टत्वादेव पूर्वं प्रतिपादनाभावात् कथं प्रतिपादितत्वमित्यतस्तात्पर्यमाह **किमुक्तं भवतीत्यादिना** ।। **पूर्वगुणत्वमिति** ।। तथा चावशिष्टगुणानां प्रतिपादनपूर्वकं तैः सह विशिष्य प्रतिपादितगुणानुपसंहरतीति भाष्याभिप्राय इति भावः । साधके जगज्जन्मादिकर्तृत्वे, एवं युक्तिविरोधं निरस्येदानीं तत्साध्ये ब्रह्मशब्दार्थपूर्णगुणत्वे युक्तिविरोधपरिहारादनन्तरसङ्गतिरिति चोक्तं भवति । चेतनत्वस्य विरोधियुक्त्यन्तरोपलक्षकत्वेनानुव्याख्याने 'बहुयुक्तयः' इत्यनेनेदमपि सङ्गृहीतम् ।

(भावबोधः)

नन्वेवमारम्भणाधिकरण एव बहुयुक्तिविरोधपरिहारस्य उपलक्षणत्वेन कृतत्वादेतदधिकरण चतुष्टयस्य तेनैव गतार्थतेति चेत्, न;

'मानमेयविशेषेण पुनरुक्तिर्न जायते'

इत्युक्तन्यायेन 'विकरणत्वात्' इति सूत्रगतार्थत्वस्येवास्यापि समाधेयत्वात् । मानमेय-विशेषश्च भाष्यटीकादावेव तत्र तत्रोक्त इति ॥ **युक्तमयुक्तं वेति** ॥ अत्र विष्णोर्गुणपूर्णत्वं युक्तिविरुद्धमुत नेति चिन्ता । तदर्थं चेतनत्वयुक्तिः किमनाभासा उत श्रुतियुक्तिबाधितत्वेना-स्वातन्त्र्योपाधिग्रस्तत्वेन चाभासेति । तदर्थमपूर्णत्वस्यास्वातन्त्र्येण व्याप्तिर्नास्त्युतास्तीति । सर्वे चेतना अपूर्णा इति न्यायविवरणं व्याचष्टे– **स्वातन्त्र्यादिमत इति** ॥ स्वातन्त्र्यपूर्णगुणत्व-योर्व्यतिरेकव्याप्तौ 'अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः' इति न्यायविवरणोदाहृता श्रुतिर्द्रष्टव्या ॥ **श्रुतेश्चेति** ॥ अनेन सौत्रः 'च' शब्दः श्रुतिसमुच्चायकतया भाष्ये व्याख्यात इत्युक्तं भवति ॥ **रमादिचिन्त्या इति** ॥ आदिपदेन विरिञ्चग्रहणम् । तस्यापि श्रुत्यनुक्तभारताद्युक्तगुणचिन्तयि-तृत्वादिति भावः । अत्राद्यं स्मृतिविरोधनिरासकमेका पेटिका । तदुत्तरमधिकरणद्वयं वेदप्रामाण्य-युक्तिविरोधनिरासकत्वेनैका पेटिका । तत्राद्ये युक्तिमात्रविरोधनिरासः । द्वितीये– दृढयुक्ति-विरोधनिरास इति । तदुत्तरमधिकरणद्वयं जगत्कर्तृत्वे श्रुत्युपसर्जनयुक्तिविरोधनिरासकतयैका पेटिका । तत्राद्ये– श्रुतिसंवादयुक्तिविरोधपरिहारः । द्वितीये श्रुतिसिद्धयुक्तिविरोधपरिहारः षष्ठं स्वातन्त्र्येण जगत्कर्तृत्वे बहुयुक्तिविरोधनिरासकमेका पेटिका । सप्तमं श्रुतिसंवादि-जीवकर्तृत्व-साधकयुक्तिविरोधस्य विस्तरेण निरासकमेका पेटिका । तत्राप्याद्यत्रिकं जगत्कर्तृत्वे बहुयुक्ति-विरोधनिरासकम् । तत्राद्ये कृत्स्नप्रसक्त्यादि युक्तिविरोधपरिहारः । द्वितीये निष्फलत्वादि-युक्तिविरोधपरिहारः । तृतीये वैषम्यादियुक्तिविरोधपरिहार इति । चतुर्थं ब्रह्मशब्दोक्तपूर्णगुणत्वे युक्तिविरोधनिरासकमिति ।

**॥ इति श्रीमद्रघुवर्यतीर्थ पूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थपूज्यचरणविरचित तत्त्वप्रकाशिकाभावबोधे द्वितीयाध्यायस्य प्रथमः पादः ॥**

## भावदीपः

**सर्वेषामिति** ॥ 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तयः । एवं चतुर्विधा नैव विरुध्यन्तेऽन्वयं प्रति' इति समयपादीयानुभाष्योक्तरीत्या सर्वयुक्तिविरोधानामित्यर्थः । एतद्विवेकश्चैतत्पादान्ते चन्द्रिकायां स्पष्टः । प्रतिपादितस्यैवोपसंहार इत्यतः प्रतिपादितैरिति । आद्याध्यायेऽनन्त-शब्दसमन्वयेनेति भावः । कथं गुणानामुपसंहारे करणत्वं कथं चास्योपसंहाररूपत्वे न्यायशास्त्रे अध्यायपादयोश्चान्तर्भाव इति भावेन पृच्छति ॥ **किमुक्तं भवतीति** ॥ भावार्थमाह ॥ **उक्तेति** ॥ विरोधनिरासेन स्थापितेत्यर्थः । समर्थ्य न्यायेनोपपाद्येत्यर्थः ॥ **अत एवेति** ॥ सर्वगुणानां युक्त्यविरोधेन स्थापनत्वादेवेत्यर्थः । पूर्वसङ्गतिचिन्तासाफल्ये आह ॥ **समस्तेति** ॥ अन्यत्र चेतनान्तरे सर्वचेतना अपूर्णगुणा इति नियम इति न्यायविवरणोक्तं परम्पराहेतुतया योजयति ॥ **सर्वचेतनानामिति** ॥ **चेतनत्वेनेति** ॥ विमतो पूर्णश्चेतनत्वाज्जीवचेतनवदिति भावः । हेतोर-प्रयोजकत्वं निराह ॥ **अन्यथेति** ॥ एवं नियमे सत्यपि चेतनत्वेनापूर्णत्वानभ्युपगमे सहचार-नियमवता हेतुना काप्यर्थसिद्धिर्न स्यादित्यर्थः । योग्यसाध्यमध्याहृत्य सूत्राक्षरार्थमाह ॥ **नायुक्तमिति** ॥ न्यायविवरणोक्तं हेतुमाह ॥ **स्वातन्त्र्यादिनेति** ॥ सर्वकर्तृत्वविचित्रशक्ति-त्वादिरादिपदार्थः । स्वातन्त्र्यादि च तदनन्यत्वादिनयैः समर्थितमिति भावः । कुत इत्यतः स्वतन्त्रस्य पूर्णगुणत्वनियमादिति न्यायविवरणोक्तमाह ॥ **स्वातन्त्र्यादिमत इति** ॥ स्वतन्त्र-स्येत्युपलक्षणमिति भावः । एतेन विष्णुः पूर्णगुणः स्वतन्त्रत्वात् तत्रेप्सुत्वे सति तत्र शक्तत्वा-दित्याद्युपपत्तय उक्ता भवन्ति । न्यायविवरणरीत्या सर्वधर्मोपपत्तेरित्यंशं व्याख्याय सौत्रच-शब्दव्याख्यानपरतया भाष्यं व्याचष्टे ॥ **न केवलमिति** ॥ युक्त्या स्वातन्त्र्यादिनेत्यर्थः । नन्वश्रुता अपि रमादिचिन्त्यास्तदचिन्त्याश्च सन्तीत्ययुक्तम् । अनुक्तं पञ्चभिर्वेदैर्न वस्त्वस्ती-त्युक्तिविरोधादिति चेत्सत्यं सामान्यतः श्रुता विशिष्याश्रुता इत्यर्थात् । उक्तं च प्राक्टीकायां गुणा अपि सामान्यतः श्रुता एवेत्यदोष इति ॥ **अत इति** ॥ पूर्णगुणत्वस्य श्रुतियुक्तिसिद्धत्वेन चेतनत्वयुक्तेस्तद्बाधितत्वादित्यर्थः । सर्वमुपपन्नमिति फलोक्तिः ।

**॥ इति श्रीमद्भाष्यटीकाभावदीपे राघवेन्द्रयतिकृते द्वितीयाध्यायस्य प्रथमः पादः ॥**

## अभिनवचन्द्रिका

**अत एवात्र विष्णोरिति** ।। यद्यप्यत्र पूर्णगुणत्वं निगमयति सूत्रकारः तथापि युक्तिविरोधपरिहारेण तत् सामर्थ्यनिगमादेवेत्यर्थः ।

**पूर्वपक्षस्तु**– न विष्णुः सर्वगुणपूर्णः । चेतनत्वात् । अन्यथा देवदत्तादीनामपि तथात्वं स्यादिति ।

**सिद्धान्तस्तु**– युक्तमेव विष्णोः सर्वगुणपूर्णत्वं स्वतन्त्रत्वात् । 'गुणाः श्रुताः सुविरुद्धाश्च देवे' इति श्रुतेश्च । तस्माद्विष्णोः सर्वगुणपूर्णत्वे युक्तिविरोधगन्धाभावात् उक्तं सर्वमुपपन्नमिति सिद्धम् ।

**।। इति श्रीमत्सत्यनिधितीर्थश्रीचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां तत्वप्रकाशिकाऽभिनवचन्द्रिकायां द्वितीयाध्यायस्य प्रथमः पादः ।।**

## वाक्यार्थमुक्तावली

**सर्वेषामिति** ।। 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तय' इत्यनुव्याख्यानोक्तोपाधिचतुष्टयावच्छिन्नानामित्यर्थः । अवशिष्टत्वादेव पूर्वं प्रतिपादनाभावात्कथं प्रतिपादितत्वमुक्तमित्याशयेन पृच्छति ।। **किमुक्तं भवतीति** ।। अवशिष्टगुणानां प्रतिपादनपूर्वं तैस्सह विशिष्य प्रतिपादितगुणानुपसंहरति ।। **उक्तेति** ।। **पूर्णगुणत्व इति** ।। पूर्वं जन्मादिसूत्रोक्ते एकैकगुणे एकैकदोषाभावे च विरोधे निरस्ते अत्र ब्रह्मशब्दार्थे सर्वगुणपूर्तौ दोषमात्राभावे च महाप्रमेये तत्तद्वाद्युत्प्रेक्षितबहुयुक्तिविरोधो निरस्यत इत्यनन्तरसङ्गतिरप्यनेनोक्तेति ज्ञेयम् ।। **युक्तमयुक्तं वेति** ।। अत्र पूर्णत्वं चेतनत्वयुक्तिविरुद्धं न वेति चिन्ता । तदर्थं चेतनत्वयुक्तिर्विपक्षे बाधकतर्कसाहाय्याद्बलवती उत स्वातन्त्र्ययुक्तिश्रुतिर्बाधितेति ।। **अतिप्रसङ्गादिति** ।। चेतनत्वेऽपि पूर्णत्वे देवदत्तादपि तत्स्यादित्यतिप्रसङ्गादित्यर्थः । यदि गुणी स्यात्तर्हि दोष्यपि प्रसज्येत देवदत्तवत् यदि दोषाभाववान् स्यात्तर्हि गुणाभावानपि न स्याद्व्यतिरेकेण यज्ञवदित्याद्यतिप्रसङ्गादित्यर्थः । तेन बहुयुक्तिमत्वं पूर्वपक्षस्य ज्ञेयम् ।। **स्वातन्त्र्यादिनेति** ।। आदिपदेन सर्वकर्तृत्वं तत्रस्थत्वे सति तत्र शक्तत्वं तज्जिज्ञासुत्वे सति तत्र शक्तत्वं च गृह्यते । एवं स्वतन्त्रस्य पूर्णगुणत्वनियमादिति न्यायविवरण-

(वाक्यार्थमुक्तावली)

मनुसृत्य सर्वधर्मोपपत्तेरित्यंशं युक्तिकथनपरत्वेन व्याख्याय भाष्यानुसारेण सर्वधर्मोपपत्तेश्चेति विशिष्टसूत्रं व्याचष्टे ॥ **न केवलमिति** ॥ **रमादिचिन्त्या** इति ॥ आदिपदेन विरिञ्चग्रहणम् । तस्यापि श्रुत्याद्यनुक्तसम्प्रदायागतगुणचिन्तयितृत्वादिति भावः । न च देवे दोषाः श्रुताः नापि चिन्त्याः सन्ति किं पुनरचिन्त्याः अज्ञैर्हि तथा श्रुता इति प्रतीता इत्यर्थः । सूत्रे सर्वधर्मोपपत्तेरिति विभक्तिविपरिणामेनाप्यन्वेति । ततश्च सर्वेषां धर्माणां गुणानां दोषाभावानां च स्वातन्त्र्याद्युपपत्तिसिद्धत्वात् । उपपादकश्रुतिसिद्धत्वाच्च । सर्वधर्माणामीश्वरे उपपत्तिरेव न युक्तिविरोध इति सूत्रार्थः ।

अत्र पीठिकाचतुष्टयं 'स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तय' इत्यनुव्याख्यानोक्तं बोध्यम् । अवान्तरोपाधयस्तु तत्रैवोक्ता इति सर्वमनवद्यम् ।

**॥ इति श्रीमद्विठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां श्रीमत्तत्वप्रकाशिकावाक्यार्थमुक्तावल्यां द्वितीयाध्यायस्य प्रथमः पादः सम्पूर्णः ॥**

## तत्त्वसुबोधिनी

**उक्तमुपसंहरतीति ॥** अधिकरणतात्पर्ये वक्तव्ये सौत्रसर्वपदानुरोधेन भाष्येऽवशिष्टैरित्युक्तम् । प्रकरणवशात् विशिष्य प्रतिपादितेभ्यः इति लभ्यते । ननु प्रतिपादनं विना उपसंहाराभावात् कथं अवशिष्टैः सह विशिष्य प्रतिपादितानां उपसंहारः इत्यतः प्रतिपादितैरित्युक्तम् ।

अवशिष्टत्वादेव पूर्वं प्रतिपादनाभावात् कथं प्रतिपादितत्वमित्यतः तात्पर्यम् आह ॥ **किमुक्तं भवतीत्यादिना ॥ पूर्णगुणत्वमिति** ॥ तथा चावशिष्टगुणानां प्रतिपादनपूर्वकं तैः सह विशिष्यप्रतिपादितगुणानुपसंहरति इति भाष्याभिप्राय इति भावः । अनेनावशिष्टगुणेषु बहुयुक्तिविरोधपरिहार एव एतदधिकरणोपाधिरिति । साधके अत्र जन्मादिकर्तृत्व एवं युक्तिविरोधं निरस्येदानीं तत्साध्ये ब्रह्मशब्दार्थगुणपूर्णत्वे युक्तिविरोधपरिहारादनन्तरसङ्गतिरिति भावः । न चैतदधिकरणचतुष्टयं आरम्भणाधिकरणेनैव गतार्थम् । तत्र बहुयुक्तिविरोधपरिहारस्य उपलक्षणत्वेन कृतत्वादिति वाच्यम् । विकरणत्वादिति सूत्रशेषतः तत्र चोद्यपरिहारार्थं अस्य प्रवृत्तत्वात् । विशेषश्च भाष्यटीकयोरेव तत्र तत्रोक्तः इति ॥ **अत एवेति** ॥ विष्णोरत्र गुणपूर्णत्वस्य प्रतिपाद्य-

(तत्वसुबोधिनी)

त्वादेवेत्यर्थः ॥ **अस्यापीति** ॥ ईश्वरः अपूर्णः चेतनत्वात् जीववत् इत्यनुमानं फलितमिति भावः ॥ **अन्यथेति** ॥ चेतनत्वेन हेतुना पूर्णत्वानङ्गीकारे जीवानामपि तत्र स्यादित्यर्थः ॥ **स्वातन्त्र्यादिमतः इति** ॥ हरिः पूर्णगुणः स्वतन्त्रत्वात् व्यतिरेकेण जीववत् । स्वातन्त्र्य-पूर्णगुणत्वव्यतिरेकव्याप्तौ 'अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः' इति श्रुतिः प्रमाणमिति भावः ॥ **श्रुतेश्चेति** ॥ अनेन सौत्रश्चशब्दः श्रुतिसमुच्चायकतया भाष्ये व्याख्यातः ॥ **रमादिचिन्त्या इति** ॥ आदिपदेन विरिञ्चिग्रहणम् । तस्यापि श्रुत्यनुक्तभारताद्युक्तगुणचिन्तयित्वादिति भावः ।

**॥ इति श्री तत्वप्रकाशिकाविवृत्तौ पाण्डुरङ्गि आनन्दाचार्यसूनुश्रीनिवासाचार्यविरचितायां तत्वसुबोधिन्यां द्वितीयाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थविवरणम्

**अस्यापीति** ॥ तथा च विष्णुरपूर्णगुणश्चेतनत्वात् जीववत् इत्यनुमानमनेनोक्तं भवतीति ज्ञेयम् । न तु अत्राप्रयोजकतेत्यत आह ॥ **अन्यथेति** ॥ तर्हि चेतनत्वाविशेषाज्जीवानामपि पूर्णगुणत्वं स्यादित्यतिप्रसङ्गः ॥ **स्वातन्त्र्यादिनेति** ॥ तथा च पूर्वानुमाने अस्वातन्त्र्य-मुपाधिरिति भावः ॥ **नियमादिति** ॥ यथोक्तम् । 'यदधीना गुणाश्चैव दोषा अपि हि सर्वशः । गुणास्तस्य कथं न स्युः स्युर्दोषाश्च कथं पुनः' इति ।

**॥ इति श्रीनिवासतीर्थविरचिते वाक्यार्थविवरणे द्वितीयाध्यायस्य प्रथमः पादः ॥**

## वाक्यार्थमञ्जरी

तर्हि कथं पादसङ्गतिरिति पृच्छति ॥ **किमुक्तं भवतीति** ॥ उत्तरमाह ॥ **उक्तावशिष्टेति** ॥ **अतिप्रसङ्गादिति** ॥ धूमसद्भावेऽपि तन्नियतवह्न्यभावप्रसङ्गादित्यर्थः । सर्वेषां धर्माणां ज्ञानानन्दादीनां ब्रह्मण्युपपत्तेरुपपत्तिसिद्धत्वाद्गुणाः श्रुताविति श्रुतिसिद्धत्वाच्चेत्यर्थः । रमा-दीत्यादिपदेन चतुर्मुखग्रहणं तस्यापि श्रुत्यनुक्तभारताद्युक्तगुणचिन्तयितृत्वादिति भावः ।

**॥ इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायां द्वितीयाध्यायस्य प्रथमः पादः ॥**

**॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ ११ ॥**

# अथ द्वितीयः पादः

## १. रचनानुपपत्त्यधिकरणम्

### सूत्रभाष्यम्

'इतरेषां चानुपलब्धेः' (ब्र.सू.२-१-२) इति सामान्यतो निराकरणं समयानां कृतम्। विशेषतो निराकरोत्यस्मिन्पादे ।

अचेतनप्रवृत्तिमतं प्रथमतो निराकरोति–

**॥ ॐ रचनानुपपत्तेश्च नानुमानम् ॐ ॥ १ ॥**

अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ । चशब्देन प्रमाणाभावं दर्शयति ।

### सत्तर्कदीपावली

जगज्जन्मादिकर्तरि नारायणे सर्ववेदप्रतिपादिते पूर्वोद्भावितस्मृत्यादिविरोधान् पूर्वपादे परिहृत्य अस्मिन्पादे विशेषतः परपक्षनिराकरणं क्रियते । सामान्यतस्तस्मिन्निराकरणम् इतरेषां चानुपलब्धेरित्यत्र कृतं पशुपतिकपिलकणादादिग्रन्थोक्तार्थानां केषाञ्चियोगानुपलम्भबाधितत्वोक्त्या तद्ग्रन्थानां अनाप्तोक्तत्वसिद्धेस्तदाह ॥ **इतरेषामित्यादिना** ॥ तत्र तावन्निरीश्वरसाङ्ख्यमतं निराकरोति ॥ **रचनेत्यादिना** ॥

### तत्त्वप्रदीपिका

प्रथमपादस्य युक्त्यविरोधप्रदर्शनपरत्वात्समयानां च सकलानां युक्त्यवष्टम्भकत्वात्तत्रैव समस्तसमयनिरसनसौलभ्यमुपलभ्यते । तच्च 'इतरेषां चानुपलब्धेः' इति कृतम् । ततश्च तेनास्य पादस्य पौनरुक्त्यमित्येतामाशङ्कामपाचिकीर्षता प्रपञ्च्यप्रपञ्चकभावात्मिका सङ्गतिरिह सङ्कीर्यते भगवता भाष्यकारेण इतरेषां चानुपलब्धेरित्यादिना । तत्तदुदितदृष्टफलानुपलम्भयुक्त्या सामान्यतो निराकृताः समयाः । इह तु समूलतूलमुच्छिद्यन्ते प्रत्येकं मूलफलप्रमाणप्रत्याख्यानेन ।

तत्र साङ्ख्या मन्यन्ते । अचेतनं स्वतन्त्रं प्रधानं जगदाकारेण परिणमते । सुखदुःखमोहात्मकं

(तत्त्वप्रदीपिका)

चेदमुपलक्ष्यते स्त्रीपिण्डादिदृष्टान्तेन । ततस्तत्कारणेनापि त्रिगुणात्मकेन भवितव्यम् । तथा चायं प्रयोगः । विमतमचेतनकर्तृकं कार्यत्वात् । यत्र क्वचन कदाचिदचेतनं किञ्चित्स्वत एव कार्यकरं सम्पद्येतेति स्यादेव दृष्टान्तः । अपि च विमतं सुखदुःखमोहात्मककारणपूर्वकं सुखदुःखमोहात्मकत्वात् । यद्यदात्मकं तत्तदात्मककारणपूर्वकं यथा घट इति । एतन्मतं प्रथमतो निराकरोति । प्रधानविरोधित्वादस्य । अचेतनप्रवृत्तिवादिनां निर्विशङ्कं केवलाचेतनप्रवृत्तिं वदतः प्रधानत्वात् । स्वतन्त्रचेतनवादिनस्स्वतन्त्राचेतनवादिनि विरोधस्य चाऽत्यन्तिकत्वात् ।

ॐ रचनानुपपत्तेश्च नाऽनुमानम् ॐ । 'आनुमानम्' अनुमानपरिकल्पितं न जगत्कर्तृ । स्वतन्त्रप्रवृत्तिर्हि रचना नाम । सा च विचित्रविष्टपविषया विशिष्टचेतने सम्भोभूयमाना नैवाचेतनस्य स्यात् । चशब्देन प्रमाणाभावं दर्शयति । अचेतनं न स्वतन्त्रं प्रवर्तते, अचेतनत्वाद्धटवदिति विपर्ययेणानुमातुं शक्यत्वात् । साध्यविकलश्च परदृष्टान्तः । द्वितीयो हेतुरसिद्धः । आगमवागप्यखिलकर्तारं परमविगानेनावगमयतीति पुरस्तादेवोदीरितम् । यथा कर्तृत्वे तथा भोक्तृत्वमोचकत्वादौ च प्रमाणाभावं दर्शयति । तत्पक्षे प्रमाणाभावमेव च दर्शयति । स्वत एव ह्यप्रामाण्यं चासौ मन्यते प्रमाणानाम् ।

## तत्त्वप्रकाशिका

एतत्पादप्रतिपाद्यं दर्शयति ॥ **इतरेषामिति** ॥ सर्वविरोधानां युक्तिमूलत्वेन तद्विरोधस्य प्राबल्यात्प्रथमपादे स निराकृतः । इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैव प्रबलत्वाच्छ्रुतिसमन्वयसिद्धे ब्रह्मणो जगत्कारणत्वे समयविरोधं परिहर्तुं तानस्मिन् पादे निराकरोति भगवान्सूत्रकारः । न च वाच्यमितरेषां चानुपलब्धेरिति कपिलकणादादिसमयानामुक्तानुपलब्ध्याऽनाप्तोक्तत्वेन निराकृतत्वाद् व्यर्थोऽयं पाद इति । तत्र सामान्यतो निराकृतानामत्र विशेषतो निराकरणात् । न ह्यनादिकालानुवृत्तानां प्रतीतिसुन्दराणां तेषां सामान्यतो निराकरणेऽधिकारिणो निःशङ्कप्रवृत्तिर्भवतीति भावः । आद्याधिकरणार्थं दर्शयति ॥ **अचेतनेति** ॥ समया द्विविधाः । हैतुकपाषण्डभेदात् । वेदवादिनां प्रथमपादे निराकृतत्वात् । 'अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुकाः । बौद्धपाशुपताद्यास्तु पाषण्डा इति कीर्तिताः' । तत्र पाषण्डेभ्योऽपि हैतुकाः प्रबलाः । युक्तिमत्त्वात् । तेषु च साङ्ख्यचार्वाकसमयस्यैवातिविरोधित्वम् । ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादित्वात् । तत्र चार्वाकसमयस्यातिविरोधित्वेऽप्यतितुच्छत्वेन प्रथमं निषेध्यतायोगादादौ साङ्ख्यसमयो निराकर्तव्यः । स च द्विविधः । निरीश्वरः सेश्वरश्च । तत्र निरीश्वरस्यैवातिविरोधित्वम् । अतो निरीश्वरसाङ्ख्यमतमेवादौ निराकरोतीति भावः । अत एवात्र हरेर्जगत्कारणत्वे निरीश्वरसाङ्ख्यमतविरोधपरिहारादस्ति

(तत्त्वप्रकाशिका)

शास्त्रादिसङ्गतिः । विष्णुः सर्वकर्तेत्युक्तम् । तत्र च साङ्ख्यमतविरोधे लक्षणासम्भवप्रसङ्गादसौ निराकर्तव्य एव । अतो विष्णोः सर्वकर्तृत्वं विषयः । युक्तं न वेति सन्देहः । समयविवादः सन्देह-बीजम् । न युक्तमिति पूर्वः पक्षः । प्रकृतेरेव महदादिकारणत्वात् । भवितव्यं खलु कार्येण स्वसदृशकारणवतैव । अन्यथाऽतिप्रसङ्गात् । न हीश्वरस्य महदादिसारूप्यमीश्वरवादिभिरभ्युपेयते । न च प्रकृतिप्रेरकत्वेनेश्वरोऽङ्गीकर्तव्यः । केवलप्रकृतेरेव कर्तृत्वाभ्युपगमात् । न चान्यदीश्वराङ्गीकारे प्रयोजनं पश्यामः । अतः प्रकृतेरेवाशेषकर्तृत्वान्नेश्वरस्य कर्तृत्वं वास्तीत्युक्तमयुक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **रचनेति** ॥ न कार्यं स्वसदृशकारणवत् कार्यत्वादित्यनुमानेन कारणतया कल्पितं प्रधानं जगत्कर्तृ । स्वतः प्रवृत्तिमदेव हि कर्तृ भवति । न च प्रधानस्य स्वतः प्रवृत्तिर्युक्ता अचेतनत्वाद् घटवत् । अतो युक्तं विष्णोर्जगत्कारणत्वमिति भावः । प्रामाणिकं प्रधानस्य जगत्कारणत्वं न युक्त्या निराकर्तुं शक्यमित्यत आह ॥ **चशब्देनेति** ॥ प्राचीनमनुमानं तु कारणत्वमात्रसाधकं न प्रकृतोपयोगि । स्वतःप्रवृत्तिसाधकं तु प्रमाणं नास्त्येवेति भावः ।

## गुर्वर्थदीपिका

चेतननिरपेक्षपात्रस्थाचेतनपयस एव रात्रौ दध्याकारेण परिणामदर्शनाज्जगदुपादानप्रकृतेरेव कर्तृत्वमिति भावेनाह **केवलप्रकृतेरिति** ॥ 'न कार्यम्' इत्यत्रोक्तनञो जगत्कर्तृ नेति सम्बन्धः । कारणत्वमात्रसाधकमित्यत्र प्रकृतेरिति शेषः । सर्वं कारणं स्वसदृशमिति तु घटादावप्यभावाद् दृष्टान्तविकलम् । मातुः पुमपत्येन सता वक्तुमशक्यं च । यत्किञ्चित्कारणस्य स्वसदृशत्वसाधने प्रकृत्याख्यस्य स्वसदृशोपादानस्यास्माभिरप्यङ्गीकृतत्वात् सिद्धसाधनम् । तेन च मृदादिवत्कर्तृ-त्वासिद्धेः प्रकृतानुपयुक्तं चेत्यर्थः ।

## भावबोधः

**इतरविरोधत्रये अनादिकालानुवृत्तसमयविरोधस्येति** ॥ अपौरुषेयवेदापेक्षया समयानां दौर्बल्यशङ्कानिरासायोक्तम्– **अनादिकालानुवृत्तेति** ॥ अत एव सुधायाम् ।

'अनादिकालतो वृत्ताः समया हि प्रवाहतः'

इत्यनुव्याख्यानमेवं व्याख्यातम् । 'नन्वेवमुभयोरपि अनादिकालानुवृत्तत्वेन साम्यात् समय-विरोधस्य कथं प्राबल्यमिति चेत्, न समयपदेनैव समूलस्यात्यन्तभ्रमहेतुत्त्वेन तत्वज्ञानादि-

(भावबोधः)

विरोधित्वस्य च श्रुतिविरोधापेक्षया तद्विरोधस्य प्राबल्यहेतोः सूचितत्वात्' इति । तत्र **सामान्यतो निराकृतानामिति** ॥ अनेन पूर्वपादेनास्य पादस्य प्रपञ्च्यप्रपञ्चकभावलक्षणा सङ्गतिरित्युक्तं भवति । वैदिकसमयस्यापि तृतीयस्य सत्त्वात् कथं द्वैविध्यमित्यत आह– **वेद-वादिनामिति** ॥ वेदावष्टम्भेन पूर्वपक्षं कुर्वताम्, 'असदिति चेत्' इत्यादौ प्रथमपादे निराकृतत्वा-दित्यर्थः । यद्यप्यत्र प्रतिक्षेप्यवैशेषिकादीनां वेदप्रामाण्यवादित्वेन वैदिकत्वमस्त्येव । तथापि न वेदप्रामाण्यवादित्वं वैदिकत्वम्, किं तु तत्प्रधानत्वं वैशेषिकादीनां तु हेतुप्रधानत्वमेवेति न वैदिकत्वमिति भावः ॥ **युक्तिमत्त्वादिति** ॥ यद्यपि चार्वाकमते युक्तिर्न प्रमाणम्; तथापि लोकव्यवहारोच्छेदभिया धूमादिज्ञानानन्तरं वह्न्यादिज्ञानं सम्भावनारूपम् । संवादेन च तस्य प्रामाण्याभिमान इत्यङ्गीकृतत्वेन तस्यापि युक्तिमत्त्वादिति भावः ॥ **युक्तं न वेतीति** ॥ अत्र विष्णोः सर्वकर्तृत्वं किं न युक्तमुत युक्तमिति चिन्ता । तदर्थं निरीश्वरसाङ्ख्यसमयः श्रुत्युक्तजग-त्कर्तृत्वबाधनक्षमो भवत्युत नेति । तदर्थं महदादिकं स्वसदृशकारणजन्यं कार्यत्वादिति तत्परि-कल्पितमनुमानं किमनाभासमुत प्रधानम्, न स्वतःप्रवृत्तिमदचेतनत्वादित्याद्यनुमानबाधितत्वेना-भासमिति । तदर्थमचेतनत्वहेतोः पयोऽम्ब्वयस्कान्तादौ व्यभिचारोऽस्त्युत नास्तीति । तदर्थं पयोऽम्ब्वादेश्चेतनाधीनप्रवृत्तिमत्त्वे प्रमाणं नास्त्युतास्तीति ॥ **अनुमानेन कारणतया कल्पित-मिति** ॥ अनेन सूत्रे आनुमानमिति पदविभागमभिप्रेत्यानुपरिकल्पितमिति भाष्येऽभिहितमित्युक्तं भवति ।

## भावदीपः

वक्ष्यमाणभाष्येणैव पदार्थज्ञानसम्भवादादौ तत्प्रदर्शनं व्यर्थमित्यतः सङ्गत्यर्थत्वेन सार्थक्य-मुपेत्य तथैव व्याचष्टे ॥ **सर्वेति** ॥ न विलक्षणत्वनयसिद्धनित्यनिर्दोषभाववेदविरोधतोऽपि साङ्ख्यादिसमयानां कुत आदौ निरास इत्यत आह ॥ **अनादीति** ॥ 'अनादिकालतो वृत्ताः समया हि प्रवाहतः । न चोच्छेदोऽस्ति कस्यापीत्याद्यनुभाष्योक्तेः' इति भावः । उक्ताहाने-स्तन्निरासो व्यर्थ इत्यत आह ॥ **श्रुतीति** ॥ कर्माकाङ्क्षां पूरयति ॥ **तानिति** ॥ विशेषतो निराकृतिर्व्यर्थेत्यत आह ॥ **न हीति** ॥ प्रथमतो निराकृतावचेतनपदसूचितं हेतुं वक्तुमाह ॥ **समया इति** ॥ ननु वेदवादरतो न स्यान्न पाषण्डी न हैतुकीति समयत्रैविध्यस्य एकादश-स्कन्धोक्तेः कथं द्वैविध्यमित्यतोऽत्रपादे निराकार्यत्वाशयेनेति भावेनाह ॥ **वेदवादिनामिति** ॥

(भावदीपः)

वेदेन सह वादो यो वेदवाद इतीरितः । तर्केण वेदस्यान्यार्थकल्पनं तद्विदो विदुरित्येकादशस्कन्धतात्पर्योक्तलक्षणवेदवादिनामित्यर्थः । हैतुकादयः के इत्याकाङ्क्षायां द्वितीये गीतातात्पर्योक्तनारदीयस्मृत्या दर्शयति ॥ **अक्षपादेति** ॥ **साङ्ख्यचार्वाकेति** ॥ चार्वाकस्याहैतुकत्वेऽपि अचेतनप्रवृत्तिवादित्वसाम्यात्साङ्ख्यमते तन्निरास इति भावः ॥ **निरीश्वरेति** ॥ यद्यपि द्वितीयनयनिरस्यं साङ्ख्यमतं सेश्वरं तथापि तेनेश्वरस्य स्वातन्त्र्यास्वीकारेण निरीश्वरवादप्रायत्वादीश्वरनिरपेक्षेत्युक्तम् ॥ **अतिविरोधित्वेऽपीति** ॥ अदृष्टमात्रानभ्युपगमादिति भावः ॥ **अतिविरोधित्वमिति** ॥ ईश्वराख्यविशेषस्यैवानभ्युपगमादिति भावः ॥ **अत एवेति** ॥ तन्मतस्यातिविरोधित्वेन तन्निराकरणस्यावश्यकत्वादेवेत्यर्थः । चिन्तायाः पूर्वसङ्गतिसाफल्ये वक्ति ॥ **विष्णुरिति** ॥ अतः सङ्गतिफलयोर्भावादित्यर्थः ॥ **समयेति** ॥ सांख्यवैष्णवसमयविवाद इत्यर्थः । अत्र न्यायविवरणे उक्तविरोधिनस्तत्तत्समयसिद्धाः पूर्वपक्षन्यायास्तद्विरोधिनोऽन्य इति प्रसिद्धमेवेत्युक्त्या एतत्पादीयन्यायविवरणाभावात् ।

> वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।
> पुरुषस्य विमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥

इति साङ्ख्यकारिकाविवरणपरेणाचेतनस्य कर्तृत्वं स्वातन्त्र्येण निगद्यत इत्यनुव्याख्याने नोक्ततन्मतानुरोधेनानुमानपरिकल्पितं प्रधानं जगत्कर्तृ इति भाष्यं विवृण्वन्पूर्वपक्षमाह ॥ **प्रकृतेरिति** ॥ अत्रानुमानमाह ॥ **भवितव्यमिति** ॥ अनेन महदादिकं स्वसदृशकारणकं कार्यत्वात् घटवदित्यनुमानमुक्तं ध्येयम् । वृश्चिकताण्डुलीयकादावपि तद्देहस्य स्वसदृशकारणकत्वमस्त्येवेति भावः । विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ **अतिप्रसङ्गादिति** ॥ तन्त्वादिनापि घटाद्युत्पत्तिप्रसङ्गादित्यर्थः । सिद्धसाधनतां निराह ॥ **न हीति** ॥ नन्वीश्वराभावे कस्यापि प्रवृत्त्ययोगेन प्रकृतेः कारणत्वमेव न स्यादिति तर्कपराहतिरिति भावेनाशङ्क्य निराह ॥ **न चेति** ॥ **कर्तृत्वेति** ॥ स्वत एव प्रवृत्तिमत्त्वरूपकर्तृत्वाभ्युपगमादित्यर्थः ॥ **अत इति** ॥ ईश्वराङ्गीकारस्य निष्फलत्वादित्यर्थः । आकाङ्क्षाक्रमेण भाष्यं व्याचष्टे ॥ **न कार्यमिति** ॥ उक्तसाध्ये भाष्योक्तहेतोरप्रयोजकत्वनिरासाय व्यतिरेकव्याप्तिमाह ॥ **स्वतः प्रवृत्तिमदेवेति** ॥ स्वतन्त्रः कर्तेति स्मरणादिति भावः । भाष्यस्थहेतोः पक्षधर्मतामाह ॥ **न चेति** ॥ अचेतनस्येति हेतुगर्भं मत्वाऽऽह ॥ **अचेतनत्वादिति** ॥ **अत इति** ॥ प्रकृतेरेव कर्तृत्वमित्यस्यायोगादित्यर्थः । कार्यत्वमेव

(भावदीपः)
मानमित्यत आह ॥ **प्राचीनमिति** ॥ **नास्त्येवेति** ॥ दृष्टान्ताभावात् पयोऽम्ब्वादेस्तु निरसिष्यमाणत्वादिति भावः । एतेनानुमानं न मानं विवक्षितार्थसाधकतया अनुमानरचनाया अनुपपत्तेरिति सूत्रस्यार्थान्तरमुक्तं भवति ।

## अभिनवचन्द्रिका

**एतत्पादर्थमिति** ॥ 'अध्यायस्यैकार्थत्वात् पादभेदः किंनिबन्धन इत्यत' इति वर्तते । तस्य 'एतत्पादार्थं दर्शयति' इत्यनेन सम्बन्धः ॥ **आद्याधिकरणार्थमिति** ॥ 'पादस्यैकार्थत्वादधिकरणभेदः किं निबन्धन इत्यत' इति शेषः ॥ **साङ्ख्ययोगाविति** ॥ उपलक्षणमेतत् । चार्वाक इत्यपि ग्राह्यम् । यद्यपि चार्वाकः प्रत्यक्षमात्रप्रामाण्यवादित्वान्न हैतुकः, तथापि पररीतिमवलम्ब्य स्वशास्त्रे बहुयुक्त्युपन्यासात् सोऽपि हैतुकेषु सङ्ग्राह्य इति बोध्यम् ॥ **अत एवेति** ॥ अस्यैव विवरणं हरेर्जगत्कारणत्वे निरीश्वरसाङ्ख्यमतविरोधपरिहारादिति ॥ **प्रकृतेरेव महदादिकारणत्वादिति** ॥ कर्तृविरहितायाः प्रकृतेः महदादिकारणत्वादित्यर्थः । कर्तृविरहितायाः प्रकृतेः कारणत्वं वक्तुं कारणत्वमात्रसाधकमनुमानं तावदाह– **भवितव्यं खल्विति** ॥ कार्यस्य स्वसदृशकारणकत्वनियमेऽपि ईश्वर एव कारणमस्त्वित्यत आह– **न हीति** ॥ **न चेति** ॥ प्रेरकत्वमिह कार्योन्मुखीकरणम् ॥ **केवलप्रकृतेरेवेति** ॥ केवलायाः प्रकृतेः कार्योन्मुखत्वस्य समयकर्तृभिरभ्युपगमादित्यर्थः ॥ **अशेषकर्तृत्वादिति** ॥ अशेषकार्योन्मुखत्वादित्यर्थः । एतेन ज्ञानादिमत्त्वरूपत्वादचेतनस्य कर्तृत्वाभिधानमयुक्तमिति परास्तम् ॥ **जगत्कर्त्रीति** ॥ स्वत एव कार्योन्मुखमित्यर्थः ॥ **कर्तृ भवतीति** ॥ स्वतः कार्योन्मुखं भवतीत्यर्थः । कर्तैव खलु स्वतःप्रवृत्तिमत्त्वात् स्वतःकार्योन्मुखः, अन्यत्तु उपादानादिकं प्रयत्नविधुरत्वात् कर्त्रधीनतया कार्योन्मुखमिति भावः ।

## वाक्यार्थमुक्तावली

**एतत्पादार्थमिति** ॥ अध्यायस्यैकार्थत्वात् भेदः किं निबन्धनः इत्यत एतत्पादार्थं दर्शयतीत्यर्थः । अपौरुषेयवेदापेक्षया समयानां दौर्बल्यशङ्कां निराह ॥ **अनादीति** ॥ तदुक्तमनुव्याख्याने– 'अनादिकालतो वृत्ताः समया हि प्रवाहत' इति । उभयोरप्यनादित्वसाम्येऽपि अज्ञानदशायामेव वेदविरोधस्फुरणात् । समयविरोधस्य विमर्शदशायामपि प्राप्तेः । बहुजन-

(वाक्यार्थमुक्तावली)

परिगृहीतत्वात् प्राज्ञैः कपिलादिभिः प्रवर्तितत्वाच्च प्राबल्यम् ॥ **विशेषत इति** ॥ सामयिकत-त्तत्प्रमेयेषु दृढयुक्तिविरोधस्य विशिष्योक्त्या प्रपञ्च्यतेऽस्मिन्पादे इति पूर्वपादेन प्रपञ्च्यप्रपञ्चक-भावलक्षणा सङ्गतिरुक्ता भवति । भाष्ये प्रथमत इत्यस्य प्रथमभागे केषुचिदधिकरणेष्विति भ्रमं वारयति ॥ **आद्य इति** ॥ पादस्यैकार्थत्वात् अधिकरणभेदः किंनिबन्धन इत्यत इति पूर्णायम् । ननु 'वेदेन सह वादो यो वेदवाद इतीरितः । तर्केण वेदस्यान्यार्थकल्पनं तद्विदो विदुः' ॥ इत्युक्तलक्षणाः वेदवादिनोऽपि 'वेदवादरतो न स्यान्न पाषण्डी न हैतुकी' इति पाषण्डादि-वन्निषिद्धत्वात् त्रिविधा इति वक्तव्यं, कथं समयद्वैविध्यमित्यत आह ॥ **वेदवादिनामिति** ॥ 'भोक्त्रापत्तेः' इत्यादिना निराकृतत्वादित्यर्थः ॥ **तेषु च साङ्ख्यचार्वाकसमयस्येति** ॥ यद्यपि चार्वाकमते युक्तिर्न प्रमाणं तथापि लोकव्यवहारभिया धूमादिज्ञानानन्तरं वह्न्यादिज्ञानं सम्भावनारूपं जायते, संवादेन च प्रामाण्याभिमान इति तैरङ्गीकृतत्वेन पररीतिमवलम्ब्य स्वग्रन्थे बहुयुक्त्युपन्यासाच्च हैतुकत्वं बोध्यम् ॥ **ईश्वरनिरपेक्षेति** ॥ यद्यपि सेश्वरोऽप्यस्ति साङ्ख्यः । तथापि तेनेश्वरस्यास्वातन्त्र्याङ्गीकारेण निरीश्वरवादप्रायत्वादीश्वरनिरपेक्षेत्युक्तम् ॥ **अतितुच्छ-त्वेनेति** ॥ प्रत्यक्षैकप्रमाणबाधित्वादिति भावः ॥ **अत एवेति** ॥ एवमधिकरणोपाभेर्भाष्ये उक्तत्वादेवेत्यर्थः । सर्वधर्मोपपत्तेरिति गुणपूर्तिव्युत्पादनमयुक्तम् । धर्मिण ईश्वरस्यैवाभावात् । इत्याक्षेपादनन्तरसङ्गतिरिति भावः ॥ **युक्तमिति** ॥

अत्र विष्णोः सर्वकर्तृत्वरूपं कार्यं स्वसदृशकारणवत् कारणत्वात् (कार्यत्वात्) इति सामयिकानुमानविरोधादयुक्तमुत युक्तमिति चिन्ता । तदर्थमनुमानं विपक्षे तर्कसाहाय्यादना-भासमुत चेतनत्वानुमानबाधितत्वादाभासमिति । तदर्थं चेतनत्वहेतोः पश्वादौ व्यभिचारोऽस्ति न वेति । अनुमानमिति सूत्रपदनिरसनीयपूर्वपक्षमाह ॥ **भवितव्यमिति** ॥ अनेन महदादि-स्वसदृशकारणकं कार्यत्वात् घटवदिति अनुमानमुक्तम् बोध्यम् । वृश्चिकताण्डुलीयकादावपि तद्देहस्य स्वसदृशकारणकत्वमस्त्येवेति भावः । विपक्षे बाधकमाह ॥ **अन्यथेति** ॥ गर्दभात् पर्वतोत्पत्तिः स्यादिति भावः । ननु वस्तुत्वेनेश्वरस्य कार्यसारूप्यमस्त्येवेति सिद्धसाधनतेति चेन्न, आत्यन्तिकसादृश्यस्य विवक्षितत्वात् । न च तत्प्रलयेऽस्तीत्याह ॥ **न हीति** ॥ नन्वीश्वराभावे कस्यापि प्रवृत्त्यभावेन प्रकृतेः कार्योन्मुखीभावायोगात् कारणत्वमेव न स्यादिति तर्कपराहति-रित्यत आह ॥ **न चेति** ॥ स्वत एव प्रवृत्तिमत्वरूपकर्तृत्व इत्यर्थः ।

(वाक्यार्थमुक्तावली)

अत्र सूत्रे आनुमानमनुमानमिति च पदच्छेदः । जगत्कर्त्रीति शेषः । रचनेति स्वतः प्रवृत्तिरुच्यते ॥ **अनुपपत्तेरिति** ॥ उपपत्तिविरुद्धत्वादित्यर्थः । उपपत्तिश्चाचेतनत्वमिति प्रवृत्तं भाष्यं व्याचष्टे ॥ **न कार्यमिति** ॥ ननु परेण जडस्य कर्तृत्वं न ज्ञानेच्छाप्रयत्नरूपमङ्गीकारार्हम् । किन्तु स्वतःप्रवृत्तिरूपम् । तत्कथं स्वतःप्रवृत्त्यनुपपत्त्या कर्तृत्वाभावसाधनं साध्यावैशिष्ट्यप्रसङ्गात् इत्यत आह ॥ **स्वतःप्रवृत्तिमदेवेति** ॥ स्वतन्त्रः कर्तेति स्मरणादिति हिशब्दार्थः । नास्माभिः स्वतःप्रवृत्त्यभावेन कर्तृत्वाभावं प्रसाध्यासिद्धिवारणायाचेतनत्वेन स्वतःप्रवृत्त्यभावसाधनं क्रियते । किन्तु स्वतः प्रवृत्तिर्हि कर्तृत्वम् । प्रधानस्य च परेण सिषाधयिषितायाः कर्तृत्वरूपाया रचनायाः स्वतः प्रवृत्तेरचेतनत्वानुमाने विरोधेनानुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्त्रीति साक्षादेव अचेतनत्वेन स्वतःप्रवृत्त्यपरपर्यायकर्तृत्वायोग उच्यत इति भावः । एतेनाकर्तृत्वं साध्यं स्वतः प्रवृत्त्यभावो हेतुः । तदसिद्धिवारणायाचेतनत्वादिति हेतुः, स्वतःप्रवृत्तिमदेव हीति टीकावाक्यं आद्यानुमानस्य व्यतिरेकव्याप्तिप्रदर्शनपरमिति केषाञ्चित् व्याख्यानं निरस्तम् ॥ **प्रामाणिक-मिति** ॥ साङ्ख्याचार्यवचनेन, ऋषिं प्रसूतं कपिलमित्याद्यागमावगतयोगिप्रत्यक्षेणाजामेका-मित्यादिश्रुत्या कार्यत्वादित्यनुमानेन च प्राप्तमित्यर्थः । साङ्ख्याचार्यवचनस्येतरेषाञ्चानुपलब्धे-रित्यनाप्तमूलकत्वात् । ऋषिं प्रसूतमित्यादेः ईश्वरावतारकपिलपरत्वात् । श्रुतेरन्यार्थत्वादिति भावः । तथा च न केवलं प्रधानस्य कर्तृत्वरूपस्वतःप्रवृत्तेरुपपत्तिविरुद्धत्वात् किन्त्वप्रामाणिक-त्वाच्च नानुमानकल्पितं जगत्कर्त्रीति सूत्रार्थ उक्तो भवति ।

ननु महदादिकं सजातीयकारणकं कार्यत्वादित्याद्यानुमानस्य सत्वात् कथं प्रमाणाभाव इत्यत आह ॥ **प्राचीनमिति** ॥ **स्वतः प्रवृत्तीति** ॥ पराभिलषितकर्तृत्वेत्यर्थः । एतेन नानुमानं प्रमाणं तस्य स्वतः प्रवृत्त्यनुपपादकत्वेन प्रकृतानुपयोगित्वादिति वृत्त्यन्तरमुक्तं ज्ञेयम् ।

## तत्त्वसुबोधिनी

पूर्वपादप्रतिपाद्यकथनपूर्वकं एतत्पादप्रतिपाद्यमाह ॥ **सर्वेति** ॥ **इतरविरोधत्रय** इति ॥ अपौरुषेयवेदापेक्षया समयानां दौर्बल्यशङ्कानिरासायोक्तमनादि**कालानुवृत्तेति** ॥ अत्र प्रवाहतोऽ-नादित्वं समयानां अभिप्रेतम् । प्रवाहत इत्यन्योक्तेरित्यवधेयम् । न चैवमनादिकालानुवृत्तत्त्व-स्योभयत्राप्यविशेषात् कथं समयविरोधस्य वेदविरोधात् प्राबल्यमिति वाच्यम् । समयपदेनैव समूलत्वस्यात्यन्तभ्रमहेतुत्वेन तत्त्वज्ञानातिविरोधित्वं श्रुतिविरोधापेक्षया तद्विरोधस्य प्राबल्यहेतोः

(तत्त्वसुबोधिनी)
सूचितत्वादिति ॥ **तत्र सामान्यत इति** ॥ अनेन पूर्वपादेनास्य पादस्य प्रपञ्च्यप्रपञ्चक-भावलक्षणा सङ्गतिरित्युक्तम् भवति । ननु सामान्यनिराकरणेनैवालम्, किं विशेषनिराकरणे-नेत्यत आह ॥ **न हीति** ॥ ननु प्रथमतः निरीश्वरवादिनां समयनिराकरणे किं निमित्तमित्यतः तद्वक्तुं **समयद्वैविध्यमाह ॥ समया इति** ॥

ननु वैदिकसमयस्यापि तृतीयस्य सत्त्वात् कथं द्वैविध्यमित्यत आह ॥ **वेदवादिनामिति** ॥ वेदावष्टम्भेन पूर्वपक्षं कुर्वतां असदिति चेदित्यादौ प्रथमपादे निराकृतत्त्वादित्यर्थः ॥ हैतुकपा-षण्डान् सङ्ग्रहश्लोकेनाह ॥ **अक्षपादेति** ॥ बौद्धपाशुपतौ आद्यौ येषां चार्वाकादीनामिति विग्रहः । नन्वाद्याधिकरणषट्के पाषण्डनिरासः एव किन्न क्रियते इत्यत आह ॥ **तत्रेति** ॥ यद्यप्यत्र प्रतिक्षेपवैशेषिकादीनां वेदप्रामाण्यवादित्वेन वैदिकत्वं अस्त्येव, तथापि न वेदप्रामाण्यवादित्वं किन्तु तत्प्रधानत्वम् । वैशेषिकादीनां तु हेतुप्रधानत्वमेवेति न वैदिकत्त्वमिति भावः । प्राबल्ये हेतुमाह ॥ **युक्तिमत्वात्** ॥ **तेष्विति** ॥ हैतुकपाषण्डेष्वित्यर्थः । अतिविरोधित्वे हेतुमाह ॥ **ईश्वरेति** ॥ चार्वाकस्य चेतनमात्रनिरपेक्षदेहप्रवृत्तिवादित्वेन न तत्रासिद्धिरिति भावः । तर्हि चार्वाकसमयः एव प्रथमतः किं न निराक्रियते इत्यत आह ॥ **तत्रेति** ॥ उपलक्षणमेतत् । इतरेषां चानुपलब्धेरिति न्यायसञ्चारविषयत्वेनेत्यपि द्रष्टव्यम् । साङ्ख्यसमयो हि केवला-चेतनकर्तृकत्वचेतनसहिताचेतनकर्तृकत्वाभ्यां द्वेधा । द्वितीयोऽपि गुणभूतेश्वरानुगृहीतप्रधान-कर्तृकत्वेन जीवसहितप्रधानकर्तृकत्वेन चेति द्विधा इत्याशयेन विभागमाह ॥ **स च द्विविध इति** ॥ तत्र केवलाचेतनकर्तृकत्वमते स्वतन्त्रचेतनकर्तृकत्वस्यात्यन्तविरोधिचेतनरूपविशेषस्यैवा-नङ्गीकारात् । अत आद्येऽधिकरणे । तथा च सर्वधर्मोपपत्तिरित्युक्तं पूर्णगुणत्वं नेश्वरस्य युक्तम् तस्यैवाभावात् इत्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः ॥ **अत एवेति** ॥ केवलाचेतन-प्रवृत्तिमत्त्वस्य निराक्रियमाणत्वादेवेत्यर्थः । न प्रकृतेर्महदादिकारणत्वं साधकाभावादित्यत आह ॥ **भवितव्यं चेति** ॥ कार्यं स्वसदृशकारणवत् कार्यत्वात् घटवत् इत्यनुमानमेव साधकमिति भावः ॥ **अन्यथेति** ॥ कार्यस्य स्वसदृशकारणवत्त्वानङ्गीकारे मृत्पिण्डस्य पटकारणत्वं स्यात् इत्यतिप्रसङ्गादित्यर्थः । नन्वीश्वरस्यापि अस्ति महदादिसारूप्यमत आह ॥ **न हीति** ॥ **अनुमानेनेति** ॥ एवं न सूत्रे अनुमानमिति पदविभागे अनुमानपदकल्पितमिति व्याख्यातम् । कुतो न जगत्कर्तृत्वं प्रधानस्येत्यत आह ॥ **स्वतः इति** ॥ प्रामाणिकमिति महदादिकं

(तत्त्वसुबोधिनी)
सकारणकं कार्यत्वात्, महदादिकं, स्वतन्त्रजडजन्यं इत्यादि प्रमाणसिद्धमित्यर्थः ॥ **न प्रकृतोपयोगीति** ॥ सिद्धसाधनत्वादिति भावः । **नास्त्येवेति** ॥ दृष्टान्ताभावादिति भावः ॥

## वाक्यार्थविवरणम्

**अन्यथेति** ॥ कार्यस्य स्वसदृशकारणजन्यत्वानङ्गीकारे रासभादपि घटोत्पत्तिः स्यादित्यर्थः। 'स्वतन्त्रवृत्ती रचना सा चैवाऽचेतने कुतः । इत्यनुव्याख्यानं हृदि निधायाह ॥ **न प्रधानस्येति** ॥ **कारणत्वमात्रेति** ॥ तथा च प्रधानस्योपादानकारणत्वमङ्गीकुर्वतामस्माकमिष्टमेवेत्याशयः ॥ **प्रकृतेति** ॥ स्वातन्त्र्येण प्रवृत्तिसाधकं न भवतीति भावः ।

## वाक्यार्थमञ्जरी

इदानीं समयविरोधनिराकरणे निमित्तमाह ॥ **सर्वविरोधानामिति** ॥ इदानींतनसमयानां कथमपौरुषेयश्रुतिसिद्धजगत्कर्तृत्वविरोधित्वमित्यत उक्तम् ॥ **अनादीति** ॥ प्रवाहतो अनादीत्यर्थः । वैदिकसमयस्य तृतीयस्य सत्वात्कथं द्वैविध्यमित्यत आह ॥ **वेदवादिनामिति** ॥ वेदावष्टम्भेन पूर्वपक्षं कुर्वतां असदित्यादौ प्रथमपादे निराकृतत्वादिति भावः । अक्षपादेति नारदीयस्मृतिः तेषु हैतुकेषु ॥ **अतिप्रसङ्गेति** ॥ रक्ततन्तुना शुक्लपटोत्पत्तिरूपेत्यर्थः । साङ्ख्यानुमानपरिकल्पितं प्रधानं न कर्तृ कुतः रचनानुपपत्तेः जडस्य रचयितृत्वानुपपत्तेः तत्र मानाभावाच्चेत्यर्थः ॥ **कारणत्वमात्रसाधकमिति** ॥ उपादानत्वेनाप्युपपत्तेरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ प्रवृत्तेश्च ॐ ॥ २ ॥**

**चेतनस्य स्वतःप्रवृत्तिदर्शनाच्च ।**

## सत्तर्कदीपावली

**न च कर्तृविशेषप्रेरितात्प्रधानात् जगद्रचनानुमातुं शक्यते । दृष्टान्ताभावात् । गृहरचनावत् कर्तृविशेषाज्जगद्रचनानुमातुं शक्यते ।**

## तत्त्वप्रदीपिका

चेतनस्यापि निर्विकारस्य न प्रवृत्तिरित्यत आह– ॐ प्रवृत्तेश्च ॐ ।। योऽहमनुभविता स एव कार्यमारभ इति चेतनस्यैव प्रवृत्तिदर्शनाच्च नाचेतनं जगत्कर्तृ । न च दर्शनं भ्रान्तिः । विपरीतप्रमाणाभावात् । स्यादेतत्, चेतने प्रवृत्तिर्न दृश्यते । अचेतनादेव कर्तृणो विवेकाग्रह-निबन्धनश्चेतने कर्ताऽस्मीति व्यवहारः । इदं रजतमिति व्यवहारवत् । न हि शुक्तिकामाददानोऽपि रजतार्थी शुक्तिकां रजतमवैति । चक्षुस्सम्प्रयुक्ताया शुक्तिकाया इदमिति सामान्यतः प्रतीयमानाया दोषादगृह्यमाणविशेषायास्सादृश्याद्रजतमिति स्मर्यमाणाद्रजताद्भेदं न गृह्णाति परम् । अत इदं रजतमिति व्यवहरति, उपादत्ते च तां रजतार्थी । न च भेदस्य वस्तुस्वरूपत्वेन तद्ग्रहेऽग्रहासम्भव इति वाच्यम् । स्वरूपस्यापि तस्य दोषाद्ग्रहणप्रतिबन्धात् । यच्चाभेदग्रहकारणमपरे मन्यन्ते तद्भेदा-ग्रहकारणं ब्रूमः । न च विना भेदग्रहादभेदग्रहस्तेषामपीति लघ्वीयं कल्पनेति । तदप्यनुपासितगुरुभि-रेवोत्प्रेक्षितमवभाति । हन्तेयं शुक्तिरियन्तं कालं रजतमिति प्रत्यभादिति बाधोत्तरकालं परामर्शदर्श-नात् । तत्कालेऽपि नेदं रजतमिति परोपदेशे रजतमित्येव प्रतिभातीत्यनुभवात् । अनुभवस्य भ्रमत्व-कल्पने भ्रमाङ्गीकारो भ्रमे भ्रमत्वकल्पनमिति दोषद्वयापातः । संसर्गप्रत्ययेऽनुत्पन्नेऽप्युत्पन्नाभिमाना-व्यवहार इति वदतां को दोष इति चेत्कोऽयमभिमानो नाम ? न तावद्भ्रम इति युक्तम् । औत्तरिक-प्रमाणप्रवृत्तेरसामञ्जस्यप्रसङ्गात् । नेदं रजतमिति ह्यौत्तरिकः प्रत्ययो न पुनरिदं रजतमिति ज्ञानं नाऽसीदिति । प्रत्युतेदं रजतमिति ज्ञानमासीदेव मम, न चेदं तथेति भवति । ततश्चोत्पन्नेऽनुत्पन्नाभि-मानादन्यथा व्यवहारस्तेषामेव परीक्षकवराकाणाम् । अथानुत्पन्नेऽपि ज्ञान उत्पन्नविवेकाग्रहादन्यथा ज्ञानमुदपादीति व्यवहारः, न पुनस्तादृशः प्रत्यय इति मतं; तदपि न युक्तम् । यदिदं रजतमिति व्यवहारवदन्यथाज्ञानमासीदिति व्यवहारोऽप्ययथार्थः स्यात् । नेदं रजतमितिवन्नान्यथाख्याति-रजतनिष्ठेति बाधः स्यात् । नैव चासावस्ति । अन्यथाख्यातिरासीदेवेति सर्वो लोकः प्रत्येतीत्य-वादिष्म । सर्वथा बाधरहितस्याप्ययथार्थत्वे सर्वत्रानाश्वासप्रसङ्गः । ननु वलयकरणाद्ययोगनिबन्धनो रजतादिवस्तुष्वापाततो बाधोदयः प्रतीतिषु स्वपरपक्षयोः साधारणार्थक्रियासु विवेकिनामेव युक्तितो बाध इति, तदप्यसारम् । नेयं भ्रान्तिः सैवेति विवेकग्रहणात्मकाद्बाधादबाधं श्रेयांसं वित्त । अनुत्पन्नेऽप्युत्पन्नविवेकाग्रहं व्यवहारहेतुं व्याहरतां विवेकाग्रहपरम्परा लक्ष्यते । बाध्यत्वादियमन्यथा-ख्यातिरिति निश्चिनोमीति व्यवहारस्यापि विवेकाग्रहमूलत्वात् । एकमन्यथामानं कल्पनागौरवभया-त्परिजिहीर्षन्तः परिकल्पयन्त्यपरिमितानि ग्रहणस्मरणान्यन्यथाव्यवहारांश्चेति काऽत्र लघुकल्पना भवताम् ? अरजते रजतविवेकाग्रहवदनन्यथाख्यातावन्यथाख्यातिविवेकाग्रह इष्यते

(तत्त्वप्रदीपिका)

चेत्तदन्यथाख्यातिरपि स्वशिरसासबहुमानमुदुह्यते सद्वादिभिः । तथाऽप्यन्यथाख्यातिप्रतीतिर्नान्यथाख्यातिरिति चेदस्तु तर्हि रजतप्रतीतिरेवान्यथाख्यातिरिति । इयमिदं रजतमिति प्रतीतिर्भ्रान्तिरिति वदन्ति च सकललौकिकपरीक्षकाः । तस्य च मूलं विवक्षमाणा भ्रान्त्यभ्रान्त्योर्भवन्त्योर्भेदाग्रहमाग्रहीष्ट । अहो दुर्दर्शनाभियोगपरिपाकविजृम्भिता भ्रान्तिरख्यातिवादिनां, यत्स्वयमूढामवियोगिनीमिमां न जानीथेत्यलमनेन भ्रान्त्यपलापोद्यमेन सैकतावनिगृहनिर्माणवदतिदुष्करविपयेण। अपि च विवक्षितरजतव्यवहर्ता व्यवहारं सम्यश्चमसम्यश्चं वा मन्यते, आद्ये भ्रमाभ्युपगतिः । द्वितीये नैव व्यवहरेत् । अथ द्वेधाऽपि न निश्चिनोति समीचो भेदाग्रहात्सम्यश्चं वक्ति । अभेदाग्रहादसम्यश्चं किमिति न वदेत् । न च भेदाग्रहादेव सर्वत्र व्यवहार इति वाच्यम् । अवैत्येवेदं रजतमित्यादि । अन्यथा किमित्याददीयेति सर्वत्रानुभवादित्यास्तामस्य मतस्यामितदोषपञ्जरस्यानञ्जस्य प्रसञ्जनम् । अतस्सूक्तं चेतनस्य प्रवृत्तिदर्शनाच्चेति ।

## तत्त्वप्रकाशिका

एवं प्रधानस्य कारणत्वमचेतनत्वादिना निराकृत्य युक्त्यन्तरेणापि तन्निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **प्रवृत्तेश्चेति** ॥ महदादिसृष्टिश्चेतनेच्छानुसारिणी सृष्टित्वात्पटसृष्टिवदित्यनुमानविरुद्धत्वाच्च नाचेतनस्य कारणत्वं सम्भवति । न च वाच्यं पटादिसृष्टावपि न चेतनस्य व्यापार इति । अहं करोमीति चेतनस्य प्रवृत्तिदर्शनादिति भावः । न चेदं व्यवहारमात्रमिति वाच्यम् । बाधकाभावात् । अन्यथा विशिष्टज्ञानमात्रलोपप्रसङ्गात् । प्रकृतेः कर्तृत्वं बाधकमिति चेन्न । परस्पराश्रयप्रसङ्गात् । प्रतिपादयिष्यति चैतदिति ।

## गुर्वर्थदीपिका

अहं करोमीति सार्वजनीनप्रतीतेर्व्यवहारमात्रत्वेऽयं घट इत्यादिप्रतीतेरपि व्यवहारमात्रत्वप्रसङ्ग इत्याह– **अन्यथेति** ॥

## भावबोधः

'चेतनेच्छानुसारेण यदा दृष्टः पटोद्भवः । एतादृशत्वमन्यस्य वस्तुत्वात् केन वार्यते' ।

इत्यनुव्याख्यानानुसारेण भाष्याभिप्रायमाह– **महदादीति** ॥ **परस्पराश्रयप्रसङ्गादिति** ॥ प्रकृतेः कर्तृत्वसिद्धौ 'अहं करोमि' इत्यादेर्व्यवहारमात्रत्वसिद्धिः । तत्सिद्धौ दृष्टान्तस्य साध्य-

(भावबोधः)
विकलत्वे नानुमानस्याविरोधत्वे प्रकृतेः कर्तृत्वसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थः । ईश्वरेच्छानुसारित्वस्य घटादिसृष्टावपि सत्त्वेन न दृष्टान्तः साध्यविकल इति भावेनाह– **प्रतिपादयिष्यते चैतदिति** ॥ उत्तरसूत्रद्वयेनेत्यर्थः ।

## भावदीपः

**अचेतनत्वादिनेति** ॥ प्रमाणाभाव आदिपदार्थः ॥ **युक्त्यन्तरेणेति** ॥ चेतनकर्तृत्व-साधकयुक्त्या चेत्यर्थः । भाष्यं दृष्टान्ते साध्यवैकल्यनिरासकमिति व्याकरिष्यन् 'चेतनेच्छानुसारेण यदा दृष्टः पटोद्भवः । एतादृशत्वमन्यस्य वस्तुत्वात्केन वार्यत' इत्यनुभाष्योक्तमनुमानमाह ॥ **महदादीति** ॥ दर्शनपदोक्तितात्पर्यं व्यनक्ति ॥ **न चेत्यादिना** ॥ दर्शनादनुभवादित्यर्थः । अनुभवासिद्धिमाशङ्क्य निराह ॥ **न चेदमिति** ॥ अहं करोमीत्येतदित्यर्थः । व्यवहारः असंसर्गाग्रहाद्युक्त इति भावः ॥ **परस्परेति** ॥ प्रकृतेः कर्तृत्वे सिद्धे अहं करोमीत्यस्य व्यवहार-मात्रत्वेनानुमानविरोधासम्भवः । सिद्धे च तस्मिन् प्रकृतेः कर्तृत्वसिद्धिरिति परस्पराश्रयेत्यर्थः । नन्वहं करोमीत्यादिप्रतीतेर्भ्रमत्वमुपेत्य घटादावपीश एव कर्ता न जीव इति प्रत्यपाद्यधस्तादुपसंहार दर्शनादित्यत्र । तथा च कथमेतदित्यत आह ॥ **प्रतिपादयिष्यति चैतदिति** ॥ स्वातन्त्र्यधीरेव भ्रान्तिर्न तु कर्तृत्वधीरपि तथा चैतत्कर्तृत्वं प्रत्यक्षोपपत्तिश्रुतिभिर्जीवस्य पारमार्थिकमेवेति प्रतिपाद-यिष्यते कर्ता शास्त्रार्थवत्त्वादित्यत्रोपरितनपाद इत्यर्थः । तत्त्वप्रदीपे तु निर्विकारस्य चेतनस्यापि प्रवृत्त्यनुपपत्तिरित्याशङ्क्यानुभवसिद्धत्वान्नानुपपत्तिरित्यर्थतयैतद्भाष्यं व्याख्यातम् ।

## अभिनवचन्द्रिका

**युक्त्यन्तरेणापीति** ॥ यद्यपि सूत्रे युक्तिर्नोच्यते, तथापि 'प्रवृत्तेः' इति घटादौ चेतनस्य प्रवृत्त्युक्त्या दृष्टान्तस्य सूचितत्वादनुमानं लब्धमिति भावेन युक्त्यन्तरेणेत्युक्तमिति द्रष्टव्यम् । ननु 'चेतनस्य स्वतःप्रवृत्तिदर्शनाच्च' इति भाष्यमयुक्तम्, अनुपयुक्तत्वात् । 'प्रवृत्तेश्च' इति सूत्रव्याख्यानत्वाभावाच्चेत्यत आह – **महदादिसृष्टिश्चेति** ॥ सूत्रं दृष्टान्तसूचनेन अनुमान-सूचकम् । भाष्यं तु – सूत्रस्य दृष्टान्तसूचकत्वसिद्ध्ये शेषपूरणेन व्याख्यानरूपमित्यदोषः । अहं करोमीति नाऽनुभवः, किन्तु माणवकस्य सिंहोऽहमितिवत् मानसो व्यवहार एव । तथा

(अभिनवचन्द्रिका)

च दृष्टान्ते न साध्यवैकल्यपरिहार इत्याशङ्क्य निषेधति – **न चेति** ।। **विशिष्टज्ञानमात्रेति** ।। अहं दुःखीत्याद्यपि न ज्ञानं किन्तु व्यवहारमात्रमेव स्यादिति भावः ।। **प्रतिपादयिष्यते चैतदितीति** ।। जीवकर्तृत्वम् 'कर्ता शास्त्रार्थवत्त्वात्' इत्यनेन प्रतिपादयिष्यत इत्यर्थः । पयोऽम्बुवदिति प्रतीकग्रहणानन्तरं टीकायां श्रूयमाणम् 'अपिपदं चेतनप्रवृत्तेराकर्षार्थम्' इति वाक्यं न टीकावाक्यं, किन्तु प्रक्षिप्तम् । तथा हि 'शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यते' इति नियमात् पदाकर्ष एवेति वाच्यम् । पूर्वोत्तरसूत्रयोः चेतनप्रवृत्तिपदाभावेनाकर्षायोगात् । चेतनप्रवृत्ते-रित्यस्याकर्षार्थमिति पाठप्रसङ्गाच्च । 'एतेन ह वाव पयो मण्डं भवति' इत्यादि तत्रापि ईश्वरनिमित्तप्रवृत्तिश्रुतेः' इति भाष्ये अचेतनत्वहेतोर्व्यभिचाराधिकरणतया ये उदाहृते पयोऽम्बुनी तत्रापीत्यपिशब्दस्य व्याख्यातत्वाच्चेति ।

## वाक्यार्थमुक्तावली

अचेतनत्वादिनेत्यादिपदेन प्रमाणाभावो गृह्यते । सूत्रे चेतनस्येति योग्यतयान्वेति । नानुमानमित्यस्ति । दर्शनादिति शेषः । पटादिसृष्टौ चेतनस्य प्रवृत्तेरनुभवाच्च नानुमानं जगत्कर्त्रिति सूत्रभाष्यमभिप्रेत्य 'चेतनेच्छानुसारेण यदा दृष्टः पटोद्भवः । एतादृशत्वमन्यस्य वस्तुत्वात्केन वार्यते' । इत्यनुभाष्योक्तमनुमानमाह ।। **महदादीति** ।। तत्र साध्यवैकल्यपरिहार-कतया भाष्यं योजयति ।। **न चेति** ।। ननु पटादिसृष्टावप्यन्तःकरणस्यैव कतृत्वं नात्मनः । अहं करोमीति विशिष्टं ज्ञानमेव नास्ति किन्तु व्यवहारमात्रम् । न च तस्य विशिष्टज्ञानपूर्वकत्वमत एवागतमिति वाच्यम् । अहमिति ज्ञानस्य करोमीति ज्ञानस्य च भेदग्रहादसंसर्गाग्रहाद्वा व्यवहारोपपत्तेरित्याशयेनाशङ्क्य निराकरोति ।। **न चेति** ।। अन्यथा बाधकं विना व्यवहार-मात्रकल्पने ।। **परस्पराश्रयेति** ।। प्रकृतेः कर्तृत्वसिद्धौ अहं करोमीत्यादेर्व्यवहारमात्रत्वसिद्धिः । तत्सिद्धौ दृष्टान्तस्य साध्यविकलत्वेनानुमानस्य विरोधकत्वे प्रकृतेः कर्तृत्वसिद्धिरिति परस्परा-श्रयत्वप्रसङ्गादित्यर्थः । ईश्वरेच्छानुसारित्वस्य पटादिसृष्ट्यादावपि सत्वेन दृष्टान्तः साध्यविकलो नेति भावेनाह ।। **प्रतिपादयिष्यते चैतदिति** ।। उत्तरसूत्रद्वयेनेत्यर्थ इति भावबोधे । यद्वा उपसंहारसूत्रे घटादावपीश एव कर्ता न जीव इति प्रत्यवादि तथा चाहं करोमि इति प्रवृत्यनुभवः तत्र कथमित्यत आह ।। **प्रतिपादयिष्यत इति** ।। जीवस्यापि कर्तृत्वं प्रत्यक्षादिबलात् कर्ता शास्त्रार्थवत्वादित्यधिकरणे प्रतिपादयिष्यत इत्यर्थः ।

## तत्त्वसुबोधिनी

**अन्यथेति** ॥ बाधकाभावेऽपि व्यवहारमात्रत्वकल्पने इत्यर्थः । घटोऽयमित्यादिविशिष्ट-ज्ञानमात्रस्य लोपः स्यात् । उपचरितत्वकल्पनस्य तत्रापि सम्भवादिति भावः ॥ **परस्पराश्रय-प्रसङ्गादिति** ॥ प्रकृतेः कर्तृत्वसिद्धौ अहं करोमीत्यादेः व्यवहारमात्रत्वसिद्धिः । तत्सिद्धौ दृष्टान्तस्य साध्यविकलत्वेन अनुमानस्याविरोधकत्वेन प्रकृतेः कर्तृत्वसिद्धिः इति परस्पराश्रय-प्रसङ्गादित्यर्थः । नन्वेवं त्वन्मतेऽपि प्रकृते कर्तृत्वाभावसिद्धौ बाधकाभावादहं करोमीत्यादेः व्यवहारमात्रत्वाभावसिद्धिः तत्सिद्धौ च प्रकृतेः कर्तृत्वाभावसिद्धिः इत्यन्योन्याश्रयः सम एवेत्यत आह ॥ **प्रतिपादयिष्यते चैतदिति** ॥ कर्ता शास्त्रार्थवत्त्वादित्यादिविशेषः ईश्वरेच्छानुसारित्वस्य पटादिसृष्टावपि सत्त्वेन न दृष्टान्तः साध्यविकलः इति भावेनाह । **उपपादयिष्यते चैतदिति** ॥ उत्तरसूत्रद्वयेनेत्यर्थः इत्यप्याहुः ।

## वाक्यार्थविवरणम्

**व्यवहारमात्रमिति** ॥ चित्रलिखितसिंहे सिंह इति व्यवहारमात्रं, न ज्ञानमित्यर्थः ॥ **अन्यथा** ॥ बाधकाभावेऽपि व्यवहारमात्रत्वाङ्गीकारे । विशिष्टज्ञानम् । अयं घट इत्यादि ॥ **परस्परेति** ॥ प्रकृतेः कर्तृत्वसिद्धौ तद्विरोधादहङ्करोमीत्यस्य व्यवहारमात्रत्वसिद्धिः । तत्सिद्धौ च दृष्टान्तस्य साध्यविकलत्वेनानुमानविरोधाभावेन प्रकृतेः कर्तृत्वसिद्धिरित्यन्योन्याश्रयप्रसङ्गादित्यर्थः ।

## वाक्यार्थमञ्जरी

पटादिसृष्टौ चेतनप्रवृत्तेर्दर्शनाच्च न प्रधानं कर्त्रित्यर्थः ॥ **व्यवहारमात्रमिति** ॥ नत्वात्मनि कर्तृत्वावगाह्यनुभवं इत्यर्थः ॥ **अन्यथेति** ॥ अहं दुःखीत्येतदपि व्यवहारमात्रमिति वक्तुं शक्य-त्वादिति भावः ॥ **परस्पराश्रयेति** ॥ प्रकृतेः कर्तृत्वसिद्धौ अहं करोमीत्यादेर्व्यवहारमात्रत्व सिद्धिस्तत्सिद्धौ दृष्टान्तस्य साध्यविकलत्वेनानुमानस्याविरोधकत्वेन प्रकृतेः कर्तृत्वसिद्धिरित्य-न्योन्याश्रयप्रसङ्गादित्यर्थः । ईश्वरेच्छानुसारित्वस्य घटादिसृष्टावपि सत्त्वेन न दृष्टान्तः साध्य-विकल इति भावेनाह ॥ **प्रतिपादयिष्यत इति** ॥ उत्तरसूत्रद्वयेनेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ पयोऽम्बुवच्चेत्तत्रापि ॐ ॥ ३ ॥**

पयोऽम्बुवदचेतनस्यापि प्रवृत्तिर्युज्यत इति न युक्तम् ।

'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते,

याश्च श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु' (बृ.उ.५-८-९) 'एतेन ह वाव पयो मण्डं भवति' इत्यादिना तत्रापीश्वरनिमित्तप्रवृत्तिश्रुतेः ।

## सत्तर्कदीपावली

न च नद्युदकादिवदीश्वरप्रेरितप्रधानप्रवृत्त्या सृष्टिर्युक्तेति वाच्यम् । 'योऽन्तरो यमयतः' इति श्रुतेः उदकादेरपीशप्रेरितत्वसिद्धेः ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वा व्याचष्टे ॥ **पयोऽम्बुवदिति** ॥ अपि पदं चेतनप्रवृत्तेराकर्षणार्थम् । यदुक्तमचेतनत्वान्न स्वतःप्रवृत्तिः प्रधानस्येति तदयुक्तम् । पयसोऽचेतनस्यापि दध्याकारेण परिणामदर्शनात् अचेतनस्याम्बुनो गतिदर्शनात् । तथा कूलस्य पतनदर्शनात् । अतोऽचेतनत्वेऽपि तद्वत्प्रधानस्यापि स्वतःप्रवृत्तिः किं न स्यादिति न युक्तम् । पयोऽम्ब्वादिप्रवृत्तावपीश्वरनिमित्तत्वाभिधायकश्रुतिसद्भावेनाचेतनत्वहेतोर्व्यभिचाराभावात् । ततश्च न तन्निदर्शनेन प्रधानस्य स्वतः प्रवृत्तिराशासितव्येति भावः । याः काश्चित्प्राच्यां दिशि स्थिताः काश्चित्प्रतीच्यां दिशि स्थिता नद्यः श्वेतेभ्यः पर्वतेभ्यो यां यां दिशमनुस्यन्दन्ते ता एतस्यैवाक्षरस्याज्ञायां सत्यां तां तां दिशमनुस्यन्दन्त इत्यर्थः ।

## भावबोधः

'पयोऽम्ब्वादि च नोपमा' इत्यनुव्याख्यानानुसारेण सूत्रभाष्ययोरुपलक्षणपरत्वमभिप्रेत्याऽऽह– **तथा कूलस्येति** ॥

## भावदीपः

उक्ताक्षेपप्रकारं दर्शयन् भाष्यं व्याचष्टे ॥ **यदुक्तमिति** ॥ 'पयोऽम्ब्वादि च नोपमा' इत्यनुभाष्यस्थादिपदानुरोधात्सूत्रोक्तमुपलक्षणं मत्वा परोक्तमन्यदप्याह ॥ **तथा कूलस्येति** ॥ भाष्ये नञध्याहारेण न युक्तमित्युक्तम् । तदर्थ इति **न युक्तमिति** ॥ **अक्षरस्येति** ॥ अक्षरस्य ब्रह्मत्वमक्षरनये सिद्धम् ।

## अभिनवचन्द्रिका

**अचेतनस्यैवाम्बुनो गतिदर्शनादिति** ॥ इतः परं श्रूयमाणं 'तथा कूलस्य पतनदर्शनादिति वाक्यं प्रक्षिप्तम् । तथा 'पयोऽम्ब्वादिप्रवृत्तावपि' इत्युत्तरवाक्ये आदिशब्दोऽपि प्रक्षिप्तः । अवश्यं चैतदेवं विज्ञेयम् सूत्रे, भाष्ये च पयोऽम्बुवदिति द्वयोरेव गृहीतत्वात् । उपलक्षणत्वेन सूत्रभाष्ययोः कूलपतनमपि सङ्गृहीतमिति चेत् न अयस्कान्ताद्युदाहरणस्यापि अत्रैव ग्रहणसम्भवेनोत्तरसूत्रवैयर्थ्यप्रसङ्गात् । टीकायामपि 'ननु श्रुतिसामर्थ्येन पयोऽम्बुनोः' इति तयोरेव गृहीतत्वाच्च ।

## वाक्यार्थमुक्तावली

**अपिपदमिति** ॥ पूर्वसूत्रे चेतनस्य दर्शनादिति पदद्वयस्याध्याहृतत्वात् चेतनस्य प्रवृत्तेर्दर्शनादिति सूत्रशरीरं पर्यवसितम् । अत्रापि पदं चेतनप्रवृत्तेर्दर्शनात् इत्यस्यानुवृत्तिद्योतनार्थमित्यर्थः । तेन शाब्दी ह्याकाङ्क्षा शब्देनैव पूरणीयेति नियमात् कथमर्थस्याकर्ष इति निरस्तम् । अत्रापीतिपदाध्याहारेण पदाकर्षणस्यैव विवक्षितत्वात् । 'पयोऽम्ब्वादिति च नोपमा' इत्यनुव्याख्यानुसारेण सूत्रभाष्ययोः उपलक्षणत्वं मत्वोदाहरणान्तरमाह ॥ **तथा कुलस्येति** ॥ एतदित्युपलक्षणम् । अयस्कान्तस्यायोभ्रमकत्वदर्शनादित्यपि ग्राह्यम् । सूत्रे न केवलं प्रधानप्रवृत्तौ तत्रापीति समुच्चयपरापिशब्देन चेतनप्रवृत्तिदर्शनादित्यनुकर्षो ध्वन्यते । अनुमानं च रचनावदित्यनुवर्तते । यथा पयः क्षीरं स्वतो दध्यात्मना परिणमते, यथा जलं स्वतो गच्छति कूलादिकं च स्वतः पतनादिमत् तथा प्रधानमपि रचनावत् स्वतः प्रवृत्तियुक्तमिति चेन्न तत्रापि पयोम्ब्वादावपि ईशाख्यचेतनप्रवृत्तेर्दर्शनाच्छ्रुतिसिद्धत्वादिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

सूत्रभाष्ययोः पयोऽम्बुपदं उपलक्षणपरमित्याह ॥ **तथा कूलस्येति** ॥ पयोऽम्ब्वाद्युदाहरण-स्येत्यर्थः ।

## वाक्यार्थमञ्जरी

यथा पयः क्षीरं स्वतो दध्यात्मना परिणमते यथाचाम्बु जलं स्वतो गच्छति तथा प्रधान-प्रवृत्तिरिति चेन्न । **तत्रापि** पयःप्रभृतिष्वपि ईशप्रवृत्तेः श्रुतिसिद्धत्वादित्यर्थः । स्यन्दते स्रवति स्यन्दूप्रस्रवण इति धातोः ।

## सूत्रभाष्यम्

**॥ ॐ व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॐ ॥ ४ ॥**

**'न ऋते त्वत्क्रियते किञ्चनार' (ऋ.सं.१०-११३-९) इति तद्व्यतिरेकेण कस्यापि कर्मणोऽनवस्थितेरनपेक्षितमेवाचेतनवादिमतम् ।**

## सत्तर्कदीपावली

'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनां न ऋते त्वत्क्रियते किञ्चन' इति श्रुत्यन्तरा-दप्येषोऽर्थोऽवगम्यते । विप्रतमशब्देन मेधावितम उच्यते । मुख्यतः सर्वदेवनामवाच्यतया विष्णु-रेवाभिधीयते । न हि तदन्यं प्रति त्वदृते त्वया विना किञ्चन न क्रियते इति ।

## तत्त्वप्रदीपिका

'निषुसीद' इत्यादेरयमर्थः । इन्द्रियादिगणेषु त्वं सुनिषीद । ज्ञानिनां विशेषेण प्रकृष्टतमं त्वामाहुः । त्वदृते स्पन्दनमपि न क्रियते । आरे दूरे च । त्वन्नियत्यैव सर्वं सर्वत्र । महान्तम् अधिकानन्दं त्वां त्वमेवार्चय मघवन्सामर्थ्ययुक्तेति । न च स्वातन्त्र्येणान्यस्यार्च्यत्वं युज्यते । अस्वातन्त्र्योक्तेः । स्तोत्रा स्वेन्द्रियेषु स्थित्वा भगवन्तं प्रति स्वार्चकत्वं प्रार्थ्यत इति युक्तम् ।

## तत्त्वप्रकाशिका

**ननु श्रुतिसामर्थ्येन पयोऽम्बुनोः प्रवृत्तेरीश्वराधीनत्वेऽप्ययस्कान्ताद्यचेतनान्तरप्रवृत्तौ भविष्यति व्यभिचारः सेत्स्यति च प्रधानस्य प्रवृत्तौ निदर्शनम्** । उदाहरणस्यानादरणीयत्वात् । **न हि पयोऽम्बुप्रवृत्तेरीश्वराधीनत्वेऽन्ययापि** तन्निमित्तया भवितव्यमित्यस्ति नियामकमित्याशङ्कां **परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ व्यतिरेकेति ॥ सर्वप्रवृत्तीनामीश्वरनिमित्तत्वस्य श्रुतिसिद्धत्वान्न कुत्राप्युक्तहेतोर्व्यभिचारो नाप्यचेतनप्रवृत्तौ निदर्शनमिति** । अतः **प्रमाणविरुद्धं निष्प्रमाणकं च स्वतोऽचेतनप्रवृत्तिमतमनपेक्षितमेव प्रेक्षावतामिति** भावः । इन्द्रियगणपते धनवन् यशस्विन् मखपते **त्वामिन्द्रियगणेषु निषुसीद । तत्र च स्थित्वा महान्तं परमानन्दमाश्चर्यतमं** त्वां त्वमेव पूजय । **यतस्त्वमेव विशेषेण ज्ञानिनां प्रकृष्टतममाहुरतस्तवैव पूज्यत्वम्** । यतश्च त्वदृते दूरे समीपे वा न **केनचित्किञ्चित्क्रियते अतस्त्वमेव पूजक** इत्यर्थः । **अतो निरीश्वरसाङ्ख्यमतस्याप्रमाणत्वेन तद्विरोधाभावायुक्तं हरेर्लक्षणमिति सिद्धम्** ।

## गुर्वर्थदीपिका

'व्यतिरेकानवस्थितेश्चानपेक्षत्वात्' इत्यत्र न विद्यतेऽपेक्षा यस्मिन्साङ्ख्यमते तदनपेक्षं तस्य भावोऽनपेक्षत्वं तस्माद्धेयमचेतनमतमिति सूत्रार्थस्य तात्पर्यकथनम् 'अनपेक्षितमेवाचेतनवादि-मतम्' इति भाष्यम् । 'यशो वा मखं धनं वा व मखं तं वा एतं मखवन्तं सन्तं मखवा-नित्याचक्षते परोक्षेण' इति श्रुतेर्मखशब्दस्य यशोधनवाचकत्वाल्लोकसम्मत्यैव यज्ञवाचकत्वाच्च, धनवन् यशस्विन् मखपत इत्युक्तम् । 'आन्महतः समानाधिकरण' इति सूत्रादान्महत इति योगविभागान्महच्छब्दमात्रस्यापि आकारान्तादेशे सोमपाशब्दवन्महच्छब्दोऽपीति भावेन फलितमाह ॥ **महान्तमिति** ॥ रलयोरभेदादरम् अलं कं सुखं यस्येति अर्कः परमानन्दः । यद्वा आ समन्तात् 'ऋ गतौ' इति धातोः ऋ ज्ञानं कं सुखं च यस्य सोऽर्कः निरवधिकज्ञानानन्द इत्यर्थः । विशेषेण प्रः प्रकृष्टो विप्रोऽतिशयेन विप्रो विप्रतमः 'पाठक्रमादर्थक्रमो ज्याय' इति वचनात् विशेषेण ज्ञानिनां प्रकृष्टतममित्युक्तम् । 'आराद्दूरसमीपयोः' इति वचनादार इत्यस्य दूरे समीपे वेत्यर्थः उक्तः । यद्यपि 'व्यतिरेकानवस्थितेः' सूत्रेण पयोऽम्ब्वादिनिदर्शनमपि निराकर्तुं शक्यं तथाऽपि कापिलस्मृतौ पयोऽम्ब्वादीनां विशिष्योदाहृतत्वात् असाधारणश्रुतिसद्भावाच्च पृथक्सूत्ररचना । पयोऽम्बुरूपजडस्यैव श्रुत्या भगवदधीनत्वोक्तेः' 'न ऋत' इति श्रुतौ किञ्चन-शब्दस्य जडात्सङ्कोचशङ्कापरिहाराय च पृथक्सूत्ररचना ।

## भावबोधः

'मघवन् यस्मिन् धनवन् मखपते' इति चेति कर्मनिर्णयानुसारेण मघवच्छब्दार्थमाह– **धनवन्निति** ॥

अत्राद्ये– प्रधानस्य जगत्कर्तृत्वेऽचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिरूपबाधकोक्तिः । द्वितीये– सिद्धान्तसाधकयुक्तिविरोधोक्तिः । तृतीये– प्रथमसूत्रोक्ताऽचेतनत्वहेतोर्व्यभिचारोद्धारः । चतुर्थे– पयोऽम्ब्वादौ व्यभिचाराभावेऽपि अयस्कान्तादौ व्यभिचारः स्यादिति शङ्कानिरासार्थं चेतनाचेतनसर्वप्रवृत्तीनामीश्वराधीनत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

पूर्वेणैवेदं परिहृतं किं नेत्यत आह ॥ **न हीति** ॥ भाष्ये पर्योऽबुविषय एव श्रुत्युक्तेरिति भावः । 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किंचनारे महामर्कं मघवन् चित्रमर्च' इति समग्रमन्त्रार्थमाह ॥ **इन्द्रियेति** ॥ मघवन्नित्यस्य कर्मनिर्णयोक्तमर्थत्रयमाह ॥ **धनवन्नित्यादिना** ॥ महां अर्कं चित्रमिति पदत्रयार्थमाह ॥ **महान्तमित्यादिना** ॥ अर्च पूजय । विप्रतममित्यस्यार्थः विशेषेणेत्यादि । आर इत्यस्य दूरे समीपे वेति ॥ **अत इति** ॥ तदुक्तप्रमेयस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनां । न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च' इति ऋचं व्याचष्टे **इन्द्रियगणपत इत्यादिना** ॥ **मघवन्** यशस्विन् 'धनवन् मखपत इति वा' इति कर्मनिर्णयानुसारेण मघवच्छब्दार्थमाह– **धनवन्निति** ॥

**पूर्वपक्षस्तु**– न विष्णोर्जगत्कर्तृत्वं युक्तं, साङ्ख्यसमये 'महदादिकं स्वसदृशकारणजन्यं कार्यत्वात् घटादिवत्' इत्यनुमानेन प्रकृतेः कारणत्वं प्रसाध्य तस्या अनन्याधीनतया कार्योन्मुखत्वाभिधानात् । अतः प्रकृतेरेवानन्याधीनतया अशेषकार्योन्मुखत्वात् नेश्वरः, तत्कर्तृत्वं चास्तीति न जगत्कारणत्वं युक्तमिति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु**– युक्तमेव विष्णोर्जगत्कर्तृत्वम् । कार्यं स्वसदृशकारणवत्' इत्यनुमाने कारणतया परिकल्पितस्य प्रधानस्याचेतनत्वेन स्वतःकार्योन्मुखत्वायोगात् । ननु प्रामाणिकप्रकृतेः स्वतः कार्योन्मुखत्वं न त्यक्तुं युक्तमिति चेत्, न, प्रागुक्तानुमानस्य कारणत्वमात्रसाधकत्वेन स्वतः-कार्योन्मुखत्वासाधाकत्वात्, प्रमाणान्तरस्य चाभावात् । किञ्च पटादिसृष्टेः चेतनेच्छानुसारित्व-दर्शनात् महदादिसृष्टिरपि तथाऽभ्युपगन्तव्या । ननु अचेतनयोरपि पयोऽम्बुनोः स्वतःप्रवृत्तिर्दृश्यते । अतस्तत्रैवाचेतनत्वहेतोर्व्यभिचारात् । अचेतनस्य स्वतःप्रवृत्तौ च स एव दृष्टान्तो भविष्यतीति चेत्, न 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इति श्रुत्या तत्रापीश्वरनिमित्तप्रवृत्तिसद्भावा-वगमात्। ननु माभूत् पयोऽम्बुनोर्व्यभिचारः । अयस्कान्तादौ व्यभिचारो भविष्यतीति चेत्, न 'न ऋते त्वत्क्रियते' इति श्रुत्या सर्वस्यापीश्वराधीनत्वावगमात् अप्रामाणिकत्वेन, प्रमाण-विरुद्धत्वेन च, महाजनपरिगृहीतत्वाभावान्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ । अतो निरीश्वरसाङ्ख्यमतस्याऽप्रामाणिकत्वेन, तद्विरोधाभावाद्युक्तं जगज्जन्मादिकारणत्वलक्षणमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

न्यायसाम्येनायस्कान्तकूलपतनादेर्निरस्तत्वेऽप्यभ्यधिकमाशङ्कते ॥ **नन्वित्यादिना** ॥ एतेनै-तत्प्रत्युक्तम् । पूर्वसूत्रे पयोम्बुग्रहणमुपलक्षणं न वा । आद्ये एतत्सूत्रवैयर्थ्यम् । कूलपतनवत् अयस्कान्तादेरपि उपलक्षणसम्भवात् । द्वितीये कूलपतनग्रहणायोग इति ॥ **न हीति** ॥ भाष्ये पयोम्बुविषये एव श्रुत्युक्तेरिति भावः ॥ **इत्याशङ्कामिति** ॥ इत्यभ्यधिकाशङ्कां कैमुत्यन्यायेन परिहरत्सूत्रमित्यर्थः । कस्यापि कर्मण इति भाष्ये चेतनस्यापि किमुताचेतनस्येत्यर्थः । तत्तात्पर्यं **सर्वप्रवृत्तीनामिति** ॥ स्पष्टमेतत् सुधायाम् । सूत्रे प्रवृत्तेर्दर्शनादित्यन्वेति । प्रवृत्तेश्चेतनप्रवृत्तेः सुतरामचेतनप्रवृत्तेरीशाव्यतिरेकेणानवस्थितेः अवस्थानाभावस्य दर्शनात् ।

> निषुसीद गणपते गणेषु त्वामाहुर्विप्रथमं कवीनाम् ।
> न ऋते त्वत्क्रियते किञ्चनारे महामर्कं मघवन् चित्रमर्च ॥

इति श्रुत्युक्तत्वात् । अचेतनवादिमतस्य सद्भिरनादरणीयत्वादेव नानुमानं जगत्कर्त्रीति सूत्रार्थः ॥ **मघवन्** धनवन् यशस्विन् मखपर इति च कर्मनिर्णयानुसारेण मघवच्छब्दार्थमाह ॥

(वाक्यार्थमुक्तावली)

**धनवन्नित्यादिना ॥ महां** महान्तम् । **अर्कं** परमानन्दरूपम् । अरं अलं कं यस्येति विग्रहः । **चित्रं** आश्चर्यतमम् । **अर्च** पूजय । निषुसीदेत्यत्र नि सु सीदेति पदच्छेदः । अत्र आद्ये प्रधानस्य कर्तृत्वे उपपत्तिविरोधस्य प्रमाणाभावस्य चोक्तिः । द्वितीये स्वपक्षसाधकयुक्तिविरोधोक्तिः । तृतीये प्रथमसूत्रोक्ताचेतनत्वहेतोर्व्यभिचारोद्धारः । तत्र प्रमाणाभावस्यासिध्युद्धारश्च चतुर्थे तत्रैवा-भ्यधिकाशङ्कोद्धारश्चेति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

तं वा तपन्तं सन्तं मघवानित्याचक्षते परोक्षेण । तेभिरिन्द्रं चोदय दातवे मघं तत्र आयातु मघाययशो वस्वमघं मघमनुप्रायत्सि आमामेतुमघं मघमनुप्रापसिधनं चावमघमित्यादिश्रुत्यनुसारि मघवन् यशस्विन् मघवन् मखपते इति वेति कर्मनिर्णयानुसारेण मघवन्नित्यस्यार्थमाह मघवन्, यशस्विन् मखपते इति । अर्कमित्यस्यार्थः **परमानन्दमिति** ॥ अरं अत्यन्तं कं सुखं अस्येति विग्रहः । चित्रमित्यस्यार्थः **आश्चर्यतममिति** ॥ विप्रतममित्यत्र वीत्युपसर्गः प्रतमेति प्रातिपदिकम् । तस्मादिनि शपेर्मतुप् । अवग्रहाभावस्तु छान्दसः इति दृष्टव्यम् । अथाद्ये सूत्रे प्रधानस्य जगत्कर्तृत्वे स्वतःप्रवृत्त्यनुपपत्तिबाधकोक्तिः । आनुमानसांख्यानुमानकल्पितं प्रधानं न स्वतन्त्र-कारणं जडस्य चरपितृत्वानुपपत्तेः । वशब्दोक्तान्मानाभावाच्च न चानुमानं महदादिकं सकारणकं, सजातीयकरणजन्यं वा, सोपादानं वा, सजातीयोपादानजन्यं वा, स्वतन्त्रकारणजन्यं वा, कार्यत्वादित्याद्यनुमानरचनायाः सिद्धसाधनेन, स्वतन्त्रजन्यमिति रचनायाः दृष्टान्ताभावेनानु-पपत्तेरित्यक्षरार्थः । द्वितीये युक्तिविरोधोक्तिः । तृतीये चेतनत्वहेतोः व्यभिचारोद्धारः । चतुर्थे चेतनाचेतनसर्वप्रवृत्तीनामीश्वराधीनत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

ननु पयोऽम्ब्वाद्युदाहरणपरित्यागात् प्रतिज्ञाहानिरित्यत आह ॥ **उदाहरणस्येति** ॥ यत्किञ्चिद्व्यभिचारोदाहरणं प्राप्तं चेत् वयं कृतकृत्याः । न पूर्वोक्तोदाहरण एवास्माक-मादरोऽस्तीत्यर्थः । ननु पयोऽम्ब्वादिप्रवृत्तेरीश्वराधीनत्वे सिद्धेऽयस्कान्तादिप्रवृत्तेरपि तत्सिद्धमिति चेत्तत्राह ॥ **न हीति** ॥ श्रुतौ पयोऽबुनोः कण्ठत उपादानात् तयोः प्रवृत्तावस्तीश्वराधीनत्वं नायस्कान्तादिप्रवृतौ । श्रुतावनुपादानादिति भावः । न कुत्रापि उक्तहेतोर्व्यभिचारः ॥ **नाणीति** ॥

(वाक्यार्थविवरणम्)
वचनद्वयं शङ्काग्रन्थानुसारेणेति ध्येयम् । ननु तत्रैव पूज्यत्वं पूजकत्वं न कुत इत्यत आह ।। **यत इत्यादिना** ।।

## वाक्यार्थमञ्जरी

पयोऽम्बुवदेवायस्कान्तोऽपि ईशाधीनोऽस्त्वित्यत आह ।। **उदाहरणेति** ।। तदेव व्यनक्ति ।। **न हीति** ।। न ऋत इति श्रुत्या ईशव्यतिरेकेण कस्यापि कर्मणो अनवस्थानाच्च न कोऽपि दृष्टान्तः सिद्ध्यति । अतोऽनपेक्षणीयत्वात्सद्भिरनादरणीयत्वान्नाचेतनस्य कर्तृत्वमित्यर्थः । 'निषुसीद गणपते गणेषु त्वामाहुर्विप्रतमं कवीनाम् । न ऋते त्वत्क्रियते किं चनारे महामर्कं मघवं चित्रमर्च' इति श्रुतिं व्याचष्टे ।। **इन्द्रियेति** ।। मघवच्छब्दार्थो धनवन्नित्यादि । निषुसीद अत्यन्तस्थितो भव । निस्स्वित्युपसर्गद्वयम् अर्कमित्यस्यार्थः परमानन्दमिति । त्वां त्वमेवेत्येतद्द्वयं क्रमेणोपपादयति ।। **यत इति** ।। विशब्दार्थो विशेषेणेति । आर इत्यस्य दूरे समीपेवेति ।

।। इति रचनानुपपत्त्यधिकरणम् ।। १ ।।

## २. अथ अन्यत्राभावाधिकरणम्

## सूत्रभाष्यम्

सेश्वरसाङ्ख्यमतं निराकरोति । यथा पृथिव्या एव पर्जन्यानुगृहीतं तृणादिकमुत्पद्यते, एवं प्रधानादीश्वरानुगृहीतं जगदित्यतो ब्रवीति–

**॥ ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ ॥ ५ ॥**

'यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः
ब्रह्मण्येवेदमाविरासीद् ब्रह्मणि स्थितं ब्रह्मणि लयमभ्युपैति ।
ब्रह्मैवाधस्ताद् ब्रह्मैवोपरिष्टाद् ब्रह्म मध्यतो ब्रह्म सर्वतः' ॥

'ब्रह्मैवेदं सर्वम्' (बृ.उ.४-५-१) इत्यादिश्रुतिभ्योऽन्यत्र जगतोऽभावात्तृणादीनां पर्जन्यवन्नानुग्राहकत्वमात्रमीश्वरस्य ।

'स एव भूयो निजवीर्यचोदितां स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अनामरूपात्मनि रूपनामनी विधित्समानोऽनुससार शास्तिकृत्' इति भागवते ।

'द्रव्यं कर्म च कालश्च' इत्यादि च । चशब्देन प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतम् ।

## सत्तर्कदीपावली

**अन्यत्रेत्यादिना ॥** ब्रह्मन्निव इति ब्रह्मणीति ग्राह्यम् । अग्निव्याप्तायःपिण्डे अयमग्निरितिवत् ब्रह्मव्याप्तं जगत् ब्रह्मैवेदं सर्वमिति श्रुत्योच्यते । सर्वान्तर्यामित्वेनात्र सर्वगत्वं नारायणस्य विवक्षितं नाकाशस्येव सर्वत्र स्थितिमात्रम् । सर्वान्तर्यामित्वादीश्वरस्य प्रकृत्यादिसत्ताप्रदत्वं तत्तच्छक्त्युद्बोधकत्वमन्यत्राभावाच्चेति सूत्रगतेन चशब्देन सूचितम् । पुराणवाक्याभ्यामित्युच्यते 'स एव भूयो निजवीर्यचोदितम्' इत्यनेन प्रकृतिशक्त्युद्बोधकत्वमुच्यते । 'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया' इत्यनेन प्रकृत्यादिसत्ताप्रदत्वमुच्यते । द्रव्यशब्देन पूर्वप्रकृता प्रकृतिरुच्यते । एवं नित्यानित्यजगन्नियन्तृत्वावगमात् परमेश्वरस्य तृणादिकस्य कार्यस्य पर्जन्यवन्नानुग्राहकत्वमात्रमित्यर्थः ।

## तत्त्वप्रदीपिका

निरीश्वरे निराकृते साङ्ख्ये साङ्ख्य एव सेश्वरो ब्रूते । यदि न केवलादचेतनादुत्पत्तिरुपपत्तिमती, अस्तु तर्हि तृणादौ पर्जन्यवज्जगज्जन्मनीश्वरस्यानुग्राहकत्वमात्रमिति । अतो ब्रूते– ॐ अन्यत्राभावाच्च न तृणादिवत् ॐ । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' । तत्सर्वं देशतः कालतो गुणतश्शक्तितश्च व्याप्य स्थितः । अन्तर्बहिश्च तद्देशे तद्रहितदेशे च व्याप्तस्तत्काले तद्रहिते काले च तद्भूतैस्तदभूतैर्गुणैः शक्तिभिश्च युक्तः । 'ब्रह्मैवेदं सर्वम्' इति सर्वस्य तदधीनत्वात् । 'तदधीनत्वादर्थवत्' इत्यादेः । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इत्यादेश्च । ब्रह्मणोऽन्यत्र जगतः सृष्ट्यादेः तच्छक्तेश्चाभावान्नानुग्राहकत्वमात्रं तस्य । किन्तु जगदुत्पादकत्वादिकमुपादानादिशक्तिप्रदत्वं चास्तीति ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति ॥ **सेश्वरेति** ॥ अत एवात्र विष्णोः स्वतन्त्रकर्तृत्वे सेश्वरसाङ्ख्यसमयविरोधनिरासादस्ति शास्त्रादिसङ्गतिः । स्वातन्त्र्येण जगत्कर्तेश्वर इति निगदितम् । तस्य च साङ्ख्यसमयविरोधे लक्षणानुपपत्तिः स्यादित्यवश्यं निरसनीयः । तद्धरेः स्वातन्त्र्येण जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति संशयः । मतविमतिः सन्देहबीजम् । पूर्वपक्षयति ॥ **यथेति** ॥ नेश्वरस्य स्वतन्त्रकर्तृत्वं युक्तम् । प्रधानादेव जगदुत्पत्तेः सम्भवात् । न चाचेतनस्य स्वतः प्रवृत्त्यनुपपत्तिरित्युक्तमेवेति वाच्यम् । प्रधानादेव जगदुत्पत्तावीश्वरस्यानुग्राहकत्वाभ्युपगमात् । तथा खलु पृथिव्येव तृणादिकार्याणां प्रधानं कारणं पर्जन्यानुग्रहेण चोत्पादयति । तथा प्रधानस्यैव प्राधान्यमीश्वरस्त्वनुग्राहकमात्रमिति न तस्य स्वातन्त्र्येण जगत्कारणत्वलक्षणं युक्तमिति भावः । सिद्धान्तयत्सूत्रमवतार्य व्याचष्टे ॥ **अत इति** ॥ युक्तमेव विष्णोर्जगत्कारणत्वं स्वातन्त्र्येण न तु यथा तृणादीनां पर्जन्योऽनुग्राहकस्तथानुग्राहकत्वमात्रम् । सर्वपदार्थानां सत्तादिप्रदानाय सर्वगतत्वोक्तेरीश्वरप्रेरणामन्तरेण कस्यापि वस्तुनः सत्त्वस्यैवाभावात् । न हि यदधीनं यस्य सत्तादि तत्तस्यानुग्राहकमात्रमिति भावः । ब्रह्मैवेदं सर्वमिति तदधीना सत्तेत्युच्यते । न केवलं कार्यस्येश्वराधीनत्वान्नानुग्राहकत्वमात्रं तस्य किं तु सर्वकारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्वम् । अतश्च विष्णोरेव स्वातन्त्र्यमिति सप्रमाणकं सूत्राक्षरार्थमाह ॥ **स इति** ॥ स एवेति हर्यधीनोद्बोधत्वं प्रकृतेरुच्यते द्रव्यमिति तदधीनसत्त्वम् । स्वजीवमायां स्वाधीनां जीवबन्धिकाम् । सिसृक्षतीं सर्जनोन्मुखीम् । आत्मनि आत्माधारत्वेन । चशब्देन सूचितमिति शेषः । अतः सेश्वरसाङ्ख्यमतस्याप्रामाणिकत्वेनाविरोधाद्युक्तं हरेर्जगत्कारणत्वलक्षणमिति सिद्धम् ।

## गुर्वर्थदीपिका

अनुग्राहकमात्रमित्यस्य स्वशक्त्यैव जगदाकारेण परिणमतः प्रधानस्य दूरे स्थित्वा पिण्डीकरणाय जलदानादिना किञ्चिदुपकारमात्रमित्यर्थः । **आत्मनि** आत्माधारत्वेनेत्यत्र आत्मं स्वमहिमप्रतिपादकनामरहितत्वात् प्राकृतरूपरहितत्वाच्चानामरूपेति विशेषणमुपस्कर्तव्यम् । 'रूपनामनी विधित्समानोऽनुससार' इत्यत्र प्रस्तुतरूपराहित्यस्यैव वक्तव्यत्वाद्रूपपदेन प्राकृतरूपमुक्त्वा तद्राहित्यमेवोच्यते । करिष्यमाणनामरूपयोः प्रागपि सत्त्वे करणायोगात् प्रागभावसूचनाय चेदं विशेषणम् । नाम्नो नित्यत्वेऽपि जगति तत्सम्बन्धकरणात्कार्यत्वं नाम्नाम् । नित्यसम्बन्धवति भगवत्येतादृशनामाभावाद्वाऽनामत्वमिति ज्ञेयम् । सूचितमिति शेष इति वदता 'अङ्गीकृतम्' इत्यत्रेति शब्दाध्याहारोऽप्यभिमतः । सेश्वरसाङ्ख्योऽपीश्वरे परमैश्वर्यानङ्गीकारादैश्वर्यरहितेश्वरस्य च वन्ध्यापुत्रवदभावान्निरीश्वरसाङ्ख्यवत् प्रकृतिमात्रकर्तृत्ववादीति भावेन तदनन्तरमेव तन्निरासायाप्यधिकरणारम्भ इति ज्ञेयम् ।

## भावबोधः

**सेश्वरसाङ्ख्यसमयेति** ॥ तथा च न निरीश्वरपक्षोक्तदोषोऽत्रेति पूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भावः ॥ **युक्तमिति** ॥ अत्र हरेः स्वातन्त्र्येण जगत्कर्तृत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं सेश्वरसाङ्ख्यसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं तत्परिकल्पितमीश्वरस्य पर्जन्यवत् प्रकृत्यनुग्राहकमात्रत्वं सम्भवत्युत न सम्भवतीति । तदर्थमीश्वरस्य प्रकृतिपर्जन्यादिसर्वसत्तादिप्रदत्वरूपप्राधान्ये प्रमाणं नास्त्युतास्तीति ॥ **सर्वपदार्थानामिति** ॥ तथा च तदुदाहरणं न प्रकृतानुपयुक्तमिति भावः । श्रुतेरभेदप्रतिपादकत्वभ्रमं वारयितुमाह– **तदधीनसत्तेत्युच्यत इति** ॥ स एवेत्यादिभाष्यं सौत्र 'च' शब्दव्याख्यानमित्याह– **न केवलमित्यादिना** ॥ **नानुग्राहकत्वमात्रमिति** ॥ निषेधार्थकनञ्समासोऽयम् । अनुग्राहकत्वाभावमात्रमित्यर्थः । तथा च न केवलम् 'अन्यत्राभावात्' इत्यनेनोक्तं कार्यस्येश्वराधीनत्वमेव सेश्वरसाङ्ख्योक्तप्रमाणसिद्धसौत्रचशब्दसूचितं सर्वहेतुभूतप्रकृतिसत्तादेरीश्वराधीनत्वमपि विरोधीत्यर्थः । स्वजीवेत्यत्र कर्मधारयत्वे तत्प्रतिपाद्याभेदस्य बाधितत्वेन षष्ठीतत्पुरुष इत्यभिप्रेत्याऽऽह– **स्वाधीनेति** ॥ चशब्देन सूचितमिति शेष इति । सत्तादिप्रदत्वाच्च प्रामाणिकैरङ्गीकृतमिति चशब्देन सूचितमित्यर्थः । इत्यन्यत्राऽभावाधिकरणम् ।

## भावदीपः

अत एवेत्युक्तं व्यनक्ति ॥ **अत्रेति** ॥ कर्तृत्वस्य परसंमतत्वात्स्वतन्त्रेत्युक्तम् । पूर्वोक्त-दोषासृष्टतोक्तिपरतया भाष्यमवतार्य व्याचष्टे ॥ **न चेति** ॥ भाष्ये तृणादिवदिति सूत्रांशानुरोधेन दृष्टान्ते दार्ष्टान्तिके च कार्यमात्रे पर्जन्याद्यनुग्रहोक्तावपि कारणेऽपि तदनुग्रहो ध्येयः सौत्रचशब्द-व्यावृत्त्यर्थत्वात्तस्येति भावेन कार्यकारणयोरुभयत्रानुग्रहान्वयाय पर्जन्यानुगृहीतानामित्युक्त्वा पर्जन्यानुग्रहेणेति ईश्वरस्तदनुग्राहकमात्रमिति चोक्तम् । आकाङ्क्षितं पूरयन् व्युत्क्रमेण भाष्यं व्याचष्टे ॥ **युक्तमेवेति** ॥ तृणादीनामित्यादेरर्थो न त्वित्यादि । यच्च किञ्चिदित्यादि सर्वगतत्व-श्रुत्युक्तेः प्रकृतोपयोगायोक्तम् ॥ **सर्वपदार्थानां सत्तादिप्रदानायेति** ॥ एतल्लाभोऽग्रे व्यक्तः । श्रुतिभ्य इत्यस्य भावार्थः ॥ **सर्वगतत्वोक्तेरिति** ॥ अन्यत्रेत्यादेः अन्यत्रान्याधीनत्वेन राज्ञि राष्ट्रमितिवत् । ईश्वरप्रेरणामन्तरेणेत्यादिरर्थः ॥ **तदधीना सत्तेति** ॥ 'यदधीना यस्य सत्ता तत्तदित्येव भण्यत' इत्युक्तेरिति भावः । स एवेत्यादिभाष्यं सौत्रचशब्दव्याख्यानमित्याह ॥ **न केवलमिति** ॥ तत्ताप्रदत्वं चेति चशब्दार्थव्यक्तिरियं भाष्यपदमेवानुवदति ॥ **नानुग्राहकत्व-मात्रमिति** ॥ नसमासेन समस्तमेतत्पदम् । अनुग्राहकत्वमात्रविरोधीत्यर्थः ॥ **तदधीनत्वमिति** ॥ नानुग्राहकत्वमात्रमित्यनुषङ्गः ॥ **सूत्राक्षरेति** ॥ च शब्दरूपेत्यर्थः । तथा च न केवलमन्यत्रा-भावादित्यनेनोक्तं कार्यस्येश्वराधीनत्वमेवेश्वरसाङ्ख्योक्तस्यानुग्राहकत्वमात्रस्य विरोधि किं तु स एवेत्यादिप्रमाणसिद्धं सौत्रचशब्दसूचितं सर्वहेतुभूतप्रकृतिसत्तादेरीश्वराधीनत्वमपि विरोधीत्यर्थः ॥ **सूचितमितीति** ॥ तथा च प्रकृतिसत्तादिप्रदत्वं चाङ्गीकृतं सूत्रकृतेति सौत्रचशब्देन सूचितमित्यर्थ इति भावः ॥ **अत इति** ॥ सर्वस्येशाधीनत्वावेदकश्रुतिस्मृतिविरोधादित्यर्थः ।

## अभिनवचन्द्रिका

**अधिकरणार्थमिति** ॥ पादादौ 'पादस्यैकार्थत्वादधिकरणभेदः किं निबन्धन' इति शङ्कोत्पन्ना । सा च पूर्वाधिकरणप्रतिपाद्यप्रदर्शनेन प्रथमाधिकरणविषये निवृत्तापि, द्वितीया-द्यधिकरणविषयेऽनुवर्तते एवेति तामेव शङ्कां द्वितीयाधिकरणविषये परिहर्तुं एतदधिकरणार्थं दर्शयतीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । कार्यसत्तादेरीश्वराधीनत्वेऽपि ईश्वरोऽनुग्राहक एव न कारणमिति किं न स्यादित्यत आह– **न हीति** ॥ असतः सत्तासम्बन्धस्यैवोत्पत्तित्वेन कार्यसत्तायाः परमेश्वराधीनत्वमङ्गीकृत्य कारणत्वं नेति वचनं 'माता वन्ध्या' इतिवद्व्याहतमिति

(अभिनवचन्द्रिका)

भावः । नन्वीश्वरस्य जगत्कारणत्वप्रतिपादनमयुक्तम्, 'ब्रह्मैवेदं सर्वम्' इति तस्य जगदात्मकत्वाभिधानादित्यत आह– **ब्रह्मैवेदमिति** ॥ तदधीना सर्वसत्तेति हेतोर्ब्रह्मैवेदं सर्वमित्युच्यते न तु तत्तादात्म्याभिप्रायेणेति भावः । 'स एव भूयो निजवीर्यचोदिताम्' इत्यादि भाष्यमसङ्गतम् । परस्परमन्वयविधुरत्वादित्याशङ्कापरिहाराय भाष्यमवतारयति – **न केवलमिति** ॥ न केवलं कार्यस्येश्वराधीनत्वादित्यतः परं 'नानुग्राहकत्वमात्रम्' इति प्रक्षिप्तम् । 'ईश्वराधीनत्वात्' इति प्रथमी च प्रक्षिप्ता । ततश्चैवं टीकावाक्यपाठः । 'न केवलं कार्यस्येश्वराधीनत्वं किन्तु सर्वकारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्वम् । अतश्च विष्णोरेव स्वातन्त्र्यमिति सप्रमाणकं सूत्राक्षरार्थमाह' इति । अवश्यं चैतदेवं विज्ञेयम् नानुग्राहकत्वमात्रमित्यर्थस्य उदाहरिष्यमाणप्रमाणद्वयेन 'चशब्देन' इति भाष्येण चाभावात् । कार्यस्येश्वराधीनत्वादिति हेतोः नानुग्राहकत्वमित्यनेनैव 'किं तु सर्वकारणत्वेनाभ्युपगतप्रकृतिसत्तादेरपि तदधीनत्वम्' इत्यनेनाप्यन्वयाभावाच्च । अस्य 'अतश्च विष्णोरेव स्वातन्त्र्यम्' इत्युत्तरग्रन्थेनान्वयात् ॥ **सूत्राक्षरार्थमिति** ॥ सूत्रचशब्दार्थमित्यर्थः ॥ **आत्मनि आत्माधारत्वेनेति** ॥ 'अनामरूपात्मनि' इत्यत्रत्यात्मनीतिशब्दस्य व्याख्यानमात्माधारत्वेनेति ।

**पूर्वपक्षस्तु** – नेश्वरस्य स्वातन्त्र्येण कर्तृत्वं युक्तम् । परमेश्वरानुगृहीतप्रधानादेव पर्जन्यानुगृहीतपृथिव्या अङ्कुरोत्पत्तिवत् जगदुत्पत्तिसम्भवात् । अतो नेश्वरस्य स्वातन्त्र्येण जगत्कारणत्वलक्षणं युक्तमिति ।

**सिद्धान्तस्तु**– युक्तमेव विष्णोर्जगत्कारणत्वं स्वातन्त्र्येण तत्प्रेरणामन्तरेण कस्यापि वस्तुनोऽभावात् । मूलकारणभूतायाः प्रकृतेरपि तदधीनसत्ताकत्वाच्च । अतः सेश्वरसाङ्ख्यमतस्याप्रामाणिकत्वेनाऽविरोधकत्वाद्युक्तं हरेर्जगत्कारणत्वलक्षणमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**सेश्वरेति** ॥ न ऋते इत्यादिश्रुतेर्गुणभूतेश्वरविषयत्वसम्भवात् व्यतिरेकानवस्थितेरित्यधिकरणोक्तदोषो नेत्याक्षेपेण प्रवृत्तेरनन्तरसङ्गतिः । इदं च मतं सेश्वरमपि साङ्ख्यमतत्वादीश्वरस्य स्वातन्त्र्यास्वीकारेण फलतो निरीश्वरवादान्तर्भूतत्वात् न सेश्वरवैशेषिकादिपरीक्षायां निरस्तम् ॥ **युक्तमिति** ॥ अत्र विष्णोः स्वातन्त्र्येण जगत्कारणत्वं अयुक्तमुत युक्तमिति चिन्ता । तदर्थ-

(वाक्यार्थमुक्तावली)

मीश्वरस्य पर्जन्यवदनुग्राहकत्वमात्रमुत प्रकृतिसत्तादिप्रदत्वमस्तीति ॥ **प्रधानादेव जगदुत्पत्तौ ईश्वरस्यानुग्राहकत्वाभ्युपगमादिति** ॥ अत्रानुग्राहकत्वं नाम फलोपकार्यङ्गत्वमेव न तु साधनोपकारित्वम् । अत एव भाष्ये पर्जन्यानुगृहीतं तृणादीश्वरानुगृहीतं जगदित्युक्तम् । अन्यथा पर्जन्यानुगृहीताया इत्यवक्ष्यत् । टीकायां च यथा तृणादीनां पर्जन्योऽनुग्राहक इति वक्ष्यति ।

यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥

इति श्रुतौ सर्वगतत्वोक्तेः प्रकृतोपयोगमाह ॥ **सत्तादिप्रदानायेति** ॥ स एवेत्यादिभाष्यं सौत्र चशब्दव्याख्यानमित्याह ॥ **न केवलमित्यादिना** ॥ नानुग्राहकत्वाभावमात्रमित्यर्थः । प्रकृति सत्तादेरपीत्यादिपदेन तच्छक्त्युद्बोधः ॥ **सूत्राक्षरेति** ॥ चशब्दरूपसूत्राक्षरमाहेत्यर्थः । तथा च न केवलमन्यत्राभावादित्यनेनोक्तं कार्यस्येश्वराधीनत्वमेव सेश्वरसाङ्ख्योक्तस्यानुग्राहकत्वमात्रस्य विरोधि, किन्तु स एवेत्यादिभाष्योक्तप्रमाणसिद्धं सौत्रचशब्दसमुच्चितं सर्वकारणप्रकृतिसत्तादेरीश्वराधीनत्वमपि विरोधीत्यर्थः ॥ **स्वाधीनामिति** ॥ स्वा च सा जीवमाया चेति विग्रहः इति भावः । जडस्य सिसृक्षाभावादाह ॥ **सर्जनेति** ॥ अनामरूपात्मनीत्यस्य रूपनामनीत्यनेन व्याघातनिरासाय सप्तम्यर्थमाह ॥ **आत्माधारत्वेनेति** ॥ चशब्देनेत्यतः परं सूचितमिति शेष इत्यर्थ इति भावः । तथा च इत्यादि च प्रमाणजातं चशब्देन सूचितम् । प्रकृतिसत्तादिप्रदत्वं च प्रामाणिकैरङ्गीकृतमिति भाष्यार्थ इति ज्ञेयम् । चन्द्रिकाभावबोधयोस्तु ॥ **सूचितमिति शेष इति** ॥ सत्तादिप्रदत्वं च प्रामाणिकैरङ्गीकृतमिति सौत्रचशब्देन सूचितमित्यर्थ इत्युक्तम् । अनन्तभट्टीये तु इत्यादिनाङ्गीकृतं सत्तादिप्रदत्वं चशब्देन सूचितमित्यर्थ उक्तः । ततश्च अन्यत्र ईशादन्याधारत्वेन जगतोऽभावात्तत्प्रेरणं विना कस्यापि कार्यस्याभावाच्चशब्दात् प्रकृत्यादिकारणसत्तादेरपि ईशायत्तत्वस्य प्रमितत्वाच्च तृणादीनां पर्जन्य इव नेशोऽनुग्राहकमात्रम् । किन्तु स्वतन्त्र एवेति सूत्रार्थः ।

## तत्त्वसुबोधिनी

ननु निरीश्वरजीवसहितप्रधानकर्तृत्ववादिमतद्वयं सेश्वरादाद्येऽतिविरोधित्वात्तन्निरसनीयमिति चेन्न । सेश्वरसांख्यमतस्य न तृप्तः इत्यादिश्रुतेर्गुणभूतेश्वरविषयत्वसम्भवात् व्यतिरेकानवस्थितेरिति प्रथमाधिकरणोक्तदोषेणेत्याक्षेपेण प्रवृत्तेराक्षेपिकसङ्गतिसत्त्वात् । अत्र तन्निरास इत्याह– **सेश्वर-**

(तत्त्वसुबोधिनी)

**साङ्ख्यसमयेति** ॥ कुतोऽनुग्राहकत्वाभावः इत्यत आह ॥ **ईश्वरेति** ॥ ईश्वरप्रेरणाभावे वस्तुनः कुतो न सत्त्वमित्यत उक्तम् ॥ **सर्वगतत्वोक्तेरिति** ॥ ननु सर्वगतत्वकथनं स्वरूपकथनमित्यतः सर्वपदार्थानां सत्तादिप्रदानायेत्युक्तम् । न हि यच्च किञ्चिदित्यादिश्रुतौ सर्वगतत्वं वस्तुस्थिति-कथनार्थमुक्तं किन्तु सत्तादिप्रदानायोक्तम् । तथा च ईश्वरप्रेरणाभावे वस्तुनः सत्वस्यैवासम्भवान्न तस्य पर्जन्यवदनुग्राहकत्वमिति भावः । तथा च तदुदाहरणम् प्रकृतानुपयुक्तमिति भावः । अस्तु सत्तादर्भगवदधीनत्वं तथाप्यनुग्राहकत्वमात्रमेवास्तु इत्यत आह ॥ **न हीति** ॥ श्रुतेर-भेदप्रतिपादकत्वभ्रमं निवारयितुं आह– **तदधीनेति** ॥ स एवेत्यादिभाष्यं सौत्रचशब्दव्याख्यानं इत्याह– **न केवलमित्यादिना** ॥ नानुग्राहकत्वमात्रमिति निषेधार्थकसमासोऽयम् । अनुग्राह-कत्वाभावमात्रमित्यर्थः । तथा च न केवलमन्यत्राभावादित्यनेनोक्तं कार्यस्य ईश्वराधीनत्वमेव, सेश्वरसाङ्ख्योक्तस्यानुग्राहकत्वमात्रस्य विरोधि, किन्तु स एवेत्यादिभाष्योक्तप्रमाणसिद्धं सौत्रच-शब्दसूचितसर्वहेतुभूतप्रकृतसत्तादेरीश्वराधीनत्वमपि विरोधि इत्यर्थः । स्वजीवेत्यत्र कर्मधारयस्य तत्प्रतिपाद्याभेदस्य बाधितत्वेनासम्भवात् षष्ठीतत्पुरुष इत्यभिप्रेत्याह **स्वाधीनेति** ॥ **'चशब्देन सूचितमिति शेषः'** इति । सत्ताप्रदत्वं च प्रामाणिकैरङ्गीकृतमिति चशब्देन सूचितमित्यर्थः ।

## वाक्यार्थविवरणम्

इत्युच्यत इति । 'यदधीना यस्य सत्ता तत्तदेवेति भण्यते' इति प्रमाणादिति भावः ॥ **सूत्राक्षरेति** ॥ सूत्रगतचशब्देत्यर्थः ॥ **स एवेति** ॥ श्लोके 'स्वजीवमायां सिसृक्षतीम्' इत्यनेनेति शेषः । द्रव्यम् । प्रकृतिः । आत्मनि । स्वस्मिन् । रूपनामनी इति प्रतीतिनिरासायाह ॥ **आत्माधारत्वेनेति** ॥

## वाक्यार्थमञ्जरी

तर्हि प्रधानस्य प्राधान्यं न स्यादित्यत आह ॥ **यथेति** ॥ अन्यत्र ईशादन्याधारत्वे न जगतो अभावात्तत्प्रेरणां विना कस्यापि कार्यस्य सत्वाभावादिति यावत् । तं विना प्रकृत्यादि-कारणसत्वाभावाच्च तृणादीनां पर्जन्य इव नेश्वरोऽनुग्राहकमात्रं किं तु सर्वस्वतन्त्र एवेत्यर्थः ॥ **सर्वपदार्थानामिति** ॥ तथा च तदुदाहरणं न प्रकृतानुपयोगीति भावः । अभेदप्रतिपादकत्वभ्रमं वारयति ॥ **तदधीनसत्तेति** ॥ द्रव्यं प्रकृतिः ॥ **चशब्देन सूचितमिति** ॥ कारणसत्तादिप्रदत्वं च प्रामाणिकैरङ्गीकृतमिति चशब्देन सूचितमित्यर्थः ।

॥ इति अन्यत्राभावाधिकरणम् ॥ २ ॥

# ३. अथ अभ्युपगमाधिकरणम्

## सूत्रभाष्यम्

लोकायतिकपक्षं निराकरोति–

**॥ ॐ अभ्युपगमेऽप्यर्थाभावात् ॐ ॥ ६ ॥**

**यस्य धर्माधर्मौ न स्तः तत्सिद्धान्ते किं प्रयोजनम् । अतः स्वव्याहतेरेवोपेक्ष्यः ।**

## सत्तर्कदीपावली

प्रत्यक्षैकप्रमाणवादिनो जगदनित्यं मन्यमानस्य लोकायतस्य शास्त्रं विषयप्रयोजनरहितत्वादुपेक्षणीयम् । तथा हि । घटादेस्तावत्प्रत्यक्षसिद्धत्वेन ज्ञापनानुपयोगान्नासौ विषयः । धर्मादेरनङ्गीकारान्न सोऽपि विषयो वक्तुं शक्यते । धर्मार्थमधर्मनिवृत्त्यर्थं च लोकायासनिवृत्तेः धर्माद्यभाववादस्य लोकोपकारः प्रयोजनमिति न वाच्यम् । धर्माद्यभावज्ञाने परस्परहिंसादिनापकारस्यैव प्राप्तेः । न च लोकोपकारेण चार्वाकस्य प्रयोजनम् । अदृष्टाभावात् । अतो धर्माद्यभावं वदत स्वसमयस्यानर्थक्यमङ्गीकृतमेवेति नासौ समयीत्येतत्प्रतिपादयति ॥ **लोकेत्यादिना** ॥

## तत्त्वप्रदीपिका

निरीश्वरनिरासप्रस्तावे तदनतिविप्रकृष्टत्वाल्लोकायतिकपक्षो निरस्यते । सेश्वरः कश्चित्साङ्ख्यत्वसामान्यादन्तरा तं चामुं च निराकृतः । न च तदीश्वरस्येश्वरत्वम् । अनुग्रहमात्रशक्तिमत्त्वेनाऽस्वातन्त्र्यात् । अव्याप्तत्वाच्च केषाञ्चित्तद्यूथ्यानाम् । अतो निराकर्तव्योऽसौ । स्वतन्त्रं सर्वशक्तिं सर्वव्याप्तमीशं विदुषां न चानीश्वरवादिभ्य ईश्वरमनीश्वरं वदतामतिवैशिष्ट्यमस्ति । अश्रोत्रियत्वं च सपङ्क्तीनां व्यञ्जयितुरन्तराले वहिश्वरस्योपालम्भस्सभ्यानां सारस्यमाधत्ते । गुणोपसंहारपादे समयनिराकरणमनवसरदुःस्थं च ।

अभ्युपगमेऽप्यर्थाभावात् । यस्य धर्माधर्मौ तत्फलं च स्वर्गनिरयनिश्श्रेयसादि नास्ति प्रमाणाभावात्तत्सिद्धान्ते शास्त्राभ्युपगत्यैव न प्रयोजनम् । प्रत्यक्षैकप्रमाणप्रणयिनश्च न परप्रतिबोधनप्रयोजनं शास्त्रम् । अतश्च न धर्माद्यभावबोधनेन परोपकारः प्रयोजनं वाच्यम् । तेन च परोपकारो न प्रत्यक्षः । केन च तदभावमयमज्ञो व्यज्ञासीदनादृतान्यमानः । अनुपलब्धिमात्रादभावनिश्चयश्चातिप्रसङ्गी । न च लोकोपकारादपि तस्य प्रयोजनम् । अदृष्टाभावात् । सुखदुःखादेः स्वाभाविकत्वात् । प्रत्युत

(तत्त्वप्रदीपिका)
हिंसादोषनिषेधनात्स्वस्यापि वधाद्यनर्थप्राप्तिः । अतः स्वव्याहतेरेवोपेक्ष्यः । स्वव्याहतिर्हि महतीयम्-अनुमानमागमश्च न प्रमाणं व्यभिचारादिति मद्वाक्यादवगन्तव्यमिति । निष्फलं मच्छास्त्रमिति तु महीयसी । स्ववधात्र दोष इति महिष्ठा । अतो न तदुत्तरे परेण प्रयतनीयमित्यर्थः ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति ॥ **लोकायतिकेति** ॥ अत एवात्र विष्णोर्जगत्कारणत्वे चार्वाक-समयविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । हरिर्जगत्कर्तेत्युक्तम् । तत्र चार्वाकमतविरोधेनाभावा-पत्तेस्तन्निराकार्यमेव । तदीश्वरस्य जगत्कर्तृत्वं विषयः । युक्तं न वेति सन्देहः । विप्रतिपत्तिः सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । अन्तरेणापीश्वरं पूर्वपूर्वस्मादुत्तरोत्तरोत्पत्तिसम्भवात् । क्वचित्स्वभावादेव मदिरोत्पत्तिवदुपपत्तेश्च । न च साङ्कर्यं प्रतीव श्रुत्यादिवाधो वक्तुं युक्तः । तस्या-प्रामाण्यात् । न च धर्माद्यसिद्धिविरोधः । तदनभ्युपगमात् । न हि धर्माद्यनभ्युपगमे किंचिद्वाधकं पश्यामः । न ह्येतस्याभावापराधेन सत्यामपि बाह्यसामग्र्यां कार्यानुत्पादो दृष्टो येन जानीमोऽस्त्य-लौकिकं कारणमिति । अतोऽदृष्टस्य वस्तुनोऽभावान्नेश्वरस्य जगत्कारणत्वलक्षणं युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अभ्युपगमेऽपीति** ॥ युक्तमेव विष्णोर्जगत्कारणत्वम् । यदुक्तमदृष्टार्थ एव नास्तीति कुतो जगदीश्वरः कुतस्तरां जगत्कारणत्वमिति । तत्र प्रष्टव्यम् । तत्सिद्धान्ते किं प्रयोजनमिति । अपेक्षितं खलु शास्त्रेऽधिकार्यादि । तत्र न तावद्धर्मस्वर्गापवर्गादि अनभ्युपगमात् । नापि दृष्टं धनादि तदभावात् । वार्तादिप्रयोजनत्वाच्च तस्य । न च धर्माद्यभाव-बोधनद्वारा लोकोपकारः । तदभावज्ञाने परस्परहिंसादिनापकारस्यैव प्राप्तेः । न चोपकारोऽपि स्वरूपतः प्रयोजनमिति तेनापि प्रयोजनं वाच्यम् । न तावददृष्टं तदभावात् । नापि दृष्टम् । न हि कुवर्त्मना गच्छन्तं प्रतिमार्गोपदेष्टाऽऽविपालो लौकिकैरदृष्टनिरपेक्षैरुपक्रियते । अतो न किंचित्समयस्य प्रयोजनम् । नापि विषयः अदृष्टाभावात् । नापि दृष्टः । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । नापि धर्मादिभ्रान्तिनिरासाय तदभावः । तदुपायाभावात् । न हि प्रत्यक्षं धर्माद्यभावं गृह्णाति । अपरामर्शेऽदर्शनात् । परामर्शे दर्शनं तु नानुमानाद्भियते । विषयप्रयोजनाभावे काऽधिकारिणं प्रत्याशा । माऽस्तु मत्सिद्धान्ते प्रयोजनादीति चेत्तर्हि यः सिद्धान्तोऽसौ प्रयोजनादिमानिति नियमात् । अतः सिद्धान्तेऽपि प्रयोजनाद्यभावाद्यभ्युपगमे तस्य स्वव्याहतिः स्यात् । न ह्यभ्युपगमोऽप्रयोजनश्चेति युक्तम् । मे माता वन्ध्येतिवत् स्वव्याहतं च वदन् भवानुपेक्ष्य एव जायते न तु परिहाराय विषय इति भावः । अतश्चार्वाकसमयस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं जगत्कारणत्वं ब्रह्मण इति सिद्धम् ।

## गुर्वर्थदीपिका

पूर्वपूर्वस्मादिति महीमहीधरादेरुत्पत्तिकथनं क्वचित् स्वभावादेव मदिरोत्पत्तिवदिति जीवोत्पत्तेः कथनम् । नारिकेलादिवृक्षान्तर्गतनीरस्यैव क्षुरधारया कुसुमाग्रच्छेदे सति तस्यैव नीरस्य मदिरात्मकरूपान्तरवद्रूपत्रययोगाख्यविशेषकारणेन देहस्यैव जीवत्वमिति चार्वाकैरुक्तत्वादिति भावः । नापि दृष्टं धनादीत्यत्र लोकोपकारे कृते सति लोकैर्दीयमानं धनधान्यादिकं दृष्टमित्युच्यते। तदभावादित्यस्य तस्य धनस्य शास्त्रसाध्यत्वाभावादित्यर्थः ॥ वार्तादीति ॥ कृष्यादिवैश्यवृत्तिः । आदिपदेन चौर्यादिकं गृह्यते । उपक्रियत इत्यत्र उपकारः प्रियवचनताम्बूलदानादिः। अपरामर्शेऽदर्शनादित्यत्र अपरामर्शो घटादीनामिवेन्द्रियस्य सम्प्रयोगमात्रं, परामर्शस्तु, अस्ति चेदुपलभ्येत न चोपलभ्यते तस्मान्नास्तीति तर्कः । अभ्युपगच्छति विवक्षितं प्रमेयमनेनेत्यभ्युपगमः शास्त्ररूपः सिद्धान्तः । आयाससाध्यबहुतरशास्त्ररचनाच्च, प्रयोजने सत्येव स्यान्नान्यथेति भावः । सौत्राऽपि पदसूचितं विषयाद्यभावं च सूचयति नापि विषय इति ।

## भावबोधः

**चार्वाकसमयेति** ॥ तथा च मा भूदचेतनस्य कर्तृत्वम्, शरीरस्य चेतनत्वेन कर्तृत्वापत्तेरीश्वरवैयर्थ्यात् । न च साङ्ख्यं प्रतीव श्रुत्यादिबाधो वक्तुं युक्तः । तस्याप्रामाण्याङ्गीकारादित्यभ्यधिकाशङ्कया पूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भावः ॥ **युक्तं न वेति** ॥ अत्रेश्वरस्य जगत्कर्तृत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं चार्वाकसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं तच्छास्त्रे विषयप्रयोजनादिकमस्त्युत नास्तीति । **पूर्वपूर्वस्मादिति** ॥ देहरूपचेतनादित्यर्थः । प्रकारान्तरेणापि देहरूपचेतनोत्पत्त्युपपत्तिमाह– **क्वचिदिति** ॥ यथा क्रमुकचूर्णपूर्णादीनां प्रत्येकं मदजनकत्वाभावेऽपि समुदाये तज्जनकत्वम् । तथा पृथिव्यादिभूतानां प्रत्येकं चैतन्योत्पादकत्वाभावेऽपि समुदितभूतचतुष्टस्य स्वभावादेव चैतन्यजनकत्वोपपत्तेश्चेत्यर्थः । समुदितानामपि भूतानां न सर्वत्र चैतन्योत्पादकत्वमित्यभिप्रेत्य क्वचिदित्युक्तम् । **तदभावादिति** । श्रुतशास्त्रस्यापि धनाद्यभावदर्शनादित्यर्थः । सूत्रभाष्ययोरर्थप्रयोजनशब्दाभ्यां न केवलं फलमात्रं विवक्षितम्, किं तु विषयोऽपीत्याह– **नापि विषय इति** ॥ **अपरामर्शे अदर्शनादिति** । इन्द्रियसन्निकृष्टघटादिप्रतियोगिकाभावज्ञानस्येव धर्माद्यभावज्ञानस्य सदिति जायमानस्याऽदर्शनादित्यर्थः ।

(भावबोधः)

ननु घटोऽस्ति न वेति परामर्शानन्तरं घटो नास्ति अनुपलभ्यमानत्वादिति घटाभावज्ञान-वदत्रापि धर्माभावज्ञानं स्यादित्यत आह– **परामर्श इति** ॥ अनुमानं तु त्वन्मते न प्रमाणमिति भावः । विरोधस्फोटकसौत्रादिपदव्याख्यानरूपं स्वव्याहतेरेवेति भाष्यं व्याचष्टे– अतः **सिद्धान्तेऽपीति** ॥ अनेन सौत्राभ्युपगमशब्दार्थोऽप्युक्त इति । 'सिद्धान्त' इति 'मास्तु प्रयोजनम्' इत्युक्त्योर्व्याहतिमुपपादयितुं तदर्थयोर्विरोधमाह– **न ह्यभ्युपगम इति** ॥

## भावदीपः

अत एवेत्युक्तार्थम् । एवमग्रेऽपि । कथं तर्हि प्रथमोत्पत्तिरित्यत आह ॥ **क्वचिदिति** ॥ धान्यादितो यथा मदिरोत्पत्तिस्तथा पृथिव्यादिभूतस्वभावादेवेत्यर्थः । पूर्वोक्तदोषास्पृष्टतामाह ॥ **न चेति** ॥ 'चार्वाकैरुच्यते मानमक्षजं नापरं क्वचित्' इत्यनुभाष्योक्ततन्मतानुरोधेन हेतुमाह ॥ **तस्येति** ॥ यस्येत्यादिभाष्यसूचितमाह ॥ **तदनभ्युपगमादिति** ॥ कार्यानुत्पत्तिरेव बाधिकेत्यत आह ॥ **न ह्येतस्येति** ॥ **अत इति** ॥ दृष्टसामग्र्यैव कार्योत्पत्तिसम्भवादित्यर्थः । किं प्रयोजनमिति भाष्यं प्रश्नार्थत्वेन व्याचष्टे ॥ **तत्र प्रष्टव्यमिति** ॥ किं शब्दस्याक्षेपार्थत्वं मत्वा यस्येत्यादिभाष्यतात्पर्यमाह ॥ **न तावदिति** ॥ भाष्येऽधर्मशब्दो धर्मादन्यतज्जन्यस्वर्गादिपर इति दर्शितम् । एतेनाभ्युपगमेऽपि त्वदीयसिद्धान्तेऽप्यर्थाभावात् धर्मादिलक्षणादृष्टरूपप्रयोजनाभावा-भ्युपगमाददृष्टं प्रयोजनं नास्तीति सूत्रार्थो दर्शितः । आक्षेपार्थकभाष्यस्थकिंशब्देन सूचितं दृष्ट-फलाभावं च व्यनक्ति ॥ **नापीत्यादिना** ॥ वार्ता वाणिज्यम् । एतेनार्थाभावात् शास्त्रेण धनादिरूपदृष्टप्रयोजनाभावात् । अभ्युपगमे त्वदीयसिद्धान्ते दृष्टमपि प्रयोजनं नास्तीति सूत्रार्थो दर्शितः । न च तेन लोकोपकारः । धर्माद्यभावज्ञाने परस्परहिंसादिनाऽपकारस्यैव प्राप्तेरिति तत्त्वनिर्णयोक्तं हृदि कृत्वाह ॥ **न चेति** ॥ **लोकोपकार इति** ॥ इदानीं धर्मादिबुध्या कामोपभोगोपरुद्धानां लोकानां धर्माद्यभावबोधने यथेष्टं प्रवृत्तिसम्भवादुपकारः प्रयोजनं भवतीत्यर्थः ॥ **परस्परहिंसेति** ॥ धनवनिताद्यपहारार्थमिति भावः । एतेनाभ्युपगमेऽपि लोकोप-कारः फलमित्यङ्गीकारेऽपि अर्थाभावाच्छास्त्राल्लोकोपकाररूपप्रयोजनस्याभावात् प्रत्युतानर्थस्यैव भावात् । तत्सिद्धान्ते लोकोपकारोऽपि फलं न भवतीत्यपि सूत्रवृत्तिर्दर्शिता । न चोपकारेण तस्य प्रयोजनं अदृष्टाभावादिति तत्त्वनिर्णयोक्त्यनुरोधेन लोकोपकारेणापि किं प्रयोजनमिति भाष्यार्थमुपेत्याह ॥ **न चेति** ॥ अदृष्टाभावेनैव दृष्टमपि नेत्याह ॥ **नापि दृष्टमिति** ॥

(भावदीपः)

**ननु कथं दृष्टं नास्ति** । उपकारकर्तरि उपकृतो लोकः प्रत्युपकारं करिष्यति । यथा लोके अजाविपालाय तेनोपदिष्टमार्गो लोको द्रविणादि ददाति तद्वदित्यत आह ॥ **न हीति** ॥ सत्य-मेतदविपालो लौकिकैरुपक्रियत इति । तदुपकर्तुः प्रत्युपकारादद्दष्टमस्तीत्यनुसन्धानस्य सत्त्वात् त्वया तु तदनुसन्धानमदृष्टाभावबोधनेन त्याजितमिति उपकृतोऽपि लोकः किमर्थं प्रत्युपकारं कुर्यादिति भावः । **अयमप्यर्थः** पूर्ववत्सूत्रारूढ ऊह्यः । भाष्ये प्रयोजनपदेन प्रयुज्यते प्रवर्त्यते अधिकारी येनेति व्युत्पत्या विषयपरोऽपीति भावेन तद्भाष्यं विषयाक्षेपपरतया व्याचष्टे ॥ **नापीति** ॥ **अप्राप्त इति** ॥ मानान्तरावेद्यस्यैव शास्त्रवेद्यत्वादित्यर्थः । एतेनार्थाभावात् दृष्टादृष्ट-रूपविषयाभावादिति सूत्रार्थो दर्शितः ॥ **अपरामर्श इति** ॥ धर्मादिकं नास्ति प्रत्यक्षेणानुप-लम्भादित्यादिपरामर्शाभावे धर्माद्यभावस्याप्रतीतेः ॥ **परामर्श इति** ॥ परामर्शे धर्माद्यभावदर्शनं त्वित्यर्थः । परामर्शपदेनानुमितिकरणस्य दर्शनपदेनानुमितेश्च त्वयैवोक्तत्वादिति भावः । अतः स्वव्याहतेरेवेति भाष्यं विवरितुमाह ॥ **मास्त्विति** ॥ अत इति भाष्यस्थपदानुवादः तस्यार्थः ॥ **सिद्धान्तेऽपीत्यादि** ॥ एतेनाभ्युपगमेऽप्यर्थाभावादिति सूत्रमर्थगत्या व्याख्यातं भवति । स्वव्याहतिमुपपादयति ॥ **न हीति** ॥ मत्सिद्धान्त इत्यनेन सप्रयोजनत्वाद्यविनाभूतसिद्धान्तत्व-मभ्युपगम्य मास्तु प्रयोजनादीत्यनेनाप्रयोजकत्वाद्युक्तिर्व्याहतेत्यर्थः । तेनानिष्टं कथं भवेदित्यनु-व्याख्यानसुधायां नञा निर्दिष्टमनित्यमित्युक्तदिशा वाक्यादौ नेति वक्तव्यमिति निषेधस्या-नित्यत्वान्मे मातेति प्रयोगः साधुः । अत्र भाष्ये उपेक्ष्य इत्युक्त्या टीकायां न युक्तमित्युक्त्या सूत्रे पूर्वस्मान्नञनुवृत्तिः सूचिता ॥ **अत इति** ॥ स्वव्याहतत्वादित्यर्थः ।

## अभिनवचन्द्रिका

पूर्वाचेतनादुत्तराचेतनोत्पत्तावपि देहे चैतन्योत्पत्तिः कथमित्यत आह– **क्वचिदिति** ॥ वृक्षान्तरस्य मदिरोत्पादकत्वाभावेऽपि वृक्षविशेषस्य स्वभावात्तज्जनकत्ववत्, घटादिरूपाचेतनेषु चैतन्योत्पादकत्वाभावेऽपि देहरूपाचेतनस्वभावादेव चैतन्योत्पत्तिरिति भावः ॥ **अतोऽदृष्टस्येति** ॥ अतीन्द्रियानङ्गीकारे बाधकाभावाददृष्टं वस्त्वेव नास्ति । ततश्च कुत ईश्वरः, कुतस्तमां तज्जगत्कारणत्वं स्यात् । न कुतोऽपीति ईश्वरस्योक्तं जगत्कारणत्वलक्षणं न युक्तमिति प्राप्ते सिद्धान्तयत् सूत्रमुपन्यस्य व्याचष्ट इत्यर्थः । तत्र 'प्रष्टव्यम्' इत्यारभ्य अधिकरणसमाप्तिपर्यन्तं टीकार्थोऽस्माभिर्न ज्ञात इति टीका न व्याख्यायते ।

(अभिनवचन्द्रिका)

पूर्वपक्षस्तु– न युक्तं विष्णोर्जगत्कारणत्वम्, अन्तरेणापीश्वरं पूर्वस्मात्पूर्वस्मादुत्तरोत्तरोत्पत्तिसम्भवात् । चैतन्योत्पत्तेरपि मदिरोत्पत्तिवत् स्वभावादेवोपपत्तेः । न च श्रुत्यादिबाधो वक्तुं युक्तः । तस्याप्रामाण्यात् । न च तस्याप्रामाण्ये धर्माद्यसिद्धिप्रसङ्गः । अतीन्द्रियवस्तुनोऽभावेनेष्टत्वात् । अत ईश्वराभावान्नेश्वरस्य जगत्कारणत्वलक्षणं युक्तमिति ।

सिद्धान्तस्तु– युक्तमेव विष्णोर्जगत्कारणत्वं, चार्वाकसमयस्य विषयप्रयोजनादिशून्यत्वेनाप्रमाणत्वेन विरोधाभावात् । तथा हि न तावच्चार्वाकसमयस्यातीन्द्रियं विषयः तदभावात् । नाप्यैन्द्रियिकं, तस्य प्रत्यक्षसिद्धत्वेन शास्त्रानपेक्षणात् । नापि स्वर्गापवर्गादिश्रोतृफलं तदभावात् । नापि दृष्टं धनादि, तस्य कृष्यादिलघूपायसाध्यत्वात् । नापि प्रणेतुः प्रयोजनं पश्यामः, न च धर्माद्यभावप्रतिपादनद्वारा लोकोपकारः प्रयोजनमिति वाच्यम् । धर्माधर्माद्यभावज्ञाने परस्परहिंसादिना अपकारस्यैव प्राप्तेः । नापि उपकारः स्वतः प्रयोजनम्, सुखदुःखावाप्तिहानिरूपत्वाभावात् । न वा तेनापि किञ्चित्साध्यं प्रयोजनं पश्यामः । एवंविधे अधिकारी दूरोत्सारितः । तदभावादेव सम्बन्धोऽपि । अतः चार्वाकसमयस्याऽप्रामाणिकत्वाद्युक्तं जगत्कारणत्वं हरेरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

ननु लोकायतेनेश्वराद्यनङ्गीकारान्निरीश्वरसांख्यमतसन्निकृष्टत्वात् द्वितीयाधिकरणे वा असाङ्ख्यत्वादतितुच्छत्वाच्च पञ्चमे वा तन्मतं निरसनीयम् । कुतः सेश्वरानन्तर्यम् ? न च वक्तव्यं, न च साङ्ख्यं प्रतीव श्रुत्यादिबाधो वक्तुं युक्त' इति वक्ष्यमाणाभ्यधिकशङ्कयैतदानन्तर्यमिति, सर्वसाङ्ख्यदूषणानन्तरमपि अस्या अभ्यधिकाशङ्कायाः कर्तुं युक्तत्वादिति । अत्रोच्यते । न ऋत इत्यादेर्गुणभूतेश्वरविषयत्वाद्यतिरेकानवस्थितेरिति प्रथमाधिकरणोक्तदोषो नेत्यभ्यधिकशङ्कया द्वितीये प्राप्ते मा भूत्केवलस्याचेतनस्य कर्तृत्वं मा च भूत् ईश्वरानुगृहीतस्याचेतनस्य किन्तु शरीरस्य चैतन्याश्रयस्य कर्तृत्वमस्तु । न च साङ्ख्यं प्रतीव श्रुत्यादिबाधो वक्तुं युक्तस्तदप्रामाण्यादित्यभ्यधिकाशङ्कया प्राप्तस्याधिकरणस्य फलतो निरीश्वरसाङ्ख्यानन्तर्योपपत्तेः । अत एव आनन्तर्यसङ्गतिः ॥ **युक्तमिति** ॥ विष्णोर्जगत्कर्तृत्वं युक्तमुत चार्वाकसमयविरोधादयुक्तमिति चिन्ता । तदर्थं चार्वाकसमयस्य श्रुतिसिद्धान्तविरोधक्षमत्वमस्त्युत विषयादिशून्य-

(वाक्यार्थमुक्तावली)

त्वान्नास्तीति ।। **पूर्वेति** ।। चैतन्याश्रयपित्रादिदेहात् पुत्रोत्पत्तिसम्भवादित्यर्थः । चैतन्यशक्ति-रहितात् गोमयादेः कथं चैतन्यशक्तिकवृश्चिकाद्युत्पत्तिरित्यत आह– **क्वचिदिति** ।। कारणे मद-शक्त्यभावेऽपि मदिरायां स्वभावादेव वृश्चिकवत् स्वभावादेव तृप्तिकादौ चैतन्योत्पति-र्मदिराद्युत्पत्तिवद्युज्यत इत्यर्थः । एकैकत्र भूते चैतन्यजनकशक्त्यभावेऽपि समुदिते तदुपपत्तेः । क्रमुकचूर्णपर्णानां प्रत्येकं मदजनकत्वाभावेऽपि समुदाये तद्दर्शनादिति भावः । सूत्रभाष्ययोरर्थ-प्रयोजनशब्दाभ्यां न केवलं फलमात्रं विवक्षितम् । किन्तु 'अर्थोऽभिधेयो रैवस्तु प्रयोजननिवृत्तिषु' इत्यभिधानात् प्रयुज्यते प्रेर्यते प्रणेता प्रणयने श्रोता श्रवणे येन तत्प्रयोजनमिति व्युत्पत्तेश्च विषयोऽपि विवक्षितः । अधिकारिसम्बन्धयोरुपलक्षणमेतदिति भावेन किं प्रयोजनमिति भाष्यं प्रश्नार्थत्वेन व्याचष्टे ।। **तत्र प्रष्टव्यमिति** ।। अपेक्षितं खलु शास्त्रेऽधिकार्यादि । तत्र तावत् त्वत्सिद्धान्ते किं प्रयोजनम् ? विषयस्यादृष्टं दृष्टं वेति प्रश्नार्थः । किंशब्दस्याक्षेपार्थत्वं मत्वा यस्येति भाष्यं तावत्प्रयोजनाक्षेपकत्वेन व्याख्याति ।। **न तावदिति** ।। भाष्ये धर्माधर्मौ न स्त इत्यतीन्द्रियाभावोक्त्या स्वर्गादिफलाभावोऽप्युक्तप्राय इति भावेन स्वर्गेत्याद्युक्तम् । धर्मस्य फल-साधनत्वात् फलत्वम् ।। **तदभावादिति** ।। शास्त्रश्रवणेऽपि धनाद्यदर्शनादिति भावः । न **तावद्दृष्टमिति** ।। एतेन यस्य धर्माद्यतीन्द्रियं नास्ति तत्सिद्धान्ते किमदृष्टप्रयोजनेनोपकारेणापीति प्रकारान्तरेण व्याख्यातं भवति ।। **अदृष्टनिरपेक्षैरिति** ।। एतेन धर्माद्यतीन्द्रियाभावे तत्सिद्धान्तेऽ-दृष्टनिरपेक्षैः आविपालस्य किं प्रयोजनं लभ्यत इति प्रकारान्तरेण व्याख्यतम् । विषयाक्षेपकतया भाष्यं योजयति ।। **नापीति** ।। **अप्राप्त इति** ।। मानान्तरावेद्ये विषये शास्त्रं प्रयोजनवदिति न्यायार्थः ।। **अपरामर्श इति** ।। इन्द्रियसन्निकृष्टघटादिप्रतियोगिकाभावस्येव धर्माद्यभावज्ञानस्य झडिति जायमानस्यादर्शनादित्यर्थः ।

ननु घटोऽस्ति न वेति परामर्शान्तरं घटो नास्त्यनुपलभ्यमानत्वादिति घटाभावज्ञानवदत्रापि धर्माभावज्ञानं स्यादित्यत आह ।। **परामर्श इति** ।। अनुमानं तु त्वन्मते न प्रमाणमिति भावः । विरोधस्फोरकसौत्रापि पदव्याख्यानरूपं स्वव्याहतेरेवेति भाष्यं व्याचष्टे । अनेनाभ्युपगमपदं सिद्धान्तान्तरपरमित्युक्तं भवति । अर्थाभावाभ्युपगमादित्यनेनाभ्युपगमेऽपीति प्रकारान्तरेण व्याख्यातं बोध्यम् । तच्च स्वव्याहत्युपपादकं सूत्रेऽपिपदं विरोधस्फोरकं समुच्चायकं च । अनपेक्षत्वादिति पूर्वसूत्रांशः । अनपेक्षित एवेत्यनुवर्तते । अभ्युपगम इति चात्र विपरिणम्यते ।

(वाक्यार्थमुक्तावली)

ततश्च न केवलमस्मदुपपादनेन किन्त्वभ्युपगमेऽपि स्वाङ्गीकारेणाप्यभ्युपगमे सिद्धान्तेऽप्यर्था-भावात् विषयप्रयोजनाभावादस्मदुपपादनमन्तरेण त्वयैव सिद्धान्तेऽपि प्रयोजनाद्यभावाभ्युपगमा-दभ्युपगमः स्वसिद्धान्तः स्वव्याहतेरनपेक्षितः उपेक्षणीय एवेति सूत्रार्थः ।

## तत्त्वसुबोधिनी

मा भूत् केवलमीश्वरगुणकं वा प्रधानं जडत्वात् कर्तृ, तथापि ईश्वरो न कर्ता देहस्यैव चेतनाचेतनत्वेन कर्तृत्त्वात् ईश्वरस्य व्यर्थत्वात्, न च सांख्यं प्रति इव श्रुत्यादिविरोधः तस्या-प्रमाणत्वादित्याक्षेपेणोत्थानात् । तथा च वस्तुतोऽचेतनस्य देहस्यैव कर्तृत्वाङ्गीकारेण साङ्ख्यमताकृष्टत्वात्तथा उक्तः । सूत्रे वक्ष्यमाणपुरुषाश्मदृष्टान्तनिर्वाहकनिरासविषयत्वात् चानन्तरसङ्गतिसद्भावेन मध्ये चार्वाकस्य निरासः इत्याह ॥ **चार्वाकेति** ॥ **पूर्वपूर्वस्मादिति** ॥ देहरूपचेतनादित्यर्थः । प्रकारान्तरेणापि देहरूपचेतनोत्पत्त्युपपत्तिमाह ॥ **क्वचिदिति** ॥ यथा क्रमुकपर्णचूर्णानां प्रत्येकं मदजनकत्वाभावेऽपि समुदाये तज्जनकत्वं तथा पृथिव्यादिभूतानां चैतन्योत्पादकत्वाभावेऽपि समुदितभूतचतुष्टयस्य स्वभावादेव चैतन्यजनकत्वोपपत्तेरित्यर्थः । समुदितानामपि भूतानां न सर्वचैतन्योत्पादकत्वमित्यभिप्रेत्य क्वचिदित्युक्तम् । ननु बाधक-सद्भावात् धर्मादिकं अङ्गीकर्तव्यमत आह ॥ **न हीति** ॥

ननु धर्माद्यभावे दृष्टान्ताभावात् कार्यानुत्पाद एव बाधक इत्यत आह ॥ **न ह्येतस्येति** ॥ **तदभावादिति** ॥ तस्य धनादेरेतच्छास्त्रसम्बन्धाभावादित्यर्थः । श्रुतशास्त्रस्यापि धनाद्यभाव-दर्शनादिति भावः ॥ **वार्तादीति** ॥ धनस्य कृषिगोरक्षणादिरूपप्रवृत्तिसाध्यत्वाच्च नैतत् प्रयोजनत्वमिति भावः ॥ **तदभावज्ञाने इति** ॥ धर्माधर्माभावज्ञाने इत्यर्थः ॥ **न चोपकारोऽपीति** ॥ सुखदुःखाभावेतरत्वादिति भावः । सूत्रभाष्ययोरर्थप्रयोजनशब्दाभ्यां न केवलं फलमात्रं विवक्षितं किन्तु विषयोऽपीत्याह ॥ **नापीति** ॥ कुतो नेत्यत आह ॥ **अप्राप्त इति** ॥ केनापि प्रमाणेन अप्राप्त इत्यर्थः । दृष्टविषयस्य तु प्रत्यक्षेणैव प्राप्तेरिति भावः ।

ननु धर्माद्यभाव एव विषयः । न च तत्प्रदर्शनं व्यर्थम्, धर्माद्यभावरूपप्रयोजनवत्त्वेनैव वैय्यर्थ्याभावादित्याशङ्क्य निषेधति (नापीति) **न चेति** ॥ **तदुपायाभावादिति** ॥ धर्माधर्माद्य-भावप्रतिपादनोपायाभावादित्यर्थः । प्रत्यक्षमेव तत्रोपाय इत्यत आह ॥ **न हीति** ॥ अपरा-

(तत्त्वसुबोधिनी)

**मर्शोऽदर्शनादिति** ॥ इन्द्रियसन्निकृष्टघटादिप्रतियोगिकाभावज्ञानस्येव धर्मादिकं नास्ति, प्रत्यक्षेणानुपलम्भादित्यादिपरामर्शाभावे धर्माद्यभावस्याप्रतीतेरित्यर्थः । ननु घटोऽस्ति न वेति परामर्शानन्तरं घटो नास्त्यनुपलभ्यमानत्वादिति घटाभावज्ञानवदत्रापि परामर्शेन धर्माभावज्ञानं स्यादित्यत आह ॥ **परामर्शे इति** ॥ परामर्शेनेत्यनेनानुमितिकरणस्य, दर्शनशब्देनानुमितेश्च त्वयैव वक्तव्यत्वादित्यर्थः । अनुमानं तु त्वन्मतेन प्रमाणमिति भावः । विषयाद्यभावेन नाधिकार्यपि न **समयस्य सम्भवति** । विषयजिज्ञासयोः प्रयोजनकामस्यैवाधिकारित्वादिति आह ॥ **विषयेति** ॥ विरोधस्फोरकसौत्रापिपदव्याख्यानरूपं स्वव्याहतिरेवेति भाष्यं व्याचष्टे ॥ **अतः सिद्धान्तेऽपीति** ॥ स्वव्याहतिमुपपादयति ॥ **न ह्यभ्युपगम इति** ॥ मत्सिद्धान्तः इत्यनेना-प्रयोजनवत्वोक्तिः व्याहतेत्यर्थः । अत्र भाष्ये अपेक्ष्य इत्यनेन टीकायां न युक्तमित्यनेन च पूर्व-सूत्रान्नञोऽनुवृत्तिर्दर्शिता । अनेन च त्वदीयशास्त्रस्य सिद्धान्तत्वानभ्युपगमेति सिद्धमस्मदिष्टम् । अभ्युपगमेति तद्व्यापकयोः विषयप्रयोजनयोः अभावाभ्युपगमाद्व्याप्त इति सूत्राक्षरयोजना सूचिता ।

## वाक्यार्थविवरणम्

ननु सकलपदार्थोत्पत्तिनिमित्तादृष्टापरपर्यायधर्माद्यभावे कार्यानुत्पाद एव बाधक इत्यत आह ॥ **न हीति** ॥ **एतस्य** ॥ **धर्मादेः** । नन्वसङ्गतप्रश्नोऽयमित्यत आह ॥ **अपेक्षितं हीति** ॥ यो हि यमर्थमर्थयमानो यं विषयं जिज्ञासते तस्यैवाधिकारित्वेनाधिकारिणः शास्त्रप्रवृत्त्यर्थं प्रयोजनादि-प्रश्नो युक्त इत्यर्थः । आदिपदेन सम्बन्धस्य नियोज्ययजमानादेर्वा ग्रहणम् । फलश्रुतिप्रेर्यो हि नियोज्य इत्येवं नियोज्यत्वादेरपि प्रयोजनादिघटितत्वादित्याशयः ॥ **तदभावादिति** ॥ अधिगत-शास्त्रस्यापि धनाद्यभावेन तस्य शास्त्रप्रयोजनत्वायोगादिति भावः ॥ **वार्तेति** ॥ कुसीदमुच्यते । आदिपदेन कृष्यादि । तथा च न धनादिप्रयोजनस्य शास्त्रेण जन्यजनकभावादिसम्बन्धो युक्त इति भावः । एवं श्रोतृप्रयोजनाभावमुक्त्वा प्रणेतृप्रयोजनं च निराह ॥ **न चेति** ॥ नापीत्यर्थः । शास्त्रप्रणेतुः फलमिति शेषः ॥ **स्वत इति** ॥ सुखदुःखावाप्तिहान्योरन्यतरत्वाभावादिति भावः ॥ **दृष्टमिति** ॥ उपकारजन्यजनानुरागप्रभवं संपदादिकमित्यर्थः । नेदमपि प्रयोजनं तस्याप्यदृष्टाय-तत्वे तदभावेऽस्याप्यभावादित्याह ॥ **न हीति** ॥ **अदृष्टनिरपेक्षैरिति** ॥ कृतघ्नतानिमित्त-प्रत्यवायानुसन्धानशून्यैरित्यर्थः । अदृष्टं च त्वन्मते नास्तीति भावः । यथोक्तमन्यत्र । कृतघ्नता-निमित्तप्रत्यवायानुसन्धाने सत्येवमेतत् । तत्त्वयैव धर्माद्यभावं प्रतिपादयता त्याजितमिति ।

(वाक्यार्थविवरणम्)

तद्भावः । धर्माद्यभावः ॥ **तदुपायेति** ॥ धर्माद्यभावबोधनोपायेत्यर्थः ॥ **प्रत्याशेति** ॥ उक्तरीत्याऽधिकारित्वस्य विषयादिघटितत्वादित्यर्थः ॥ **अधिकारिणामिति** ॥ बहुवचनमाद्यर्थे ; तेन नियोज्यादिग्रहणम् । सम्बन्धस्य वा सम्बन्धिनामभावे तदयोगादिति ध्येयम् ।

## वाक्यार्थमञ्जरी

**पूर्वपूर्वस्मादिति** ॥ देहरूपचेतनादित्यर्थः । प्रकारान्तरेणापि देहरूपचेतनोत्पत्त्युपपत्तिमाह ॥ **क्वचिदिति** ॥ यथाक्रमुकचूर्णपर्णादीनां प्रत्येकं मदजनकत्वाभावेऽपि समुदाये तज्जनकत्वं तथा पृथिव्यादिभूतानां प्रत्येकं चैतन्योत्पादकत्वाभावेऽपि समुचितभूतचतुष्टयस्य स्वभावादेव चैतन्य-जनकत्वोपपत्तेश्चेति भावः । समुचितानामपि भूतानां न सर्वत्र चैतन्योत्पादकत्वमित्यभिप्रेत्य क्वचिदित्युक्तम् ॥ **श्रुत्यादीति** ॥ यतो वेत्यादीत्यर्थः । एवमग्रेऽपि । ननु धर्मादिः सकल-जगन्निमित्तकारणत्वे न तदभावे कार्यमात्रविलोप प्रसङ्ग इत्यत आह ॥ **न हीति** ॥ अभ्युप-**गमेऽपि** सिद्धान्तेऽपि **अर्थाभावात्** विषयप्रयोजनयोरभावात् व्याहतमेतन्मतमित्यर्थः ॥ **तदभावा-दिति** ॥ श्रुतशास्त्रस्यापि धनाद्यभावदर्शनादित्यर्थः । वार्ता वाणिज्यम् ॥ **लोकोपकार** इति ॥ तथात्वे निरंकुशकामोपभोगप्रवृत्तेरिति भावः । हिंसादिना प्राप्तेन निमित्तेन । शास्त्रप्रवृत्तेः प्राग-धर्मादिशङ्कया मर्यादाभूत् । शास्त्रेण तदभावज्ञाने च परस्परधनवनिताद्यपहारेण परस्परहिंसादिकं स्यात् । तथाचापकार एवानेन कृतः स्यात् । न हि कपर्दिकालाभाय लक्षलाभं नाशयन्नुपकारी भवतीति भावः । अभ्युपेत्याह ॥ **न चेति** ॥ सुखदुःखप्राप्तिनिवृत्त्योरन्यतराभावादितिभावः । दृष्टं जनानुरागप्रभवं धनादि तदप्यदृष्टायत्तमित्याह **न हीति** ॥ **अदृष्टेति** ॥ कृतघ्नतानिमित्तप्रत्य-वायेत्यर्थः । अप्राप्ते प्रमाणान्तरेण ॥ **अपरामर्श इति** ॥ इन्द्रियसन्निकृष्टघटादिप्रतियोगिका-भावज्ञानस्येव धर्माद्यभावज्ञानस्य झटिति जायमानस्यादर्शनादित्यर्थः । ननु घटोऽस्ति न वेति विमर्शानन्तरं घटो नास्ति अनुपलभ्यमानत्वादिति घटाभावज्ञानवदत्रापि धर्माद्यभावज्ञानं स्यादित्यत आह ॥ **परामर्शेति** ॥ अनुमानं तु त्वन्मते न प्रमाणमिति भावः ॥ **केति** ॥ यो हि यमर्थमर्थयमानो यं विषयं जिज्ञासते तस्यैव तत्राधिकारित्वादिति भावः ॥ **सिद्धान्त** इति ॥ मास्तु प्रयोजनमित्युक्त्योर्व्याहतिमुपपादयितुं तदर्थयोर्विरोधमाह ॥ **न हीति** ॥ सप्रयोजन-स्यैवाभ्युपगमसिद्धान्तत्वादिति भावः ॥

॥ इति **अभ्युपगमाधिकरणम्** ॥ ३ ॥

## ४. अथ पुरुषाश्माधिकरणम्

### सूत्रभाष्यम्

पुरुषोपसर्जनप्रकृतिकर्तृत्ववादमपाकरोति–

॥ ॐ पुरुषाश्मवदिति चेत्तथाऽपि ॐ ॥ ७ ॥

यथा चेतनसम्बन्धादचेतनमेव शरीरमश्मादिकमादाय गच्छति, एवमचेतनाऽपि प्रकृतिः पुरुषसम्बन्धात्प्रवर्तत इति चेन्न। 'न ऋते त्वत्क्रियत' इति तत्रापि तथात्वे दृष्टान्ताभावात्।

### सत्तर्कदीपावली

निरीश्वरसाङ्ख्यैकदेशमतमनूद्य दूषयति ॥ पुरुषेत्यादिना ॥ जगदुत्पत्तौ केवलप्रधानस्य प्रवृत्त्य-सम्भवेऽपि पुरुषसम्बन्धात्प्रवृत्तिर्युज्यते। चेतनसम्बन्धादचेतनस्यैव घटादिनिष्पत्तौ प्रवृत्तिदर्शनादिति वाच्यम्। य आत्मानमन्तरो यमयतीत्यादिश्रुतौ जीवप्रवृत्तेः भगवत्कारितत्वश्रवणेन तद्प्रेरितप्रवृत्तौ दृष्टान्ताभावात्।

### तत्त्वप्रदीपिका

अचेतनमेव प्रवर्तत इति प्रथमतः प्रत्यादिष्टम्। अचेतनमेव भूतचतुष्कं संयोगविशेषाच्चेतनीभूय प्रवर्तते मदिराद्रव्यवत्। तदपाये पुनरचेतनी भवतीत्यनन्तरमपोहितम्। सम्प्रति यद्यप्यचेतनमेव कर्तृ तथाऽपि तदङ्गभूतचेतनः कश्चिदस्तीत्येतन्मतमपास्यति। पुरुषाश्मवदिति चेत्तथाऽपि।

### तत्त्वप्रकाशिका

अधिकरणप्रतिपाद्यं दर्शयति ॥ पुरुषेति ॥ अत्र विष्णोः सर्वकर्तृत्वे निरीश्वरसाङ्ख्यैकदेशमता विरोधपरिहारादस्ति शास्त्रादिसङ्गतिः। विष्णोर्जगत्कारणत्वमुक्तम्। तत्रैव मतविरोधेऽसम्भव-प्राप्तेरवश्यनिरसनीयं तद्भवति। ईश्वरस्य जगत्कारणत्वं विषयः। युक्तमयुक्तं वेति सन्देहः। समय-विप्रतिपत्तिः सन्देहबीजम्। पूर्वपक्षस्य सूत्र एवोक्तत्वात्तदुपन्यस्य पूर्वपक्षांशं तावद्व्याचष्टे ॥ पुरुषेति ॥ न हरेर्जगत्कारणत्वं युक्तम्। प्रधानस्यैव कर्तृत्वेनेश्वरस्य वैयर्थ्यात्। अचेतनस्य स्वतः प्रवृत्तिर्दूषितेति चेन्न। केवलप्रधानस्य कारणत्वानुपपत्तावपि पुरुषोपसर्जनस्य तदुपपत्तेः। भवति चात्र प्रयोगः।

(तत्त्वप्रकाशिका)

**विप्रतिपन्ना प्रवृत्तिः पुरुषोपसर्जना चेतननिमित्ता । प्रवृत्तित्वादश्मानयनादिप्रवृत्तिवदिति । न च दृष्टान्ते विवदितव्यम् । पुरुषसम्बन्धे नाचेतनस्यैव शरीरस्याश्माद्यादानादिप्रवृत्तिदर्शनात् । अतो जगज्जन्मादिकारणत्वलक्षणमीश्वरस्यैवेत्येतद्दूरोत्सारितमिति भावः । सिद्धान्तांशं व्याचष्टे ॥ नेति ॥ युक्तमेव विष्णोः सर्वकर्तृत्वम् । पुरुषोपसर्जनप्रधानस्य जगत्कारणत्वे प्रमाणाभावात् । न चोक्त-मनुमानम् । 'न ऋते त्वत्क्रियते किञ्चनारे' इति श्रुतेः । तत्र शरीरप्रवृत्तावपि परमात्माधीनत्वे सिद्धे सति विप्रतिपन्नप्रवृत्तेः पुरुषोपसर्जनप्रधानाधीनत्वसाधने दृष्टान्ताभावादिति भावः ।**

## गुर्वर्थदीपिका

'अचेतनापि प्रकृतिः पुरुषात्प्रवर्तत' इत्यत्र पुरुषो नाम प्रकृत्यभिमानी कश्चन महान् जीवविशेष इत्यर्थः ।

## भावबोधः

**निरीश्वरसाङ्ख्यैकदेशविरोधेति ॥** नन्वेवं तर्हि इदमधिकरणं द्वितीयं स्यादिति चेत्, सत्यम्, तथाप्यभ्यधिकाशङ्कानुसारेणेयमुक्तिः । तथा हि परमचेतनस्य भगवत एव सर्वकर्तृत्वं प्रागुक्तम् । तस्य केवलप्रकृतिकर्तृत्ववादः साक्षाद्विरोधीति प्रकृतमपाकृतम् । तत्र मा भूत् केवलस्याचेतनस्य प्रधानस्य कर्तृत्वम्, ईश्वरानुगृहीतस्य तु भविष्यतीत्याशङ्का द्वितीयाधिकरणे निराकृता । मा भूदचेतनस्य कर्तृत्वम्, किं तु शरीरस्य चैतन्याश्रयस्य कर्तृत्वमस्त्वित्याशङ्कायां शरीरस्य चैतन्याश्रयताऽयोगात् पुनस्तदवस्थः कर्तृत्वायोग इति तृतीयेऽभिहितम् । इदानीं तु केवलस्या-चेतनस्य कर्तृत्वायोगेऽपि चेतनसन्निधानेन तदुपपत्तेः किमीश्वरेणेत्येवं शङ्का निराक्रियत इति सुधायामेवानन्तरसङ्गतिरुक्ता ज्ञातव्या ॥ **युक्तं न वेति ॥** अत्रेश्वरस्य जगत्कारणत्वं न युक्तमुत युक्तमिति चिन्ता । तदर्थं पुरुषोपसर्जनप्रकृतिकर्तृत्वादिसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं तदुत्प्रेक्षितविप्रतिपन्ना प्रवृत्तिः पुरुषोपसर्जनाऽचेतननिमित्ता प्रवृत्तित्वादश्माद्या-दानादिप्रवृत्तिवदित्यनुमानमनाभासमुत दृष्टान्तस्य साध्यविकलत्वेनाभासमिति । तदर्थं दृष्टान्तस्य साध्यविकलत्वे प्रमाणं नास्त्युतास्तीति ॥ **पुरुषसम्बन्धेनेति ॥** अनेन सूत्रे पुरुषपदं जीव-सम्बन्धशरीरपरम् । अश्मपदं च लक्षणया तदादानादिप्रवृत्तिपरम् । तथा च पुरुषस्य जीव-सम्बन्धशरीरस्याश्मादानादिप्रवृत्तिवदिति सूत्रार्थ इत्युक्तं भवति । सूत्रे तथेत्यस्यावृत्तिः । अव्ययानामनेकार्थत्वादेकस्य 'तत्रे'त्यर्थकत्वं द्वितीयस्य 'व्यतिरेकानवस्थितेरित्युक्तपरामर्श-

(भावबोधः)

कत्वम् । तथा च तत्रापि पुरुषाश्मादावपि । तथा ईश्वरव्यतिरेकेणानवस्थितिः । ततश्च दृष्टान्ताभाव इत्यभिप्रेत्य प्रवृत्तं तत्रापीत्यादिभाष्यं व्याचष्टे– **तत्र शरीरप्रवृत्तावपीति** ॥ अत्राद्ये– पराभिप्रेतमनुमानमाशङ्क्य तत्र श्रुत्यवष्टम्भेन दृष्टान्तस्य साध्यविकलत्वोक्तिः । हैतुकम्मन्यश्चायं श्रुतिं न गणयति इति द्वितीये युक्त्या साध्यविकलत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

अचेतनापि प्रकृतिः प्रवर्तत इति भाष्यसूचितहेतुमाह ॥ **प्रधानस्येति** ॥ **कर्तृत्वेनेति** ॥ स्वतःप्रवृत्तिमत्त्वेनेत्यर्थः । एवं पुरुषसम्बन्धादिति भाष्यमधिकाशङ्कोक्तिपरत्वेन व्याचष्टे ॥ **अचेतनस्येत्यादिना** ॥ यथेत्यादिभाष्यमवतार्य व्याचष्टे ॥ **न चेत्यादिना** ॥ **अत इति** ॥ पुरुषोपसर्जनप्रकृतेरेव स्वतः प्रवृत्त्युपपत्त्या ईश्वरवैयर्थ्यादित्यर्थः । युक्तिप्राबल्यादेव च प्रागुक्तश्रुत्यादिगुणभूतपुरुषविषयमिति भावः । तथात्वे दृष्टान्ताभावादिति भाष्यांशं दृष्टान्तपदं प्रमाणपरं मत्वा व्याचष्टे ॥ **पुरुषेति** ॥ तदंशस्यार्थान्तरमुपेत्य समग्रभाष्यं व्याचष्टे ॥ **न ऋत इति** ॥ सिद्धे सतीति शेषोक्तिः । तथात्वे इत्यस्यार्थान्तरं चाह ॥ **पुरुषेत्यादि** ॥

## अभिनवचन्द्रिका

अस्यार्थः अश्मशब्देन सादृश्याद्देह उच्यते । ततश्च **पुरुपाश्मवत्** चेतनयुक्तशरीरवत्, अचेतनापि प्रकृतिः पुरुषसम्बन्धात् प्रवर्तत इति चेत्, न **तत्रापि** शरीरजन्यप्रवृत्तावपि, ईश्वरस्यैव प्रधानकारणत्वे श्रुतिसद्भावेन दृष्टान्तत्वायोगादिति । अत्र 'देहवत्' इति वक्तव्ये 'अश्मवत्' इति वचनं शरीरप्रवृत्तिविषयद्योतनार्थम् ॥ **निरीश्वरसाङ्ख्यैकदेशविरोधपरिहारादिति** ॥ नन्वस्य मतस्य सेश्वरसाङ्ख्यमतान्न विशेषं पश्यामः । तेन हि प्रधानस्य कारणत्वमङ्गीकृत्य, अनुग्राहक ईश्वरोऽङ्गीकृतः । अनेनापि प्रकृतेः कारणत्वमङ्गीकृत्य, तदुपसर्जनत्वेन पुरुषोऽङ्गीकृतः । न च नामवैलक्षण्यमात्रेण मतवैलक्षण्यं सम्भवति । तन्निराकरणमेवैतन्निराकरणमिति व्यर्थमिदमधिकरणमिति चेत्, उच्यते सेश्वरसाङ्ख्येन पर्जन्यवत् बाह्यानुग्राहकत्वमात्रमभ्युपगतम् । अनेन तु प्रकृतिकर्तृत्वान्तर्गतमेव पुरुषकारणत्वमभ्युपगतं ततोऽतिरिक्तमिति मतयोर्भेदः । चेतनसम्बन्धात् शरीरस्याऽश्मानयनादिकर्तृत्वदर्शनेनाभ्यधिकाशङ्कासद्भावात् तन्निराकरणार्थमधिकरणं चेदमर्थवदिति ॥ **ईश्वरवैयर्थ्यादिति** ॥ यस्तूपसर्जनतयाऽङ्गीक्रियते नासावीश्वरः तल्लक्षणाभावादिति

(अभिनवचन्द्रिका)

भावः ॥ **लौकिकपरीक्षकव्यवहारो न स्यादिति** ॥ लौकिकाश्च ते परीक्षकाश्चेति विग्रहः। युक्तवादिनो लौकिका इत्यर्थः। एतेन लौकिकाः परीक्षकाः, न वा। आद्ये पृथग्ग्रहणानुपपत्तिः। द्वितीये न तेन पुरुषस्याङ्गित्वसिद्धिः। पामरव्यवहारेणार्थसिध्ध्ययोगात्। परीक्षका अपि तीर्थकराश्चेते किं साङ्ख्या उतान्ये। नाद्यः तेषां व्यवहारस्य तथानुपलम्भात्। नापि द्वितीयः तेषु परीक्षकत्वासम्मतेरिति परास्तम्। लौकिकानामेव प्रामाणिकत्वेन सर्वसंमतानां व्यवहारस्य विवक्षितत्वात्।

पूर्वपक्षस्तु– न हरेर्जगत्कारणत्वं युक्तं, चेतनोपसर्जनशरीरस्याऽश्मानयनादिकर्तृत्वदर्शनेन पुरुषोपसर्जनप्रधानेनैव जगदुत्पत्तिसम्भवात्। अत ईश्वरस्यैवाभावात् जगज्जन्मादिकारणत्वलक्षणं तस्येत्येतद्दूरोत्सारितमिति।

सिद्धान्तस्तु– युक्तमेव हरेर्जगत्कारणत्वं, पुरुषोपसर्जनप्रकृतेः जगत्कारणत्वसाधने दृष्टान्ताभावात्। न च शरीरमेव दृष्टान्त इति वाच्यम् 'न ऋते त्वत्क्रियत' इति श्रुत्या शरीरप्रवृत्तावपि परमात्माधीनत्वेन दृष्टान्तस्य साध्यविकलत्वात्। किञ्च यदि पुरुषोपसर्जनं शरीरमेव कर्तृ स्यात्तर्हि पुरुषः अङ्गी शरीरमङ्गमिति प्रामाणिकलौकिकव्यवहारो न स्यात्। अस्ति चासौ अतो नायं दृष्टान्तः। अतो मतान्तरविरोधाभावाद्युक्तं जगत्कारणत्वलक्षणं विष्णोरिति सिद्धम्।

## वाक्यार्थमुक्तावली

**निरीश्वरेति** ॥ साङ्ख्यमतं केवलाचेतनकर्तृकत्वचेतनसहिताचेतनकर्तृकत्वाभ्यां द्वेधा। तत्राद्यं निरीश्वरमाद्ये निरस्तम्। द्वितीयमपि साङ्ख्यमतं गुणभूतेश्वरानुगृहीतप्रधानकर्तृकत्वेन वा जीवसहितप्रधानकर्तृकत्वेन वा द्वेधा। तत्राद्यं फलतो निरीश्वरं द्वितीये निरस्तम्। जीवसहित-प्रधानकर्तृत्वमपि जीवस्योपसर्जनत्वप्राधान्याभ्यां द्वेधा। तत्र चेतनस्याचेतनं प्रत्युपसर्जनत्व-रूपाख्यनिरीश्वरैकदेशस्याद्यस्यातिविरोधित्वादत्र निरास इति भावः। नन्वेवमस्य मतस्याति-विरोधित्वेनेदं द्वितीयं स्यादिति चेन्न, तथाप्यभ्यधिकशङ्कानुसारेणेयमुक्तिः। तथाहि परमचेत-नस्य भगवत एव सर्वकर्तृत्वं प्रागुक्तम्। तस्य केवलप्रकृतिकर्तृत्ववादः साक्षाद्विरोधीति प्रथम-मपाकृतः। तत्र मा भूत्केवलस्याचेतनस्य कर्तृत्वं ईश्वरानुगृहीतस्य तु भविष्यतीति आशङ्का

(वाक्यार्थमुक्तावली)
द्वितीयाधिकरणे निराकृता । माभूदचेतनस्य कर्तृत्वं किन्तु शरीरस्य चैतन्याश्रयस्य कर्तृत्वमस्त्वित्याशङ्क्य शरीरस्य चैतन्याश्रयत्वयोगात्पुनस्तदवस्थः कर्तृत्वायोग इति तृतीये समाहितम्। इदानीं तु केवलस्याचेतनस्य कर्तृत्वायोगेऽपि चेतनसम्बन्धेन तदुपपत्तेः किमीश्वरेणेत्याशङ्का निराक्रियत इति सुधायामेवानन्तरसङ्गतिरुक्ता ज्ञेया ॥ **युक्तमिति** ॥ विष्णोर्जगत्कारणत्वं, विप्रतिपन्ना सृष्टिरिति वक्ष्यमाणनिरीश्वरसमयविरोधादयुक्तमुत युक्तमिति चिन्ता । तदर्थमनुमानमनाभासमुत दृष्टान्तस्य श्रुतियुक्तिपराहतत्वादाभासमिति ॥ **पुरुषोपसर्जनस्येति** ॥ नन्वीश्वरोपसर्जनस्य प्रधानस्य कर्तृत्वं सेश्वरेणोक्तं पुरुषोपसर्जनस्याचेतनस्योच्यते को विशेष इति चेत् । दृष्टपुरुषस्यानुग्राहकत्वसम्भवेऽदृष्टेश्वरकल्पनावैयर्थ्यादित्याशयात् । किञ्च सेश्वरेणेश्वरस्य पर्जन्यवद्बाह्योपकारकत्वमात्रमुक्तमनेन तु प्रकृतिसंवलनेनेति भेदः ॥ **पुरुषसम्बन्धेनेति** ॥ अनेन सूत्रे रचनावदित्यस्ति । पुरुषपदेन जीवसम्बद्धः शरीरमुच्यते । अश्मपदं च लक्षणया तदादानादिप्रवृत्तिपरम् । तथा च पुरुषस्य जीवसंवलितशरीरस्याश्मानयनादिप्रवृत्तिवदानुमानं प्रधानमप्युपसर्जनजीवसंवलनेन स्वतः प्रवृत्तिमदिति सूत्रखण्डार्थ इति भावः । तथापीत्यत्र नेत्यनुवर्तते । अव्ययानामनेकार्थत्वादेकस्य तत्रेत्यर्थकत्वम् । द्वितीयस्य व्यतिरेकानवस्थितेरित्युक्तपरामर्शकत्वम्। तथा न मन्तव्यमिति साध्यप्रदर्शनपरत्वं च । तथा च तत्रापि पुरुषाश्मादावपि तथा तथात्वे श्रुतिबलेनेश्वरव्यतिरेकेण्यानवस्थाने सिद्धे दृष्टान्ताभावात्तथा न मन्तव्यं पुरुषाश्मवदिति न मन्तव्यमिति सिद्धान्तांशार्थं मत्वा व्याचष्टे ॥ **युक्तमेवेत्यादिना** ॥ तथात्व इत्यस्यार्थः ॥ **परमात्मेति** ॥ तथा न मन्तव्यमित्यस्य तात्पर्यं **विप्रतिपन्नेति** ॥

## तत्त्वसुबोधिनी

अधुना जीवसहिताचेतनकर्तृत्वनिरासः । सोऽपि जीवस्योपसर्जनत्वप्राधान्याभ्यां द्वेधा । तत्र चेतनस्याचेतनं प्रति उपसर्जनत्वस्य आद्यस्य अतिविरुद्धत्वादादौ तन्निरासः इत्याह ॥ **अत्रेति** ॥ तथाचेयमेवानन्तरसङ्गतिरिति भावः । न केवलं बाधकाभावः किन्तु साधकमप्यस्तीत्याह ॥ **भवति चेति** ॥ **पुरुषसम्बन्धेनेति** ॥ अनेन पुरुषशब्दः जीवसम्बन्धशरीरपर अश्मपदं च लक्षणया तदादानादिप्रवृत्तिपरमिति भावः । सूत्रस्थतथेत्यस्य तत्रेत्यर्थ उक्ते भाष्ये तत्रेत्यस्यार्थमाह ॥ **तत्र शरीरप्रवृत्तावपीति** ॥ विप्रतिपन्नप्रवृत्तेरिति जगत्सर्जनादिप्रवृत्तेरित्यर्थः ।

## वाक्यार्थमञ्जरी

अत्र तथेत्यस्यावृत्तिः अव्ययानामनेकार्थत्वादेकस्य तत्रेत्यर्थकत्वम् । द्वितीयस्य व्यतिरेकानवस्थितेरित्युक्तपरामर्शकत्वम् । तथा च यथा पुरुषस्य चेतनस्य सम्बन्धेन शरीरमश्मानयनादिकर्तृ तद्वत्प्रधानं जीवसम्बन्धाज्जगत्कत्रिति चेत् । तत्रापि पुरुषाश्मादावपि तथा ईश्वरव्यतिरेकेणानवस्थितिः । ततश्च दृष्टान्ताभाव इत्यर्थः ॥ **पुरुषोपसर्जनेति** ॥ पुरुषाख्यामुख्यसहकारिसहितस्येत्यर्थः । निवृत्ता निष्पन्ना । हैतुकं मन्यमानः स्वात्मानं हैतुकं मन्यमानः ।

## सूत्रभाष्यम्

**॥ ॐ अङ्गित्वानुपपत्तेः ॐ ॥ ८ ॥**

**शरीरप्रवृत्तौ पुरुषस्याङ्गित्वात् । 'अङ्गमङ्गी समादाय यथाकार्यं करोत्यसौ' इत्यङ्गित्वव्यवहारोऽनुपपन्नः ।**

## सत्तर्कदीपावली

**शरीरादेर्हि तावत्पुरुषाङ्गमिति व्यवहारविरोधाच्च न तस्य सन्निधिमात्रेण स्वकार्यप्रवृत्तिशरीराङ्गत्वमित्यर्थः ।**

## तत्त्वप्रदीपिका

शरीरप्रवृत्तौ पुरुषस्याङ्गत्वादस्मिन्पक्षे तस्याङ्गित्वव्यवहारोऽनुपपन्नः । अतः प्रमाणतः शरीरस्याङ्गित्वानुपपत्तेर्यत्किञ्चिदेतत् ।

## तत्त्वप्रकाशिका

हैतुकमन्यश्चायं श्रुत्यवष्टम्भेनोक्तं दृष्टान्तदोषं न गणयतीत्यतो हेत्वन्तरेण दृष्टान्ते साध्यविकलतां साधयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अङ्गित्वेति** ॥ यदि शरीरमेव पुरुषोपसर्जनं प्रवर्तेत तदा शरीरमङ्गि पुरुषोऽङ्गमित्युक्तं स्यात् । तथा च पुरुषस्याङ्गित्वेन शरीरस्याङ्गत्वेन च लौकिकपरीक्षकव्यवहारो न स्यात् । विद्यते चासावतो न पुरुषोपसर्जनशरीरस्य च प्रवृत्तिरिति दृष्टान्तो न युज्यत इति भावः । अतो मतान्तरविरोधाभावाद्युक्तं जगत्कारणत्वलक्षणं विष्णोरिति सिद्धम् ।

## गुर्वर्थदीपिका

विद्यते चासावित्यत्र 'अङ्गं प्रतीकोऽवयव' इति लौकिकानुशासनादावपि विद्यते इत्यर्थः ।

## भावदीपः

उत्तरसूत्रे समुच्चायकचशब्दाभावात्प्रागुक्तदोषस्यादृढतामाह ॥ **हैतुकंमन्यश्चेति** ॥ एवं परिष्कृत्य भाष्यं व्याचष्टे ॥ **तथा चेति** ॥ **अत इति** ॥ अप्रामाणिकत्वात् । प्रमाणविरुद्धत्वाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

**हेत्वन्तरेणेति** ॥ श्रुतिविरोधापेक्षया हेत्वन्तरेणेत्यर्थः । सूत्रे पुरुषाश्मवदित्यनुवर्तते । **पुरुषस्येति च** ॥ अङ्गित्वेति तद्व्यवहारो लक्ष्यते । पुरुषोपसर्जनशरीरस्यैवाश्मानयनादिप्रवृत्तिहेतुत्वं चेदङ्गीक्रियते यदि तदा पुरुषस्याङ्गित्वानुपपत्तेः प्रसङ्गान्न पुरुषाश्मवदिति दृष्टान्तो युज्यत इति सूत्रार्थं हृदि निधायापादकाध्याहारपूर्वं भाष्यं व्याचष्टे ॥ **यदीति** ॥ अत्राद्ये श्रुत्या द्वितीये युक्त्यानुमानस्य दृष्टान्ते साध्यवैकल्योक्तिरिति क्रमः ।

## तत्त्वसुबोधिनी

परपक्षस्य पूर्वसूत्रेणैव दूषितत्वादुत्तरसूत्रवैय्यर्थ्यमत आह ॥ **हैतुकंमन्यश्चायं इति** ॥ अत्र पुरुषपदं जीवसम्बन्धशरीरपदं अश्मादानादिप्रवृत्तिपरम् । तथा च पुरुषस्य जीवसम्बन्धस्य शरीरस्य यथाश्मादानादिप्रवृत्तिः तथा जीवसम्बन्धप्रधानस्यापि जगत्सर्जनादिप्रवृत्तिरिति पूर्वपक्षार्थः । सिद्धान्ते तथापीत्यत्र तथेत्यस्यावृत्तिः । अव्ययानां अनेकार्थत्वात् एकस्य तत्रेत्यर्थकत्वं, द्वितीयस्यातिरेकानवस्थितेरित्युक्तपरामर्शकत्वम् । तथाच तत्रापि पुरुषाश्मादावपि तथा ईश्वरव्यतिरेकेणानवस्थितेः दृष्टान्ताभावान्न जीवोपसर्जनप्रधानस्याकर्तृकत्वसाधनं युक्तमित्यक्षरार्थः । अत्राद्ये श्रुत्यवष्टम्भेन दृष्टान्तस्य साध्यविकलत्वोक्तिः । द्वितीये युक्त्यवष्टम्भेन तदुक्तिः ।

## वाक्यार्थविवरणम्

शरीरप्रवृत्तौ पुरुषस्याङ्गत्वादित्येव भाष्यपाठः । अत एव टीकायां तदा शरीरमङ्गि

(वाक्यार्थविवरणम्)

पुरुषोऽङ्गमित्युक्तम् स्यादिति । तथा च त्वया शरीरप्रवृत्तौ पुरुषस्याङ्गत्वाङ्गीकारादङ्गमङ्गीत्यादि प्रमाण-सिद्धोऽङ्गित्वव्यवहारोऽनुपपन्न इति भाष्यार्थः ।

## वाक्यार्थमञ्जरी

श्रुत्यवष्टम्भेन श्रुतिबलेन । जीवस्य प्रधानत्वे त्वयोच्यमाने सर्वजनसिद्धस्य शरीरं प्रत्यङ्गित्वस्य प्रधानत्वस्यानुपपत्तेर्नोक्तदृष्टान्तो युक्त इत्यर्थः । **अङ्गम् अप्रधानम्** ॥

॥ इति **पुरुषाश्माधिकरणम्** ॥ ४ ॥

# ५. अथ अन्यथानुमित्यधिकरणम्

## सूत्रभाष्यम्

प्रकृत्युपसर्जनपुरुपकर्तृत्ववादमपाकरोति–

**॥ ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ ॥ ९ ॥**

शरीरसम्बन्धात्पुरुषः प्रवर्तत इत्यङ्गीकारेऽपि स्वतस्तस्यासामर्थ्याच्छरीरसम्वन्ध एवायुक्तः ।

## सत्तर्कदीपावली

निरीश्वरसाङ्ख्यैकदेशपक्षयोरेकस्मिन्पक्षे दूषिते पक्षान्तरमनूद्य परिहरति ॥ प्रकृत्युपसर्जनेत्यादिना ॥ स्वशरीरप्रेरणे शरीरान्तराभावाच्छरीरवत एव पुरुपस्य कर्तृत्वमित्येतदप्ययुक्तमित्यर्थः ।

## तत्त्वप्रदीपिका

साङ्ख्यैकदेशीयस्तु स्वयूथ्यदोषपरिजिहीर्षया विपर्यस्तं मतमपरोऽनुमिमीतेऽत आह– ॐ अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॐ । यथा शरीरसम्वन्धात्पुरुषः प्रवर्तते, एवं प्रकृतिसम्वन्धात्पुरुषः प्रवर्तत इत्यङ्गीकारे स्वतस्तस्य ज्ञस्य शरीरसम्वन्धेऽप्यसामर्थ्यात्स एवायुक्तः । कुतः पुनस्तदायत्ता प्रवृत्तिः ? एवमेव प्रकृतिसम्वन्धोऽपीति नैतदपि साधिष्ठम् ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति **॥ प्रकृतीति ॥** अत्र विष्णोर्जगत्कारणत्वे निरीश्वरसाङ्ख्यैकदेश-विरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । ईश्वरस्य जगत्कारणत्वमुक्तम् । तस्य च समयविरुद्धत्वे लक्षणायुक्तेरसौ परिहरणीय एव । तदीश्वरस्याखिलकारणत्वं विषयः । युक्तमयुक्तं वेति संशयः । मतविगानं सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । प्रधानादेव जगदुत्पत्तिसम्भवेनेश्वरानुपयोगात् । न चाचेतनस्य तदनुपपत्तिदोषः । पुरुषयुक्तस्योपपत्तेः । न चाङ्गित्वानुपपत्तिः । प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वाङ्गीकारात् । तथा च प्रयोगः । विमता प्रवृत्तिरचेतनोपसर्जनपुरुपाधीना प्रवृत्तित्वादश्मा-नयनादिप्रवृत्तिवदिति । न च दृष्टान्तदोषः । शरीरोपसर्जनपुरुपस्य प्रवृत्तिदर्शनात् । श्रुतेश्चावज्ञानात् । अतो न जगत्कारणत्वलक्षणं ब्रह्मणो युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे **॥ अन्यथेति ॥**

(तत्त्वप्रकाशिका)

चशब्देनाङ्गित्वानुपपत्तेः समाकर्षः । युक्तमीश्वरस्य जगत्कारणत्वम् । प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वे मानाभावात् । प्राचीनपक्षादन्यथानुमितमिति चेन्न । दृष्टान्ते साध्याभावात् । तथा हि । शरीरोप-सर्जनः पुरुषः प्रवर्तत इति पक्षे किं पुरुषस्य प्रवृत्तिशक्तिरस्ति न वा । यद्यस्ति तर्हि शरीरवैयर्थ्यम् । यदि न शक्तिस्तर्हि पुरुषाङ्गित्वमनुपपन्नं स्यात् । शरीरसम्बन्धार्थं केवलस्य पुरुषस्य शक्त्यभावात् । यदि तत्रास्ति शक्तिस्तर्ह्यन्यत्रापि स्यादित्यन्यतरवैयर्थ्यम् । शरीरसम्बन्धात्पूर्वमपि प्रकृतिसम्बद्धस्यास्ति शक्तिरिति चेत् तत्पूर्वमप्येवमित्यनवस्थापातात् । अनादिताश्रयणे निष्प्रकृतीनां मुक्तानां प्रवृत्ति-रुदाहर्तव्या । अतो यथा पुरुषस्य शरीरसम्बन्धक्रियायां न शरीरोपकृतस्य प्रवृत्तिर्नापि केवल-स्येतीश्वरोऽङ्गीकार्यः । तथाश्मानयनप्रवृत्तावपीति दृष्टान्ताभाव इति भावः ।

## गुर्वर्थदीपिका

उदाहर्तव्या प्रकृत्युपसर्जनपुरुषप्रवृत्तिमतस्य बाधकत्वेनोदाहर्तव्या ।

## भावबोधः

**निरीश्वरसाङ्ख्यैकदेशान्तरविरोधेति** ॥ प्रकृत्युपसर्जनपुरुषकर्तृत्ववादेन पूर्वोक्ताङ्गित्वानु-पपत्तिरिति पूर्वपक्षोत्थानात्पूर्वसूत्रोक्ताङ्गित्वानुपपत्त्या सिद्धान्तकरणाद्धानन्तरसङ्गतिरिति भावः ॥ **युक्तमिति** ॥ अत्रेश्वरस्य जगत्कारणत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं प्रकृत्युपसर्जन-पुरुषकर्तृत्ववादिसमयः किं श्रुत्युक्तेश्वरजगत्कारणत्वापबाधनक्षमो भवत्युत नेति । तदर्थं तदुत्प्रेक्षितं विमता प्रवृत्तिरचेतनोपसर्जनपुरुषाधीना, प्रवृत्तित्वादश्मानयनादिप्रवृत्तिवदित्यनुमान-मानाभासमुत दृष्टान्तस्य साध्यविकलत्वेनाभासमिति । तदर्थं दृष्टान्ते साध्यसत्त्वे बाधकं नास्त्युतास्तीति । 'न ऋते त्वत्क्रियते' इति श्रुत्या दृष्टान्तेऽपीश्वराधीनत्वमेव न प्रकृत्युपसर्जन-जीवाधीनत्वमित्यत आह– **श्रुतेश्चावज्ञानादिति** ॥ शरीरसम्बन्ध एवायुक्त इति भाष्यं व्याचष्टे– **तर्हि पुरुषस्याङ्गित्वमिति** ॥ ज्ञस्य जीवस्य । शक्तिवियोगादितिविग्रहमभिप्रेत्य प्रवृत्तं तस्या-सामर्थ्यादिति भाष्यं व्याचष्टे– **शरीरसम्बन्धार्थमिति** ॥ तथा च शरीरसम्बन्धघटकतया ईश्वर-स्यावश्यमङ्गीकार्यत्वे जीवस्य वैयर्थ्यमिति भावः ॥ **अन्यतरवैयर्थ्यमिति** ॥ अशक्तत्वपक्षे जीववैयर्थ्यं शक्तत्वपक्षे शरीरवैयर्थ्यमित्यर्थः ।

## भावदीपः

केवलाचेतनमतात्पुरुषोपसर्जनाचेतनमताच्चाधिका शङ्कोक्तिपरत्वेन शरीरेत्यादिभाष्यमवतार्य व्याचष्टे ॥ **न चाचेतनस्येति** ॥ न ऋत इति प्रागुक्तश्रुतिविरोध इत्यत आह ॥ **श्रुतेश्चेति** ॥ हेतुकमन्यत्वादिति भावः ॥ **अत इति** ॥ अनुपयुक्ततया ईश्वरस्यैवाभावादित्यर्थः । शरीरसम्बन्ध एवायुक्त इति भाष्यं सौत्रचशब्दादाकृष्टस्याङ्गित्वानुपपत्तेरित्यस्य व्याख्यानमिति भावेनाह ॥ **चशब्देनेति** ॥ शरीरेत्यादिभाष्यस्य व्याख्येयं दर्शयितुमन्यथानुमिताविति सूत्रांशं विवृणोति ॥ **प्राचीनेति** ॥ विमतेत्यादिनोक्तरीत्यानुमितमित्यर्थः । ज्ञशक्तीत्याद्यंशस्य विवृतिपरं स्वतस्तस्या-सामर्थ्यादिति भाष्यं दृष्टान्ते साध्यवैकल्यसाधकत्वेन योजयितुमन्यथानुमितावित्यंशार्थोक्ति-परभाष्यमनुवदति ॥ **शरीरोपसर्जन इति** ॥ पक्षभेदेन भाष्यं योजयितुं विकल्पयति ॥ **किमिति** ॥ आद्यपक्षं बहिरेव निरस्यान्ते स्वत इत्यादिभाष्यं योजयति ॥ **यदि न शक्ति-स्तर्हीति** ॥ शक्त्यभावं द्रढयितुमाह ॥ **यदि तत्रास्ति शक्तिरिति** ॥ अन्यत्रापि । अश्मा-नयनादावित्यर्थः ॥ **उदाहर्तव्येति** ॥ अयुक्तत्वेनोदाहर्तव्येत्यर्थः ॥ **अत इति** ॥ शक्त्यभावे भावे चोभयथापि दोषादित्यर्थः ।

## अभिनवचन्द्रिका

**प्रधानादेवेति** ॥ पुरुषेण सृष्ट्यादौ कर्तव्ये सहकारितया प्रधानाभ्युपगममात्रेणैव सृष्ट्यादे-रुपपत्तेरीश्वरो नियामकतयाऽभ्युपगन्तव्य इति भावः । एतेन प्रकृत्युपसर्जनपुरुषकर्तृत्ववादिना पुरुषस्यैव प्राधान्याङ्गीकारात् प्रधानादेवेत्युक्तिरयुक्तेति परास्तम् ॥ **न च चेतनस्येति** ॥ पुरुषसाहाय्यार्थं प्रवर्तमानस्य अचेतनस्य स्वतःप्रवृत्त्यनुपपत्तिरिति न वाच्यमित्यर्थः ॥ **पुरुषयुक्त-स्येति** ॥ स्वसाहाय्यार्थं पुरुषः प्रकृतिं नियमयतीति भावः । प्रधानस्य सहकारित्वे उभयोः समप्राधान्यं स्यादिति मन्यमानस्य शङ्कामनूद्य निराकरोति – **न चाङ्गित्वेति** ॥ **शरीरोपसर्जनः पुरुष इति** ॥ शरीरोपसर्जनः पुरुषः प्रवर्तत इति पक्षे केवलपुरुषस्य प्रवृत्तिशक्तिरस्ति, न वेत्यर्थः । नाद्य इति भावेनाह – **यद्यस्तीति** ॥ यदि शरीरं विनापि प्रवृत्तिशक्तिः स्यात्, तर्हि शरीरवैयर्थ्यं स्यात् । न च तद्युक्तमिति नाद्यः पक्षो युक्त इत्यर्थः । निरीश्वरवादिना द्वितीयं नाङ्गीकर्तुं शक्यमिति भावेनाह – **यदि न शक्तिरिति** ॥ एतेनाद्यपक्षनिषेधेन

(अभिनवचन्द्रिका)

द्वितीयस्याङ्गीकृतत्वात्, वास्तवत्वाच्च, तन्निषेधो व्याहत इति परास्तम् । शरीररहितस्य कार्यान्तरं प्रवृत्तिसामर्थ्याभावेऽपि शरीरसम्बन्धाय प्रवृत्तौ केवलस्य सामर्थ्यमस्तीति नाङ्गित्वानुपपत्तिरित्याशङ्क्य निषेधति – **यदि तत्रास्तीति ॥ अन्यतरवैयर्थ्यादिति ॥** यदि शरीरसम्बन्धाय प्रवृत्तौ केवलस्य शक्तिरभ्युपगम्यते तर्हि अन्यत्रापि शिलानयनादावपि केवलस्यैव प्रवृत्तिः स्यात्, अविशेषादिति शरीरवैय्यर्थ्यम् । यदि अप्रामाणिकत्वात् नान्यत्र केवलस्य शक्तिः, तर्हि शरीरसम्बन्धाय केवलस्य प्रवृत्त्यभ्युपगमवैयर्थ्यम् । अप्रामाणिकत्वेनाऽङ्गित्वनिर्वाहकत्वाऽभावात् इत्यन्यतरवैय्यर्थ्यमित्यर्थः । एतेन शरीरसम्बन्धार्थं केवलस्य शक्तिरस्तीति पक्षे शरीरवैयर्थ्यस्यैकस्यैव सद्भावात् अन्यतरवैयर्थ्याभिधानमयुक्तमिति परास्तम् । शरीरसम्बन्धवैयर्थ्यमिति क्वचित् पाठः ॥ **प्रकृतिसम्बन्धस्येति** ॥ स्थूलदेहसम्बन्धात् पूर्वं प्रकृतिरूपसूक्ष्मदेहसम्बन्धसद्भावात् तद्विशिष्टस्य शक्तिरस्तीत्यर्थः ॥ **तत्पूर्वमिति** ॥ सूक्ष्मदेहसम्बन्धात् पूर्वं प्रवृत्तिसिद्धये देहान्तरमङ्गीकार्यं ततः पूर्वमेवमित्यनवस्थेत्यर्थः ॥ **अनादिताश्रयण** इति ॥ सूक्ष्मशरीरस्याऽनादित्वान्नानवस्थेत्यङ्गीकारे निष्प्रकृतीनां मुक्तानां प्रवृत्तिरुदाहर्तव्येत्यर्थः । अयं भावः प्रकृतिसम्बन्धस्य अनादित्ववादिनं प्रति यदि न शक्तिस्तर्हि पुरुषस्याङ्गित्वमनुपपन्नं स्यादिति द्वितीयपक्षदूषणं न वाच्यम् । किन्तु मुक्तानां प्रवृत्तिर्न स्यात् । तेषां निष्प्रकृतित्वेन प्रवृत्तिसामर्थ्याभावादित्येव दूषणमुदाहर्तव्यमिति । एतेन निष्प्रकृतीनां प्रवृत्तिरुदाहर्तव्येति असङ्गतम् । पूर्वोक्तानवस्थास्थापकत्वाभावेन उदाहरणकृत्यभावादिति परास्तम् ॥ **अत** इति ॥ पुरुषस्य मुक्तस्य लीलाविग्रहसम्बन्धक्रियायामित्यर्थः । एतेन पुरुषस्य शरीरसम्बन्धक्रियायां सूक्ष्मशरीरोपकृतस्य प्रवृत्त्यभ्युपगमेन शरीरोपकृतस्य प्रवृत्तिरित्ययुक्तमिति परास्तम् ॥ **तथाऽश्मानयनादीति** ॥ अश्मानयनादावपीश्वरस्यैव नियामकत्वेन दृष्टान्ताभावात् प्रकृत्युपसर्जनपुरुषकर्तृत्वे मानाभावः । ततश्च 'युक्तमीश्वरस्य जगत्कारणत्वमिति भाव' इति पूर्वेण सम्बन्धः ॥ **दृष्टान्ताभाव इति** पाठस्तु सुगमः । एतेन दृष्टान्ताभावादित्यस्यानन्वय इति परास्तम् ।

**पूर्वपक्षस्तु**– न हरेर्जगत्कारणत्वं युक्तम् । प्रधानोपसर्जनपुरुषादेव जगदुत्पत्तिसम्भवेन ईश्वरवैय्यर्थ्यात् । तथा च प्रयोगः 'विमता प्रवृत्तिः अचेतनोपसर्जनपुरुषाधीना प्रवृत्तित्वादश्मानयनादिप्रवृत्तिवत्' इति । अतो न जगत्कारणत्वलक्षणं ब्रह्मणो युक्तमिति ।

**सिद्धान्तस्तु**– युक्तमीश्वरस्य जगत्कारणत्वं, प्रकृत्युपसर्जनपुरुषस्य कर्तृत्वे मानाभावात् ।

(अभिनवचन्द्रिका)
प्राचीनमतादन्यथानुमितमिति चेत्, न दृष्टान्ते साध्याभावात् । तथा हि केवलस्य पुरुषस्य प्रवृत्तिशक्तिरस्ति, न वा । आद्ये शरीरवैयर्थ्यम् । द्वितीये शरीरसम्बन्धाभावप्रसङ्गेनाऽश्मानयनादिप्रवृत्तिर्न स्यात् । अस्ति चाऽसौ । अतः पुरुषस्य शरीरसम्बन्धघटकः अश्मानयनादि-प्रवृत्तिशक्तिप्रदः ईश्वरोऽङ्गीकार्य इति कथं न दृष्टान्तः साध्यविकलः । किञ्च सकलश्रुति-स्मृतिविरुद्धत्वात् सर्वमप्यनीश्वरमतमप्रमाणम् । अतो न साङ्ख्यादिमतविरोधेन लक्षणासम्भव इति सिद्धम् ।

## वाक्यार्थमुक्तावली

**निरीश्वरेति** ॥ ईश्वरमनङ्गीकृत्य जीवप्रधानकप्रधानकारणत्ववादिसाङ्ख्यैकदेशिमतविरोध-निरासादित्यर्थः । अत एवाङ्गित्वानुपपत्त्याक्षेपेणोत्थानादनन्तरसङ्गतिः ॥ **युक्तमिति** ॥ विष्णो-र्जगत्कारणत्वं सयुक्तिकं प्रत्युपसर्जनपुरुषकर्तृत्ववादविरुद्धं न वेति चिन्ता । तदर्थं तदीयमनुमान-मनाभासमुत दृष्टान्ताभावादाभासमिति ॥ **प्रधानादेवेति** ॥ नत्वीश्वरादित्येवार्थः । ननु दृष्टान्तेऽपि 'न ऋते त्वत्क्रियत' इति श्रुत्या ईश्वराधीनत्वमेव प्रवृत्तेर्न तु तन्निरपेक्षेणेत्यत आह ॥ **चशब्देनेति** ॥ समाकृष्टस्य व्याख्यानं भाष्यमिति भावः । परिष्कारपूर्वं भाष्यार्थं वदन् भाष्यं सङ्गमयति ॥ **युक्तमित्यादिना** ॥ **इति चेन्न दृष्टान्ते साध्याभावादिति** ॥ एतेनान्यथानुमितौ च न पुरुषाश्मवदिति दृष्टान्त इत्यनुवर्तते इत्युक्तं भवति ।

ननु कथं दृष्टान्तो नास्ति । पुरुषप्रधानशरीरोपसर्जनाश्मानयनादिप्रवृत्तिदर्शनादित्यतः प्रवृत्तं शरीरसम्बन्धादित्यादिभाष्यं व्याचष्टे ॥ **तथाहीत्यादिना** ॥ विकल्पमुखेन भाष्यं योजयति ॥ **यदि न शक्तिरिति** ॥ कुतो न युक्तमित्यतोऽज्ञस्य जीवस्य शक्त्ययोगादिति विग्रहमभिप्रेत्य प्रवृत्तं स्वतस्तस्यासामर्थ्यादिति भाष्यं व्याचष्टे ॥ **शरीरेति** ॥ तथा च शरीरसम्बन्धार्थ-मवश्यमङ्गीकर्तव्येनेश्वरेणैव सर्वस्योपपत्तौ किमकिञ्चित्करेण जीवेनेति जीवस्यैव वैय्यर्थ्यमिति भावः । नन्वाद्यमभ्युपगच्छामः । न च शरीरवैय्यर्थ्यमिति वाच्यम् । तत्र शरीरसम्बन्धस्या-ध्यक्षत्वेन शरीररहितस्यासामर्थ्येऽपि शरीरसम्बन्धाय प्रवृत्तौ केवलस्य सामर्थ्योपपत्तेरित्यत आह ॥ **यदीति** ॥ अन्यत्र शिलानयनादावपि शरीरं त्ववर्जनीयसम्बन्धीति भावः ॥ **इत्यन्यतरेति** ॥ केवलस्य प्रवृत्तिसामर्थ्ये शरीरवैयर्थ्यम्, असामर्थ्ये जीववैयर्थ्यमित्यन्यतरवैयर्थ्यमित्यर्थः ॥ **तत्पूर्व-**

(वाक्यार्थमुक्तावली)

**मपीति** ॥ अत्र प्रकृतिपदेन किं जन्यं गुणत्रयमुच्यत उत लिङ्गशरीरम् । आद्ये अनवस्था । तत्सम्बद्धस्यापि केवलस्य शक्त्यभावेन तदर्थं जन्यप्रकृतिशब्दितपदार्थान्तरसम्बन्धस्यापि वक्तव्यत्वादित्यर्थः । द्वितीयमाशङ्कते ॥ **अनादितेति** ॥ **मुक्तानामिति** ॥ प्रकृतिसम्बन्धाभावेन प्रकृतिशक्त्यभावादीश्वरेणैव प्रवृत्तिरित्यत्र मुक्तप्रवृत्तिरुदाहार्येत्यर्थः । सूत्रे न पुरुषाश्मवदित्यनुवर्तते । चशब्दमहिम्ना अङ्गित्वानुपपत्तिरिति चानुकृष्यते । अन्यथा प्रागुक्तादन्यथा जीवस्य प्राधान्येन प्रकृतेर्गुणत्वेन शरीरोपसर्जनपुरुषस्याश्मानयनादिप्रवृत्त्यनुभवात्तद्दृष्टान्तेनानुमितावपि यथा पुरुषशरीरसम्बन्धक्रियायां न शरीरोपकृतस्य शक्तिः तथात्वे शरीरसम्बन्धार्थज्ञस्य जीवस्य स्वतःशक्तिवियोगादङ्गित्वानुपपत्तेः । नापि केवलस्य शरीरसम्बन्धक्रियावत् क्रियान्तरेऽपि शरीरं विनोपपत्तौ तद्वैय्यर्थ्येनाङ्गित्वानुपपत्तेः । तथाश्मानयानादिप्रवृत्तावपि । उभयथाङ्गित्वानुपपत्तौ ईश्वरोऽङ्गीकार्य इति न पुरुषाश्मवदिति दृष्टान्तो युक्त इति सूत्रार्थं हृदि निधायाह ॥ **अतो यथेति** ॥ पक्षद्वयेऽङ्गित्वानुपपत्तेरित्यर्थः ।

## तत्त्वसुबोधिनी

निरीश्वरसाङ्ख्येति प्रकृत्युपसर्जनपुरुषकर्तृत्त्ववादेन पूर्वोक्ताङ्गित्वानुपपत्तिरिति पूर्वपक्षोत्थानात् पूर्वसूत्रोक्ताङ्गित्वानुपपत्त्या सिद्धान्तकरणाद्वानन्तरसङ्गतिरिति भावः । ननु प्रकृत्युपसर्जनकर्तृत्वे बाधकाभावेऽपि साधकाभावादयुक्तमेतदिति अत आह ॥ **तथा चेति** ॥ 'न ऋते त्वत् क्रियते' इति श्रुत्या दृष्टान्तोऽपि ईश्वराधीनत्वमेव न प्रकृत्युपसर्जनजीवाधीनत्वमित्यत आह ॥ **श्रुतेश्चेति** ॥ अवज्ञानात् । श्रुत्युक्तार्थाग्रहणादित्यर्थः । शरीरसम्बन्ध एवायुक्तः इति भाष्यं व्याचष्टे ॥ तर्हि **पुरुषस्येति** ॥ अङ्गित्त्वानुपपत्तिः कुतः इत्यत आह ॥ **जीवस्य शक्तिवियोगादिति** ॥ विग्रहमभिप्रेत्य प्रवृत्तं तस्यासामर्थ्यादिति भाष्यं व्याचष्टे ॥ **शरीरसम्बन्धेति** ॥ तथाच शरीरसम्बन्धघटकतया ईश्वरस्यावश्यं अङ्गीकार्यत्वे जीवस्य वैय्यर्थ्यं इति भावः । **तत्र** शरीरसम्बन्धे ॥ **अन्यत्राश्मादानादावपि** ॥ **अन्यतरवैयर्थ्यमिति** ॥ अशक्तत्वपक्षे जीववैय्यर्थ्य, शक्तत्वपक्षे शरीरवैय्यर्थ्य इत्यर्थः । ननु पूर्वं प्रकृतिसम्बन्धे सत्येव शरीरसम्बन्धः क्रियते न चानवस्था अनादित्वाश्रयणादित्यत आह ॥ **अनादितेति** ॥ मुक्तात्मप्रवृत्तावस्ति प्रवृत्तित्वं, नास्ति च प्रकृतिसम्बन्धाधिकमिति व्यभिचारः इत्यर्थः ।

## वाक्यार्थविवरणम्

पुरुषोपसर्जनाचेतनस्यैव कर्तृत्वमिति भ्रान्तः सन् शङ्कते ॥ **न चेति** ॥ **अङ्गित्वानुपपत्तेरिति** ॥ ज्ञशक्तिवियोगादितिहेतोः साध्यभूताया इति शेषः । समाकृष्टमेवाङ्गित्वानुपपत्तेरिति साध्यं भाष्ये शरीरसम्बन्ध एवायुक्त इति व्याख्यातमिति ध्येयम् ॥ **स्वतः प्रवृत्तिशक्तिरस्तीति** ॥ शरीररहितस्यैव यत्र कुत्रापि कार्ये प्रवृत्तिशक्तिरस्तीत्यर्थः ॥ **शरीरेति** ॥ तथा च तद्वदितरत्रापि अश्मानयनादिकार्ये स्वत एव प्रवृत्त्यापत्तेः शरीरं व्यर्थमिति शरीरोपसर्जनपुरुषाधीनत्वाभावेन साध्यवैकल्यमित्यर्थः ॥ **यदि न शक्तिरिति** ॥ कुत्रापि कार्ये शरीरसम्बन्धमन्तरा प्रवृत्तिशक्तिर्नास्तीत्यर्थः । अङ्गित्वम् । अङ्गभूतशरीरसम्बन्धः । कुत इत्यत आह ॥ **शरीरेति** ॥ **केवलस्येति** ॥ शरीरसम्बन्ध-रहितस्येत्यर्थः । तथा चाङ्गभूतशरीरसम्बन्धघटकत्वेनेश्वरस्याङ्गीकार्यतया तेनैव सर्वप्रवृत्त्युपपत्तौ जीवाङ्गीकारो व्यर्थ इति अश्मानयनादिप्रवृत्तौ शरीरोपसर्जनपुरुषकर्तृकत्वाभावात्पुनः साध्यवैकल्य-मेवेति भावः । शरीरसम्बन्धार्थं केवलस्य प्रवृत्तिरस्ति अश्मानयनादौ नास्तीति चेत्तत्राह ॥ **यदि तत्रेति** ॥ शरीरसम्बन्धरूपे व्यापारे यदि शरीरनिरपेक्षस्यैव जीवस्यास्ति प्रवृत्तिशक्तिरित्यर्थः ॥ **अन्यत्रापि स्यादिति** ॥ अश्मानयनादावपि तच्छरीरनिरपेक्षस्यैव प्रवृत्तिः स्यादित्यर्थः । ततः किमित्यत आह ॥ **इत्यन्यतरवैय्यर्थ्यमिति** ॥ यदि शरीरसम्बन्धरूपे व्यापारे शरीरनिरपेक्षस्य स्वतःप्रवृत्तिशक्तिरङ्गीक्रियते, तर्हि सर्वत्राप्येवं स्यादिति शरीरजीवयोर्मध्येऽन्यतरस्य शरीरस्य वैय्यर्थ्यम् । यदि जीवस्य शरीरसम्बन्धार्थं स्वतः शक्तिर्नास्ति तर्हि तद्घटकत्वेनेश्वरस्याङ्गीकार्यतया तेनैव सर्वप्रवृत्त्युपपत्तौ किं जीवेनेत्यन्यतरस्य जीवस्य वैय्यर्थ्यमिति दृष्टान्ते साध्यवैकल्यं दृढ-मित्याशयः । शरीरसम्बन्धं विना केवलस्य पुरुषस्य कुत्रापि प्रवृत्तिशक्तिर्नास्तीति द्वितीयपक्ष एवाङ्गीक्रियते ।

ननु अङ्गभूतशरीरसम्बन्धरूपाङ्गित्वानुपपत्तिरित्युक्तमिति चेत्तत्राह ॥ **शरीरेति** ॥ **तत्सर्व-मपीति** ॥ प्रकृतिसम्बन्धात्पूर्वमपि प्रकृत्यन्तरसम्बन्धस्याङ्गीकार्यत्वेनेत्यर्थः ॥ **अनादितेति** ॥ बीजाङ्कुरवत् शरीरसम्बन्धपरंपराया अप्यनादितामाश्रित्य सिद्धविषयतयाऽनवस्थाया दोषत्वा-नङ्गीकार इत्यर्थः ॥ **उदाहर्तव्या** ॥ 'विमता प्रवृत्तिः प्रकृत्युपसर्जनपुरुषाधीना प्रवृत्तित्वात्' इत्यनुमाने व्यभिचारस्थलत्वेनेति शेषः । तत्र साध्याभावमुपपादयितुं निष्प्रकृतीनामित्युक्तमिति ज्ञेयम् ।

## वाक्यार्थमञ्जरी

दोषः साध्यवैकल्यम् । 'न ऋते' इति श्रुत्या तत्रापीश्वराधीनत्वमित्यत आह ॥ **श्रुतेरिति** ॥ प्रत्यक्षबाधादित्यर्थः । प्रागुक्तादन्यथाजीवप्राधान्येन प्रकृतेरुपसर्जनत्वेनानुमितौ च शरीरत्व-रूपाङ्गित्वानुपपत्तिः कुतः ज्ञशक्तिवियोगात् । ज्ञस्य जीवस्य शरीरसम्बन्धे शक्त्यभावादित्यर्थः ॥ **अन्यतरेति** ॥ अशक्तत्वपक्षे जीवस्य वैय्यर्थ्यं शक्तत्वपक्षे शरीरवैय्यर्थ्यमित्यर्थः ॥ **पूर्वमप्येव-मिति** ॥ प्रकृतिसम्बद्धस्य शरीरसम्बन्धो भवतीत्युक्ते तत्र प्रष्टव्यम् । किं केवलपुरुषस्य शरीरसम्बन्धे शक्तिरस्ति न वेति । आद्ये प्रकृतिसम्बन्धो व्यर्थः द्वितीये प्रकृतिसम्बन्धो न स्यात्तत्र प्रकृत्यन्तर-सम्बन्धस्वीकारे अनवस्थेति भावः । प्रकृतिसम्बन्धस्यानादित्वात्तदर्थं प्रकृत्यन्तरसम्बन्धापेक्षेत्यतो नानवस्थेत्यत आह ॥ **अनादितेति** ॥ **उदाहर्तव्येति** ॥

## सूत्रभाष्यम्

**॥ ॐ विप्रतिषेधाच्चासमञ्जसम् ॐ ॥ १० ॥**

**सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमञ्जसम् ॥**

**'श्रुतयः स्मृतयश्चैव युक्तयश्चेश्वरं परम् ।**
**वदन्ति तद्विरुद्धं यो वदेत्तस्मान्न चाधम' ॥ इति पाद्मे ।**

## तत्वप्रकाशिका

**एवं प्रत्येकं दूषितान्यनीश्वरमतानि सामान्यदूषणेन निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ विप्रति-षेधादिति ॥ कुतोऽनीश्वरमतानां श्रुत्यादिविरुद्धत्वमित्यत आह ॥ श्रुतय इति ॥ नात्र सेश्वर-साङ्ख्येन सन्तोष्टव्यम् । स्वातन्त्र्यानभ्युपगमात् । ईश्वरं परं वदन्तीति हि स्मृतिः । अतो न साङ्ख्यादिमतविरोधेन लक्षणासम्भव इति सिद्धम् ।**

## भावबोधः

सामान्यदोषेण निराकुर्वत्सूत्रमिति । यद्यपीदं सूत्रम् 'न च स्वातन्त्र्यमस्यैव प्रत्यक्षादि-विरोधतः । हिताक्रियादिदोषाश्च' इत्यनुव्याख्यानमात्रशेषत्वेन व्याख्यातम् । तथापि भाष्येऽ-नीश्वरमतमसमञ्जसमिति सामान्योक्त्यनुसारेणैवमुक्तमिति द्रष्टव्यम् ।

(भावबोधः)

अत्राद्ये– परोत्प्रेक्षितमनुमानमाशङ्क्य तस्याभासत्वाय दृष्टान्तस्य साध्यविकलत्वोपपादनम् । द्वितीये– पूर्वमतसहितैतन्मते श्रुत्यादिविरोधेनायुक्तत्वोक्तिरिति सूत्रक्रमः ।

## भावदीपः

भाष्ये निरीश्वरमतमसमञ्जसमिति सामान्योक्त्यनुरोधेनाह ॥ **एवं प्रत्येकं दूषितानीति** ॥ **अत इति** ॥ साङ्ख्यादिमतानामसमञ्जसत्वादित्यर्थः ।

## वाक्यार्थमुक्तावली

सूत्रे निरीश्वरमतमिति शेषः ।

## तत्त्वसुबोधिनी

ननु सेश्वरसांख्यमते कथमयं दोषः इत्यतः आह– **नात्रेति** ॥ ननु स्वातन्त्र्यानभ्युपगमेऽपि ईश्वराङ्गीकारात् न स्मृत्यादिविरोधः न हि स्मृतौ स्वातन्त्र्यविशिष्टेश्वरः प्रतिपाद्यते येन स्मृत्यादि विरोधः इत्यतः आह ॥ **ईश्वरम् इति** ॥

अन्यथानुमितौ पूर्वं अनुमितादन्यथानुमितौ शरीरोपसर्जनः पुरुषः प्रवर्तत इति पक्षे वक्तव्यम् । किं पुरुषस्य शक्तिरस्ति न वेति । आद्ये शरीरवैयर्थ्यम् । अचेतनशब्दोक्ताङ्गित्वानुपपत्तिः । अङ्गित्वानुपपत्तिः कुतः इत्यत उक्तं **ज्ञशक्तिवियोगादिति** ॥ ज्ञस्य जीवस्य शक्तिवियोगात् स्वतःशरीरसम्बन्धसामर्थ्याभावात् । तथा च शरीरं अङ्गं, जीवोऽङ्गीति व्यवहारो न स्यादित्यक्षरार्थः । अत्राद्ये परोत्प्रेक्षितानुमानस्याभासत्वाय दृष्टान्तस्य साध्यवैकल्योपपादनं द्वितीये पूर्वमतसहितैतन्मते श्रुत्यादिविरोधेनामुक्तत्वोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

कुतो न सन्तोष्टव्यमित्यत आह ॥ **स्वातन्त्र्येति** ॥ ईश्वरस्येति शेषः । ननु ईश्वरस्वातन्त्र्यस्य श्रुत्यादावनुक्तत्वात् तत्स्वातन्त्र्यमङ्गीकर्तुर्मम तस्य कथं श्रुत्यादिविरोध इत्यत आह ॥ **ईश्वरं परमिति** ॥ तथा च सर्वश्रुतीनामीश्वरस्वातन्त्र्याभिधायकत्वस्य स्मृतौ 'परं, स्वतन्त्रं

वदन्ति' इत्यनेनोक्तत्वात् । त्वया च तस्यानुमाहकमात्रत्वस्यैवाङ्गीकारात्त्वन्मतेऽपि तद्विरोधः स्यादेवेत्याशयः ।

## वाक्यार्थमञ्जरी

अचेतनसम्बन्धस्यैव प्रकृतिरिति नियमे व्यभिचारस्थलत्वेनेति शेषः । सर्वश्रुतिस्मृतियुक्ति-विरुद्धत्वाच्चानीश्वरमतमसमञ्जसमित्यर्थः । परं स्वतन्त्रम् ।

॥ इति अन्यथानुमित्यधिकरणम् ॥ ५ ॥

# ६. अथ वैशेपिकाधिकरणम्

## सूत्रभाष्यम्

परमाण्वारम्भवादमपाकरोति–

**॥ ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ ॥ ११ ॥**

महत्वाद्दीर्घत्वाच्च यथा कार्यमुत्पद्यते, एवं ह्रस्वत्वात्पारिमाण्डल्याच्चोत्पद्येत । वाशब्दादन्यथैतयोरपि न स्यात्, विशेपकारणाभावात् ।

## सत्तर्कदीपावली

वैशेपिकाभ्युपगतपरमाण्वारम्भापाकरणत्वेन महद्दीर्घवदित्येतत् सूत्रं व्याचष्टे ॥ **महत्वादित्यादिना ॥**

## तत्त्वप्रदीपिका

अत्र परमाण्वारम्भवादिनो वदन्ति इच्छाज्ञानप्रयत्नसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागैर्गुणैस्समवेत ईश्वरोऽस्ति । तदिच्छाऽदृष्टकालनिमित्तैः परमाणवः पार्थिवाद्याश्चतुर्विधाः सृष्टिकाले द्विश एव संयुज्यमाना द्व्यणुकानि कार्याण्यारभन्ते । तानि च द्व्यणुकानि त्रिशस्त्रिश एव युक्तानि त्र्यणुकारम्भकानि । तानि चतुश्चतुर्योगेन चतुरणुकानां समवायिकारणानि । ततोऽनियत्यैव सर्वकार्यसम्भवः । कारणगता गुणाः कार्ये सदृशं गुणान्तरमारभन्ते । ततः शुक्लेभ्यस्तन्तुभ्यः शुक्लः पटो जायते, कृष्णायाश्च मृदः कृष्णो घटः, महद्भ्यो दीर्घेभ्यश्च त्र्यणुकेभ्यस्तादृशं चतुरणुकं, ततश्च तादृग्गुणः खण्डावयवीत्येवमेव कार्याणीति नियमः । अस्य च नियमस्य क्वापि लोपमालपन्ति, यथा द्व्यणुकगतादणुत्वाद्ध्रस्वत्वाच्च परिमाणाख्यगुणात्त्र्यणुकेऽणुत्वं ह्रस्वत्वं च नोत्पद्येते । विजातीयपरिमाणाक्रान्तेः । पारिमाण्डल्याच्च परमाणुसमवेतात्परिमाणाद्द्व्यणुके ह्रस्वत्वपरिमाणवति पारिमाण्डल्यं नोत्पद्यत इति । अत्र सूत्रमवतारयति– **ॐ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॐ** ॥ त्र्यणुकमहत्त्वाद्दीर्घत्वाच्च यथा चतुरणुकादौ महत्त्वं दीर्घत्वं च कार्यमुत्पद्यते, एवं द्व्यणुकगताद्ध्रस्वत्वात्त्र्यणुके ह्रस्वत्वं कार्यमुत्पद्येत । तथा परमाणुगतात्पारिमाण्डल्याच्च द्व्यणुके पारिमाण्डल्यान्तरमुत्पद्येत । यदि ह्रस्वत्वात्पारिमाण्डल्याच्च तादृशं नोत्पद्यते तर्हि महत्त्वदीर्घत्वयोरपि सकाशात्तादृशं नोत्पद्येत ।

(तत्त्वप्रदीपिका)

विशेषकारणाभावात् । कल्पनामात्रस्यासाधकत्वात् । यथा च महत्त्वं दीर्घत्वं चतुरणुकगतं महत्त्वाद्दीर्घत्वाच्चोत्पद्यते एवं महत्त्वं दीर्घत्वं च त्र्यणुकगतं महत्त्वाद्दीर्घत्वाच्चैव स्यात् । अन्यथा चतुरणुकगतमपि तद्द्वयमेतयोर्न स्यात् । विशेषकारणाभावात् । यथा वा महद्दीर्घं चतुरणुकं महतो दीर्घात्त्र्यणुकादुत्पद्यते, तथा ह्रस्वपरिमण्डलावप्यणुपरमाणू ह्रस्वपरिमण्डलाभ्यां एव स्वकारणाभ्यां उत्पद्येयाताम् । यदि तौह ह्रस्वपरिमण्डलाभ्यां नोत्पद्येते तर्हि चतुरणुकगतं महत्त्वं दीर्घत्वं च त्र्यणुकगतमहत्त्वदीर्घत्वयोरपि न स्यात् । अनुत्पत्तौ च परमाणूनां तद्वत्सर्वानुत्पत्तिं प्रसञ्जयिष्यति । धर्मधर्म्यभेदादुभयी चोक्तिर्न विरुध्यते । अथ मतं द्व्यणुकत्र्यणुकयोः परिमाणान्तराक्रान्तेर्न पारिमाण्डल्याणुत्वे तत्र कार्यजनके, द्वित्वसङ्ख्या त्रित्वसङ्ख्या चाणुत्वमहत्त्वकारणं, परमाणु-द्व्यणुकयोर्महत्त्वे प्रत्यक्षत्वप्रसङ्गः, त्र्यणुकादीनामणुत्वे चाप्रत्यक्षत्वप्रसङ्ग इति । चतुरणुकादाविव द्व्यणुकादावपि विजातीयपरिमाणाक्रान्तिर्न स्यात् । अन्यथा तत्रापि स्यात् । विशेषप्रमाणाभावात् । सङ्ख्यायाः परिमाणारम्भकत्वे पृथक्त्वादेरपि स्यात् । न चेन्न तस्यापि । परमाणोर्द्व्यणुकस्य न महत्त्वं, त्र्यणुकादीनां च मेर्वादिभ्यो नाणुत्वमिति लोकानुभवविरुद्धम् । न चैवमनभ्युपगमे प्रत्यक्षप्रत्यक्ष-विपर्ययप्रसङ्गः । उक्तं हि–

> 'प्रत्यक्षत्वतदन्यत्वे पुरुषापेक्षयाऽखिले ।
> अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया' इत्यनुव्याख्याने ।

यस्मान्नयरत्नवराकरात्कतिचिदिह मणयः परिगृह्यन्ते । न च स्वस्मादनणोः स्वस्य महत्त्वं युक्तम्, अमहतो वाऽणुत्वम् । अपि च महत्वाद्दीर्घत्त्वाच्च यथा यत्किञ्चित्कार्यमुत्पद्यत एवं ह्रस्वत्वा-त्पारिमाण्डल्याच्चोत्पद्येत । यदि तयोः किमपि नोत्पद्यते तदैतयोरपि न स्यात् । विशेषहेतुर्वा वाच्यः ।

## तत्त्वप्रकाशिका

अधिकरणप्रतिपाद्यमाह ॥ **परमाण्विति** ॥ अत्र हरेः सर्वगुणपूर्णत्वे वैशेषिकादिमतविरोध-परिहारादस्ति शास्त्रादिसङ्गतिः । विष्णुरनन्तगुणपूर्ण इत्युक्तम् । तस्य च परमाण्वारम्भवाद-विरुद्धत्वेनाभावशङ्का स्यात् । अतोऽसौ पराकरणीय एव । ईश्वरस्यानन्तगुणत्वं विषयः । युक्तमयुक्तं वेति सन्देहः । मतविवादः सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । षट् खल्विमे भावपदार्था द्रव्यादयः । तत्र गुणाश्रयो द्रव्यं पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदेन नवविधम् । तत्राकाशादिपञ्चकं नित्यमेव । भूतचतुष्टयं तु परमाणुरूपं नित्यमन्यदनित्यमेव । कर्मान्यत्वे सति

(तत्त्वप्रकाशिका)

जातिमात्राश्रया गुणाः रूपरसगन्धस्पर्शशब्दसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्व-द्रवत्वस्नेहसंस्कारबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्माः। ते चानित्याश्रिता अनित्या एव नित्यद्रव्ये द्विविधाश्च। संयोगविभागयोरसमवायिकारणं कर्म उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति पञ्चविधमनित्यमेव। नित्यमेकमनेकसमवेतं सामान्यमनेकविधम्। नित्यः सम्बन्धः समवाय एक एव। नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः। एतत्त्रयं नित्यमेव। तत्रानित्यं कारणत्रितयजन्यम्। यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणं परमाण्वादिद्रव्यमेव। आदिसृष्टौ च परमाणवो द्व्यणुकादिक्रमेणावयविनमारभन्ते। समवायिकारणप्रत्यासन्नमधृतसामर्थ्यमसमवायिकारणम्। प्रत्यासत्तिर्द्वेधा। कार्यैकार्थप्रत्यासत्तिः कारणैकार्थप्रत्यासत्तिश्चेति। तत्र कार्यद्रव्यस्यावयवसंयोग एव कार्यैकार्थप्रत्यासत्त्यासमवायिकारणं भवति। कार्यगतगुणानां च कारणगतगुणाः कर्म च कारणैकार्थप्रत्यासत्त्यादिनासमवायिकारणम्। कार्यगतकर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थ-प्रत्यासत्त्यासमवायिकारणम्। तत्र परिमाणं कारणगतं कार्यगतपरिमाणस्यासमवायिकारणं भवति। परमाणुद्व्यणुकगतं द्व्यणुकत्र्यणुकगतपरिमाणकारणं न भवति। किं तु सङ्ख्यादिनैव तज्जन्म। तदन्यत्कारणं निमित्तमीश्वरादृष्टकालादि। स चेश्वर आत्मविशेषः सङ्ख्यादिपञ्चगुणयुक्तः कर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशाली च। शिष्टषड्गुणायोग्य इति कथं तस्यानन्तगुणत्वं युक्तं स्यात्। अतो व्यर्थ एव पूर्वाध्याय इति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **महदिति** ॥ युक्तमेव हरेरनन्तगुणपूर्णत्वम्। वैशेषिकादीनामनुपपन्नभाषित्वेन तत्कल्पनाया अप्रामाणिकत्वात्। यथा हि। यदुच्यते परिमाणं त्र्यणुकादिगतमसमवायिकारणं भवति न परमाण्वादिगतमिति तदसत्। यथा महत्त्वादीर्घत्वाच्च त्र्यणुकादिगतात्कार्ये परिमाणमुत्पद्यते तथा ह्रस्वत्वाद् द्व्यणुकगतात् त्र्यणुकगतपरिमाणोत्पत्त्युपपत्तेः। परमाणुपरिमाणश्च पारिमाण्डल्यात् द्व्यणुकगतपरिमाणोत्पत्ति-सम्भवादिति भावः। त्र्यणुकादिपरिमाणस्यारम्भकत्वेऽप्यस्य तन्मास्त्वित्यत आह ॥ **वाशब्दादिति** ॥ इति सूचितमिति शेषः। यदि ह्रस्वत्वादेर्नारम्भकत्वं तर्हि महत्वदीर्घत्वयोरपि तन्न स्यात्। कारण-विशेषाभावादित्यर्थः। न तावदसमवायिकारणलक्षणभावाभावाभ्यां विशेषः। ह्रस्वत्वादावपि तद्भावात्। अवर्जनीयप्रत्यासत्तिरेवेति चेन्न। महत्वेऽपि साम्यात्। पारिमाण्डल्यादेरारम्भकत्वे सर्व-कार्याणामणुत्वप्रसङ्ग इति चेत् तत्किमिदमणुत्वं तच्छब्दवाच्यत्वं तदत्यन्तसदृशपरिमाणत्वं वा। आद्ये नास्ति हानिः। द्वितीये महत्त्वस्याप्यनारम्भकत्वं स्यात्। न हि त्र्यणुकादिपरिमाण-मत्यन्तसदृशं सङ्केतमात्रं त्वप्रामाणिकमिति। द्व्यणुकादिपरिमाणे कारणान्तराभावाच्च सङ्ख्यादे-र्महत्त्वारम्भकत्वप्रसङ्गात्। संयोगस्य च द्रव्यनिमित्तत्वमेव किं न स्यात्। भिन्नतया प्रतीत्यभावादिति

(तत्त्वप्रकाशिका)

**चेन्न । भिन्नतया प्रतीत्यभावेऽप्यपेक्षाबुद्धेरात्मगतद्वित्वनिमित्तत्वात् । अभ्युपगम्य चेदमुदितम् । किं तन्तूनां यथाकथंचित्संयोगः पटस्य कारणं विवक्षितो वा । नाद्यः । अनभ्युपगमात् । द्वितीये कस्येति वाच्यम् । पटस्येति चेत् कस्तदा पटोऽवशिष्यते । अतोऽसमवायिकारणं नाम न किञ्चिदस्तीति सिद्धम् ।**

## गुर्वर्थदीपिका

नित्यद्रव्ये द्विविधाश्चेत्यत्र, पाकजत्वात्पार्थिवपरमाणूनां रूपादयोऽनित्याः । आप्यपरमाण्वादीनां तु रूपादयो नित्याः । संयोगविभागौ तु सर्वत्राऽनित्यौ । अपेक्षाबुद्धिजन्यत्वात् द्वित्वादिसङ्ख्या अप्यनित्या इत्यर्थः । संयोगविभागयोरसमवायिकारणं कर्मेत्यत्र केवलसंयोगजनकसंयोगे विभागजनकविभागे चातिव्याप्तिपरिहाराय संयोगविभागयोरित्युक्तम् । उभयकारणत्वं च कर्मण एवेत्यर्थः । पञ्चविधमनित्यमित्यत्र उत्क्षेपणापक्षेपणे सङ्गृह्णता शरादीनां तिर्यक् क्षेपणं न सङ्गृहीतमिति विभागे न्यूनतैवेति द्रष्टव्यमित्यर्थः । नित्यमेकमनेकसमवेतमित्यत्र नित्यं सामान्यमित्युक्ते परमाणुष्वतिव्याप्तिः । तत्परिहारार्थमेकमित्युक्तम् । नित्यमेकमित्युक्ते गगने । अतोऽनेकसमवेतमिति । अनेकसमवेतमित्येवोक्ते संयोगे । एकं समवेतमित्येवोक्ते पुनस्तत्रैव । अतस्तत्परिहारार्थं नित्यमिति । नित्यमनेकं समवेतमित्युक्तेऽन्त्यविशेषेष्वपि । अतस्तत्परिहारार्थमेकमिति । अतः सर्वं विशेषणं सार्थकमित्यर्थः । अन्त्याविशेषा इत्यत्र व्यावर्तकान्तराभावेऽपि ये व्यावर्तकास्तेऽन्त्याः । तत्र अन्त्या इत्येवोक्ते कर्मत्वेऽतिव्याप्तिरतो द्रव्यवृत्तय इत्युक्तम् । तावत्येवोक्ते रूपादौ । अतोऽन्त्या इत्युक्तम् । द्रव्यवृत्तयोऽन्त्या विशेषा इत्युक्तेऽमूर्तव्यावर्तकमूर्तत्वे । अतो नित्येति । तथाऽपि भूतत्वे । अतः मात्रपदमप्यूह्यम् । यत्समवेतं कार्यमुत्पद्यते तदित्यत्र समवायस्य सम्बन्धतयोभयनिष्ठत्वेन कार्यसमवेतमपि कार्यमुत्पद्यत इति कारणलक्षणं कार्येऽतिव्याप्तमिति चेन्न समवेतपदेन समवायसम्बन्धेन तदाश्रितत्वस्य विवक्षितत्वात् । कार्यस्य च कार्याश्रितत्वाभावादिति भावः । कारणैकार्थप्रत्यासत्त्यादिनेत्यत्राङ्गुलीद्वयसंयोगासमवायिकारणे कर्मणि कार्यैकार्थप्रत्यासत्तिरादिपदेन गृहीतेत्यर्थः । कार्यैकार्थप्रत्यासत्तिर्नाम कार्येण सहैकार्थे समवेतत्वम् । तन्तुद्वयसंयोगस्यासमवायिकारणत्वे पट एव कार्यं तस्य च तन्तुद्वयसंयोगस्य च तन्तावेव समवेतत्वात्कार्यैकार्थप्रत्यासत्तिः । तन्तुरूपस्यासमवायिकारणत्वे पटगतरूपं कार्यम् । तेन सहैकार्थप्रत्यासत्तेस्तन्तुरूपेऽभावात्कारणैकार्थप्रत्यासत्तिः ।

(गुर्वर्थदीपिका)
पटरूपकारणेन पटेन सह तन्तुरूपस्य तन्तौ प्रत्यासन्नत्वात्कारणैकार्थप्रत्यासन्नमित्यर्थः । कर्मणश्च कारणगतगुणकर्मणीत्यत्र कारणगतगुणाः । गुरुत्वमादिपतने हेतुः । उत्तरत्र पूर्व-पूर्वपतनक्रिया हेतुरिति तत्सिद्धान्तः । वस्तुगत्या आन्तं गुरुत्वादेव पतनं, क्लृप्तपरित्यागे कारणाभावादिति ज्ञेयम् । सङ्ख्यादिनेत्यत्रादिपदेन तूलपरिमाणासमवायिकारणभूतः प्रशिथिला-वयवसंयोगाख्यः प्रचयो गृह्यते । शिष्टषड्गुणेत्यत्र शिष्टाः उक्तात्माष्टगुणेभ्योऽवशिष्टाः ये जीवात्मनः सुखदुःखधर्माधर्मद्वेषसंस्काराख्याः षड्गुणाः तेषामयोग्य इत्यर्थः । अयोग्य इति वदतो दुःखमिश्रितत्वात्सुखमयोग्यं, दुःखमनिष्टरूपत्वात्स्वत एवायोग्यं, धर्मोऽनित्यसुखजनकत्वाद-योग्यः, अधर्मो दुःखजनकत्वादयोग्यः, द्वेषो दोषरूपत्वादयोग्यः, नित्यज्ञाने ज्ञाननाशोत्तर-कालीनसंस्कारोऽप्ययोग्य इति भावः । 'महत्त्वाद्दीर्घत्वात्' इति वदता भाष्यकारेण सौत्रमह-द्दीर्घशब्दौ भावप्रधानाविति सूचितम् । गुणगुणिनोरभेदसूचनाय सूत्रकृत्तु गुणिपदेनैवाह । महत्त्वेऽपि साम्यादित्यत्र महत्त्वं त्र्यणुकगतमहत्त्वं ततोऽपि सङ्ख्ययैवोत्तरपरिमाणोपपत्तौ महत्त्व-मवर्जनीयप्रत्यासत्त्या तिष्ठत्विति भावः । साम्यादिति वदता सौत्रो वाशब्द उपमार्थक इति सूचितम् । परितो मण्डलस्य वर्तुलस्य भावः पारिमाण्डल्यम् । आद्ये नास्ति हानिरिति वदता परममहत्परिमाणद्रव्यापेक्षया महीमहीधरादेस्तदपेक्षया घटादेस्तदपेक्षया तदवयवपरम्पराया-स्त्र्यणुकपर्यन्तमणुशब्देन व्यवह्रियमाणत्वादिति भावः । न हि त्र्यणुकादिपरिमाणमत्यन्त-सदृशमित्यत्र एकैकत्र्यणुकपरिमाणं त्र्यणुकचतुष्टयारब्धचतुरणुकपरिमाणेनात्यन्तसदृशमित्यर्थः । सङ्ख्यादेर्महत्त्वारम्भकत्वप्रसङ्गादित्यत्र द्व्यणुकत्रयारब्धत्र्यणुके एकैकत्र्यणुकान्महत्त्ववत्परमाणु-द्वयारब्धद्व्यणुके एकैकपरमाणुतो महत्त्वावश्यम्भावादिति भावः । आत्मगतद्वित्वेत्यत्र आत्म-द्वितयगतद्वित्वेत्यर्थः । कस्तदा पटोऽवशिष्यत इत्यस्योर्ध्वतया च पटाकारेणैतास्तन्तवः सम्यक् दीर्घाकारत्वादातानाः । तिर्यक्पटाकारेण प्रोतास्तन्तवस्तद्विरुद्धतानवत्वाद्वितानाः अयमेव पट इति सर्वैर्व्यवह्रियते । इतोऽतिरिक्तं पटं कः प्रत्येतीति भावः ।

## भावबोधः

**वैशेषिकादिमतविरोधपरिहारेति** ॥ तथा च प्राधान्येनेश्वरस्य जगत्कर्तृत्वमङ्गीकुर्वतामस्माकं मते 'प्रतिषेधाच्च' इति निरीश्वरमतोक्तदोषानवकाश इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भावः ॥ **युक्तमयुक्तमिति** ॥ अत्र विष्णोरनन्तगुणपूर्णत्वं किं युक्तमुतायुक्तमिति चिन्ता । तदर्थं

(भावबोधः)

वैशेषिकादिसमयः श्रुत्युक्ततद्बाधनक्षमो भवत्युत नेति । तदर्थं वैशेषिकादयः किमुपपन्नभाषिण उतानुपपन्नभाषिण इति । तदर्थं तत्परिकल्पितप्रक्रियायां साधकबाधकभावाभावौ वर्तेते उत नेति ॥ **जातिमात्राश्रया इति** ॥ गुणे गुणत्वसमवायस्य द्रव्यत्वकर्मत्वाद्यभावस्य च जातिमात्राश्रयत्वमसम्भवीति न वाच्यम्; संयोगसमवायान्यतरसम्बन्धेन यद्यत्रास्ति तत्रत्येव स आश्रय इत्युच्यते । समवायाभावयोस्तु संयोगसमवायान्यतरसम्बन्धेन न गुणवृत्तित्वम् । किं तु केवलविशेषणत्वेनैवेति भावः ॥ **संयोगविभागयोरिति** ॥ समुचितयोरिति शेषः । तेन न संयोगविभागयोरतिव्याप्तिः । कर्म चेति 'च' शब्देनाश्रयगतगुणाश्च । आदिपदेन कार्यैकार्थप्रत्यासत्तिग्रहणम् । तथा च कार्यगतानां रूपरसगन्धस्पर्शपरिमाणैकत्वानेकत्वपृथक्त्वोत्तरसंयोगविभागगुरुत्वद्रवत्वस्नेहवेगानां कारणगता रूपादयः कारणैकार्थप्रत्यासत्त्या असमवायिकारणम् । संयोगविभागवेगानामाश्रयगतं कर्म । पार्थिवपरमाणुगतानां रूपरसगन्धस्पर्शानां पार्थिवतैजसपरमाणुगतद्रवत्वस्य च तद्गत एव तेजःसंयोगः । सर्वत्रैकत्वानेकत्वपृथक्त्वयोराश्रयगतैकत्वैकपृथक्त्वानि । परत्वापरत्वयोराश्रयगतौ दिक्कालसंयोगौ । आत्मविशेषगुणानामात्मगतमनस्संयोगः। शब्दस्याकाशगताः संयोगविभागशब्दाश्च कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमित्यर्थः । कर्मणश्च कारणगुणकर्मणी इति । कर्मसमवायिकारणगतगुणकर्मणी इत्यर्थः । तथा च कर्मण आश्रयगता गुरुत्वद्रवत्ववेगसंयोगाः कर्म च कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमित्यर्थः । द्वितीयादिपतनस्यन्दनादिकं तृतीयादिपतनस्यन्दनादिकं प्रत्यसमवायिकारणमिति मतावष्टम्भेन कर्मग्रहणं कृतम् । वस्तुतस्तु वैशेषिकमते तृतीयादिपतनस्यन्दनादिकं प्रति वेगस्यैवासमवायिकारणत्वम् । न द्वितीयादिपतनादेः । अत एव सुधायां कर्मण आश्रयगता गुरुत्वद्रवत्ववेगसंयोगा असमवायिकारणमित्येवोक्तम् ॥ **परमाणुद्व्यणुकगतमिति** ॥ उपलक्षणमेतत् । तूलपिण्डाद्यवयवगतपरिमाणं तूलपिण्डादिगतपरिमाणगतपरिमाणकारणं न भवतीत्यपि ग्राह्यम् । अत एव तत्कारणप्रचयसङ्ग्रहार्थं सङ्ख्यादिनैवेत्यादिनैवेत्यादिपदप्रयोगः ॥ **शिष्टषड्गुणायोग्य इति** ॥ नित्ययथार्थज्ञानस्येश्वरस्य मोहासम्भवे तत्प्रभवरागद्वेषयोरयोगेन तज्जन्यधर्माधर्मयोरभावात्तन्निमित्तक सुखदुःखयोर्नित्यज्ञानत्वादेव स्मरणलक्षणकल्पकाभावेन भावनायाश्चायोगात् शिष्टषड्गुणायोग्य इत्यर्थः ॥ **यथा महत्त्वाद्दीर्घत्वाच्चेति** ॥ 'कारणबहुत्वात् कारणमहत्वात् प्रचयविशेषाच्च महत्' इति कणादसूत्रानुसारेण सूत्रे महदित्यादिभावप्रधानो निर्देशः । तत्र तस्यैव' इति लक्षणस्य प्रायिकत्वात् पञ्चम्यन्ताद्वतिरित्यभिप्रेत्य भाष्ये महत्त्वा-

(भावबोधः)

दित्याद्युक्तमिति भावः ॥ **न तावदिति** ॥ नापि बाधकभावाभावाभ्यां विशेष इति तावच्छब्दः । अत एव पारिमाण्डल्यादेरारम्भकत्व इति बाधकमाशङ्क्य परिह्रियते— **अवर्जनीयप्रत्यासत्ति-रेवेति** ॥ न तु सामर्थ्यावधारणमिति लक्षणाभाव एवेत्यर्थः । नास्ति नो हानिरिति त्र्यणुकादिसर्वकार्याणामापेक्षिकाणुत्वस्य सत्त्वेन तच्छब्दवाच्यत्वस्येष्टत्वादिति भावः ।

ननु परमाणुद्व्यणुकगतमेव परिमाणमणुशब्दवाच्यं न त्र्यणुकादिसर्वकार्यगतः कथमिष्टा-पत्तिरित्यत आह— **सङ्केतमात्रमिति** ॥ अवर्जनीयप्रत्यासत्तिर्नेत्यत्र हेत्वन्तरमाह— **द्व्यणुकादि-परिमाण इति** ॥ तथा चागत्या पारिमाण्डल्यादेरेव कारणत्वमिति न सामर्थ्यावधारणाभाव इति भावः ।

ननु **सङ्ख्यादिनैव** तज्जन्मेत्युक्तत्वात् कथं कारणान्तराभाव इत्यत आह— **सङ्ख्यादेरिति** ॥ त्र्यणुकादिबहुत्वसङ्ख्याप्रचययोश्चतुरणुकादिगतमहत्त्वारम्भकत्वप्रसङ्गादित्यर्थः । युतसिद्धतयेत्यर्थः ।

## भावदीपः

**इत्युक्तमिति** ॥ पूर्वाध्याये उक्तमित्यर्थः ॥ **न युक्तमितीति** ॥ कुतो न युक्तमित्यतो द्रव्यत्वेन परिगणितात्मविशेषस्य तस्याष्टगुणमात्रयुक्तत्वादिति वक्तुं कानि द्रव्याणि के च गुणा इत्याकाङ्क्षायामनुव्याख्यानोक्तदिशा तदीयप्रक्रियामनुवदति ॥ **षट्खल्विति** ॥ एतदुक्तिः सर्व-सूत्रोपयोगित्वेन द्रव्यादय इत्यादिपदार्थो गुणकर्मसामान्यविशेषसमवाया इति लक्षणवाक्यै-र्विवरिष्यत इति भावः ॥ **गुणाश्रय इति** ॥ गुणात्यन्ताभावानधिकरण इत्यर्थः । तेनाद्यक्षणे नाव्याप्तिर्घटादाविति ध्येयम् । नित्यमेवेत्येवकारेण प्रवाहव्यवच्छेदेन स्वरूपस्यैव कूटस्थ-नित्यत्वमाह ॥ **एवमग्रेऽपि** ॥ अत्र नित्यानित्यविभागोक्तिः । नित्यमेव च भावात् । रूपादि-मत्त्वाच्चेत्येतत्सूत्रोपयोगित्वेन महदिति सूत्रोपलक्षितद्रव्यासमवायिकारणादिखण्डनाय चेति बोध्यम् ॥ **जातिमात्राश्रया इति** ॥ समवायवृत्त्येति योज्यम् । एतेन रूपत्वादिसमवायाश्रयो रूपादिरिति नासम्भवः । गुणस्वरूपाद्युक्तिरीश्वरस्याष्टगुणत्वाद्यवधारणार्था ॥ **अनित्या एवेति** ॥ गुणेषु नित्यानित्यविभागोक्तिर्महदितिसूत्रोपयोगित्वेन । संयोगजनके संयोगे विभागजनके च विभागेऽतिव्याप्तिनिरासाय संयोगविभागयोरिति द्वयोरप्युक्तिः । कर्मस्वरूपाद्युक्तिरुभयथापि न कर्मेतिसूत्रोपयोगित्वेनेति ज्ञेयम् । संयोगेऽतिव्याप्तिनिरासाय सामान्यलक्षणे नित्यमिति

(भावदीपः)

विशेषणम् । समवाये दोषनिरासाय समवेतमित्युक्तिः । आत्मादिनित्यवस्तुगतैकत्वानां जातित्व-निवृत्त्यर्थमेकमिति ॥ **अनेकविधमिति** ॥ परापरजातिभेदेनेति भावः । एतदुक्तिश्च नित्यमेव चेति सूत्रोपयोगित्वेन । समवायस्वरूपोक्तिरपि समवायसूत्रोपयोगाय । अन्त्याः व्यावर्त-(कान्तर)कशून्याः । एतत्त्रयं सामान्यादित्रयम् । नित्यानित्यविभागोक्तेरुपयोगमाह ॥ **तत्रा-नित्यमिति** ॥ **त्रितयेति** ॥ समवाय्यसमवायिनिमित्तकारणरूपत्रितयेत्यर्थः । परमाणव इति बहुवचनं भूतचतुष्टयापेक्षया । प्रत्येकं तु परमाणुद्वयं द्वयमेव व्यणुकादिकार्यारम्भकमिति बोध्यम्। तन्तुरूपादौ पटासमवायित्वव्यावृत्त्यर्थमवधृतेत्यादि । निमित्तादावतिव्याप्तिनिरासाय पूर्वभागः । एवं सति तन्तुरूपादेः पटरूपादिं प्रत्यसमवायिकारणत्वं न स्यात् । पटरूपं प्रति समवायिकारणभूते पटे तन्तुरूपस्याप्रत्यासन्नत्वादित्यत आह ॥ **प्रत्यासत्तिर्द्वेधेति** ॥ असमवायिकारणस्य समवायिकारणे प्रत्यासत्तिर्वर्तनं द्वेधा । स्वकार्येण सहैकस्मिन्नर्थे समवायेन वर्तनं वा स्वकार्ये यत्कारणं तेन सहैकस्मिन्नर्थे वर्तनं चेत्यर्थः ॥ **कारणैकार्थप्रत्यासत्त्यादिनेति** ॥ कार्यगतरूपादिगुणानां कारणगतरूपादयो गुणाः कारणैकार्थप्रत्यासत्त्याऽसमवायिकारणानि । कर्म तु आदिपदोपात्तया कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणम् । संयोगादिकार्यं प्रति कारण-भूतघटादिगतकर्मणः स्वकार्येण संयोगादिना एकार्थे घटादौ प्रत्यासन्नत्वादिति बोध्यम् ॥ **कार्यगतेति** ॥ आम्रफलादिरूपकार्यगतकर्मणः कारणभूतं यदाम्रफलादिकं तद्गताः गुरुत्वद्रवत्व-वेगसंयोगरूपा गुणाः तद्गतं पूर्वपूर्वपतनादिकर्म चादिपदोक्तया कार्यैकार्थप्रत्यासत्त्याऽ-समवायिकारणमित्यर्थः । कार्यगतकर्मणः अवयविगतकर्मणः तत्कारणावयवगतकर्म च कारणैकार्थप्रत्यासत्त्याऽसमवायिकारणमित्यर्थः । यद्वा सुधारीत्या कार्यगतकर्मणः कर्म कारणद्रव्यगता गुरुत्वादयोः गुणाः कार्यैकार्थप्रत्यासत्त्या कर्मकारणैकार्थप्रत्यासत्त्याऽसमवायि-कारणमित्यर्थः । कारणगतेत्यत्र कारणपदेन कर्मकारणस्य कर्मकारणकारणस्य च ग्रहः । गुणकर्मणी इत्यनयोः क्रमेणान्वयः । कर्मणश्च समवायिकारणस्थगुणा एवासमवायिकारण-मित्युक्तेः । महदिति सूत्रनिरस्यं दर्शयति ॥ **तत्र परिमाणमिति** ॥ **सङ्ख्येति** ॥ द्व्यणुकगतं परिमाणं परमाणुगतद्वित्वसङ्ख्यया त्र्यणुकगतं च द्व्यणुकगतबहुत्वसङ्ख्या जायत इत्यर्थः । आदिपदेन प्रचयग्रहणम् । तूलपिण्डादिस्थपरिमाणं प्रशिथिलावयवसंयोगरूपप्रचयजन्यमित्यर्थः । उभयथापीति सूत्रनिरस्यं दर्शयति ॥ **एतदन्यदिति** ॥ समवायिकारणासमवायिकारणाभ्या-मन्यदित्यर्थः । ईश्वरश्चेदस्ति तर्हि द्रव्यं नवविधमिति भज्यते इत्यतो वाऽष्टगुणत्वं निर्धारयितुं

(भावदीपः)

वा.ऽऽह ॥ **स चेति** ॥ **शिष्टेति** ॥ शिष्टेषु आत्मयोग्येषु चतुर्दशसु मध्ये सामान्यस्य सङ्ख्यादि-पञ्चकस्य ज्ञानादिषु नवगुणेषु कर्तृत्वार्थं ज्ञानेच्छाप्रयत्नानामावश्यकत्वे सङ्ख्यादिसामान्यगुण-पञ्चकातिरिक्तानां ज्ञानादिगुणत्रयातिरिक्तानां संस्कारसुखदुःखद्वेषधर्माधर्मरूपषड्गुणानामयोग्य इत्यर्थः । नित्यज्ञानस्य स्मरणहेतुसंस्काराभावादत एव मोहाभावेन तत्कार्यद्वेषधर्माधर्माणां तत्कार्यसुखादेश्चाभावादिति भावः । सूत्रभाष्ययोः क्रियमाणमापादनम् उक्तशङ्कानिरासकत्वाद-सङ्गतमाशङ्क्य परिष्कृत्य व्याचष्टे ॥ **युक्तमेवेति** ॥ **महत्त्वादिति** ॥ प्रतियोगिनि पञ्चमीनिर्देशात् पञ्चम्यन्ततया विग्रहः प्रदर्शितः । पूर्ववत्सन इत्यादाविव पञ्चम्यन्तादपि वतिप्रत्ययसिद्धेः पञ्चम-स्याद्यपादे तत्र तस्येवेत्यत्र मञ्जर्यामुक्तत्वात् । कारणबहुत्वात्कारणमहत्त्वात्प्रचयविशेषाच्च महदिति काणादसूत्रानुसारेण सूत्रे महदित्यादिनिर्देश इति भावः ॥ **कारणविशेषाभावादिति** ॥ ननु तल्लक्षणभावाभावौ वा । 'सदृशस्य हि कार्यस्य नैव योगः कथञ्चन । अप्रत्यक्षत्वमेव स्याद्यतः कार्येष्वणुत्वत' इत्यनुभाष्योक्तदिशा तत्सदृशपरिमाणत्वापत्तिरूपबाधकभावाभावौ वा विशेषकारणमित्यत आद्यं निराह ॥ **न तावदिति** ॥ अवधृतसामर्थ्यं नेति शङ्कते ॥ **अवर्जनीयेति** ॥ द्वितीयमाशङ्क्य निराह ॥ **पारिमाण्डल्यादेरिति** ॥ **नास्ति हानिरिति** ॥ सर्वपदार्थानामापेक्षिकाणुत्ववत्त्वेन तच्छब्दवाच्यत्वस्येष्टत्वात् । 'अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया' इत्यनुभाष्योक्तेरिति भावः ।

ननु परिमाणमणुमहद्दीर्घं ह्रस्वं चेति चतुर्विधमित्यङ्गीकारात् त्र्यणुकादिसर्वकार्यगतं महत् । परमाणुद्व्यणुकगतं तु अणुपरिमाणमित्युपेतत्वेन कथं द्व्यणुकादिगतमत्यन्तसदृशं नेत्यत आह ॥ **सङ्केतमात्रं त्विति** ॥ पारिमाण्डल्यादेरारम्भकत्वे बाधकरूपकारणविशेषं परिहृत्यानारम्भकत्वे बाधकमाह ॥ **द्व्यणुकादिति** ॥ एतेनान्यथा पारिमाण्डल्यादिना परिमाणरूपकार्यानुत्पत्तौ एतयोर्द्व्यणुकत्र्यणुकयोरपि न स्यात् परिमाणमिति शेषः । पारिमाण्डल्यादितोऽन्यस्य कारण-विशेषस्याभावादिति भाष्यस्यार्थान्तरं दर्शितम् । अत एवैताभ्यामिति वाच्ये एतयोरित्युक्तिः । नन्वस्तु परमाणुगतद्वित्वसङ्ख्यैव कारणान्तरमित्यत आह ॥ **सङ्ख्यादेरिति** ॥ परमाण्वादि-गतसङ्ख्यादेर्द्व्यणुकादिपरिमाणकारणत्वे चतुरणुकाद्यारम्भकानेकत्र्यणुकगतबहुत्वसङ्ख्याप्रचययो-श्चतुरणुकगतमहत्त्वारम्भकत्वप्रसङ्गादित्यर्थः । एतेन भाष्येऽन्यथा सङ्ख्यादिनैव द्व्यणुकादिगत-परिमाणोत्पत्त्यङ्गीकारे एतयोर्महत्त्वदीर्घत्वयोरपि चतुरणुकादिस्थपरिमाणकारणत्वं न स्यात् ।

(भावदीपः)

किं तु त्र्यणुकादिगतसङ्ख्यादेरेव स्यात् । विशेषकारणाभावादित्यपि भाष्यार्थ उक्तो भवति । सूत्रोक्तं परिमाणाख्यगुणासमवायिकारणनिराकरणमुपलक्षणमिति भावेन द्रव्यासमवायिकारणमपि निराह ॥ **संयोगस्य चेति** ॥ यत्परमाण्वादिसंयोगो द्व्यणुकाद्यसमवायिकारणमिति वैशेषिकादीनां कल्पनं तन्न । तस्य द्रव्यनिमित्तत्वमेव किं न स्यात् । अनिमित्तत्वे मानाभावात् । निमित्तत्वे बाधकाभावाच्चेति भावः । निमित्तत्वाभावे मानमाशङ्कते ॥ **भिन्नतयेति** ॥ युतसिद्धतयेत्यर्थः ॥ **अभ्युपगम्येति** ॥ समवायिकारणद्रव्यसंयोगात्तत्कार्यस्य पटादेर्भेदमभ्युपगम्य समवायिकारण-संयोगस्य निमित्तत्वमस्तु इत्युक्तम् । वस्तुतस्तु समवायिकारणद्रव्यसंयोगादन्यत्कार्यमेव नास्ती-त्यर्थः । तदेव व्यनक्ति ॥ **किं तन्तूनामिति** ॥ **विवक्षितो वेति** ॥ तन्तूनां व्यतिषङ्गविशेषो वेत्यर्थः ॥ **कस्तदा पट इति** ॥ तन्तुभ्योऽन्यः पटः साक्षात्कस्य दृष्टिपथं गत इत्येकादशे गीतातात्पर्योक्तब्रह्मतर्कस्मृतेरिति भावः । एवं द्रव्यगुणयोरसमवायिकारणनिरासे सति कार्य-कारणयोरभेदादेव कर्मासमवायिकारणमपि निरस्तप्रायं मत्वाऽऽद्यसूत्रतात्पर्यार्थमुपसंहरति ॥ **अत इति** ॥ परिमाणलक्षणगुणासमवायिकारणे विशेषकल्पनस्य निर्बीजत्वात् । उपादानोपादेययोर-भेदेन द्रव्यासमवायिकारणस्य कर्मासमवायिकारणस्य चायोगादित्यर्थः ।

## अभिनवचन्द्रिका

**कार्यगतगुणानाञ्चेति** ॥ आदिशब्देन कार्यैकार्थप्रत्यासत्तिर्गृह्यते । घटादिगतसंयोगादिकं प्रति घटादिगतं कर्म कार्यैकार्थप्रत्यासत्त्या कारणमित्यर्थः ॥ **कर्मणश्चेति** ॥ अत्र कर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमित्येव पाठः । तस्यार्थः फलस्या-द्यपतनरूपे कर्मणि गुरुत्वं द्वितीयपतनरूपे कर्मणि तु आद्यपतनरूपं कर्म, जलस्य स्यन्दन-क्रियायां द्रवत्वं, शरस्य गमनक्रियायां वेगश्चेति सर्वे कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमिति ॥ **परमाणुव्यणुकगतमिति** ॥ यथासङ्ख्यं सम्बन्धः । उपलक्षणमेतत् । तूलपरिमाणं तूलपिण्ड-परिमाणासमवायिकारणं न भवतीत्यपि ग्राह्यम् ॥ **किंत्विति** ॥ आदिशब्देन प्रचयपरिग्रहः ॥ **कारणविशेषाभावादिति** ॥ प्रमाणाभावादित्यर्थः ।

ननु एषां परिमाणानां असमवायिकारणत्वतदभावाभ्यां वैलक्षण्ये कारणविशेषाभावोऽसिद्धः । तथा हि अस्ति तावन्महद्दीर्घपरिमाणयोरसमवायिकारणत्वानुमापकसमवायिकारणलक्षणम् ।

(अभिनवचन्द्रिका)

अवधारयन्ति खलु सास्नादिमत्त्वलक्षणेन गोत्वम् । न च ह्रस्वाणुपरिमाणयोः तदस्ति । नापि प्रमाणान्तरमस्ति । अपि च पारिमाण्डल्यस्य कारणत्वे द्व्यणुकस्याप्यणुत्वप्रसङ्गः । ह्रस्वस्य परिमाणस्य कारणत्वे द्व्यणुकस्यापि ह्रस्वत्वप्रसङ्गः । न च महद्दीर्घपरिमाणयोः कारणत्वे बाधकं पश्यामः । अतो मन्यामहे साधकसद्भावात् बाधकाभावाच्च महद्दीर्घपरिमाणयोः असमवायिकारणत्वं, साधकाभावाद्बाधकसद्भावाच्च नाऽणुह्रस्वपरिमाणयोः कारणत्वमित्यत आह **न तावदित्यादिना ॥** अवर्जनीया प्रत्यासत्तिर्नेत्यत्र हेत्वन्तरमाह **द्व्यणुकादिपरिमाण** इति ॥ न च सङ्ख्याया एव कारणत्वसम्भवात् कारणान्तराभावोऽसिद्ध इति वाच्यम् । तथा सति चतुरणुकादिपरिमाणेऽपि सङ्ख्याया एव कारणत्वसम्भवेन महत्त्वदीर्घत्वयोरपि कारणत्वाभाव-प्रसङ्गादिति भावः । इतः परं टीकायां श्रूयमाणं 'सङ्ख्यादेहत्त्वारम्भकत्वप्रसङ्गात्' इति वाक्यं न टीकावाक्यम् । किन्तु इममेवाभिप्रायं वक्तुं प्रवृत्तस्य कस्यचिद्व्याख्यातुर्वाक्यम् । अवश्यं चैतदेवं विज्ञेयम् । 'सङ्ख्यादेर्महत्त्वारम्भकत्वप्रसङ्गात्' इत्यस्य पूर्वोत्तरवाक्याभ्यामन्वयाभावात् आपादकानुक्तेश्च, आदिशब्दवैयर्थ्याच्च । यदि सङ्ख्यायाः कारणत्वं स्यात्तर्हि सर्वत्रापि सङ्ख्याया एव कारणत्वप्रसङ्गेन महत्त्वदीर्घत्वयोरकारणत्वप्रसङ्गेन महत्त्वदीर्घत्वयोरकारणत्वप्रसङ्गादिति वक्तव्यत्वेन महत्त्वारम्भकत्वमात्रस्याऽनिष्टत्वाभावाच्च सङ्ख्यादेर्महत्त्वारम्भकत्वप्रसङ्गादित्युक्त्य-योगाच्चेति । तन्तुद्वयसंयोगादेः असमवायिकारणत्वं निराकरोति – **संयोगस्य चेति ॥ भिन्नतयेति ॥** पटासमवायिकारणात् भिन्नतया प्रतीत्यभावादित्यर्थः । इदमुक्तं भवति । पटस्य समवायिकारणमिवासमवायिकारणमपि दृष्ट्वा तन्तुसंयोगो न समवायिकारणं नाप्य-समवायिकारणम् । अथ च कारणमिति निश्चये निमित्तकारणं स्यात् । न च तथा निश्चयोऽस्ति । असमवायिकारणान्तरदर्शनादिति **॥ भिन्नतया प्रतीत्यभावेऽपीति ॥** अपेक्षाबुद्धौ आवां द्वाविति प्रतीयमानद्वित्वसमवायिकारणप्रत्यासन्नत्वे सति कारणत्वदर्शनात् असमवायिकारणात् भेदेन प्रतीत्यभाव इति भावः **॥ अभ्युपगम्य चेदमुदितमिति ॥** 'वस्तुतस्तु कारणमेव न भवति तथा हि' इति वाक्यशेषो द्रष्टव्यः **॥ अनभ्युपगमादिति ॥** सिद्धान्त-विरुद्धत्वादित्यर्थः । एतेन नाङ्गीकृतं चेत् परेण संयोगमात्रस्य कारणत्वं तर्हि तन्निषेधवैयर्थ्यम् । अथाभ्युपगतं तर्हि अनभ्युपगमादित्ययुक्तमिति परास्तम् ।

## वाक्यार्थमुक्तावली

**वैशेषिकेति** ॥ तथा च प्राधान्येनेश्वरस्य कर्तृत्वमङ्गीकुर्वतामस्माकं मते विप्रतिषेधाच्चेति निरीश्वरमतोक्तदोषानवकाश इति पूर्वपक्षोत्थानादन्तरसङ्गतिरपीति भावः ॥ **परमाण्वारम्भवाद-विरुद्धत्वेनेति** ॥ परमाणुः स्वस्मिन् समवायसम्बन्धेन सम्बद्धं द्व्यणुकादिकमारभते । तत्र कर्तेश्वरः कर्तृत्वोपयुक्तज्ञानेच्छाप्रयत्नशाली नातिरिक्तानन्दाद्यनन्तगुणक इति यो वादः स परमाण्वारम्भवादः । तद्विरुद्धत्वे गुणानामभावशङ्का स्यादित्यर्थः ॥ **युक्तमिति** ॥ विष्णोरनन्त-गुणत्वं वैशेषिकप्रक्रियाविरोधादयुक्तमुत युक्तमिति चिन्ता । तदर्थं तत्प्रक्रिया प्रमाणवत्युत अप्रमाणिकेति । ईश्वरस्यानन्तगुणत्वमयुक्तमित्यतो गुणानां चतुर्विंशतित्वाद्द्रव्यत्वेन परिगणितात्मविशेषस्येश्वरस्याष्टगुणमात्रत्वादिति वक्तुं तावत् पदार्थविभागमाह ॥ षडिति ॥ एतदुक्तिः सर्वसूत्रोपयोगित्वेन ॥ **गुणाश्रय इति** ॥ अत्र गुणाश्रयत्वं नाम गुणात्यन्ता-भावानधिकरणत्वम् । अतो न प्रथमक्षणे निर्गुणेषु घटादिष्वव्याप्तिः । अत्र नित्यानित्य-विभागोक्तिः 'नित्यमेव च भावात्' 'रूपादिमत्वाच्च' इति सूत्रोपयोगित्वेन महदिति सूत्रोपलक्षितद्रव्यासमवायिकारणखण्डनाय चेति ज्ञेयम् ॥ **जातिमात्राश्रयः इति** ॥ समवाय-सम्बन्धेनेति योज्यम् । तेन गुणे गुणत्वसमवायस्य द्रव्यत्वाद्यभावस्य च स्वरूपसम्बन्धेन सत्वात् जातिमात्राश्रयत्वमसम्भवीति निरस्तम् । गुणस्वरूपाद्युक्तिरीश्वरस्याष्टगुणत्वाद्यवधारणार्था । गुणेषु नित्यानित्यविभागोक्तिरपि महदिति सूत्रोपयोगित्वेन ॥ **संयोगविभागयोरिति** ॥ समुच्चितयोरिति शेषः । तेन संयोगजनके संयोगे विभागजनके विभागे च नातिव्याप्तिः । कर्मस्वरूपोक्तिः । 'उभयथापि न कर्म' इति सूत्रोपयोगित्वेन ॥ **नित्यमेकमिति** ॥ अत्राद्य-विशेषणाभावे घटपटसंयोगद्वित्वादौ अतिव्याप्तिः । द्वितीयाभावे सलिलाद्यनेकपरमाणुरूपेऽति-व्याप्तिः । तृतीयाभावे गगनादौ । समवेतमित्येवोक्ते शब्दे ॥ **अतोऽनेकेति** ॥ यद्यप्यत्रानेकानु-गतमित्येतावन्मात्रोक्तावपि गगनादावतिव्याप्तिर्नास्ति । तथापि समवायेऽतिव्याप्तिवारणाय समवेतमित्युक्तिः । अनेकेति परापरजातिविभागेनेति भावः । एतदुक्तिः नित्यमेवेति सूत्रोप-योगित्वेन । समवायस्वरूपोक्तिरपि समवायसूत्रोपयोगाय । नित्यद्रव्योवृत्तय इति स्वरूपकथनम् । अन्त्या इति लक्षणम् । द्रव्यादिव्यावर्तकानामभावेऽपि ये व्यावर्तका भवन्ति तेऽन्त्याः । अन्त्यव्यावृत्तिहेतव इति यावत् । तेन दण्डादिद्रव्यस्य अदण्डादिभ्यः गुणस्य निर्गुणात् कर्मणश्च

(वाक्यार्थमुक्तावली)

निष्क्रियात् अपरसामान्यस्य द्रव्यत्वादेरद्रव्याद्व्यावृत्तिहेतुत्वेनातिव्याप्तिरिति निरस्तम् । दण्डादीनां दण्ड्यंतरादिभ्योऽव्यावर्तकत्वेन अनुवृत्तेरपि हेतुत्वेन केवलं व्यावृत्तिहेतुत्वाभावात् । नित्यद्रव्यवृत्तय इति नित्येष्वेव द्रव्येष्वेव वर्तन्ते ये ते विशेषा इति सुधारीत्या लक्षणान्तरं वा । तत्पदकृत्यचिन्तात्वस्मदाचार्यैः सुधाविवृत्तौ कृतानुसन्धेया । नित्यानित्यविभागोक्तेरुपयोगमाह ॥ **तत्रानित्यमिति ॥ परमाणव इति ॥** भूतचतुष्टयापेक्षया प्रत्येकं तु परमाणुद्वयमेतत् द्व्यणुकारम्भकमिति बोध्यम् । असमवायिकारणलक्षणे समवायिकारणमात्रप्रत्यासन्नत्वविवक्षायामात्मनः संयोगेऽतिव्याप्तिः । तन्मात्रप्रत्यासत्त्यविवक्षायां तुरीतन्तुसंयोगेऽतिव्याप्तिः । इति चेन्नैषदोषः । यतो नासमवायिकारणत्वमेकं किन्तु तत्तत्कार्यं प्रति भिन्नभिन्नमेव पारिभाषिकम् । तथा च तत्तल्लक्षणदोषपरिहाराय विशेषणं देयम् । न च गुणकर्मान्यतरत्वं लक्षणमिति युक्तम् । अन्त्यावयविरूपादावतिव्याप्तेः । नन्वेवं सति तन्तुरूपादेः पटादिरूपं प्रत्यसमवायिकारणत्वं न स्यात् । पटरूपं प्रति समवायिकारणभूते पटे तन्तुरूपस्याप्रत्यासन्नत्वात् इत्यत आह ॥ **प्रत्यासत्तिरिति ॥ कर्म चेति ॥** चशब्दादाश्रयगता गुणा गृह्यन्ते ॥ **कारणैकार्थप्रत्यासत्यादिनेति ॥** अत्रादिपदेन कार्यैकार्थप्रत्यासत्तिः गृह्यते । तथा च पटादिगतरूपादिकं प्रति तन्त्वादिगतरूपादिकं कारणैकार्थप्रत्यासत्यासमवायिकारणम् । कर्म तु संयोगविभागौ प्रति कार्यैकार्थप्रत्त्यासत्त्यासमवायिकारणम् । संयोगादिकार्यं प्रति कारणभूतघटादिकर्मणः स्वकार्येण संयोगादिकार्यं प्रति कारणभूतघटादिकर्मणः स्वकार्येण संयोगादिना एकार्थे घटादौ प्रत्यासन्नत्वात् । पार्थिवपरमाणुगतानां पाकजरूपादीनां तद्गत एव तेजःसंयोगः । सर्वत्रानेकपृथक्त्वादीनामाश्रयगतैकत्वैकपृथक्त्वादीनि च कार्यैकार्थप्रत्यासत्त्या समवायिकारणमित्यर्थः । कर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थप्रत्यासत्त्यासमवायिकारणमिति । फलादेराद्यपतनरूपकर्मणः कर्मसमवायिकारणगतं गुरुत्वम् । जलस्थस्यन्दनक्रियायां द्रवत्वम् । शरस्य गमनक्रियायां वेगश्चेति कर्मणः कारणगतगुणाः कार्यैकार्थप्रत्यासत्त्यासमवायिकारणमित्यर्थः ।

कारणैकार्थप्रत्यासत्त्येति क्वचित्पाठः । तत्र कर्मणोऽसमवायिकारणं गुरुत्वं, तेन सहैकार्थप्रत्यासत्त्येति योज्यम् । द्वितीयादिपतनस्यन्दनादिकं कर्मजमिति मतानुसारेणेयमुक्तिः । तत्रापि वेगस्यैवासमवायिकारणत्वमिति मतानुसारेण सुधायां कर्मणः कर्मकारणकत्वानुक्तिरित्यविरोधः । परमाणुद्व्यणुकगतमिति यथासङ्ख्यं सम्बन्धः । उपलक्षणमेतत् । तूलपिण्डपरिमाणं

(वाक्यार्थमुक्तावली)
तूलपरिमाणासमवायिकारणकं न भवतीत्यपि ग्राह्यम् । सङ्घाचादिनेत्यादिपदेन प्रशिथिलावयव संयोगरूपप्रचयपरिग्रहः । तूलपरिमाणस्य तूलपिण्डप्रचयकार्यत्वात् ॥ **शिष्टेति** ॥ आत्मयोग्येषु चतुर्दशगुणेषु मध्ये शिष्टसंस्कारादिषड्गुणायोग्य इत्यर्थः । नित्यज्ञानस्येश्वरस्य स्मरणहेतु-संस्काराभावात् । अत एव मोहाभावेन तत्कार्यसुखादेश्चाभावादिति भावः । सूत्रे 'कारण-बहुत्वात् कारणमहत्वात् प्रचयविशेषाच्च महत्' इति काणादसूत्रानुसारेण महदिति भावप्रधानो निर्देशः । तत्र तस्यैवेति लक्षणस्य प्रायिकत्वात् पञ्चम्यन्ताद्वतिः । अत एव ह्रस्व-परिमण्डलाभ्यामिति तत्प्रतियोगिनः तथा निर्देशः । यद्वा षष्ट्यन्ताद्वतिः । विभक्तिविपरिणामेन वा सकाशादित्यध्याहारेण वा भाष्ये महत्वादित्युक्तमिति भावेन भाष्यस्य सूत्रारोहं दर्शयति ॥ **यथेत्यादिना** ॥ महद्दीर्घवद्वा इत्यतः परं परिमाणमुत्पद्यत इति शेषः । परिमण्डलाभ्यामित्यतःपरं उत्पद्यत इति शेष इति भावेन परिमाणमुत्पद्यत इत्याद्युक्तम् ॥ **इति सूचितमिति** ॥ तद्वदेवेति वा अत्राप्युत्पद्यतैवेति वा अवधारणार्थवाशब्देनाविशेषसूचनादिति भावः । तदेव व्यनक्ति **यदीति** ॥ महत्वादेरेवारम्भकत्वं ह्रस्वत्वादेर्नेत्यत्र विशेषहेत्वदर्शनादिति भावः ।

ननु महत्वादेः परिमाणासमवायिकारणत्वसाधकमसमवायिकारणलक्षणमस्ति ह्रस्वत्वादेः परिमाणासमवायिकारणत्वे साधकं लक्षणं नास्ति । किञ्च महत्वादेरारम्भकत्वे बाधकं नास्ति । त्र्यणुकादिगतमहत्वादेः चतुरणुकादौ सजातीयपरिमाणोत्पत्तिसम्भवात् । पारिमाण्डल्य ह्रस्व-त्वयोरारम्भकत्वे स्वसदृशकार्यारम्भकत्वनियमेन सर्वकार्याणामणुत्वादिप्रसङ्गेनाप्रत्यक्षत्वं बाधक-मस्ति । तथा च साधकबाधकभावाभावविशेषस्य विद्यमानत्वात् कथमविशेष इत्यतः साधक बाधकभावाभावविशेषं तावदपाकरोति ॥ **न तावदिति** ॥ अवधृतसामर्थ्येनेति शङ्कते ॥ **अवर्जनीयेति** ॥ द्वितीयमाशङ्क्य निराह ॥ **पारिमाण्डल्यादेरिति** ॥ **नास्ति हानिरिति** ॥ त्र्यणुकादिसर्वपदार्थानां आपेक्षिकाणुत्वेन तच्छब्दवाच्यत्वस्येष्टत्वात् । 'अणुत्वं च महत्वं च यतो वस्तुव्यपेक्षया' इति अणुभाष्योक्तेरिति भावः ।

ननु परमाणुद्व्यणुकादिगतमेव परिमाणमणुशब्दवाच्यं न तु त्र्यणुकादिगतमतः कथमिष्टा-पत्तिरित्यत आह ॥ **सङ्केतेति** ॥ न हीत्यत्रैकैकत्र्यणुकपरिमाणादेः अत्यन्तसादृश्याभावो ज्ञेयः । एवं पारिमाण्डल्यादेरारम्भकत्वे बाधकं परिहृत्यानारम्भकत्वे बाधकमाह ॥ **द्व्यणुकादीति** ॥ भावबोधे तु अवर्जनीयाप्रत्यासत्तिर्नेत्यन·· हेत्वन्तरमाह द्व्यणुकादीत्यवधारितम् । एतेनान्यथा

(वाक्यार्थमुक्तावली)
पारिमाण्डल्यादिना परिमाणरूपकार्यानुत्पत्तावेतयोर्द्व्यणुकत्र्यणुकयोरपि न स्यात् परिमाणमिति शेषः । पारिमाण्डल्यादितोऽन्यस्य कारणविशेषस्याभावादिति भाष्यस्य वृत्यन्तरं दर्शितम् । अत एवैताभ्यामिति भाष्ये वाच्ये एतयोरित्युक्तिः ।

ननु सङ्ख्यादिनैव तज्जन्मेत्युक्तत्वात्कथं कारणान्तराभाव इत्यत आह ॥ **सङ्ख्यादेरिति** ॥ आदिशब्देन प्रचयो गृह्यते । सङ्ख्यादिनैव तज्जन्मेत्यङ्गीकारे परमाणुसङ्ख्यायाः द्व्यणुके महत्वारम्भकत्वप्रसङ्गः । द्व्यणुकगतसङ्ख्यायास्तथात्वाभ्युपगमात् विजातीयत्वाविशेषाच्च । एवं द्व्यणुकगतसङ्ख्यायास्त्र्यणुकगतमहत्वारम्भकत्वे तूलपिण्डगतप्रचयस्य तूलपरिमाणकारणत्वे च त्र्यणुकादिगतबहुत्वसङ्ख्याप्रचययोश्चतुरणुकगतमहत्वारम्भकत्वप्रसङ्गः । तथा च परिमाणस्य कारणत्ववादो दत्तजलाञ्जलिकः स्यादित्यर्थः । एतेनान्यथा सङ्ख्यादिनैतद्व्यणुकादिगतपरिमाणोत्पत्त्यङ्गीकारे एतयोर्महत्वदीर्घत्वयोरपि चतुरणुकादिगतपरिमाणकारणत्वं न स्यात् । किन्तु त्र्यणुकादिगतसङ्ख्यादेरेव स्यात् । विशेषकारणाभावादित्यपि भाष्यार्थ उक्तो भवति । सूत्रोक्तं परिमाणाख्यगुणासमवायिकारणनिराकरणमुपलक्षणमिति भावेन द्रव्यासमवायिकारणमपि निराह ॥ **संयोगस्येति** ॥ अनिमित्तत्वे मानाभावात् निमित्तत्वे बाधकाभावाच्चेति भावः । निमितत्वाभावे मानमाशंकते ॥ **भिन्नतयेति** ॥ युतसिद्धतयेत्यर्थः । लोके हि यन्निमित्तकारणं तुर्यादि तत्समवायिकारणतन्तुषु असमवेततया युतसिद्धमनुभूयते । तन्तुसंयोगश्च तन्तुगुणः समवायिकारणतन्तुसमवेतः, युतसिद्धतया प्रतीत्यविषयः कथं निमित्तकारणं स्यादिति भावः । तन्तुसंयोगो न निमित्तं युतसिद्धतया प्रतीत्यविषयत्वात् । इति विवक्षितेऽनुमाने व्यभिचारमाह ॥ **भिन्नतयेति** ॥ **अभ्युपगम्येति** ॥ कारणत्वं संयोगस्याभ्युपगम्येदं निमित्तत्वमुक्तमित्यर्थः । तन्तु संयोगः कारणमेव न भवति, तथाहीति वाक्यशेषो बोध्यः ॥ **विवक्षितो वेति** ॥ विवक्षितो व्यतिषङ्गविशेषो वेत्यर्थः ॥ **कस्तदेति** ॥ तदा विवक्षिततन्तुसंयोगे सति कः पटो नामावशिष्यते । विवक्षितव्यतिषङ्गविशेष विशिष्टतन्त्वतिरिक्तपदाभावात् । तन्तुव्यतिषङ्गानन्तरं पटोत्पत्त्यभावेन संयोगस्य न कारणत्वमिति भावः । अत्र यद्वक्तव्यं तत्प्रमेयमुक्तावल्यामुक्तं सुधायां विशदम् ।

## तत्त्वसुबोधिनी

**वैशेषिकादीति** ॥ निरीश्वरपक्षोक्तो दोषः नास्माकं स्वातन्त्र्येणेश्वरस्य जगत्कर्तृत्वाङ्गीकारात्

(तत्त्वसुबोधिनी)

ईश्वरस्तु अष्टगुणक एव नानन्दादिगुणक इति पूर्वाक्षेपेणोत्थानादनन्तरसङ्गतिः इति भावः । कुतो न युक्तमित्यतः ईश्वरस्याष्टगुणत्वं वक्तुं क्रमेण पक्षार्थान् निरूपयति ॥ **षडिति** ॥ तत्र द्रव्यलक्षणमाह ॥ **तत्रेति** ॥ आश्रयत्वमात्रस्य जात्यादावपि सत्त्वेनातिव्याप्तिं वारयितुं गुणपदम् । नन्वेवमपि प्रथमक्षणावच्छिन्नेति व्याप्तिरेवेति चेन्न, गुणात्यन्ताभावाविरोधित्वस्याविवक्षितत्वेनादोषात् । लक्षणमुक्त्वा विभागमाह ॥ **पृथिवीति** ॥ नित्यानित्यत्वेन द्रव्यविभागमाह ॥ **तत्रेति** ॥ गुणलक्षणमाह ॥ **कर्मान्यत्वे सतीति** ॥ जात्याश्रयाः इत्युक्तौ कर्मण्यतिव्याप्तिः स्यात् तदर्थं कर्मान्यत्वे सतीति । जात्यादावतिप्रसङ्गं वारयितुं जात्याश्रय इति । एतावत्युक्ते द्रव्ये गतमतो मात्रेति ॥ **न चैवमसम्भवः** ॥ गुणत्वद्रव्यत्वाद्यभावस्य सत्त्वेन जातिमात्राश्रयत्वस्य विवक्षितत्वात् । गुणानां तु समवायसम्बन्धेन जात्यतिरिक्ताश्रयत्वस्याभावान्नासम्भवः । द्रव्यस्य तु समवायसम्बन्धेन जात्यातिरिक्तगुणाद्याश्रयत्वाभावान्नातिप्रसङ्गः । नित्यत्वानित्यत्वेन गुणविभागमाह ॥ **ते चेति** ॥ कर्मविभागमाह ॥ **संयोगविभागयोरिति** ॥ विशेष्यमात्रं त्र्यणुकगतपरिमाणादौ । अतः संयोगविभागयोरिति समग्रमपि संयोगविभागादौ गतम् । अतः आद्येति विशेषणं द्रष्टव्यम् ॥ **नित्यमिति** ॥ नित्यत्वमात्रम् । गगने, अतः समवेतमिति । तावत्युक्ते विशेषे गतम् । अतः **नैकेति** ॥ तथाप्यनेकेषामनेकसमवेतत्त्वमस्त्येवेत्यत उक्तम् ॥ **एकेति** ॥ **नित्यः इति** ॥ सम्बन्धमात्रं संयोगे अतः **नित्येति** ॥ नित्यत्वमात्रं गगने अतः **सम्बन्धेति** ॥ विशेषलक्षणमाह ॥ **नित्येति** ॥ नित्यद्रव्यवृत्तयः इत्युक्ते परमाणुत्वादौ गतम् ॥ **अतोऽन्त्या इति** ॥ अन्तव्यावृत्तिहेतवः इत्यर्थः ॥ **कारणत्रितयजन्यमिति** ॥ समवायि, असमवायि, निमित्तकारणजन्यमित्यर्थः । समवायिकारणलक्षणं आह ॥ **यत्समवेतमिति** ॥ असमवायिकारणलक्षणमाह ॥ **समवायीति** ॥ तन्तुत्वादिव्यावृत्त्यर्थं **अधृतेति** ॥ निमित्तकारणव्यावृत्त्यर्थं आद्यम् । प्रत्यासन्नमित्यस्य प्रत्यासत्तियुक्तमित्यर्थः । तत्र प्रत्यासत्तिं विभागेन दर्शयति ॥ **प्रत्यासत्तिरिति** ॥ **कार्यद्रव्यस्येति** ॥ घटादिरूपस्येत्यर्थः ॥ **कार्येति** ॥ कर्म चेत्यत्र चशब्देन पटरूपाश्रयगतगुणग्रहणम् ॥ **अवयवसंयोगः** तन्तुद्वयसंयोगः ॥ **कार्यैकार्थेति** ॥ कार्येण पटेन सह एकस्मिन् अर्थे तन्तौ अवयवसंयोगस्य या प्रत्यासत्तिः तया इत्यर्थः । आदिपदेन कार्यैकार्थप्रत्यासत्तिग्रहणम् । एवं च पटगतं कर्म, पटगतगुणाश्चादिपदोपात्तकार्यैकार्थप्रत्यासत्या समवायिकारणं पटगतसंयोगादीन् प्रतीत्यन्वयः । एवं च पटादिरूपकार्यगतगुणानां रूपरसगन्धस्पर्शपरिमाणैकत्वैकउक्तोत्तरसंयोगविभागगुरुत्वद्रवत्वस्नेहसंस्कारवेगानां कारणीभूततन्त्वादि-

(तत्त्वसुबोधिनी)

गतरूपादयः कारणैकार्थप्रत्यासत्त्या स्वगतरूपादीन् प्रति कारणेन पटेन सह एकस्मिन्नर्थे तन्तौ या प्रत्यासत्तिः तया समवायिकारणम् । कार्यभूतपटाद्याश्रयगतं, कर्म, तद्गतगुणाश्च, पटादिगत-संयोगविभागवेगादीन् प्रति कार्यैकार्थप्रत्यासत्त्या पटादिगतकर्मणः, कार्येण पटादिगतसंयोगादिना सह एकस्मिन्नर्थे पटे या प्रत्यासत्तिः तया समवायिकारणमित्यर्थः । पार्थिवपरमाणुगतानां रूपरसगन्धस्पर्शानां पार्थिवतेजःपरमाणुगतद्रव्यत्वस्य तद्गत एव तेजःसंयोगः सर्वत्रानेकत्वानेक-पृथक्त्वयोराश्रयगतैकत्वैकपृथक्त्वानि परत्वापरत्वयोगाश्रयगतौ दिक्कालसंयोगौ आत्मविशेष-गुणानां आत्मगतमनःसंयोगः शब्दस्याकाशगतः संयोगविभागशब्दश्च कार्यैकार्थप्रत्यासत्त्या समवायिकारणमित्यर्थः ॥ **कार्यगतकर्मणश्चेति** ॥ पटादिकार्यगतकर्मसमवायिकारणपटादिगत-गुणकर्मणीत्यर्थः । अत्र कार्यैकार्थप्रत्यासत्त्येत्येव मूलपाठः । मूलकोशेषु तथा दर्शनात्, क्वचित् कारणैकार्थप्रत्यासत्त्यादिनेत्यपि पाठः । तत्राप्यतद्गुणसंविज्ञानबहुव्रीहिणा कार्यैकार्थप्रत्यासत्तिरेव विवक्षिता । तथा च पटादिगतकर्मणः पटादिरूपाश्रयगतगुरुत्वद्रवत्ववेगसंयोगाः कर्मकार्येण कर्मणा सहैकस्मिन्नर्थे पटादौ या प्रत्यासत्तिः तया समवायिकारणमित्यर्थः । नन्वेवं सुधाविरोधः । तथा आश्रयगतगुरुत्वद्रवत्ववेगसंयोगानामेव कर्मासमवायिकारणत्वोक्तेरिति चेन्न, द्वितीयादि-पतनस्यन्दनादिकं प्रति तृतीयादिपतनस्यंदनादिकं प्रति असमवायिकारणमिति वैशेषिकैकदेश-मतावलम्बनेन कर्मग्रहणस्य टीकायां उक्तत्वात् । सुधायां तु तृतीयादिपतनस्यन्दनादिकं प्रत्यपि वेगस्यैवासमवायिकारणत्वान्न द्वितीयादिपतनादेरसमवायिकारणत्वमिति वैशेषिकमुख्यमताव-लम्बनेन प्रवृत्या विरोधाभावादिति भावः ॥ **परमाणुद्व्यणुकगतमिति** ॥ उपलक्षणमेतत् । तूलपिण्डाद्यवयवगतं परिमाणं तूलपिण्डादिगतपरिमाणासमवायिकारणं न भवति, किन्तु अवयवगतं प्रचय एवेति द्रष्टव्यम्, अत एव तत्कारणप्रपञ्चसङ्ग्रहार्थं सङ्ख्यादिनैवेत्यादिपदप्रयोगः । विशिष्टसद्गुणायोग्य इति कर्तृत्वार्थं ज्ञानेच्छाप्रयत्नानाम् आवश्यकत्वे तदितरगुणेषु नित्ययथार्थ-ज्ञानस्येश्वरस्य मोहासम्भवे तत्प्रभावरागद्वेषायोगेन तज्जन्यधर्माधर्मयोरभावेन तन्निमित्तसुखदुःखयोः नित्यज्ञानत्वादेव स्मरणकल्पकाभावेन भावनाद्ययोगात् सङ्ख्यादिगुणपञ्चकव्यतिरिक्तषड्गुणायोग्यः इत्यर्थः । यथा महत्वाद्दीर्घत्वाच्चेति कारणबहुत्वात् कारणमहत्वात् प्रचयविशेषाच्च महदिति काणादसूत्रानुसारेण सूत्रे महदिति निर्देशः । तत्र तस्यैवेति लक्षणस्य प्रायिकत्वात् पञ्चम्यन्ता-व्यतिरिक्तेत्यभिप्रेत्य भाष्ये महत्वादित्याद्युक्तमिति भावः । यद्वा महद्दीर्घवदिति षष्ठ्यर्थे वतिः । विभक्तिविपरिणामेन वा सकाशादित्यध्याहारेण वा महत्वामहत्वादित्युक्तमिति भावः इति

(तत्त्वसुबोधिनी)

सूचितमिति शेषः । अन्यथा महत्वदीर्घत्वयोरपि साधकत्वं न स्यादिति वाशब्देन सूचितमित्यर्थः ॥ **न तावदिति** ॥ नापि बाधकभावाभ्यामिति तावच्छब्दः । अतः एव पारिमाण्डिल्या-देरारम्भकत्व इति बाधकमाशङ्क्य परिह्रियते ॥ **तद्भावादिति** ॥ असमवायिकारणलक्षण-सद्भावादित्यर्थः ॥ **प्रत्यासत्तिरेवेति** । तत् सामर्थ्यावधारणं इति लक्षणाभाव एवेत्यर्थः ॥ **साम्यादिति** ॥ अवर्जनीयप्रत्यासत्तित्त्वसाम्यादित्यर्थः ॥ **नास्ति(नो)हानिरिति** ॥ त्र्यणुकादि-सर्वकार्याणामापेक्षितकारणत्वस्य सत्त्वेन तच्छब्दवाच्यत्वस्येष्टत्वात् इति भावः ॥ ननु परमाणु-द्व्यणुकगतपरिमाणमेवाणु न त्र्यणुकादिगतमतः कथं इष्टापत्तिरित्यतः आह ॥ **सङ्केतमात्रमिति** ॥ अयं सङ्केतो प्रामाणिकः । द्व्यणुक अणुकेत्यादिकाणत्वस्य त्र्यणुकवत् द्व्यणुकेत्यापेक्षिक-महत्त्वस्य सम्भवादिति भावः । अवर्जनीया प्रत्यासत्तिर्नेत्यत्र हेत्वन्तरमाह ॥ **द्व्यणुकादीति** ॥ तथा चागत्या पारिमाण्डिल्यादेरेव कारणत्वमिति न सामर्थ्यावधारणाभाव इति भावः । ननु सङ्ख्यादिनैव तज्जन्येत्युक्तत्वात् कथं कारणान्तरा भावः इत्यत आह ॥ **सङ्ख्यादेर्महत्वेति** ॥ चतुरणुकारम्भकानेकत्र्यणुकगतबहुत्वसङ्ख्याप्रचययोश्चतुरणुकगतमहत्वारम्भकत्वप्रसङ्गादित्यर्थः । अवयवसंयोगो समवायिकारणमुच्यते तत्र तस्य निमित्तकारणत्वमेव किं न स्यादिति आह **संयोगस्येति** ॥ **भिन्नतयेति** ॥ युतसिद्धतयेत्यर्थः । संयोगस्य कारणत्वमभ्युपगम्य निमित्त-कारणत्वमेव किं न स्यादित्यापादितम् । इदानीं तु संयोगस्य कारणत्वमेव न सम्भवतीत्याह ॥ **अभ्युपगम्येति** ॥

## वाक्यार्थविवरणम्

**गुणाश्रय इति** ॥ गुणाश्रयत्वं च गुणात्यन्ताभावानधिकरणत्वं विवक्षितम् । अतो न प्रथमक्षणावच्छिन्नघटेऽव्याप्तिरिति ध्येयम् । कर्मण्यतिव्याप्तिपरिहाराय कर्मान्यत्वे सतीत्युक्तम् । सामान्येऽतिव्याप्तिवारणाय जात्याश्रयपदम् । द्रव्येऽतिव्याप्तिवारणाय मात्रपदम् । यद्यपि गुणस्य गुणत्वसमवायद्रव्यत्वाद्यभावाद्याश्रयत्वेन जातिमात्राश्रयत्वाभावेनासम्भव एव । तथापि समवाये न जातिमात्राश्रयत्वं विशेषणतासम्बन्धेनैवेति न दोष इति ध्येयम् ॥ **संयोगविभागयोरिति** ॥

ननु कार्यगतसंयोगं विभागं वा प्रति कारणगतसंयोगस्य विभागस्य वा असमवायि-कारणत्वमस्तीति संयोगासमवायिकारणत्वं विभागासमवायिकारणत्वं च संयोगे विभागे चातिव्याप्तमिति चेन्न । समुच्चितयोः संयोगविभागयोरसमवायिकारणत्वस्य विवक्षितत्वात् ।

(वाक्यार्थविवरणम्)

एकस्मिन् संयोगे विभागे वा समुच्चितौ प्रति असमवायिकारणत्वाभावादिति ध्येयम् ॥ **नित्यमिति** ॥ समवेतं सामान्यमित्युक्ते एकस्मिन् विशेषेऽतिव्याप्तिः ॥ **तदर्थमनेकेति** ॥ अनेकसमवेतत्वं विशेषेष्वतिव्याप्तमत एकमिति पदम् । तावत्युक्ते संयोगेऽतिव्याप्तिः । अतो नित्यपदम् । नित्यमेकमित्युक्ते गगने । अतोऽनेकसमवेतपदम् । अत्र यद्यपि अनेकानुगतमात्रोक्त्यैव लक्षणसामंजस्ये समवेतपदं व्यर्थम् । अवृत्तित्वेन गगने अतिव्याप्तेरनुगतत्वोक्त्यैव परिहारात् । तथापि समवायेऽतिव्याप्तिपरिहारार्थं तदिति ध्येयम् । तथाप्येकपदं व्यर्थम् । न च विशेषेष्वतिव्याप्तिपरिहाराय तदिति वाच्यम् । तेष्वनेकसमवेतत्वाभावात् । अनेकसमवेतत्वं च स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वम् । न ह्येकस्मिन् विशेषे स्वाश्रयप्रतियोगिकान्योन्याभाववति द्रव्यान्तरे समवेतत्वमस्तीति चेत् । अत एवैकत्वं न लक्षणशरीरान्तर्गतं किन्तु सामान्यं सर्वत्रानुगतव्यवहारहेतुत्वादेकमेव न विशेषवत् प्रतिव्यक्तिभिन्नमिति स्वरूपकथनार्थमेवेति संप्रदायविदः । अनयैवानुपपत्त्या केचित् भावत्वे सति विशेषसमवायेतरन्निस्सामान्यं सामान्यमिति कथयन्ति ॥ **अनेकविधमिति** ॥ परम् अपरं परापरं चेति त्रिविधमित्यर्थः ॥ **नित्य इति** ॥ संयोगेऽतिव्याप्तिवारणाय नित्यपदम् । गगने तद्वारणाय सम्बन्धपदमिति ध्येयम् ।

ननु नित्ये कालाकाशसंयोगेऽतिव्याप्तिः । संयोगस्यान्यतरकर्मादिकारणजन्यत्वनियमेन तत्र तदसम्भवेन अजन्यसंयोगानङ्गीकारादिति भावः ॥ **अन्त्या इति** ॥ पार्थिवपरमाण्वोः समगुणक्रियाजातिमतोर्योगीश्वराणामस्मादयं भिन्न इति व्यावृत्तिबुद्धिर्यस्माज्जायते स विशेषः । तथा च अन्ते भवा अन्त्याः । अन्ते गुणादीनां व्यावर्तकाणामभावे भावान्तरव्यावर्तकतया विद्यमाना इत्यर्थः । एतावत एव लक्षणत्वोपपत्तौ नित्यद्रव्यवृत्तय इति स्वरूपसङ्कीर्तनमिति ध्येयम् ॥ **यत्समवेतमिति** ॥ स्वसमवेतकार्यजनकत्वस्य विवक्षितत्वात् न कश्चित् क्षुद्रोपद्रवः ॥ **अवधृतेति** ॥ सामर्थ्यावधारणमनन्यथासिद्धपूर्वभावित्वेन द्रष्टव्यम् । निमित्तकारणेऽतिव्याप्तिवारणाय **समवायिकारणप्रत्यासन्नेति** ॥ तन्तुरूपेऽतिव्याप्तिपरिहारायावधृतेत्युक्तम् । तस्य च पटरूपजननोपक्षीणत्वेनानन्यथासिद्धत्वाख्याऽवधृतसामर्थ्यवत्त्वाभावान्नातिव्याप्तिः ।

ननु द्रव्यासमवायिकारणे संयोगे समवायिकारणप्रत्यासन्नत्वसत्त्वेऽपि गुणासमवायिकारणे कारणगतगुणादौ समवायिकारणप्रत्यासन्नत्वाभावादव्याप्तिः । यदि च समवायिकारणं समवायिकारणसमवेतत्वं विवक्षितं, तदा सयोगेऽव्याप्तिरित्यत आह ॥ **प्रत्यासत्तिश्चेति** ॥

(वाक्यार्थविवरणम्)

कार्येण सहैकार्थे प्रत्यासत्तिः । तथा च समवायिकारणतत्समवायिकारणयोरन्यतरसमवेतत्वमेव समवायिकारणप्रत्यासन्नत्वं विवक्षितम् । तच्च गुणासमवायिकारणे द्रव्याऽसमवायिकारणे चास्तीति नाव्याप्तिदोष इति द्रष्टव्यम् । कारणैकार्थप्रत्यासत्त्यादिनेत्यत्रादिपदेन कार्यैकार्थ-प्रत्यासत्तिग्रहणम् । तथा च कार्यगतानां रूपरसगन्धादिगुणानां कारणगतरूपादयः कारणैकार्थ-प्रत्यासत्त्याऽसमवायिकारणम् । तथा कार्यगतगुणानां संयोगविभागवेगानां कारणगतं कर्म कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणम् । यथा मल्लयोर्मेषयोर्वा संयोगो विभागश्च भवति । तत्र मल्लादिगतं कर्मैव कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणम् । कार्येण संयोगादिना सहैकार्थे मल्लादौ कर्मणः प्रत्यासन्नत्वात् । शरगतवेगसंस्कारस्य शरगतं कर्मैव कारणमित्यर्थः ॥ **कर्मणश्च कारणगतगुणकर्मणी इति** ॥ कर्मसमवायिकारणगतगुणकर्मणी इत्यर्थः । यथा फलगताधः पतनस्य पतनसमवायिकारणफलगतगुरुत्वरूपो गुणः कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणम् । कारणेन पतनेन सहैकार्थे फले प्रत्यासन्नत्वात् । तृतीयादिपतनरूपकर्मणः तत्समवायिकारण-फलगतं द्वितीयादिपतनरूपं कर्म कार्यैकार्थप्रत्यासत्त्याऽसमवायिकारणम् । कार्येण तृतीयपतनेन सहैकार्थे फले द्वितीयपतनस्य प्रत्यासन्नत्वादित्यर्थः ॥ **परमाणुद्व्यणुकगतमिति** ॥ अणुत्वं ह्रस्वत्वं चेत्यर्थः । **द्व्यणुकत्र्यणुकगतपरिमाणेति** ॥ द्व्यणुके ह्रस्वत्वपरिमाणं त्र्यणुके तु महत्त्वं दीर्घत्वं चेति परिमाणद्वयमस्तीति ज्ञेयम् । एवं तर्हि द्व्यणुकत्र्यणुकगतपरिमाणानां किम-समवायिकारणमिति पृच्छति ॥ **किं त्विति** ॥ 'वैरूप्यं तत्र कारणम्' इत्यनुव्याख्यानं मनसि निधायोत्तरमाह ॥ **सङ्ख्यादिनैवेति** ॥ तज्जन्म द्व्यणुकनिष्ठह्रस्वपरिमाणस्य जन्मसङ्ख्यया जन्म ईश्वरापेक्षाबुद्ध्युत्पन्ना या परमाण्वोर्द्वित्वसङ्ख्या तया । तथा तज्जन्मत्र्यणुकनिष्ठमहत्त्वदीर्घत्व-रूपरिमाणजन्म । ईश्वरापेक्षाबुध्युत्पन्ना या द्व्यणुकेषु त्रित्वसङ्ख्या तयेत्यर्थः । आदिपदेन तूलपिण्डपरिमाणजन्म प्रशिथिलावयवसंयोगरूपप्रचयेन भवतीति ध्येयम् ॥

**तदन्यत्** ॥ समवाय्यसमवायिकारणान्यदित्यर्थः ॥ **आत्मविशेष इति** ॥ आत्मनः क्षेत्रज्ञ-परमात्मभेदेन द्विविधत्वादीश्वरस्यात्मविशेषत्वं द्रष्टव्यम् ॥ **शिष्टेति** ॥ आत्मनिष्ठबुद्ध्यादिनव-विशेषगुणानां मध्येऽङ्गीकृतज्ञानेच्छाप्रयत्नैस्त्रिभिरवशिष्टाः सुखदुःखद्वेषधर्माधर्मभावनासंस्काररूपा ये षड्गुणास्तदयोग्यस्तद्वत्त्वायोग्य इत्यर्थः ॥ **यथा महत्त्वादीत्यादि** ॥ त्र्यणुकद्व्यणुकपरिमाणं स्वाश्रयसमवायिकारणपरिमाणजं कार्यपरिमाणत्वात् । चतुरणुकादिपरिमाणवत् । द्व्यणुकपरमाणु-परिमाणं परिमाणारम्भकं द्रव्यसमवायिकारणपरिमाणत्वात् । त्र्यणुकपरिमाणवत् । त्र्यणुक-

(वाक्यार्थविवरणम्)

द्व्यणुके वा परिमाणारभ्यपरिमाणवती कार्यत्वात् । चतुरणुकादिवत् । द्व्यणुकपरमाणू परिमाणाऽसमवायिकारणपरिमाणवन्तौ द्रव्यसमवायिकारणत्वात् । त्र्यणुकवत् । इत्यनुमानान्यत्र सूचितानि द्रष्टव्यानि । न च प्रचयजन्यपरिमाणे व्यभिचारः । तस्यापि पक्षतुल्यत्वात् । प्रचय-कारणताया अप्यनिवारणेन बाधाभावात् । परिणामप्रचययोरुभयोरपि तत्र कारणतया क्लृप्त-शक्तित्वेन गौरवाभावादित्यादिसुधोक्तरीत्या द्रष्टव्यम् ॥ **असमवायिकारणत्ववतीति** ॥ चतुरणुकादिपरिमाण इति शेषः ॥ **परमाण्वादिगतमिति** ॥ द्व्यणुकादिपरिमाणे समवायि-कारणमित्यर्थः । उक्तानुमानेष्वप्रयोजकतामाशङ्कते ॥ **त्र्यणुकादिपरिमाणस्येति** ॥ **आरम्भ-कत्वेऽपीति** ॥ चतुरणुकादिपरिमाणारम्भकत्वेऽपीत्यर्थः ॥ **अस्य** ॥ परमाण्वादिपरिमाणस्य ॥ तत् ॥ द्व्यणुकादिपरिमाणारम्भकत्वम् ॥ **कारणेति** ॥ त्र्यणुकादिगतमहत्त्वादेरेव चतुरणुकादि-परिमाणारम्भकत्वं द्व्यणुकादिह्रस्वत्वादेस्तु नेत्यत्र कारणविशेषाभावादित्यर्थः । कारणविशेष-मेवाशङ्कते ॥ **न तावदिति** ॥ **अवर्जनीयेति** ॥ ह्रस्वत्वस्य प्रत्यासत्तिरवर्जनीयेत्यर्थः । तथा चावश्यकल्प्यमाननियतपूर्ववृत्तिसङ्ख्ययैव त्र्यणुकादिपरिमाणाख्यकार्योत्पत्तौ तत्सहभूतत्वेन रास-भवत् ह्रस्वादेरन्यथायुतसिद्धत्वेनावधृतसामर्थ्याभावेनासमवायिकारणलक्षणाभाव एव विशेष इत्यर्थः । 'सदृशस्य हि कार्यस्य नैव योगः कथञ्चन ।' अप्रत्यक्षत्वमेव स्याद्यतः कार्येष्वणु-त्वतः' इति अनुव्याख्यानानुसारेणानुमानेषु तर्कपराहतिमाशङ्कते ॥ **पारिमाण्डल्यादेरिति** ॥ **तदत्यन्तसदृशेति** ॥ परमाणुपरिमाणात्यन्तसदृशेत्यर्थः । 'अणुत्वं च महत्त्वं च यतो वस्तुव्यपेक्षया' इत्यनुव्याख्यानं मनसि कृत्वाऽऽह ॥ **न नो हानिरिति** ॥ **अत्यन्तसदृश-मिति** ॥ चतुरणुकादिगतमहत्त्वपरिमाणेनेति शेषः । कारणपरिमाणापेक्षया कार्ये परिमाणाति-शयस्यानुभवसिद्धत्वादिति भावः । अवर्जनीयप्रत्यासत्तिर्नेति दूषणान्तरमाह ॥ **द्व्यणुकादीति** ॥ तथाचानन्यगत्या पारिमाण्डिल्यादेरेव कारणत्वं वाच्यमित्यर्थः । न तु कारणान्तराभावोऽसिद्धः । सङ्ख्याया एव कारणान्तररूपायाः सत्त्वादित्याह ॥ **सङ्ख्यादेरिति** ॥ यथा परमाण्वादिगत-सङ्ख्ययैवोत्पत्तिरित्युच्यते तथाऽनयैव रीत्या त्र्यणुकादिगतबहुत्वसङ्ख्ययैव चतुरणुकादिमहत्त्वा-रम्भोपपत्तौ सर्वत्रैकरूप्यलाभेन परिमाणात् तदुत्पत्त्यङ्गीकारो युक्त इत्यर्थः ॥ **द्रव्यनिमित्तत्व-मेवेति** ॥ नासमवायिकारणत्वमित्येवार्थः ॥ **भिन्नतयेति** ॥ द्रव्यापेक्षयेति शेषः । अयुतसिद्ध-तयेत्यर्थः । असमवायिकारणत्वमिति शेषः । घटापेक्षया भिन्नतया प्रतीयमानस्य दण्डादेर्घटं प्रति निमित्तत्वं दृष्टम् । प्रकृते च तदभावादसमवायिकारणत्वमिति भावः । अयुतसिद्धतया प्रतीत्य-

भावस्य नासमवायिकारणतासाधकत्वं व्यभिचारादित्याह ॥ **भिन्नतयेति** ॥ आत्मनोऽतीन्द्रियत्वेन तद्गतद्वित्वस्यापि तथात्वात् द्वित्वरूपकार्यापेक्षयाऽपेक्षाबुद्धेर्भिन्नतया बहिरिन्द्रियप्रतीत्यभावेऽपि निमित्तत्वस्यैव दर्शनात् व्यभिचार इत्यर्थः ॥ **अभ्युपगम्येति** ॥ संयोगस्य पटं प्रति कारणत्वमभ्युपगम्येदं निमित्तत्वमुक्तम् । वस्तुतस्तु कारणत्वमेव नास्तीति भावः ॥ **कारणम्** ॥ असमवायिकारणम् ॥ **विवक्षित इति** ॥ व्यतिषङ्गविशेषविशिष्ट इत्यर्थः ॥ **कस्येति** ॥ व्यतिषङ्गविशेषविशिष्टः तन्तुसंयोगः कस्यासमवायिकारणमिति प्रश्नस्योत्तरं वाच्यमित्यर्थः ॥ **कस्तदेति** ॥ तदा व्यतिषङ्गविशेषानन्तरम् । व्यतिषङ्गविशेषविशिष्टतन्तूनामेव पटत्वेन तयोरत्यन्ताभेदान्न कार्यकारणभाव इति । न तस्यासमवायिकारणत्वमिति भावः ।

## वाक्यार्थमञ्जरी

**परमाण्वारम्भेति** ॥ त्र्यणुकषष्ठभागस्य द्व्यणुकादिक्रमेण कार्यारम्भकत्वमेव न तु तदात्मना परिणामवादेत्यर्थः । ईश्वरस्याष्टगुणमात्रत्वं वक्तुं उपोद्घातमाह ॥ **षट्खल्वित्यादिना** ॥ **गुणाश्रयेति** ॥ गुणात्यन्ताभावानधिकरणमित्यर्थः । तेन प्रथमक्षणावच्छिन्नघटे नाव्याप्तिः । अन्यत्कार्यरूपम् ॥ **कर्मान्यत्वेति** ॥ अत्र कर्मसामान्यद्रव्यव्यावृत्तये क्रमेण विशेषणानि । ननु गुणे गुणत्वसमवायस्य द्रव्यत्वाद्यभावस्यापि सत्वेनासम्भवीदं लक्षणमिति चेन्न । संयोगसमवायान्यतरसम्बन्धेन यद्यत्रास्ति तत्रत्येव स आश्रय इत्यङ्गीकारात् । गुणस्याभावसमवायौ प्रति विशेषणविशेष्यभावेनाश्रयत्वेऽपि संयोगसमवायान्यतरसम्बन्धेनानाश्रयत्वादिति भावः ॥ **संयोगविभागयोरिति** ॥ न च संयोगविभागयोरतिव्याप्तिः । उभयासमवायिकारणत्वस्य विवक्षितत्वादिति भावः ॥ **नित्यमिति** ॥ अत्रसंयोगविशेषगगनसमवायव्यावृत्तये क्रमेण विशेषणानि । नन्वत्रानेकसमवेतत्वं नामानेकत्वसङ्ख्यावत्समवेतत्वं वा स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वं वा । नाद्यः रूपत्वे अव्याप्तेः । तदाश्रये रूपे सङ्ख्याभावात् । न द्वितीयः एकपदवैय्यर्थ्यात् । विशेषाणां प्रतिव्यक्तिनियतत्वेनैकैकस्य विशेषस्य स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वाभावेन तत्राप्यव्याप्त्यभावात् । न च विशेषसमुदायेऽतिव्याप्तिः । समुदायिभिन्नसमुदायाभावात् । भावे वा तस्य समवेतत्वाभावेन तेनैव तद्व्यावृत्तेरिति चेदुच्यते नात्रैकत्वं लक्षणशरीरान्तर्गतम् । किन्तु सामान्यं सर्वत्रानुगतव्यवहारहेतुत्वादेकमेव न तु विशेषवत्प्रतिव्यक्तिभिन्नमिति स्वरूपकथनार्थमिति सम्प्रदायविदः । नन्वथापि कालाकाश-

(वाक्यार्थमञ्जरी)
संयोगेऽतिव्याप्तिरिति चेन्न अनङ्गीकारात् । तयोरमूर्तत्वेन परस्परसंयोगाभावेनामूर्तत्वभङ्गा-भावाच्चेत्यर्थः ॥ **अनेकविधमिति** ॥ सत्ता द्रव्यत्वादिरूपेण परापरोभयविधरूपेत्यर्थः ॥ **नित्य इति** ॥ संयोगाकाशव्यावृत्तये क्रमेण विशेषणे ॥ **अन्त्या इति** ॥ अन्तेभवा इत्यर्थः । गुणादीनां व्यावर्तकाणामभावे स्वयं व्यावर्तकतया विद्यमाना इति यावत् । आद्यपरमाणुप्रभृतिपु समानगुणकर्मजातिमत्सु योगिनामयमस्माद्भिन्न इति व्यावृत्तिबुद्धिजनकस्यान्यस्याभावात्तदर्थं तन्मात्रवृत्तितया व्यावृत्तिबुद्धिजनका विशेषा अङ्गीक्रियन्ते । अत्रांत्या इत्येव लक्षणम् अन्यत्स्वरूपकथनमिति बोध्यम् । तत्र पदार्थेषु यद्यत्र स्वसमवेतकार्यजनकत्वमिति फलितोऽर्थः । द्रव्यमेव न गुणादिकं समवायिकारणम् ॥ **आदिसृष्टाविति** ॥ महेश्वरसिसृक्षया परमाणुषु क्रियोत्पद्यते । ततो द्वयोर्द्वयोरन्योन्यसंयोगेन द्व्यणुकोत्पत्तिस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमित्यादिक्रमेण महापृथिव्याद्युत्पत्तिरित्यर्थः । प्रत्यासन्नं प्रत्यासत्तियुक्तम् ॥ **अवधृतसामर्थ्यमिति** ॥ अवधृतं सम्यङ्निश्चितं सामर्थ्यं कार्यजनने यस्य तत्तथोक्तम् । तदवधारणे हेतुश्चानन्यथा सिद्धत्वम् । अत्र तन्तुतन्तुत्वव्यावृत्तये क्रमेण विशेषणे ॥ **कार्यैकार्थेति** ॥ कार्येण सहैकत्र समवायिकारणेन सहैकत्र समवायश्चेत्यर्थः ॥ **कार्यद्रव्यस्येति** ॥ यथा तन्तुसंयोगः पटलक्षणकार्येण सहैकत्र तंतुषु समवेतः पटसमवायिकारणम् ॥ **कार्यगतेति** ॥ यथा तन्तुरूपं कार्येण पटेन सहैकत्र तंतुषु समवेतं पटरूपासमवायिकारणम् ॥ **कर्म चेति** ॥ यथा तंतुक्रियापटलक्षणकार्येण सहैकत्र तंतुषु समवेत-पटगतविभागकारणम् । अत्र चशब्देनाश्रयगतगुणानामादिशब्देन कार्यैकार्थप्रत्यासत्तेश्च ग्रहणम् । यथापार्थिवपरमाणुगतं रूपादिकं प्रति पार्थिवपरमाणुतेजःसंयोगस्वरूपादिलक्षणकार्येण सह परमाणुलक्षणैकार्थे समवेतत्वेन कारणत्वम् ॥ **कारणगतगुणकर्मणीति** ॥ कर्मसमवायि-कारणगतगुणकर्मणीत्यर्थः । यथा फलगतं गुरुत्वं तद्गतपतनं प्रति तल्लक्षणकार्येण सह फल-लक्षणैकार्थसमवेतमसमवायिकारणम् । यथा वा फलगतं द्वितीयपतनं तद्गततृतीयपतनासमवायि-कारणम् । इदं चैकदेशिमतेन । वस्तुतस्तु तृतीयादिपतनं प्रति वेगस्यैवासमवायिकारणत्वम् । अत एव सुधायां कर्मण आश्रयगताः गुरुत्वद्रवत्वसंयोगा असमवायिकारणमित्येवोक्तम् ॥ **सङ्ख्यादिनैवेति** ॥ परमाणुगतद्वित्वेन द्व्यणुकपरिमाणं तद्गतत्रित्वेन त्र्यणुकपरिमाणम् आदि-पदेन वर्तुलपिण्डपरिमाणं कारणप्रचयसङ्ग्रहः । तत्राप्यवयवपरिमाणस्य हेतुत्वमिति भावः ॥ **एत-दन्यदिति** ॥ समवाय्यसमवायिभिन्नमित्यर्थः ॥ **शिष्टषड्गुणायोग्य इति** ॥ नित्ययथार्थ-ज्ञानस्येश्वरस्य मोहासम्भवे तत्प्रभवरागद्वेषयोरयोगेन तज्जन्यधर्माधर्मयोरभावात्तन्निमित्तसुख-

(वाक्यार्थमञ्जरी)

दुःखयोर्नित्यज्ञानत्वादेव स्मरणलक्षणकल्पकाभावेन भावनाख्यसंस्कारस्य चायोगाच्छिष्टषड्गुणायोग्य इत्यर्थः । यथा महत्वाद्दीर्घत्वाच्च परिमाणाच्च चतुरणकादिकार्यगतं परिमाणं जायते तथा च ह्रस्वत्वात्पारिमाण्डिल्याच्च परिमाणात्तत्कार्ये परिमाणमुत्पद्येत । अन्यथा महत्वदीर्घत्वाभ्यामपि नोत्पद्येताविशेषादित्यर्थः ॥ **न तावदिति** ॥ नापि बाधकभावाभावाभ्यामिति तावच्छब्दः ॥ **प्रत्यासत्तिरेवेति** ॥ न तु सामर्थ्यावधारणमिति लक्षणाभाव एवेत्यर्थः । तत्र यं पुरस्कृत्य यस्य यं प्रति पूर्वभावोऽवगम्यते तत्तेनान्यथासिद्धमित्युक्तान्यथासिद्धिसत्वादिति भावः ॥ **महत्वेऽपीति** ॥ उक्तान्यथासिद्धेस्तत्रापि वक्तुं शक्यत्वादिति भावः । बाधकं शङ्कते ॥ **पारिमाण्डल्यादेरिति** ॥ **नास्ति नो हानिरिति** ॥ त्र्यणुकादिसर्वकार्याणामापेक्षिकाणुत्वसत्वेन तत्राणुशब्दवाच्यत्वस्येष्टत्वादिति भावः । ननु परमाणुगतपरिमाणमेव अणुपरिमाणं न त्र्यणुकादिसर्वकार्यगतमतः कथमिष्टापत्तिरित्यत आह ॥ **सङ्केतमात्रमिति** ॥ अवर्जनीयप्रत्यासत्तिर्नेत्यत्र हेत्वन्तरमाह ॥ **द्व्यणुकादीति** ॥ तथाचानन्यगत्या पारिमाण्डल्यादेरेव कारणत्वमिति न सामर्थ्यावधारणाभाव इति भावः । ननु सङ्ख्यादिनैव तज्जन्मेत्युक्तत्वात्कथं कारणान्तराभाव इत्यत आह ॥ **सङ्ख्यादेरिति** ॥ त्र्यणुकादिगतबहुत्वसङ्ख्यादेश्चतुरणुकादिमहत्वारम्भकत्वप्रसङ्गादित्यर्थः । तथा च तत्रापि परिमाणस्यारम्भकत्वं न स्यादिति भावः । यद्वा द्व्यणुकगतसङ्ख्यादेश्चतुरणुकगतमहत्वारम्भकत्ववत्परमाणुगतसङ्ख्याया अपि द्व्यणुके महत्वारम्भकत्वप्रसङ्गादित्यर्थः ॥ **भिन्नतयेति** ॥ समवायिकारणाद्विविक्ततयेत्यर्थः । तथाविधस्यैव दण्डादेर्निमित्तकारणत्वादिति भावः ॥ **भिन्नतयेति** ॥ द्वित्वसमवायिकारणात्मनः सकाशादिति शेषः । अभ्युपगम्य संयोगस्य कारणत्वं विवक्षितव्यतिषङ्गविशेषविशिष्टः ॥ **कस्तदेति** ॥ व्यतिषङ्गविशेषविशिष्टतन्तूनामेव पटत्वादिति भावः ।

## सूत्रभाष्यम्

### ॥ ॐ उभयथाऽपि न कर्मातस्तदभावः ॐ ॥ १२ ॥

**ईश्वरेच्छाया नित्यत्वे तद्भावेऽपि परमाणुकर्माभावान्नेदानीमपि तत् स्यात् । अनित्यत्वे तत्कारणाभावात् । अतः परमाणुचेष्टाभावात्तत्कार्याभावः । वैदिकेश्वरस्य तु वेदेनैव सर्वशक्तित्वोक्तेः सर्वमुपपद्यते । स्वत एव काले विशेषाङ्गीकृतेश्च ।**

## सत्तर्कदीपावली

परमाणुपरिमाणकारणकतया द्व्यणुकपरिमाणानुत्पत्तौ द्व्यणुकपरमाणुकरणकतया त्र्यणुक-परिमाणानिष्पत्तौ परमाणुकारकतया द्व्यणुकोत्पत्तिः द्व्यणुककारणतया त्र्यणुकोत्पत्तिश्च न स्यात् । न हि द्रव्याणामेव कार्यकारणभावः न तु तत्परिणामानामित्येतद्दृष्टं क्वचित्र्यणुकादिष्वित्यभिप्रायः । उभयथाऽपि न कर्मेत्यादिना यत्परमते दूपणमुक्तं तत्स्वमतेऽपि किं न स्यादित्याशङ्क्य परिहरति ॥ **वैदिकेश्वरस्येत्यादिना ॥** तत्तत्कालभेदेन या सृष्टिस्थित्यादिः सा परमते न स्यात् । अतीता-नागतादिकालभेदानङ्गीकारात् । औपाधिकभेदस्य सत्त्वासत्त्वाभ्यां निरूपयितुमशक्यत्वात् । किं कालेनानुपाधिना । कालानां परस्परं भेद इति प्रश्नस्य परिहर्तुम् अशक्यत्वाद्गुणादिपु शक्ति-विशेपानङ्गीकारात् । निर्विशेपेश्वरेच्छावशात् सृष्टिस्थित्यादिकार्यविशेपानुपपत्तिश्च स्यादित्यर्थः ।

## तत्त्वप्रदीपिका

उभयथाऽपि न कर्मातस्तदभावः । इच्छादयोऽष्टौ गुणा हीश्वरस्य कल्प्यन्ते । सेच्छा किं नित्योतानित्या ? नित्या चेत्, तद्भावेऽपि प्रलयकाले परमाणूनां चलनकर्माभावान्नाभिमतकालेऽपि तत्स्यात् । येन संयुज्य कार्यमारभेरन् । अनित्या चेत्तत्सत्तायाः कारणं मृग्यम् । न च तत्कारणं युक्तम् । सर्वस्य तदिच्छाधीनत्वात् । अतः कारणाभावेनेच्छाभावात्तन्निमित्तपरमाणुचेष्टाभावा-त्तत्कार्याभावः । न चायं विकल्प ईश्वरवादिनां समस्तसमस्तानामिति मन्तव्यम् । यस्य वेदगम्य ईश्वरः तत्पक्षे वेदेनैव तस्य सर्वशक्तित्वोक्तेस्तदा तदा तत्तदिच्छोपपद्यते । न चानित्यत्वापातः । तस्या एवैकस्यास्स्वरूपभूतायास्तत्तत्काले स्वाभाविकविशेषाङ्गीकृतेः । नौपाधिको भेदश्चाङ्गीकर्तव्य इत्यर्थः । औपाधिकभेदस्य सत्यत्व इच्छादेरनित्यत्वं वहुत्वं च । उपाधिभेदाद्भेदोपचारे सृष्टीच्छा संहारेच्छा घटज्ञानं पटज्ञानमित्यादि मिथ्या स्यात् । ततश्च सर्वज्ञत्वं सर्वस्य तदिच्छाधीनत्वं च नैव स्यात् । स्वतो विशेषाङ्गीकारे न कश्चिद्दोषः । वेदेनैव चायमिच्छादिः स्वाभाविकोऽङ्गीक्रियते– 'सोऽभिध्या स जूतिः स प्रज्ञा' 'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते' 'स्वाभाविकी ज्ञानवलक्रिया च' इत्यादिना । इच्छाज्ञानवत्क्रियाया अपि नित्यत्वं विशेषादेवोपपद्यते । तैरपि नित्यप्रयत्नशव्देन नित्यक्रियाह्युच्यते 'कृतिः प्रयत्न' इति तल्लक्षणं ब्रुवाणैः । स्रष्टाऽस्मीतीच्छादिः कुतः संहर्ताऽस्मीतीच्छादिर्भवेद्विशेषाद्दते ।

ननु सृष्टीच्छा संहारकालेऽस्ति वा न वा । अस्ति चेत्कथं संहारः, नास्ति चेत्कथं

(तत्त्वप्रदीपिका)
नित्येच्छादिः स्यात् । उच्यते, नायं दोषः । तत्तत्कालवर्तित्वादिविशेषवदुपपत्तेः । पूर्वकालवर्त्येव हीश्वर उत्तरकालवर्ती । कर्तैव चाऽत्मा भोक्ता भवति । न चेश्वरत्वमपि निर्विशेषं दृश्यते । तत्त-दीशितव्यविषयत्वात् । स्वत एव काले भेदाङ्गीकृतेश्च सम्प्रति सृजामि पश्चात्संहरिष्यामीत्यादि विशेषेच्छादिकमुपपद्यते । औपाधिकभेदः कालेऽप्युक्तरीत्या निरस्तः । कश्चोपाधिः कालभेदकः । आदित्यगतिरपि नानवच्छिन्ना देशमात्रावच्छिन्ना वा कालावच्छेदिका । व्यभिचारादसम्भवाच्च । नापि कालभेदावच्छिन्ना । इतरेतराश्रयप्रसङ्गात् । अतः स्वत एव कालस्य भेदोऽङ्गीकर्तव्यः । अतश्च काले काले विशेषाङ्गीकृतेरिच्छादौ न कश्चिद्दोषः ।

## तत्त्वप्रकाशिका

एवमसमवायिकारणं निरस्य निमित्तकारणनिरासाय सूत्रमुपन्यस्य व्याचष्टे ॥ उभयथेति ॥ सर्वकार्याणामीश्वरेच्छानिमित्तं चेत्तत्र प्रष्टव्यम् । किमीश्वरेच्छा नित्यानित्या वेति । नाद्यः । सत्यामपीश्वरेच्छायां प्रलये परमाणुचेष्टाभावे नान्यदापि तस्यास्तदभावापातात् । तथा च द्व्यणुकादि-कार्याभावः स्यात् । सति कारणे कार्यानुत्पादे तस्य कारणत्वायोगात् । न द्वितीयः । तथा सति तस्याः कार्यत्वेन निमित्तमपेक्षितं स्यात् । न च तदस्ति । तदुत्पत्तावीश्वरेच्छाया अनपेक्षायामन्यत्रापि तत्प्रसङ्गः । पूर्वेच्छानिमित्तमिति चेन्न । प्रमाणाभावात् । अतोऽनित्यत्वे तदभावेनेश्वरेच्छातः परमाणुकर्माभावान्न द्व्यणुकाद्युत्पत्तिः स्यात् । अतो द्वेधापि दुष्टत्वान्नेश्वरेच्छा निमित्तमिति भावः । अत्र परिमाणाभिधानसन्निधापितं व्यणुकादिकं तदिति परामृशति । ईश्वरेच्छाया नित्यत्वनिमित्तत्व-योरभ्युपगमात् । समं भवतामेतद्दूषणमित्यत आह ॥ वैदिकेति ॥ नायमस्मत्पक्षे दोषः । सत्या-मपीश्वरेच्छायां कार्यानुत्पादादेः सर्वस्येश्वराचिन्त्यशक्तित एवोपपत्तेः । सा च 'परास्य शक्तिर्विविधैव श्रूयते' इत्यादि श्रुतिसिद्धा । न च परपक्षे सममेतत् । तेनानुमानमात्रेणेश्वरमभ्युपगच्छता तस्यचिन्त्यशक्त्यनङ्गीकारादिति भावः । इतश्च नायं दोषोऽस्मत्पक्ष इत्याह ॥ स्वत एवेति ॥ नेश्वरेच्छामात्रं निमित्तं येन प्रलयेऽपि कार्योत्पत्तिप्रसङ्गः । किं तु कालोऽपि । न चास्ति प्रलये सोऽपीति वाच्यम् । कालविशेषस्य सृष्टिकालस्याभावात् । न चैतदन्यमतेऽपि समम् । अस्माभिः काले स्वाभाविकसृष्टिकालत्वादिविशेषाणामङ्गीकृतत्वेन तदुपपत्तेः । परेण पुनः सृष्ट्याद्युपाधित एव कालविशेषस्याङ्गीकृतत्वात् । सृष्टिमन्तरेण सृष्टिकालानुपपत्तिः । सृष्टिकालमन्तरेण तदनुपपत्ति-रित्यन्योन्याश्रयापातादिति भावः ।

ननु सत्यामपीश्वरेच्छायां सृष्टिकालाभावेन कार्योत्पादोपरमे सा मोघा स्यादिति चेत्तत्राप्याह

(तत्त्वप्रकाशिका)

॥ **स्वत एवेति** ॥ नैष दोषः । तत्तत्काल एवेश्वरेच्छाया नित्याया अपि सृष्टिविषयत्वादि-विशेषाविर्भावाभ्युपगमात् । न चान्यमतेऽप्येतत्समानम् । अस्माभिस्तद्विशेषाणामनौपाधिकत्वाङ्गी-कारात् परेण सृष्ट्याद्युपाधिनिबन्धनत्वाभ्युपगमात् । तथा चोक्तदोष इति भावः । कालस्य निमित्तत्वमीश्वरेच्छानिमित्तत्वनिरासन्यायेन निरस्तमित्यभिप्रेत्य तद्दोषं वा स्वपक्षे परिहरति ॥ **स्वत एवेति** ॥ नायं दोषोऽस्मत्पक्षेऽस्माभिः काले सृष्टिकालत्वादिविशेषाङ्गीकारात् । तस्यैव निमित्तत्वात् । न चैवं परपक्षे । अस्माभिः कालविशेषाणां स्वाभाविकत्वोररीकारात् । परेण सृष्ट्याद्युपाधिनिबन्धनत्वाभ्युपगतेस्तत्र चोक्तं दूषणमिति भावः । अदृष्टस्य निमित्तत्वं वा पराकृत्य तं दोषं स्वपक्षे परिहरति ॥ **स्वत एवेति** ॥ नायमस्मत्पक्षे दोषो भवति । अस्माभिः सृष्ट्यादिकाले पूर्वं सत्ये वादृष्टे समुद्बोधविशेषाङ्गीकारात् । न चैतदन्यमते सम्भवति । अस्माभिः काले स्वाभाविकविशेषाङ्गीकारात् । परेण पुनः स्वतः काले सृष्टिकालत्वादिविशेषानङ्गीकारेण कदोद्बोध इत्यस्य परिहाराभावात् । उपाध्युक्तौ सोऽपि कदेत्यस्य परिहाराभावादिति भावः ।

## गुर्वर्थदीपिका

सति कारण इत्यत्र कालादृष्टयोरपि सत्त्वात्सत्यां सामग्र्यामित्यर्थः । प्रमाणाभावादित्यत्र नित्येच्छतया श्रुते परमात्मन्यनित्येच्छापरम्पराकल्पने प्रमाणाभावादित्यर्थः । अत्र परिमाणाभि-धानसन्निधापितमित्यत्र परिमाणपदेन पूर्वसूत्रोक्तह्रस्वत्वमहत्त्वादिकं गृह्यत इत्यर्थः । सर्वेश्वरा-चिन्त्यशक्तित एवोपपत्तेरित्यत्राचिन्त्यशक्तिपदेन नित्याया एवेच्छायास्सत एव सर्पस्य फणी-करणगारुडशक्तिवत् शक्तीकरणव्यक्तीकरणादिसामर्थ्यविशेष उच्यते ।

## भावबोधः

द्व्यणुकादिगतरूपकार्यस्याप्रकृतत्वात् कथं तदभाव इति सौत्रस्तच्छब्दस्तत्कार्याभाव इति व्याख्यात इत्यत आह– **परिमाणाभिधानसन्निधापितमिति** ॥

## भावदीपः

ईश्वरेच्छाया नित्यत्वादिना दूषणोक्तेः सङ्गत्यर्थमाह ॥ **सर्वकार्याणामिति** ॥ तद्भावेऽपीत्य-स्यार्थः ॥ **सत्यामपीश्वरेच्छायामिति** ॥ नेदानीमपीत्यादेरर्थः ॥ **अन्यदापीति** ॥ इष्टापत्ति-

(भावदीपः)

माशङ्क्य कार्याभाव इत्यग्रेतनमत्रापि योजयति ॥ **तथा चेति** ॥ अन्यदापि तस्याः तदभाव इत्यत्र हेतुमाह ॥ **सति कारण इति** ॥ अनित्यत्व इत्यादि व्याचष्टे ॥ **न द्वितीय** इति ॥ अत इत्यस्य ईश्वरेच्छाया अभावादिति ईश्वरेच्छात इति चार्थद्वयमुपेत्यात इत्यादि व्याचष्टे ॥ **अतो नित्यत्व इति** ॥ तावता किं प्रकृत इत्यत आह ॥ **अत इति** ॥ तस्यैव विवरणम् ॥ **द्वेधापि दुष्टत्वादिति** ॥ तदभाव इति सूत्रस्थतच्छब्दस्याप्रकृतपरत्वशङ्कां निरस्यति ॥ **अत्र परिमाणाभिधानेति** ॥ तेन भाष्ये कार्याभाव इति व्याख्यानं युक्तमिति भावः । वैदिकपद-व्यावर्त्यमाह ॥ **न च परपक्ष इति** ॥ स्वत एवेति पदव्यावर्त्यमाह ॥ **न चैतदन्यमतेऽपि सममिति** । एवमग्रेऽपि ॥ **उक्तदोष इति** ॥ अन्योन्याश्रयरूपदोष इत्यर्थः ॥ **निरस्तमिति** ॥ नित्योऽनित्यो वेत्याद्युक्तविकल्पदोषैरिति भावः । एवमदृष्टस्येत्यत्रापि बोध्यः ।

## अभिनवचन्द्रिका

**एवमसमवायिकारणं निरस्येति** ॥ नन्विदमत्रायुक्तं वर्तते, किमत्रायुक्तं वर्तते । असमवयि-कारणं निरस्येत्ययुक्तं वर्तते । तथा हि भाष्यकारेणासमवायिकारणस्यानिरस्तत्वात् निरस्येति क्त्वादेशल्यपा समानकर्तृकत्वाभिधायकेन भाष्यकृतैव निरस्तमित्यभिधानात् । अनिरस्तस्य निरस्तमित्यभिधाने कथं नायुक्तमिति चेत्, न'वा शब्दात्, अन्यथा एतयोरपि न स्यात् विशेषकारणाभावात्' इति भाष्येणासमवायिकारणस्य निरस्तत्वात् । ननु 'अन्यथैतयोरपि न स्यादित्यनेन आपाद्यते तस्य च विपर्ययपर्यवसानेन असमवायिकारणं भाष्यकृताऽङ्गीकृतमिति प्रतीयते । तत्कथमुच्यते निराकृतमितीति चेत्, न, भाष्यकृता आपाद्यते एतयोरपि तदभावः साध्यते विशेषकारणाभावादिति हेत्वभिधानात् । इयमत्र भाष्ययोजना महद्दीर्घपरिमाणयोः असमवायिकारणत्वमभ्युपगच्छता ह्रस्वपारिमाण्डिल्ययोरपि असमवायिकारणत्वमभ्युपेयम् । अन्यथा प्रमाणाभावान्न चेत्तदङ्गीक्रियते तर्हि प्रमाणाभावान्महद्दीर्घपरिमाणयोः न तदङ्गीकार्यं वस्तुसिद्धेः प्रमाणाधीनत्वादिति ॥ **निमित्तकारणनिरासायेति** ॥ परमते निमित्तकारणा-सम्भवव्युत्पादनायेत्यर्थः । अत्र गुणसूत्रम् **ॐ उभयथापि न कर्मातस्तदभावः ॐ** इति ॥ अत्र नञ्ग्रहणं कर्मग्रहणं च किमर्थम्, उभयथापि तदभाव इत्येव किं नोच्यते । ईश्वरेच्छायाः कर्मनिमित्तत्ववत् द्व्यणुकादावपि निमित्तत्वेन ईश्वरेच्छानित्यत्वानित्यत्वाभ्यां द्व्यणुककार्या-सम्भवस्य व्युत्पादयितुं शक्यत्वात् । सूत्रे चैवं सति लघु स्यात् । अतश्शब्दस्याप्यग्राह्यत्वादिति

(अभिनवचन्द्रिका)

चेत्, सत्यम् ईश्वरेच्छा कर्मणीव द्व्यणुकादावपि निमित्तम्, तथापि नेश्वरेच्छाया नित्यत्वे द्व्यणुकाभाव आपादयितुं शक्यते । द्व्यणुकस्य प्रत्युत्पन्नपरमाणुद्वयसंयोगजन्यत्वात् प्रलयकाले ईश्वरेच्छासद्भावेऽपि परमाणुसंयोगाभावात् द्व्यणुकानुत्पादेऽपि सृष्टिकाले संयोगसद्भावेन ईश्वरेच्छातः परमाणुद्वयसंयोगोत्पत्त्या द्व्यणुकोत्पत्तिसम्भवात् । न हि सहकारिविरहे कारणं कार्योत्पादकं नेति, तत्समवधानेऽपि नोत्पादकमिति सम्भवति । परमाणुकर्म तु न प्रत्युत्पन्न-कारणजन्यमिति उभयथापि न कर्मोत्पादः सम्भवतीत्यापादयितुं शक्यमिति भावेन 'उभयथापि न कर्म' इत्युक्तम् । एवमपि 'अतस्तदभाव' इति व्यर्थमापाद्यत इति चेत्, न बाधकसद्भावा-दीश्वरेच्छायाः कर्मकारणत्वाभावेऽपि बाधकाभावात् द्व्यणुकादिकार्यकारणत्वं स्यादेवेति न परमते निमित्तकारणासम्भव इत्याशङ्कापरिहाराय 'अतस्तदभाव' इत्यस्य वक्तव्यत्वात् । यदीश्वरेच्छा निमित्तकारणं स्यात्तर्हि पूर्वोक्तरीत्या कर्म न स्यात् । अस्ति चैतत् । तस्मान्न निमित्तमिति विपर्ययपर्यवसानार्थमपि तस्य वक्तव्यत्वाच्च ॥ **किमिति** ॥ प्राक्कल्पीयेश्वरेच्छा प्रलये वर्तते उत नास्तीत्यर्थः ॥ **तथा सतीति** ॥ प्राक्कल्पीयेश्वरेच्छाया विनाशे एतत्कल्पीयजगत्कार-णेश्वरेच्छायां कार्यत्वेनेत्यर्थः ॥ **पूर्वेच्छेति** ॥ प्राक्कल्पीयेच्छा विनष्टापि यागवत् एतदिच्छानिमित्त-मित्यर्थः ॥ **प्रमाणाभावादिति** ॥ प्रमाणबलेन विनष्टयागस्य कारणत्वेऽपि प्रमाणाभावान्न पूर्वेच्छा कारणमिति भावः ॥ **अत्र परिमाणाभिधानसन्निधापितमिति** ॥ परिमाणाभिधाने द्व्यणुकादीनां स्मृतत्वात् बुद्धौ सन्निधापितमित्यर्थः ॥ **न चैतदन्यमतेऽपि सममिति** ॥ ईश्वरेच्छाया निमित्तत्वेऽपि' उभयथापि न कर्म' इति दूषणं नेत्येतत् परमतेऽपि सममिति न वाच्यमित्यर्थः । उभाभ्यामपि सृष्टिकालस्य सहकारितयाऽभ्युपगतत्वात् कुतः साम्याभाव इत्यतः सिद्धान्तवैषम्यं सूचयितुं स्वमतं तावदनुवदति – **अस्माभिरिति** ॥ एतेन अस्माभिः काल इति वाक्यं व्यर्थम् । परेणेत्युत्तरवाक्येनैव कृतत्वादिति परास्तम् । एवमुत्तरत्रापि द्रष्टव्यम् ।

## वाक्यार्थमुक्तावली

भाष्ये तद्भावेऽपीत्यनन्तरं शेषमाह ॥ **प्रलय इति** ॥ नेदानीमित्यनन्तरमीश्वरेच्छाया इत्यनु-वृत्तिं सूचयति ॥ **तस्या इति** ॥ नेदानीमपि स्यादित्यनन्तरम् अतः परमाणुचेष्टाभावादिति वाक्यं योजयति ॥ **तथा चेति** ॥ अन्यदापि तस्यास्तदभाव इत्यत्र हेतुमाह ॥ **सति कारण इति** ॥ अनित्यत्वे तत्कारणाभावादित्येतद्व्याचष्टे ॥ **न द्वितीय इति** ॥ **निमित्तमिति** ॥

(वाक्यार्थमुक्तावली)

ईश्वरेच्छारूपमित्यर्थः ॥ **न चैतदिति** ॥ अनुत्पन्नत्वादिति भावः । नन्वीश्वरेच्छायामिच्छातिरिक्तमेव कारणं नेच्छेत्यतः प्रकारान्तरेण व्याचष्टे ॥ **तदुत्पत्ताविति** ॥ एतेन भाष्ये तत्कारणाभावान्नेदानीमपि स्यादिति सम्बन्धः । तत्र तदुत्पत्ताविश्वरेच्छारूपकारणाभावादिदानीमुत्पाद्ये कार्येऽपीश्वरेच्छा कारणं न स्यादित्यर्थः इत्युक्तं भवति । नन्वीश्वरेच्छा नैका । येनेच्छां प्रत्यकारणत्वं स्यात् । किन्तु पूर्वपूर्वेच्छोत्तरोत्तरेच्छां प्रति कारणमित्याशङ्कते ॥ **पूर्वेच्छेति** ॥ इच्छाव्यक्तिभेदे प्रमाणाभावात् । अनन्तानां कार्यकारणभावे प्रमाणाभावात् अनवस्थाप्रसङ्गादिति भावः । एतेन तत्कारणाभावादित्येतत् तत्र पूर्वेच्छानिमित्तकत्वे कल्पकाभावादिति व्याख्यातम् । अनित्यत्वे तत्कारणाभावादतः परमाणुचेष्टेति विशिष्टवाक्यं योजयति । **अतोऽनित्यत्वे** इति ॥ तस्या इच्छायाः कारणाभावादित्यस्यार्थोऽत इति । तद्रूपकारणाभावदित्यस्यात्यर्थमाह ॥ **तदभावादेवेति** ॥ अत इत्यस्यार्थः **ईश्वरेच्छात इति** ॥ तदभाव इति सूत्रस्थतच्छब्दस्याप्रकृतपरत्वाशङ्कां निराकरोति ॥ **परिमाणाभिधानेति** ॥ परिमाणाभिधाने तद्गुणिनां द्व्यणुकादीनां बुद्धौ सन्निधापितत्वादित्यर्थः । नन्वीश्वरेच्छायाः कर्मनिमित्तत्ववद् द्व्यणुकादावपि निमित्तत्वात् ईश्वरेच्छानित्यत्वानित्यत्वाभ्यां द्व्यणुकादिसकलकार्यासम्भवस्य वक्तुं शक्यत्वात् उभयथापि तदभाव इति सूत्रयितव्यत्वेन कर्मात इति व्यर्थं, लघु चैवं सति सूत्रं स्यादिति चेन्न, ईश्वरेच्छाया नित्यत्वे सत्यामपीश्वरेच्छायां प्रलये द्व्यणुकाभावादन्यदापि तदभाव इत्यापादयितुं न शक्यते । द्व्यणुकस्य प्रत्युत्पन्नपरमाणुद्वयसंयोगजन्यत्वात् । प्रलये सत्यमपीश्वरेच्छायां संयोगाभावात् द्व्यणुकानुत्पत्तावपि सृष्टिकाले संयोगसद्भावेन द्व्यणुकोत्पत्तिसम्भवात् । न हि सहकारिविरहिकार्यमजनयन्न कारणमित्यस्येतराभावप्रसङ्गात् । तं प्रत्युत्तरं वक्तुं न कर्मात इत्युक्तम् । अयमत्रोत्तरक्रमः । संयोगविरहात् कार्याभाव इति न युक्तम् । ईश्वरेच्छायां तस्याप्युपपत्तेः । न च तत्रापि परमाणुचेष्टा सहकारिवैधुर्यात्तदभाव इति वाच्यम् । ईश्वरेच्छयैव प्रलये तदुपपत्तेः । सत्यामपीश्वरेच्छायां परमाणुचेष्टाभावेऽन्यदापि तस्यास्तदभावापातात् । कर्माभावे च संयोगाभावेन द्व्यणुकाद्यभाव इति । कार्यानुत्पादादेरित्यादिपदेन निमित्तकारणकालोत्पादकादृष्टोद्बोधादेर्ग्रहणम् ॥ **अनुमानमात्रेणेति** ॥ कार्यत्वाद्यनुमानमात्रेण केवलकर्तृतयेश्वरमभ्युपगच्छतेत्यर्थः ॥ **इतश्चेति** ॥ न केवलं घटकशिरोमणिनान्ततोऽप्यङ्गीकार्येण शक्तिविशेषेण नास्मत्पक्षे दोषः किन्तु बाह्यसहकारि वैकल्यात् प्रलये सृष्ट्यभाव इति च नास्मात्पक्षे दोष इत्याहेत्यर्थः ॥ **सृष्ट्याद्युपाधित एवेति** ॥ तेनाखण्डकालाङ्गीकारादिति भावः ॥ **तत्तत्काल एवेति** ॥

(वाक्यार्थमुक्तावली)

कालविशेषे स्रक्ष्यामीत्येवंरूपाया नित्याया अपीश्वरेच्छायाः सृष्टिकाले प्राप्ते इदानीं स्रक्ष्ये इति सृष्टिविषयत्वरूपविशेषाविर्भावाभ्युपगमादित्यर्थः । यथागामिनि सूर्योपरागेऽस्मै ब्राह्मणाय गामहं दास्य इतीच्छायां सत्यामप्युपरागकाल एव दास्य इतीच्छा पर्यवस्यति, तथैवेति भावः ।

ननु व्यर्थमेव कालविशेषेऽद्य स्रक्ष्य इत्यकारणव्यक्त्यङ्गीकरणम् । तत्तद्व्यक्त्यर्थमपि काल-विशेषस्य प्रयोजकत्वाङ्गीकारात् । कालविशेषाभावादेव कार्यानुत्पादोपपत्तेः । न च तर्हि इच्छाया मोघत्वमापद्यत इति वाच्यम् ।

'विशेषकाल एवैतत् सृष्ट्यादीच्छा सदातना' । इत्यनुव्याख्यानोक्तरीत्या कालविशेषे स्रक्ष्यामीत्येवं कालविशेषगर्भत्वाद्भगवदिच्छायाः मोघत्वाभावात् इति चेत् सत्यमेवं तथापि सृष्टिकाले प्राप्ते इदानीं स्रक्ष्ये इति इच्छाव्यक्तेः प्रामाणिकत्वात् वस्तुस्थितिरियं निदर्शिता । उक्तं च 'असङ्ख्यातविशेषत्वात् इच्छाया अपि सर्वशः' इति । उक्तं च सुधायां'' यद्यपि काल-भेदमात्रेण कृतसमाधानमेतत् । कालविशेषे स्रक्ष्यामीत्येवं रूपत्वाद्भगवदिच्छायाः न मोघत्वमापद्यते तथापि वस्तुस्थितिरियं निदर्शितेत्यलम् ॥ **ईश्वरेच्छेति** ॥ कालो नित्यश्चेत् सर्वदा कार्यं स्यात् । अनित्यश्चेत् कालाख्यनिमित्ताभावादुत्पत्त्यभावः । स्वोत्पत्तौ काला-नपेक्षायामन्यत्रापि तद्वैय्यर्थ्यं इत्त्येवंरूपेणेत्यर्थः ॥ **उपाध्युक्ताविति** ॥ सृष्टिलक्षणोपाधि सम्बन्धदशायामेवोद्बोध इत्युक्तावित्यर्थः । सूत्रार्थ उक्तप्रायः ।

## तत्त्वसुबोधिनी

**अन्यदापीति** ॥ सृष्टिकालेऽपि ईश्वरेच्छान्तःपरमाणुकर्म न स्यादित्यर्थः । तथापि कुतो न कारणत्वमत आह ॥ **सतीति** ॥ नन्विच्छोत्पत्तौ निमित्तमिच्छान्तरं नापेक्षते इत्यत आह ॥ **तदुत्पत्ताविति** ॥ **पूर्वेच्छायां प्रमाणाभावात् इति** ॥ एतदिच्छोत्पत्तौ पूर्वेच्छाकारणं इत्यत्र प्रमाणं न इत्यर्थः । पूर्वं द्व्यणुकादिरूपकार्यस्याप्रकृतत्वात् कथं तदभावः इति सौत्रः तच्छब्दः तत्कार्याभावः इति व्याख्यातः इत्यत आह ॥ **परिमाणेति** ॥ नन्वचिन्त्यशक्तौ प्रमाणाभावात् कथं तद्बलेन स्वपक्षे दोषाभावः कथ्यते इत्यत आह ॥ **सा चेति** ॥ अस्तु सोपाधिककालाङ्गीकारः तथापि संहारकाले तदभावात् कथं तदानीं द्व्यणुकादिकार्यापादनमित्यत आह ॥ **सृष्टिमन्तरेणेति** ॥ तथा च कालसोपाधिकत्वाङ्गीकार एवायुक्तः । कुतः तद्भावाभावाभ्यां समाधानमिति भावः ॥

(तत्त्वसुबोधिनी)

**अस्माभिरिति** ॥ पूर्वं अदृष्टे सत्येव सृष्टिकालोद्बोधाङ्गीकारादित्यर्थः । ननु यदोपाधिस्तदोद्बोधः इत्ययमेव परिहारः इति कथं तदभावः इत्यत आह ॥ **उपाधीति** ॥

## वाक्यार्थविवरणम्

**अन्यदा** ॥ सृष्टिकालेऽपि ॥ **ततः** ॥ ईश्वरेच्छातः ॥ **तदभावेति** ॥ परमाणुचेष्टाभावेत्यर्थ ॥ **द्व्यणुकादिकार्याभाव इति** ॥ द्वयोःपरमाण्वोः क्रियया संयोगे सति द्व्यणुकमुत्पद्यत इत्यङ्गीकारादिति भावः ॥ **निमित्तम्** ॥ ईश्वरेच्छोत्पत्तौ । ईश्वरेच्छोत्पत्तौ ईश्वरेच्छारूपनिमित्तापेक्षा नास्तीति चेत्तत्राह ॥ **तदुत्पत्ताविति** ॥ **अन्यत्रापि** ॥ परमाणुचेष्टोत्पत्तावपि तत्प्रसङ्गः । ईश्वरेच्छारूपनिमित्तकारणानपेक्षत्वप्रसङ्गः ॥ **पूर्वेच्छेति** ॥ सृष्टिकाले ईश्वरेच्छोत्पत्तौ तत्पूर्वतनकालीनेच्छानिमित्तमित्यर्थः ॥ **तदभावेन** ॥ ईश्वरेच्छोत्पतौ निमित्ताभावेनेश्वरेच्छाया एवाभावेनेत्यर्थः ।

**सन्निधापितम्** ॥ तदाश्रयतया बुद्धिसन्निहितमित्यर्थः ॥ **तदिति** ॥ सौत्रतच्छब्देनेत्यर्थः ॥ **सोऽपीति** ॥ कालोऽपीत्यर्थः । प्रलयस्यैव सत्त्वादिति भावः । 'न हि कालविभेदोऽस्ति तत्पक्षे' इत्यनुव्याख्यानं हृदि निधायाह ॥ **न चैतदित्यादिना** ॥ **तदुपपत्तेरिति** ॥ कालोऽपि कारणं, प्रलये तदभावात् कार्योत्पत्त्यभाव इत्यस्योपपत्तेरित्यर्थः ॥ **उपाधित एवेति** ॥ वस्तुतस्त्वखण्ड एवेति भावः । ततश्च को दोष इत्यत आह ॥ **सृष्टिमिति** ॥ **उपरमे** ॥ प्रलय इति शेषः । सेश्वरेच्छा ॥ **मोघेति** ॥ वृथेत्यर्थः । सृष्टिं करिष्यामीतीच्छामीश्वरः प्रलये करोति परं सृष्टिकालाभावात् सृष्टिर्न भवतीत्युक्ते इच्छाया पराधीनत्वप्राप्त्या वृथात्वापातादित्याशयः । 'तत्कालसृष्टिमेवातो वांच्छतीशः सदैव हि । स्यात्कालः स तदैवेति कालस्य स्वगतत्वतः ॥' इत्यनुव्याख्यानानुसारेणाह ॥ **तत्काल एवेति** ॥ **तद्विशेषाणाम्** ॥ सृष्टिविषयकत्वादिविशेषाणाम् ॥ **उक्तो दोष इति** ॥ सृष्टौ सत्यामिच्छायास्तद्विषयकत्वसिद्धिः । तस्यां च सत्यां सृष्टिरितीतरेतराश्रय इत्यर्थः ॥ **निरस्तमिति** ॥ कालस्य नित्यत्वे प्रलये तद्भावेऽपि परमाणुकर्माभावान्नेदानीमपि स्यात् । अनित्यत्वे तदुत्पत्तौ कालान्तराभावेन तदुत्पत्त्ययोगात् । ततः कालात् परमाणुचेष्टाभावेन द्व्यणुकादिकार्याभावेन द्वेधापि दुष्टत्वान्न कालोऽपि निमित्तमिति कालस्य निमित्तत्वं निरस्तमित्यर्थः ॥ **तद्दोषमिति** ॥ कालस्य नित्यत्वनिमित्तत्वयोरभ्युपगमात्

(वाक्यार्थविवरणम्)

समं भवतामेतद्दूषणमित्यर्थः । तस्यैव । कालविशेषरूपसृष्टिकालस्यैव । कालविशेषाणाम् । सृष्टिकालत्वादीनाम् ॥ **उक्तमिति** ॥ सृष्ट्याद्युपाधिप्राप्तौ सृष्टिकालप्राप्तिः । तत्प्राप्तौ सृष्टिरित्यन्योन्याश्रयरूपं दूषणमुक्तमित्यर्थः ॥ **पराकृत्येति** ॥ इच्छाकालयोर्निमित्तत्वनिराकरणन्यायेनेत्यर्थः । **अदृष्टस्य नित्यत्वे प्रलये तद्भावे** परमाणुकर्माभावान्नेदानीमपि स्यात् । अनित्यत्वे तदुत्पत्तौ **अदृष्टान्तराभावेन** तदुत्पत्त्ययोगात्ततोऽदृष्टात्परमाणुचेष्टाभावेन द्व्यणुकादिकार्याभाव इति द्वेधापि दुष्टत्वान्नादृष्टं निमित्तमित्यदृष्टस्य निमित्तत्वं पराकृतमित्यर्थः ॥ **तद्दोपमिति** ॥ नन्वदृष्टस्य नित्यत्वनिमित्तत्वयोरभ्युपगमात् समं भवतामेतद्दूषणमिति दोषमित्यर्थः ॥ **पूर्वम्** ॥ प्रलये सत्येवादृष्टे सृष्ट्यादिकाले प्राप्ते सति समुद्बोधविशेषस्य कार्योन्मुखत्वाख्यविशेषस्याङ्गीकारादित्यन्वयः ॥ **स्वाभाविकविशेषेति** ॥ सृष्टिकालरूपेत्यर्थः । काल इत्यनन्तरं स्वत इति योज्यम् । स्वाभाविकेत्यर्थः । अदृष्टस्योद्बोधः कदेति प्रश्नस्य उपाध्युक्तौ सृष्ट्यादिरूपोपाधिविशिष्टकालोक्तावित्यर्थः । सृष्टिकालोक्ताविति यावत् ॥ **सोऽपि** सृष्टिरूपोपाधिविशिष्टकालोऽपि । सृष्टिकाल इति यावत् ॥ **परिहाराभावादिति** । अदृष्टोद्बोधानन्तरमित्युच्यत इति चेत् तर्ह्यदृष्टोद्बोधे सति अदृष्टोद्बोध इत्यन्योन्याश्रय इति भावः ।

## वाक्यार्थमञ्जरी

उभयथापीश्वरेच्छायानित्यत्वा नित्यत्वरूपप्रकारद्वयेऽपि परमाणुषु कर्म न सम्भवत्यतस्तदभावः । द्व्यणुकादिकार्याभाव इत्यर्थः । तस्याः सकाशात् दूषणान्तरमाह ॥ **सति कारण इति** ॥ तस्य कारणत्वेनाभिमतस्य न च कारणान्तराभावात्कार्याभाव इति वाच्यम् । वक्ष्यमाणरीत्या कारणान्तरस्यैवाभावादिति भावः । अप्रसक्तत्वात्कथं तत्परामर्श इत्यत उक्तम् ॥ **परिमाणाभिदानेति** ॥ ह्रस्वादिपरिमाणाश्रयतया तदपि प्रसक्तमिति भावः । यथा कथञ्चिद्विशेषलाभात्किमनेनानौपाधिकत्ववर्णनेनेत्यत आह ॥ **सृष्टमिति** ॥ उपाध्यभावे उपहितासम्भवादिति भावः ॥ **आविर्भावेति** ॥ शक्त्यात्मनाविद्यमानस्य तदाव्यक्त्यङ्गीकारादित्यर्थः । उक्तदोषः अन्योन्याश्रयः ॥ **न्यायेति** ॥ कालस्य नित्यत्वे प्रलयेऽपि कार्योत्पत्तिः । अनित्यत्वे तस्यापि जन्यत्वेन कालान्तरापेक्षेत्यादि न्यायेनेत्यर्थः । समुद्बोधविशेषः कार्योन्मुखत्वम् ।

## सूत्रभाष्यम्

**॥ ॐ समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॐ ॥ १३ ॥**

कार्यकारणादीनां समवायसम्बन्धाङ्गीकारात्तस्य च भिन्नत्वसाम्यात्समवायान्तरापेक्षाया-मनवस्थितेः। न च तत्प्रमाणम्। प्रथमसम्बन्धासिद्ध्यैव च तदसिद्धिः स्वनिर्वाहकत्वे समवाय एव न स्यात्।

## सत्तर्कदीपावली

परमाणुभ्यां समवायिकारणाभ्यां द्व्यणुकस्योत्पत्तिः द्व्यणुकेभ्यः समवायिकारणेभ्यस्त्र्यणुक-स्योत्पत्तिरित्यादिकः परमाण्वारम्भवादः समवायस्य निरूपयितुमशक्यत्वादनुपपन्नः। तथा हि। अवयवावयविनोः समवायस्य ताभ्यां भिन्नत्वेन समवायान्तरेण भाव्यम्। तस्याप्येवं तस्याप्येव-मित्यनवस्था स्यात्। न च अवयवावयविनोः परस्परभेदः तयोः समवायश्च ततोऽभिन्नः केनाप्यनु-भूयते। अतः प्रथमसमवायस्यासिद्धत्वात्तत्सिद्ध्यर्थम् उत्तरोत्तरसमवायकल्पनमप्रामाणिकम्। यदि समवायस्य स्वनिर्वाहकत्वमङ्गीकृत्य नोत्तरोत्तरसमवायकल्पनमित्युच्यते तर्हि अवयवावयविनोः स्वनिर्वाहकत्वमङ्गीकृत्य समवायो न कल्प्यताम्। अविशेषात्। यथा समवायस्य स्वनिर्वाहकत्वात् स्वयमेव समवायी समवायान्तरमन्तरेणेत्यङ्गीक्रियते एवं द्रव्यमेव गुणादिरूपेण तत्सम्बन्धरूपेण स्वयमेव स्वरूपं निर्वहतीत्यङ्गीक्रियताम्। अविशेषात्। तदाह **॥ समवायेत्यादिना ॥**

## तत्त्वप्रदीपिका

समवायाभ्युपगमाच्च साम्यादनवस्थितेः। किञ्च वैशेषिकाः कल्पयन्ति द्रव्यगुणकर्मसामान्य-विशेषसमवायाः षड्भावपदार्थाः। तत्र समवायिकारणं द्रव्यम्। गुणवद्वा। कर्मान्यत्वे सति जातिमात्राश्रयो गुणः। संयोगविभागयोरसमवायिकारणं कर्म। नित्यमनेकसमवेतं सामान्यम्। एकसमवायी निस्सामान्यो विशेषः। नित्यसम्बन्धस्समवायः। पृथिव्यप्तेजोवाय्वाकाश-कालदिगात्ममनांसि नवैव द्रव्याणि। गन्धरसरूपस्पर्शशब्दा बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्म-संस्काराः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहाश्चतुर्विंशतिर्गुणाः। उत्क्षेपणमपक्षेपणमाकुञ्चनं प्रसारणं गमनमिति कर्मभेदः। तत्र कार्यकारणयोर्गुणगुणिनोः क्रिया-तद्वतोर्जातिव्यक्त्योर्विशेषविशेषिणोश्च समवायं सम्बन्धमभ्युपगच्छन्ति। यथा मृद्घटयोः, शौक्ल्य-पटयोः, पतनपक्षिणोः, गोत्वखण्डयोः, अन्त्यव्यावर्तकात्मनोः।

(तत्त्वदीपिका)

यथा च तयोस्तयोः परस्परभेदः तथा तस्य ताभ्यां ताभ्यां भिन्नत्वसाम्यात्समवायान्तरापेक्षयाऽनवस्थितिः न च कार्यकारणादीनां भिन्नत्वे तत्समवाये च प्रमाणमस्ति। यद्यपि कार्यस्य विनाशिरूपेण भेदः, मृद्घट इत्यादिसामानाधिकरण्यान्मृदादिरूपेणाभेदः, ताभ्यां चाभेदो घटस्य। 'मृद्घटः' 'विनाशी घट' इत्युभयत्राप्यभेदानुभवात्। न च मृदस्तदा विनाशित्वम्। न हि घटनाशे मृदो विनाशानुभवः। नष्टो घटो मृदेवात्राभूदिति स्थितिरेवात्रानुभूयते। न चाबाधितानुभवस्य भ्रान्तित्वं वक्तुं युक्तम्। सर्वस्य भ्रान्तित्वप्रसङ्गात्। न च प्रमाणदृष्टे विरोधाशङ्का। प्रमाणदृष्टेरेवाविरोधापादकत्वात्। स्त्रीत्वपुंस्त्वयोरन्यत्र सहादृष्टयोर्दृष्टिरेवार्धनारीश्वरेऽविरोधसाधिका।

न च समवायो नाम कश्चित्पदार्थः प्रमाणेनोपलभ्यते। प्रथमसमवायासिद्धेरेव समवायान्तरासिद्धिः। कार्यकारणादीनां निर्वाहकस्य समवायस्य स्वस्यापि निर्वाहकत्वान्न समवायान्तरापेक्षयाऽनवस्थेति चेत्। यथा समवायः स्वयमेव स्वसम्बन्धरूपश्च तथा द्रव्यमेव स्वकार्यगुणक्रियादिरूपं स्वनिर्वाहकमिति भेदाभावात् समवाय एव न स्यात्।

## तत्त्वप्रकाशिका

एवं परपक्षे निमित्तकारणासम्भवं दर्शयित्वा समवायिकारणनिरासाय सूत्रमुपन्यस्य व्याचष्टे ॥ **समवायेति** ॥ अत्र कार्यकारणपदमवयवावयविविषयम्। आदिपदेनानित्यगुणक्रियातद्वतां सङ्ग्रहः। अथवा कार्यकारणपदेनैवैषां सङ्ग्रहः। आदिपदेन नित्यगुणगुणिजातिव्यक्तिविशेषविशेषिणां प्रसङ्गाद् ग्रहणम्। परमाण्वादीनां द्रव्यादिकारणत्वं नोपपन्नम्। तेषां भिन्नत्वमभ्युपेत्य समवायाभ्युपगमात्। भिन्नयोरवयवावयवित्वादिविशेषणविशेष्यभावोपपत्तये समवायोऽङ्गीकार्य एवातस्तदभ्युपगमे को दोष इति चेन्न। तथा सति समवायस्यापि समवायिभ्यां भिन्नत्वसाम्यान्मृद्घटसमवाय इत्यादि विशेषणविशेष्यभावोपपत्तये समवायान्तरापेक्षापातात्। तत्रापि भिन्नत्वसाम्यात्समवायस्य समवाय इत्यादि विशेषणविशेष्यभावोपपत्तये समवायान्तरापेक्षेत्यनवस्था स्यादिति भावः। सन्त्वनन्ताः समवायाः प्रामाणिकत्वान्न दोष इत्यत आह ॥ **न चेति** ॥ तत्तत्र समवायानन्त्ये। मूलक्षयाभावान्नानवस्था दूषणमित्यत आह ॥ **प्रथमेति** ॥ मूलभूतावयवावयव्यादिसम्बन्धस्यैव प्रमाणाभावेनासिद्धेस्तत्सिद्ध्यर्थमभ्युपगन्तव्यसम्बन्धानां सुतरामसिद्धिरित्यस्त्येव मूलक्षतिरिति भावः। माऽस्तु तर्हि समवायपरम्परा। प्रथमसमवाय एव स्वनिर्वाहक इति तत्राह ॥ **स्वनिर्वाहकत्व इति** ॥ यदि समवायः स्वस्मिन् स्वयमेव विशेषणविशेष्यभावबुद्धिजनकस्तर्हि स एव न स्यात्। द्रव्यस्यैव गुणगुण्यादिरूपेण स्वनिर्वाहकत्वोपपत्तौ तद्वैय्यर्थ्यादिति भावः। न च सम्बन्धत्वात्तस्य

(तत्त्वप्रकाशिका)

**स्वनिर्वाहकत्वम् । संयोगेऽपि प्रसङ्गात् । न चैवमतिप्रसङ्गः । प्रमाणसदसद्भावेन व्यवस्थोपपत्तेः । न च समवाये प्रमाणमस्ति । रूपं नित्यसम्बन्धसम्बद्धं गुणत्वान्महत्त्ववदित्यत्र साध्यशून्यं निदर्शनम् । विशेषणविशेष्यभावत्वेन हेतुना तस्य सम्बन्धनिबन्धनत्वसाधने व्यभिचारः । विशेषणेऽतिप्रसङ्गः ।**

## गुर्वर्थदीपिका

मूलक्षयाभावादित्यत्र मूलपदेन यदारभ्यानवस्था आपद्यते तन्मूलम् । अनवस्थामूलमिति यावत् । अत एवाह भाष्यकारः 'प्रथमसम्बन्धासिद्ध्या' इति । **न** चैवमतिप्रसङ्ग इत्यत्र एवमवयवावयविनोरेव विशेषणविशेष्यभावनिर्वाहकत्वेन तत्समवायनिराकरणवद्दण्डदेवदत्तयोरेव विशेषणविशेष्यभावनिर्वाहकत्वेन तत्संयोगस्यापि निराकरणरूपातिप्रसङ्गो **न** चेत्यर्थः । व्यभिचार इत्यस्य समवाय एव व्यभिचार इत्यर्थः । विशेषणेऽतिप्रसङ्ग इत्यत्र समवायभिन्नत्वेनेति विशेषणेऽतिप्रसङ्गः । स्वसमयरक्षणाय गुणगुणिव्यतिरिक्तत्वे सतीति परेणापि विशेषणे कृते त्वदभिलषित स्थूल एव साध्यं न सिद्ध्येदित्यर्थः ।

## भावबोधः

**न चैवमतिप्रसङ्ग इति** ॥ द्रव्यमात्राङ्गीकारेण गुणादेरप्यपलापः स्यादित्यर्थः ॥ तस्य **सम्बन्धनिबन्धनत्वेति** ॥ महत्त्वतदाश्रयाकाशादिगतविशेषणविशेष्यभावस्येत्यर्थः । तथा चाकाशादितद्गतमहत्त्वयोर्विशेषणविशेष्यभावनियामकः सम्बन्धः सिध्यन् नित्य एव सेत्स्यतीति न साध्यशून्यं निदर्शनमिति भावः ।

ननु विशेषणविशेष्यहेतोर्भावमात्रनिष्ठत्वेन विशेषणात्र घटाभावभूतलनिष्ठविशेषणविशेष्यभावे व्यभिचार इत्यत आह– **विशेषण इति** ॥ एवमपि घटादिकं ज्ञातमिष्टं कृतं चेत्यादि-विशेषणविशेष्यभावे व्यभिचारः स्यात् । तद्व्यावृत्त्यर्थं पुनर्विशेषणदाने व्यभिचारस्थलव्यतिरिक्तत्वे सतीति सर्वत्र विशेषणदानप्रसङ्ग इति भावः ।

## भावदीपः

समवायिकारणनिरासप्रस्तावे नित्यग्रहणं किमर्थमित्यत आह ॥ **प्रसङ्गाद्ग्रहणमिति** ॥ तत्प्रमाणमित्यत्र तच्छब्दार्थः । तत् तत्रेति । तस्यार्थः ॥ **समवायानन्त्य इति** ॥ **न चैवमति-**

(भावदीपः)

**प्रसङ्ग इति** ।। संयोगसम्बन्धोऽपि नोपेयतामित्यर्थः । समवाये मानान्तरमाशङ्कते ।। **विशेषणेति** ।। **तस्येति** ।। गुणगुण्यादिविशेषणविशेष्यभावस्येत्यर्थः ।। **व्यभिचार इति** ।। घटाभाववद्भूतलमिति अभावभूतलविशेषणविशेष्यभावे व्यभिचार इत्यर्थः । भावमात्रनिष्ठविशेषणविशेष्यभावत्वादिभिर्हेतुर्विशेष्यत इत्यत आह ।। **विशेषण इति** ।। गुणादावपि विशेषणविशेष्यभावस्याभाववदेव सम्बन्धं विनाप्युपपत्त्याऽप्रयोजकत्वात् । अप्रयोजकेनापि साधनेऽतिप्रसङ्ग इत्यर्थः । यद्वा अन्योन्यसंयुक्तानिष्ठत्वविशेषितेन विशेषणविशेष्यभावत्वेन हेतुना भावनिष्ठविशेषणविशेष्यभावदृष्टान्तेन सम्बन्धाभावसाधनसम्भवादतिप्रसङ्ग इत्यर्थः ।

## अभिनवचन्द्रिका

**मूलक्षयेति** ।। समवायानन्त्ये प्रमाणाभावे कल्पनागौरवमेव दूषणं स्यात् न त्वनवस्था मूलक्षयकरत्वाभावादिति भावः । ननु 'प्रथमसम्बन्धासिध्यैव च तदसिद्धिः' इति मूले अवयवावयविनां सम्बन्धासिध्या पूर्वपूर्वसमवायानामसिद्धिरेवोच्यते न तु पूर्वपूर्वसमवायाऽसिध्या उत्तरोत्तरसमवायासिद्धेः मूलक्षतिरुच्यते । ततश्च सूत्रोक्ताऽनवस्था न समर्थितेत्यत आह– **मूलभूतेति** ।। सत्यमत्र पूर्वपूर्वसमवायानामप्रामाणिकत्वमुच्यते तथापि न मूलक्षतिव्युत्पादनाभावः । पूर्वपूर्वाभावेनोत्तरोत्तराभावव्युत्पादनस्य मूलक्षतिव्युत्पादनत्ववत् अप्रामाणिकत्वव्युत्पादनस्यापि तथात्वादिति भावः । 'प्रथमसम्बन्धासिध्यैव च तदसिद्धेः' इति मूलप्रवृत्तेः प्रागेवोत्पन्नाशङ्कापरिहाराय 'स्वनिर्वाहकत्वे समवाय एव न स्यात्' इति मूलं प्रवृत्तमिति भावेनाह– **मास्तु तर्हीति** ।। एतेन प्रथमसमवायस्याप्यप्रामाणिकत्वस्याभिहितत्वात्स्वनिर्वाहक एक एव समवाय इति शङ्कानवकाश इति परास्तम् ।। **तस्य सम्बन्धनिबन्धनत्वसाधन इति** ।। आकाशादिमहत्त्वयोर्विशेषणविशेष्यभावनियामकः सम्बन्धः सिध्यन् नित्य एव सेत्स्यतीति भावः ।। **व्यभिचार इति** ।। घटाभाववद्भूतलमिति प्रतीतिगोचरविशेषणविशेष्यभावे व्यभिचार इत्यर्थः ।। **विशेषण इति** ।। भावत्वेनेति विशेषणदानेन व्यभिचारपरिहारे सर्वत्रापि व्यभिचारस्थलव्यावृत्तये तद्भिन्नत्वेनेति वक्तुं शक्यत्वात् व्यभिचारस्याऽनुद्धाव्यत्वप्रसङ्ग इत्यर्थः ।

## वाक्यार्थमुक्तावली

**अनित्यगुणेति** ।। असमवायिकारणनिराकरणप्रसङ्गे नित्यगुणगुणिग्रहणासङ्गतेरिति भावः ।

(वाक्यार्थमुक्तावली)

सूत्रे तदभाव इत्यनुवर्तते । अवयवावयव्यादीनां भिन्नत्वमभ्युपेत्य समवायाभ्युपगमाच्च । तेभ्यः परमाण्वादिभ्यस्तेषां व्यणुकादीनामुत्पत्त्यभावः । कुतः ? समवायस्यापि समवायिभ्यां भिन्नत्व-साम्यात् । विशिष्टबुध्युपपत्तये समवायान्तरापेक्षायामनवस्थितेरिति सूत्रार्थं मनसि निधायाह ॥ **परमाण्वादीनामिति** ॥ **मृद्घटेति** ॥ मृद्घटयोः समवाय इत्यादीत्यर्थः । ननु मूलभूतावयवि-सम्बन्ध एव परम्परां कल्पयिष्यति परिहरिष्यति च अनवस्थामित्याशयेन शङ्कते ॥ **मूलेति** ॥ **प्रमाणाभावेनेति** ॥ तथा हि न तावत्तत्र वैशेषिकरीत्या प्रत्यक्षं प्रमाणम् । कुण्डदध्नोः संयोग इव तन्तुपटयोः समवाय इत्यप्रतीतेः । सम्बन्धप्रतीतिरेव तत्प्रतीतिरिति चेन्न, तस्या असम्मतेः । एतेनायं तन्तुपटसम्बन्धप्रत्ययश्चक्षुर्जन्योऽनन्यथासिद्धतदन्वयव्यतिरेकानुविधायित्वात् । पटप्रत्यय-वदित्यादिसमवायप्रत्यक्षत्वसाधनमप्यपास्तम् । आश्रयासिद्धिप्रसङ्गात् । नापि नैय्यायिक-रीत्यानुमानं प्रमाणम् । अनुपदमेवापाकरिष्यमाणत्वादिति भावः । अत्र नैय्यायिकः प्रत्यवतिष्ठते । किमियमनवस्थोत्पत्तेः प्रतिबन्धिकोत ज्ञप्तेः । नाद्यः । नित्यत्वात्समवायस्य । न द्वितीयः । नैय्यायिकेन मया सम्बन्धस्य सत्तामात्रेणेह तन्तुषु पट इत्यादिप्रत्ययकारणत्वाङ्गी-कारेण प्रतीतिपरम्परया तद्विषयसमवायपरम्परया च अनवस्थाभावात् । न चेह तन्तुषु पट इति प्रत्ययस्य स्वरूपसत्सम्बन्धपूर्वकत्ववदिह मृदि घटसमवाय इत्यानुमानिकप्रत्ययस्यापि स्वरूप-सत्सम्बन्धपूर्वकत्वेनानवस्था तादवस्थ्यमिति वाच्यम् । समवायपरम्परां विना प्रथमसमवायस्यैव स्वनिर्वाहकताऽभ्युपगमात् । य एव हि समवायोऽवयवावयव्यादीनां सम्बन्धः स एवावयव्यादि-ष्वात्मनः सम्बन्ध इत्याशयेनाशङ्कते ॥ **मास्त्विति** ॥ **संयोगेऽपीति** ॥ न च संयोगस्य स्वनिर्वाहकत्वमिष्टम् । तस्य गुणत्वात् परेण समवायनिर्वाह्यत्वाङ्गीकारादिति भावः ॥ **न चैवमिति** ॥ असम्बन्धस्वरूपस्यापि द्रव्यस्य गुणगुण्यादिरूपेण स्वनिर्वाहकत्वे पृथिवीद्रव्यस्यैव घटपटादिरूपेण स्वनिर्वाहकत्वोपपत्तेः घटपटयोः संयोगोऽपि नोपेय इत्यतिप्रसङ्गो नेत्यर्थः ॥ **साध्यशून्यमिति** ॥ महत्वस्य आकाशादिस्वरूपत्वेनातिरिक्तसम्बन्धाभावादिति भावः ॥ **विशेषणविशेष्यभावेति** ॥ आकाशमहत्वविशेषणविशेष्यभावो नियामकसम्बन्धवान् विशेषण-विशेष्यभावत्वात् । घटभूतलविशेषणविशेष्यभाववत् इति साधने घटाभाववद्भूतलमित्यभाव-विशेषणविशेष्यभावे व्यभिचार इत्यर्थः । भावमात्रविशेषणविशेष्यभावत्वात् । इति हेतुर्विशिष्यतामित्यत आह ॥ **विशेषण इति** ॥ एवमपि घटादिकं ज्ञातं दृष्टं द्विष्टं इत्यादि विशेषणविशेष्यभावेन व्यभिचारः स्यात् । तद्व्यावृत्यर्थं पुनर्विशेषणे व्यभिचारस्थलव्यतिरिक्तत्वे

(वाक्यार्थमुक्तावली)
सतीति विशेषणस्य कर्तुं शक्यत्वात् व्यभिचारमात्रोच्छेदप्रसङ्ग इत्यर्थः । चन्द्रिकायां गुणादावपि विशेषणविशेष्यभाववदेव सम्बन्धं विनाप्युपपत्या प्रयोजकवदप्रयोजकेनापि साधनेऽतिप्रसङ्ग इत्यर्थः । यद्वा संयुक्तानिष्ठत्वविशेषितेन विशेषणविशेष्यत्वेनाभावनिष्ठदृष्टान्तेन सम्बन्धाभाव-साधनसम्भवादतिप्रसङ्ग इत्युक्तम् ।

## तत्त्वसुबोधिनी

अस्तु समवायान्तरापेक्षा ततः को दोषः इत्यत आह ॥ **तत्रापीति** ॥ तदिति भाष्य-प्रतीकोपादानम् । तस्य व्याख्या तत्रेति । स्वपदस्य व्याख्यासमवाय इति ॥ **स्वनिर्वाक इति** ॥ स्वयमेव स्वस्य विशेषणविशेष्यप्रतीतिजनक इत्यर्थः ॥ **तद्वैय्यर्थादिति** ॥ समवायवैय्यर्थ्या-दित्यर्थः ॥ **न चैवमतिप्रसङ्गः इति** ॥ द्रव्यमात्राङ्गीकारेण गुणादेरप्यपलापः स्यादित्यर्थः ॥ ननु गुणादौ प्रमाणसत्त्वेन तदङ्गीकारवत् समवायेऽपि प्रमाणसद्भावात् सोऽङ्गीकर्तव्यः इत्यत आह ॥ **न चेति** ॥ अनुमानरूपप्रमाणसद्भावात् प्रमाणाभावोऽसिद्धः इत्याशङ्क्याह ॥ **रूपमिति** ॥ महत्त्वरूपदृष्टान्ते नित्यसम्बन्धसम्बद्धत्वाभावेन साध्यवैकल्यमित्यर्थः । तस्य, सम्बन्धनिबन्ध-नत्वेति रूपिरूपादिविशेषणविशेष्यभावस्येत्यर्थः । यद्वा महत्वतदाश्रयाकाशादिगतविशेषण-विशेष्यभावस्येत्यर्थः । तथा च आकाशादितद्गतमहत्वविशेषणविशेष्यभावनियामकः सम्बन्धः सिद्ध्यन् नित्य एव सिद्ध्यतीति न साध्यशून्यं निदर्शनमिति भावः ॥ **व्यभिचार इति** ॥ घटाभाववद्भूतलमिति अभावभूतलयोः विशेषणविशेष्यभावे व्यभिचारः इत्यर्थः । ननु विशेषण-विशेष्यभावत्वहेतोर्भावमात्रनिष्ठत्वेन विशेषणात्, न घटाभावभूतलनिष्ठविशेषणविशेष्यभावे व्यभिचार इत्यत आह ॥ **विशेषणे अतिप्रसङ्ग इति** ॥ एवं च रूपादावपि विशेषणविशेष्या-भावस्याभाववदेव सम्बन्धं विनाप्युपपत्त्याऽप्रयोजकत्वात्, अप्रयोजकेन च साधनेऽतिप्रसङ्गः इत्यर्थः । यद्वा संयुक्तनिष्ठत्वविशेषितेन विशेषणविशेष्यभावत्वेन । भावनिष्ठतदृष्टान्तेन सम्बन्धा-भावसाधनसम्भवादतिप्रसङ्ग इत्यर्थः । एवमपि घटादि ज्ञातं इष्टं चेत्यादिविशेषणविशेष्यभावे व्यभिचारः तद्व्यावृत्यर्थं पुनर्विशेषणदाने व्यभिचारस्थलव्यतिरिक्तत्वे सतीति सर्वत्र विशेषण-दानप्रसङ्ग इति भाव इत्यप्याहुः ।

## वाक्यार्थविवरणम्

दण्डादिरूपनिमित्तकारणकार्यभूतघटयोश्च समवायादाह ॥ **अवयवावयवीति** ॥ कार्य-पदेनावयवी कारणपदेन चावयवो ग्राह्य इत्यर्थः । तच्छब्देन गुणक्रियावतोः सङ्ग्रहः ॥ एषां सङ्ग्रह **इति** ॥ कार्यपदेनावयव्यनित्यगुणक्रियाणां ग्रहणम् । कारणपदेनावयवगुणक्रियावतां ग्रहणम् ।

ननु समवायायोगात् समवायिकारणत्वम् अवयव्यनित्यगुणादीन् प्रत्यवयवगुणक्रियावतां नोपपन्नमिति वक्ष्यमाणत्वेनावयवावयव्यनित्यगुणादीनामेव ग्रहणे कर्तव्ये नित्यगुणादिग्रहण-मसंगतमत उक्तम् ॥ **प्रसङ्गादिति** ॥ समवायसम्बन्धवत्पदार्थकथनप्रसङ्गादित्यर्थः । तथैवाङ्गीकृतं, को दोष इति शङ्कते ॥ **भिन्नयोरेवेति** ॥ **अवयवेत्यादि** ॥ इह तन्तुषु पटः । इह पटे रूपम् । इह पटे कर्म । इह पटे जातिः । इह नित्यद्रव्ये विशेष इत्यादिविशेषणविशेष्यभावेत्यर्थः ॥ **मृद्घटेति** ॥ मृद्घटयोः समवाय इत्यर्थः ॥ **समवायस्य** ॥ मृद्घटसमवायस्य । अत्र भिन्नत्व-साम्यादित्युपलक्षणम् । इह प्रत्ययसाम्यतश्चेति द्रष्टव्यम् । तथा चेह मृदि घट इत्यादिप्रत्ययः सम्बन्धपूर्वकः भिन्नत्वात् । अबाधितेहप्रत्ययत्वाच्चेह कुण्डे बदराणीति समवायमनुमिमानेन यो भिन्नयोरिहप्रत्ययः स सम्बन्धपूर्वक इति व्याप्तिरवश्यमङ्गीकरणीया । विद्यते चेह मृद्घटयोः समवाय इत्यबाधितेहप्रत्ययो भिन्नत्वं च । तथा च तेन समवायस्यापि मृद्घटाभ्यां समवायोऽ-भ्युपगन्तव्य एव स्यात् । न चाभ्युगम्यते । अतस्तत्र भिन्नत्वमनैकान्तिकमिति भावः ।

नन्वत्र भिन्नत्वसाम्यं किमर्थमुपन्यस्तम् । न हि भिन्नत्वं हेतूकृतम् । सत्यम् । अबाधितत्व-द्योतनार्थं भिन्नत्वग्रहणम् । विभिन्नवस्त्वभावे खल्विहप्रत्ययो बाधितः स्यात् । तथा च अबाधितेहप्रत्ययत्वरूपहेतुघटकाऽबाधितत्वरूपविशेषणस्य द्योतनार्थं सूत्रे साम्यादिति भाष्ये च भिन्नत्वसाम्यादिति उक्तम् ॥ **मूलक्षतिरिति** ॥ यदर्थमुत्तरोत्तरपरम्परानुसरणं तन्मूलं तस्य क्षति-रित्यर्थः ॥ **प्रथमसमवाय एव** ॥ तन्तुपटसमावाय एव ॥ **स्वनिर्वाहक इति** ॥ अवयवा-वयविसमवाय एक एव । तन्तुषु पट इति अवयवावयविनोर्विशेषणविशेष्यभावप्रतीतिं, तन्तुपटयोः समवाय इति स्वस्मिंश्च विशेषणविशेष्यभावप्रतीतिं च निर्वाहयति । नातिरिक्तोऽङ्गीक्रियते । अतो नानवस्थेति भावः । स एव समवाय एव । कुत इत्यत आह ॥ **द्रव्यस्यैवेति** ॥ पटादि-द्रव्यस्यैव गुणाद्यात्मकत्वमङ्गीकृत्य पटो रूपीत्यादिविशेषणविशेष्यभावप्रतीतिपटादिद्रव्यमेव

(वाक्यार्थविवरणम्)

निर्वहिष्यतीति तदुपपत्त्यर्थं समवायाङ्गीकारो व्यर्थ इत्यर्थः । यथोक्तम् । 'द्रव्यमेव तथा न किम्। द्रव्यमेव ततोऽनन्तविशेषात्मतया सदा । नानाव्यवहृतेर्हेतुः' इति ॥ **तस्य** ॥ समवायस्य। द्रव्यस्य चासम्बन्धत्वान्न स्वनिर्वाहकत्वमिति भावः ॥ **संयोगेऽपीति** ॥ स्वनिर्वाहकत्वे सम्बन्धत्वस्य तन्त्रत्वे कुण्डबदरयोः संयोग इत्यत्र विशेषणविशेष्यभावप्रतीतिनिर्वाहाय समवायो नाङ्गीकार्यः । संयोगस्यैव सम्बन्धत्वात् स्वनिर्वाहकत्वोपपत्तेरित्यर्थः ॥ **एवमिति** ॥ यदि द्रव्यस्यैव गुणाद्यात्मकत्वमङ्गीकृत्य समवायनिराकरणे द्रव्यमात्रमेवाङ्गीकृत्य गुणाद्यपलापोऽपि स्यादित्यतिप्रसङ्ग इत्यर्थः । कुतो न चेत्यत आह ॥ **प्रमाणेति** ॥ द्रव्यस्य गुणाद्यात्मकत्वेऽपि न गुणाद्यभावप्रसङ्गः । सविशेषाभेदे प्रमाणसद्भावेनावश्यमङ्गीकार्यत्वात् । यथोक्तम् । 'अभेदेन प्रतीतिश्च कार्यकारणपूर्वके । अभावान्ते पदार्थेऽस्ति सविशेषोऽवसीयते' इति । यत्र प्रमाणाभावस्तस्यानङ्गीकारादिति व्यवस्थाङ्गीकारादित्यर्थः । तर्ह्यस्ति प्रकृतेऽपि प्रमाणमित्यत आह ॥ **न चेति** ॥ येन तस्य स्वनिर्वाहकत्वं कल्प्येतेति भावः । समवाये प्रमाणमाशङ्कते ॥ **रूपमिति** ॥ संयोगादेरतथात्वात् नित्यसम्बन्धः समवाय एव सिध्यतीति ध्येयम् ॥ **साध्येति** ॥ महत्त्वे नित्यसम्बन्धसम्बध्यत्वासम्मतेरित्याशयः । दृष्टान्ते साध्यं साधयति ॥ **विशेषेणेति** ॥ आकाशतद्गतमहत्परिमाणयोर्नित्यत्वप्रसिद्धेराकाशो महानिति महत्त्वतदाश्रयगतो विशेषणविशेष्यभावः सम्बन्धनिबन्धनो विशेषणविशेष्यभावत्वात् कुण्डबदरयोर्विशेषणविशेष्यभाववदित्यनुमानेन नित्यभूतयोर्महत्वाकाशयोर्विशेषणविशेष्यभावस्यापि सर्वदा सत्त्वेन तस्य सम्बन्धनिबन्धनत्वे सम्बन्धस्य नित्यत्वं सिध्यतीति न साध्यवैकल्यमित्याशयः ॥ **व्यभिचार इति** ॥ घटाभाववद्भूतलमिति भूतलघटाभावनिष्ठविशेषणविशेष्यभावे व्यभिचारः । तत्र हेतोः सत्त्वात् । तद्गतविशेषणविशेष्यभावस्य स्वरूपसम्बन्धनिबन्धनत्वेन तस्य चाद्विष्ठतया सम्बन्धत्वाभावेन साध्याभावादित्याशयः । ननु व्यभिचारपरिहाराय भावमात्रनिष्ठविशेषणविशेष्यभावत्वादिति हेतुर्विशिष्यत इति चेत्तत्राह । विशेषण इति घटो ज्ञात इष्टः कृत इत्यादौ घटज्ञानादिनिष्ठविशेषणविशेष्यभावे पुनर्व्यभिचाररूपोऽतिप्रसङ्ग इत्यर्थः । एतदतिरिक्तत्वे सतीत्यपि विशेषणदानान्न व्यभिचार इत्यत आह ॥ **विशेषण इति** ॥ व्यभिचारस्थलव्यतिरिक्तत्वे सतीति सर्वत्र विशेषणप्रक्षेपसम्भवाद् व्यभिचारवार्तामात्रविलोपरूपोऽतिप्रसङ्ग इत्यर्थः ।

## वाक्यार्थमञ्जरी

अवयवावयव्यादीनां भिन्नत्वमुपेत्य तेषां समवायाभ्युपगमाच्च तन्मतमसत् कुतः समवायस्यापि समवायिभ्यां भिन्नत्वसाम्यात् मृद्घटः समवाय इत्यादिविशिष्टबुध्युपपत्तये समवायान्तरापेक्षायां तत्राप्येवमित्यनवस्थानादित्यर्थः । ननु नित्यगुणादीन्प्रति गुण्यादेः समवायिकारणत्वाभावात्तन्निराससमवाये तेषां ग्रहणमसंगतमित्यत उक्तम् ॥ **प्रसङ्गादिति** ॥ समवायाश्रयनिरूपणप्रसङ्गादित्यर्थः । शङ्कते ॥ **भिन्नयोरिति** ॥ अवयवत्वादिविशेषणत्वोपपत्तये अवयवीत्यादि विशेष्योपपत्तये चेत्यर्थः ॥ **मृद्घटसमवाय इति** ॥ मृद्घटयोः समवाय इत्यर्थः ॥ **संयोगेऽपीति** ॥ तथा च संयोगी घट इत्येतन्निर्वाहाय संयोगघटयोः समवायाङ्गीकारो व्यर्थः स्यादिति भावः ॥ **न चैवमिति** ॥ द्रव्यस्यैव स्वनिर्वाहकत्वमभ्युपेत्य समवायिनिरासे गुणकर्मादिविलोपः स्यात् । द्रव्यस्यैव शुक्लश्चलतीत्यादिप्रत्ययनिर्वाहकत्वसम्भवादित्यतिप्रसङ्गो नेत्यर्थः ॥ **साध्यशून्यमिति** ॥ आकाशतत्परिमाणयोर्नित्यसम्बन्धासम्मतेरिति भावः । ननु महत्वतदाश्रयाकाशगतविशेषणविशेष्यभावः सम्बन्धनिमित्तः विशेषणविशेष्यभावत्वात् दण्डदेवदत्तगतविशेषणविशेष्यभाववदित्यनुमानेन तस्य सम्बन्धनिमित्तत्वसिद्धावाकाशपरिमाणयोर्नित्यत्वेन तयोः सम्बन्धो नित्य एव सिध्यतीति नोक्तदोष इत्याशङ्क्याह ॥ **विशेषणविशेष्येति** ॥ **व्यभिचार इति** ॥ घटाभाववद्भूतलनिष्ठविशेषणविशेष्यभाव इति शेषः । भावमात्रनिष्ठत्वे सतीति विशेषणाददोष इत्यत आह ॥ **विशेषणेऽतिप्रसङ्ग इति** ॥ व्यभिचारस्थलभिन्नत्वे सतीति सर्वत्र वक्तुं शक्यत्वेन व्यभिचारमात्रोच्छेदप्रसङ्ग इत्यर्थः ।

## सूत्रभाष्यम्

### ॥ ॐ नित्यमेव च भावात् ॐ ॥ १४ ॥

**नित्यत्वाच्च परमाणूनां समवायस्य च तस्यैव जनित्वाङ्गीकारान्नित्यमेव कार्यं स्यात् । अन्यथा न कदाचित् ।**

## सत्तर्कदीपावली

**परमाण्वादिकारणसङ्घसद्भावेऽपि प्रलयकाले परमाणुसंयोगेन यदि किमपि कार्यं नोत्पद्यते तर्हि**

(सत्तर्कदीपावली)
इदानीमपि नोत्पद्यताम् । अविशेषात् । असतः सत्तासमवायो जनिरित्यङ्गीकुर्वन् वैशेषिकः समवाय-वज्जनेरपि नित्यत्वमङ्गीकुर्यात् । न चानित्योऽपि कश्चन समवायोऽस्तीति वाच्यम् । अपसिद्धान्ता-पत्तेः । तदेतदाह ॥ **नित्यमेव चेत्यादिना** ॥

## तत्त्वप्रदीपिका

परमाणूनां समवायिकारणानां कालादीनां निमित्तकारणानां च नित्यत्वात्सर्वदा कार्यं स्यात् । विशेषकारणाभावात् ।

## तत्त्वप्रकाशिका

एवं परपक्षे कारणत्रयनिरासेन सृष्टिं निरस्य प्रलयनिरासार्थं सूत्रं पठित्वा व्याचष्टे ॥ **नित्यमिति** ॥ परपक्षे कार्यं नित्यदा स्यान्न तु कदाचित्प्रलयः । समवायिकारणपरमाणूनां सदा सद्भावात् निमित्तस्य चेश्वरेच्छादेर्नित्यत्वात् । असमवायिकारणसंयोगाद्यभावान्नेति चेन्न । तदनुत्पत्तावपि कारणाभावात् । तदसमवायिकारणकर्माद्यभावस्य चानुपपत्तेः । अदृष्टस्य च बाह्यसामग्रीसत्त्वे स्वाभावापराधेन कार्य-निरोधकत्वादर्शनात् । न चैवं वैयर्थ्यम् । सामग्रीसम्पत्तावुपयोगादिति भावः । किं च तत्पक्षे पदार्थजनिरपि नित्या स्यात् । समवायस्य नित्यमेव भावाङ्गीकारात् । प्रागसतः सत्ता समवायस्यैव जनित्वाभ्युपगमादिति सूत्रस्यार्थान्तरम् । समवायिकारणादिसत्त्वेऽपि कार्योत्पत्त्युपरमे बाधकमाह ॥ **अन्यथेति** ॥

## गुर्वर्थदीपिका

कर्माद्यभावस्य चानुपपत्तेरित्यत्र कर्मजनकेश्वरेच्छादिसामग्र्यास्सत्वेन कर्माद्यभावस्याप्यनुपपत्ति-रित्यर्थः ।

## भावबोधः

'नित्येच्छत्वात् परेशस्य परमाणुसदात्वतः ।
अदृष्टकालयोश्चैव भावात् कार्यं सदा भवेत् ।'

इत्यनुव्याख्यानानुसारेण नित्यत्वात् परमाणूनामिति भाष्यमुपलक्षणपरमित्यभिप्रेत्य नित्यत्वात् परमाणूनां नित्यमेव कार्यं स्यादित्यंशं व्याचष्टे– **परपक्षे कार्यमित्यादिना** ॥

## भावदीपः

कार्यं नित्यमेव स्यादिति भाष्यं व्याघातनिरासाय व्याचष्टे ॥ **कार्यं नित्यदेति** ॥ 'सर्वैकान्यकिंयत्तदः काले दा' इति दाप्रत्यये सत्यपि 'तदोदा च' इति पुनर्दाविधिः शब्दान्तरादपि यथा स्यादित्येतदर्थमिति नित्यदेति साध्वित्याहुः । एवकारव्यावर्त्यमाह ॥ **नत्विति** ॥ परमाणूनामित्युपलक्षणमिति भावेनाह ॥ **निमित्तस्य चेति** ॥ 'नित्येच्छत्वात्परेशस्य परमाणुसदात्वतः । अदृष्टकालयोश्चैव भावात्कार्यं सदा भवेत्' इत्यनुभाष्योक्तेरिति भावः ॥ **वैय्यर्थ्यमिति** ॥ अदृष्टस्येत्यनुषङ्गः । अन्यथाशब्दस्यार्थं वदन्नेवावतारयति ॥ **समवायिकारणादिसत्त्वेऽपीति** ॥ सति कारणे कार्यानुत्पादे तस्य कारणत्वायोगादिति भाष्याभिप्रायः ।

## अभिनवचन्द्रिका

**प्रलयनिरासार्थमिति** ॥ यत्कालमारभ्य सृष्टिर्भवति तत्पूर्वकालस्य परमते प्रलयकालत्वसम्भवनिरासार्थमित्यर्थः ॥ **नित्यदा स्यादिति** ॥ यत्क्षणमारभ्य सृष्टिर्भवति ततःपूर्वमेव स्यादिति भावः । उक्तं च सुधायां 'तत्पक्षे कार्यं सदा भवेत् यदभिलष्यते । ततः प्रागपि भवेत्' इति । न तु कदाचित् प्रलय इति ॥ सृष्टिकालात् पूर्वक्षणः न प्रलयकालः स्यात्, किन्तु सृष्टिकालः स्यादित्यर्थः ॥ **सामग्रीसम्पत्ताविति** ॥ ननु सामग्रीसम्पत्तावुपयोगादित्ययुक्तं परमाणुकर्मसामग्र्याः सदातनत्वेन आगन्तुकत्वाभावेन अदृष्टस्य तत्सम्पादकत्वायोगात् । किञ्च सामग्रीसम्पत्तिः कार्यं न वा । नेति पक्षे सम्पत्तावुपयोग इत्ययुक्तं स्यात् । आद्ये सम्पत्तिकारणसम्पादकत्वेनैवोपयोगः न तु सम्पत्तावित्यपि स्यात् । ततश्च सम्पत्तिसम्पत्तावप्येवमिति सामग्रीसम्पादकत्वेनोपयोग इति रिक्तं वचः स्यादिति चेत्, न ब्रूमो वयम् अदृष्टं न कार्यकारणं अपि तु सामग्रीसम्पत्तावुपयोगीति । येनोक्तदोषः स्यात् । किं नाम कार्यकारणमपीदं सामग्रीसम्पत्तिव्यापकमिति । एवं च प्रलयकालेऽदृष्टाभावे सामग्रीसम्पत्तिरेव न स्यात् । अस्ति चासौ परमाणुकर्म सामग्रीसम्पत्तिः । तेनादृष्टमप्यस्त्येवेति अदृष्टविलम्बेन न कार्यविलम्बो वक्तुं शक्यः । इदमुक्तं भवति भवत्येवादृष्टं कार्यं प्रति कारणं न चादृष्टविलम्बात् कार्यविलम्बाभावो दोषः । स्वव्याप्यसमवधानदशायां स्वव्यतिरेकेण कार्यविलम्बस्य क्वाप्यभावात् स्वस्वव्याप्येतरसकलसमवधाने स्वविलम्बेन कार्यविलम्बकत्वस्य कारणान्तरवदिहापि भावादिति ॥ **जनिरपि नित्या स्यादिति** ॥ जनेरिदं प्रथमता न स्यादिति भावः ।

## वाक्यार्थमुक्तावली

चेति किञ्चेत्यर्थे । उभयथेति सूत्रात् बुध्या विवेकेन तदिति षष्ठ्यन्तं प्रथमान्तं चानुवर्तते । ईश्वरेच्छादेः कर्मण इति च वर्तते । नित्यमेवेत्यावर्तते । स्यादित्यध्याहृत्यानुवर्तते । ततश्च तेषां परमाणूनां ईश्वरेच्छाकालादृष्टानां (अ)समवायिकारणसंयोगजनककर्मणश्च नित्यं सदाभावात्, तत्तद्व्यणुकादिकार्यं नित्यमेव स्यात् । यदाऽभिलप्यते ततः प्रागपि भवेत् । न कदाचित् प्रलय इति सूत्रार्थं हृदि निधाय भाष्ये नित्यत्वाच्चेति चशब्देनेश्वरेच्छाकालकर्मादृष्टसमुच्चयं मत्वा समवायस्य च तस्यैवानित्यत्वाङ्गीकारात् इत्यंशं त्यक्त्वा तदर्थमाह ॥ **परपक्ष इत्यादिना** ॥ नन्वदृष्टमनित्यम् । प्रलये तद्वैकल्यात्कार्यवैकल्यमिति चेत् अनित्यत्वेऽपि प्रलये तद्विरहानङ्गीकारात् । तस्योद्बोधस्तदानीं नास्तीति चेत् ईश्वरेच्छादिकारणसद्भावे तदभावानुपपत्तेः । उक्तं चानुव्याख्याने

> 'नित्येच्छत्वात् परेशस्य परमाणुसदात्वतः ।
> अदृष्टकालयोश्चैव भावात् कार्यं सदा भवेत् ॥'

इति । यस्तु नैय्यत्यात् नियतस्य भावो नैय्यत्यं सामग्रीसद्भावेऽपि अदृष्टविरहात् कार्यविरह इति मन्यते तं प्रत्याह ॥ **अदृष्टस्य चेति** ॥ अदृष्टस्य बाह्यसामग्रीसम्पत्तिव्यापकत्वाददृष्टाभावे सामग्रीसम्पत्तिरेव न स्यात् । अस्ति च सामग्रीति प्रत्ययादिः । सामग्रीसत्वे च तद्व्यापकमदृष्टमप्यस्त्येवेति तद्विलम्बस्यैवायोगेनादृष्टविलम्बेन कार्यविलम्बो वक्तुमशक्य एवेत्यर्थः । नन्वदृष्टविलम्बेन कार्यविलम्बाभावे दृष्टवैय्यर्थ्यमित्याशङ्क्य परिहरति ॥ **न चेति** ॥ एवमङ्गीकारे सत्यां सामग्र्यामदृष्टनैय्यत्येन तदभावस्यैवाभावात्तद्विरहेण कार्यविरहो नेत्यङ्गीकारे सति नादृष्टवैय्यर्थ्यम्। किन्तु सत्यां सामग्र्यामदृष्टाभावेऽपि कार्योत्पत्तावेव तन्न सम्भवति । अदृष्टस्य सामग्रीसम्पत्तौ व्यापकतयोपयुक्तत्वाद्व्यापकाभावे व्याप्यस्यैवाभावादित्यर्थः । एतावत्तु परिशिष्यते । उपादानादावितरसमवधानेऽपि स्वविरहात् कार्याभावदर्शनात् कारणत्वमदृष्टे तदभावात् कथं कारणत्वमिति । तदयुक्तम् । उपादानादेरितरसामग्र्यव्यापकत्वाददृष्टस्य तद्व्यापकत्वेनोपादानादिना विशेषादिति धर्मिग्राहकप्रमाणसिद्धत्वादिति भावः । एतेन सामग्रीसम्पत्तावुपयोग इत्ययुक्तम् । परमते परमाणुकर्मसामग्र्या इदं प्रथमत्वे असमवायिकारणाभावेन तत्कर्मणामेवोत्तरकर्मासमवायिकारणत्वसिद्धये सदातनत्वाङ्गीकारेणागन्तुकत्वाभावात् अदृष्टस्य तत्सम्पादकत्वा-

(वाक्यार्थमुक्तावली)

योगात् । किञ्च सामग्रीसम्पत्तिः कार्यं न वा । नेति पक्षे सम्पत्तावुपयोग इत्ययुक्तं स्यात् । आद्ये प्रधानकार्यवत्तस्या अपि कार्यत्वेन तत्सामग्रीसमवधानदशायामदृष्टविलम्बात् कार्यविलम्बाभावेन तत्सामग्रीसम्पत्तावुपयोग इत्यङ्गीकारेऽनवस्थाप्रसङ्गः । साक्षात् प्रधानकार्यं प्रत्येवादृष्टस्य निमित्तत्वमिति वैदिकवादोच्छेदप्रसङ्गश्चेति निरस्तम् । अदृष्टस्य प्रधानकार्यं प्रत्येव कारणत्वमित्यङ्गीकृत्य सामग्रीसम्पत्तिं प्रति व्यापकत्वमात्राङ्गीकारात् । रसाकारणस्यापि रूपस्य व्यापकत्वमात्रेण तदवस्थानोपयोगदर्शनात् । सामग्रीकारणं त्वदृष्टान्तरमेवेति समवायस्येत्याद्युर्वरितभाष्यं सूत्रस्य विवरणान्तरत्वेन योजयति ॥ **किञ्चेति** ॥ समवायाभ्युपगमादित्यनुवर्तते । समवायस्येति बुध्या विवेकेनाप्यन्वेति । ततश्च समवायस्य नित्यमेव भावात् समवायाभ्युपगमात् जनित्वाभ्युपगमात् तद्व्यणुकादिकार्यं नित्यमेव स्यात् इति सूत्रार्थ इति भावः ।

## तत्त्वसुबोधिनी

संयोगानित्यत्वात् परमाणूनामनित्यमेव कार्यं स्यादित्यतस्तं व्याचष्टे ॥ **परपक्षे कार्यमित्यादिना** ॥ असमवायिकारणकर्माभावात् संयोगाभावः इत्यत आह ॥ **तदसमवायीति** ॥ तथाप्यदृष्टाभावात्तदभावः इत्यतः आह ॥ **अदृष्टस्येति** ॥

## वाक्यार्थविवरणम्

**तदनुत्पत्तौ** ॥ असमवायिकारणपरिमाणादिसंयोगानुत्पत्तौ । ननु कारणाभावोऽसिद्धः । असमवायिकारणभूतपरमाण्वादिसंयोगोत्पत्तावपि कर्मणोऽसमवायिकारणतया तदभावेन तदभावसम्भवादित्यत आह ॥ **तदसमवायिकारणेति** ॥ **अनुपपत्तेरिति** ॥ ईश्वरेच्छाया नित्यत्वात्तस्याप्युत्पत्तिः स्यादिति भावः । ननु नास्मन्मते नित्यदा कार्यं भवति तदानीमदृष्टाभावादित्यत आह ॥ **अदृष्टस्य चेति** ॥ प्रकृते चेश्वरेच्छादिरूपबाह्यसामग्र्या विकलत्वादिति भावः ॥ **वैय्यर्थ्यमिति** ॥ बाह्यसामग्रीसत्त्वे स्वाभावापराधेन कार्योत्पत्तिप्रतिबन्धकत्वाभावेऽदृष्टस्य वैय्यर्थ्यमेव स्यादित्यर्थः । कुतो न वैय्यर्थ्यमित्यतो व्यापारान्तरसत्त्वादित्याह ॥ **सामग्रीति** ॥ सम्पत्तौ । मेलने । अन्यथा बाह्यसामग्रीसम्पत्तौ सत्यामप्यदृष्टविलम्बेन कार्यविलम्बे सत्यपि अन्त्यतन्तुसंयोगे कदाचित् पटानुत्पादप्रसङ्ग इति भावः । भाष्ये कदाचिदित्यस्य सृष्टिकाल इत्यर्थः ।

## वाक्यार्थमञ्जरी

ईशेच्छाकालपरिमाण्वादिकारणानां नित्यमेव सत्वान्नित्यं कार्यमेव स्यात् न तु कदाचित्प्रलय इत्येवार्थः । अदृष्टविलम्बात्कार्यानुत्पाद इत्यत आह ॥ **अदृष्टस्य चेति** ॥ स्वं अदृष्टं वैय्यर्थ्यमदृष्टस्य ॥ **सामग्रीसम्पत्ताविति** ॥ प्रकृते च सामग्रीसद्भावादेवादृष्टानुमानान्नादृष्टाभावेन कर्माभावो वाच्य इत्यर्थः ॥ **प्रागसत इति** ॥ उत्पत्तेः पूर्वं सत्तासम्बन्धशून्यस्येत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॐ ॥ १५ ॥**

**रूपादिमत्त्वाच्च परमाणूनामनित्यत्वम् । तथा दृष्टत्वाल्लोके ।**

## सत्तर्कदीपावली

परमाणूनां नित्यत्वं यदभ्युपगतं तन्न युज्यते । रूपादिमत्वेन घटादिवदनित्यत्वानुमानसम्भवात् ।

## तत्त्वप्रदीपिका

रूपरसगन्धस्पर्शवत्त्वाच्च परमाणूनां स्वाभिमतनित्यत्वविपर्यय आपतत्यनुमानैकशरणानाम् । तथा हि लोके दृश्यते । चकारात्सावयवत्वं च ।

## तत्त्वप्रकाशिका

एवं परमाणूनां नित्यत्वमभ्युपेत्य तदारम्भवादो दूषितः । इदानीं तन्नित्यत्वमपि पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **रूपादीति** ॥ पार्थिवादिपरमाणूनां रूपादिमत्त्वहेतुना प्रकृतनित्यत्वविपर्ययो भवति । यद्रूपादिमत्तस्य घटादेरनित्यत्वदर्शनादित्यर्थः ।

## गुर्वर्थदीपिका

'रूपादिमत्वात्' इति सूत्रं परीत्या परं निराकर्तुम् । न तु स्वरीत्या । रूपवति विष्णौ रूपवत्यां प्रकृत्यां च व्यभिचारापातात् ।

## भावबोधः

**तन्नित्यत्वमपीति** ॥ अनेन सौत्र'श्च'शब्दः अप्यर्थकविपर्ययश्चेत्यन्वित इत्युक्तं भवति ॥ **रूपादिमत्त्वहेतुनेति** ॥ भौतिकत्वेन विशेषणान्नेश्वरादौ व्यभिचारः ।

## अभिनवचन्द्रिका

**पार्थिवादिपरमाणूनामिति** ॥ पार्थिवाऽऽप्यतेजःपरमाणूनां रूपवत्त्वेन हेतुना, वायुपरमाणूनां स्पर्शकत्वेन हेतुना, प्रकृतनित्यत्वविपर्ययः सिद्ध्यतीत्यर्थः । एतेन 'रूपवत्त्वात्' इत्येतावता पूर्णत्वात् सूत्रे आदिशब्दवैय्यर्थ्यमिति परास्तम् । अत्र सूत्रे, भाष्ये च, रूपादीनां प्रत्येकं हेतुत्वसूचनाय चशब्दो बोध्यः ॥ **यद्रूपादिमदिति** ॥ प्राकृतरूपादिमदित्यर्थः । ननु यद्रूपादिमत्तदनित्यमिति सामान्यव्याप्तिः, यन्निरवयवद्रव्यं तन्नित्यमिति विशेषव्याप्तिः । ततश्च रूपवत्त्वम् अपवादविषयत्वेन नानित्यत्वसाधनायालम् । तदुक्तं महाभाष्ये 'आदावपवादा अभिनिविशन्ते पश्चादुत्सर्गाः, प्रकल्प्य च अपवादविषयं तत उत्सर्गा अभिनिविशन्त' इति । ननु रूपवत्त्वमप्रयोजकमिति मते न नित्यत्वसिद्धिः । अस्तु वा परमाणूनां सादित्वं तथापि न द्व्यणुकादिकार्यभावः ।

## वाक्यार्थमुक्तावली

**पार्थिवादिपरमाणूनामिति** ॥ पार्थिवाप्यतेजःपरमाणूनां रूपवत्वेन वायुपरमाणूनां स्पर्शवत्वेनेत्यर्थः । तेन सूत्रे रूपवत्वादिति पूर्णत्वात् आदिपदं व्यर्थमिति निरस्तम् ॥ **तन्नित्यत्वमपीति** ॥ अनेन सौत्रश्चशब्द अप्यर्थकः । विपर्ययश्चेत्यन्वय इत्युक्तं भवति । भौतिकं त्वेव रूपादिव्याप्तं नाशे न नो मतम् । इत्यनुव्याख्यानोक्तेर्नेश्वररूपादौ व्यभिचारः । तदभाव इत्यतस्तेषां परमाणूनामित्यनुवृत्तौ सूत्रार्थः स्फुटः ।

## तत्त्वसुबोधिनी

**तन्नित्यत्वमपीति** ॥ अनेन सौत्रश्चशब्दः अप्यर्थकः । विपर्ययश्चेत्यन्वितः इति भावः ॥ **रूपादिमत्त्वहेतुनेति** ॥ भौतिकत्वेन विशेषणात् नेश्वरादौ व्यभिचारः ।

## वाक्यार्थविवरणम्

**रूपादिमत्वेति** ॥ अत्र आदिपदेन स्पर्शवत्त्वसङ्ग्रहः । यथोक्तम् । 'रूपस्पर्शादिहेतुभ्यः परमाणोरनित्यता' ॥ **अनुमेयेति** ॥ अत्र अनित्यत्वसाधकं रूपवत्त्वादिकं भौतिकमेव विवक्षितम् । अतो नेश्वरादौ व्यभिचारः । यथोक्तम्– 'भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मतम्' इति ।

## वाक्यार्थमञ्जरी

किं च पार्थिवादिपरमाणूनां रूपादिमत्वात्प्रकृतनित्यत्वविपर्ययोऽनित्यत्वं स्यात् । यद्रूपादिमत्तदनित्यमिति घटादौ दर्शनादित्यर्थः ॥ **रूपादिमत्वेति** ॥ भौतिकत्वेन रूपादेर्विशेषणान्नेशादौ व्यभिचार इति भावः ।

## सूत्रभाष्यम्

**॥ ॐ उभयथा च दोषात् ॐ ॥ १६ ॥**

**नित्यत्वे परमाणूनां तद्वत्सर्वनित्यत्वं स्यात् । विशेषप्रमाणाभावात् । अनित्यत्वे कारणाभावात्तदुत्पत्त्यभावः ।**

## सत्तर्कदीपावली

यदि रूपादिमतामपि परमाणूनां नित्यत्वमङ्गीक्रियते तर्हि घटादीनामपि तदङ्गीक्रियतामविशेषात् । न च परमाणूनां प्रलये विनाशोऽस्तु का हानिरिति वाच्यम् । समवायिकारणाभावेन पुनः पृथिव्यादिसृष्ट्यभावप्रसङ्गात् ।

## तत्त्वप्रदीपिका

परमाणूनां नित्यत्वमभिमतम् । तत्र दोष उक्तः । अनित्यत्वमुक्तव्याप्तिवलादभ्युपगन्तव्यम् । तत्र च मूलकारणाभावप्रसङ्गोऽपसिद्धान्तश्च दोषोऽर्थसिद्धः । अथ चोभयत्र दूषणान्तरमुच्यते । रूपादिमत्त्वेऽपि परमाणूनां नित्यत्वमिष्टं चेत्तद्वद्रूपादिमतः सर्वस्य नित्यत्वप्रसङ्गः । रूपादिमत्त्वस्यानित्यत्वाव्याप्यत्वात् । रूपादिमदपि किञ्चिन्नित्यं किञ्चिदनित्यमिति विशेषसाधकप्रमाणाभावात्तेषाम् । न च कृतकत्वादनित्यत्वमितरस्य, तदभावात्परमाणूनां नित्यत्वमिति वाच्यम् ।

(तत्त्वप्रदीपिका)

**रूपादिमत्त्वादेव घटादिवत्तद्भावापत्तेः । अणुपरिमाणं कचिद्विश्रान्तं परिमाणत्वान्महत्परिमाणवदिति च न नित्यपरमाणुप्रमाणम् । साध्यविकलत्वाद्दृष्टान्तस्य । महत्त्वस्याविश्रान्तेः । 'महतो महीयान्' 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिश्रुतेः । कचिदिति चाप्रसिद्धविशेषणः पक्षः ।**

## तत्त्वप्रकाशिका

**ननु रूपादिमत्त्वेऽपि परमाणूनां नित्यत्वं किं न स्यात् अस्तु वाऽनित्यत्वं किं बाधकमित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ उभयथा चेति ॥ यदि रूपादिमतामपि परमाणूनां नानित्यत्वं तर्हि तद्वद्घटादेरपि किं न स्यात् । न चावयवित्वादिविशेषः । रूपादिमत्त्वादेव तत्सिद्धेः । अस्त्वनित्यत्वं परमाणूनां किं बाधकमित्युक्तमेवेति चेन्न । तथा सति परपक्षे तत्समवायिकारणाभावेन तदुत्पत्त्यभावान्न द्व्यणुकादिकार्योत्पत्तिरिति भावः ।**

## गुर्वर्थदीपिका

अवयवित्वादीत्यत्राऽऽदिपदेन सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियस्य ग्रहणम् ।

## भावदीपः

अनित्यत्वमित्यस्य व्याख्येयं दर्शयन् सूत्रार्थमाह ॥ **पार्थिवादीति** ॥ रूपादेर्भौतिकत्वलाभाय पार्थिवादीति विशेषोक्तिः । तेन नेश्वरादौ व्यभिचार इति भावः । उक्तं चैतत् । एवं चात्माकात्स्र्न्यमित्यत्रानुभाष्ये । 'भौतिकं त्वेव रूपादि व्याप्तं नाशेन नो मतः' इति ।

## अभिनवचन्द्रिका

परमाणूनां कारणान्तरेणोत्पत्तौ तेभ्यो द्व्यणुकाद्युत्पत्तिसम्भवादिति भावेनाशङ्कते – **नन्विति** ॥ **यदि रूपादिमतामिति** ॥ भवेद्रूपादिमतामपि परमाणूनां नित्यत्वं यदि यत् रूपादिमत् तदनित्यमिति सामान्यव्याप्तिः स्यात् । न च सामान्यव्याप्तिः रूपादिमतो नित्यत्वापवादकस्य निरवयवत्वरूपविशेषप्रमाणस्याभावात् । रूपादिमत्त्वादेव सावयवत्वस्य साधयितुं शक्यत्वात् । एवं च सत्यपि प्रमाणे परमाणूनामनित्यत्वं न स्यात्, तर्हि सत्यपि अनित्यत्वावेदकप्रत्यक्षे घटादीनामनित्यत्वं न स्यात् । अर्थासिद्धौ प्रत्यक्षानुमानयोरविशेषादिति भावः ।

(अभिनवचन्द्रिका)

**पूर्वपक्षस्तु–** षट्खल्विमे भावपदार्थाः । द्रव्यगुणकर्मसामान्यसमवायविशेषाः, अभावश्च सप्तमः । तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । गुणास्तु रूपरस-गन्धस्पर्शसङ्ख्यापरिमाण पृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्धिसुख-दुःखे(शब्दे)च्छाद्वेषप्रयत्नधर्माऽधर्माश्चतुर्विंशतिरेव । कर्म च उत्क्षेपणापक्षेपणाकुञ्चनप्रसरणगमन-भेदात् पञ्चविधम् । सामान्यमनेकविधं जातिरूपमुपाधिरूपञ्च । समवायस्त्वेक एव । विशेषा-स्त्वनन्ताः । एतत् त्रितयं नित्यमेव । तत्रानित्यं कारणत्रितयजन्यम् । यत्समवेतं कार्यमुत्पद्यते तत् समवायिकारणं परमाण्वादिद्रव्यमेव । तत्र परमाणवो द्व्यणुकादिप्रक्रमेणावयविनमारभन्ते । समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणम् । तत्र कार्यद्रव्यस्यावयवसंयोग एव कार्यैकार्थप्रत्यासत्त्या असमवायिकारणं भवति । कारणगुणाः कर्म च कार्यं गुणानां कारणैकार्थ-प्रत्यासत्त्या असमवायिकारणम् । कर्मणश्च कारणगतगुणकर्मणी कार्यैकार्थप्रत्यासत्त्या असमवायिकारणम् । तत्र परिमाणं कारणगतं कार्यगतपरिमाणस्यासमवायिकारणं भवति । परमाणुद्व्यणुकतूलगतं परिमाणं न द्व्यणुकत्र्यणुकतूलपिण्डगतपरिमाणाऽसमवायिकारणं किन्तु द्व्यणुकत्र्यणुकगतं सङ्ख्यैव । तूलपिण्डपरिमाणन्तु प्रचयेन भवति । एतदन्यत् कारणं निमित्तम्, ईश्वरादृष्टकालादि । न चेश्वरः आत्मविशेषः । आत्मा च सङ्ख्यापरिमाणपृथक्त्वसंयोगविभाग-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्माधर्मा इति चतुर्दशगुणयुक्तः । परमेश्वरस्तु सङ्ख्यादिपञ्चगुणः । कर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशाली च शिष्टषड्गुणायोग्य इति कथं तस्यानन्तगुणवत्त्वं युक्तमतो व्यर्थ एव पूर्वाध्याय इति ।

**सिद्धान्तस्तु–** युक्तमेव हरेः अनन्तगुणपरिपूर्णत्वलक्षणम् । वैशेषिकादीनामनुपपन्नभावित्वेन तत्समयस्याप्रामाणिकत्वात् । तथा हि यत्तावदुच्यते ह्रस्वाणुपरिमाणयोर्नासमवायिकारणत्वमिति । तथा सति महत्त्वदीर्घत्वयोरपि तदभावापातात् । महद्दीर्घपरिमाणयोः कारणत्वे अनयोरपि तत् स्यात् अविशेषात् । किञ्चेश्वरेच्छा निमित्तकारणमिति वदन् प्रष्टव्यः, सा किं नित्या अनित्या वेति । उभयथापि न परमाणुकर्म सम्भवति । तथा हि यदीश्वरेच्छा नित्या तर्हि प्रलये सत्यामपि तस्यां परमाणुचेष्टाभावेन अन्यदापि तदभावः । अथानित्या तत्कारणाभावे-नेश्वरेच्छानुत्पत्त्या परमाणुकर्माभावः । न च पूर्वकल्पीयेच्छा नष्टापि यागवन्निमित्तमिति । प्रमाणाभावात् । अथ नेश्वरेच्छा कारणं, तर्हि अन्यत्रापि कारणं न स्यात् । एवं च परमते

(अभिनवचन्द्रिका)
परमाणुकर्माभावेन संयोगाभावात् त्र्यणुकादिकार्याभावः । किञ्च यदपि परमाण्वादिद्रव्यं समवायिकारणमिति तन्नोपपद्यते, अवयवावयविनोर्भिन्नत्वमङ्गीकृत्य विशेषणविशेष्यभावे समवायाभ्युपगमात् समवायस्यापि भिन्नत्वसाम्येन मृद्घटसमवाय इत्यादिविशेषणविशेष्यभावो-पपत्तये समवायान्तरापेक्षा स्यात् । तत्राप्येवं तत्राप्येवमिति अनवस्थानात् । नापि परमते प्रलयः सम्भवति । समवायिकारणासमवायिकारणनिमित्तकारणानां सद्भावेन कार्यानुत्पादे कारणाभावात् । वस्तुतस्तु न परमाणूनां नित्यत्वमुपपद्यते । प्राकृतरूपत्वेनानित्यत्वावश्य-म्भावात् । दृश्यते खलु लोके यत् प्राकृतरूपादिमत्तदनित्यमिति ।

ननु यद्रूपादिमत्त्दनित्यमिति सामान्यव्याप्तेः; यन्निरवयवद्रव्यं तन्नित्यमिति विशेषव्याप्ति-र्बलवती । अतस्तया बाधितत्वात् न रूपादिमत्त्वं परमाणूनामनित्यत्वं साधयति । अस्तु वा परमाणूनां सादित्वं तथापि न द्व्यणुकादिकार्याभावः । परमाणूनां कारणान्तरेणोत्पत्तौ तेभ्यो द्व्यणुकाद्युत्पत्तिसम्भवादिति चेत्, मैवम् यत्तावदुच्यते यद्रूपादिमत्तदनित्यमिति सामान्यव्याप्तिरिति तन्न, रूपादिमत्यनित्यत्वापवादकस्य विशेषप्रमाणस्याऽभावात् । न च निरवयत्वं विशेषप्रमाणं, रूपादिमत्त्वेन परमाणौ तदभावस्यापि साधयितुं शक्यत्वात् । यदपि अनित्यत्वे दोषाभाव इति तन्न । त्वन्मते परमाणूनां कारणासम्भवेनानुत्पत्तौ द्व्यणुकादिकार्यानुत्पत्तिप्रसङ्गलक्षण-बाधकसद्भावात् । किञ्च वैशेषिकमतस्य सकलश्रुतिस्मृत्याद्यपरिगृहीतत्वात्तद्विरुद्धत्वाच्चात्यन्ता-सामञ्जस्यम् । अतः परमाण्वारम्भवादस्याऽनुपपन्नत्वेनाविरोधकत्वाद्युक्तं पूर्वाध्यायोक्त-मीश्वरस्यानन्तगुणवत्त्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

ननु यद्रूपादिमत्तदनित्यमिति सामान्यव्याप्तिः । यन्निरवयवद्रव्यं तन्नित्यमिति विशेषव्याप्तिः । ततश्च रूपवत्वमनित्यत्वापवादविषये नानित्यत्वसाधनायालमतः अप्रयोजकमिदमनुमानम् । अस्तु वा परमाणूनां सादित्वम् । तथापि न तद्व्यणुकादिकार्याभावः । परमाणूनां कारणान्तरेणोत्पत्तौ तेभ्यो द्व्यणुकाद्युत्पत्तिसम्भवात् । इति भावेन शङ्कते ॥ **नन्विति** ॥ परमाणूनां निरवय-वत्वेनापवादविषयत्वात् घटादेरवयवित्वेन तदविषयत्वात् उभयोर्विशेषसद्भावात् अविशेषेणोपादा-नमयुक्तमित्याशङ्क्य परिहरति ॥ **न चेति** ॥ **रूपादिति** ॥ परमाणूनां रूपादिमत्वादेवावयवित्व-

(वाक्यार्थमुक्तावली)
**सिद्धेरपवादविषयत्वविशेषो** नेत्यर्थः ॥ **तत्समवायिकारणाभावेनेति** ॥ अनभ्युपगमेनेत्यर्थः । सूत्रे नित्यमेव च विपर्यये इत्युभयथा चेति परामृश्यते ॥ **दोषादिति** ॥ दोषप्रसङ्गादित्यर्थः ।

## वाक्यार्थविवरणम्

'परमाणवो नित्या रूपादिमत्त्वाद्धटवत्' इत्यत्राप्रयोजकतामाशङ्कते ॥ **नन्विति** ॥ **न स्यादिति** ॥ अनित्यत्वमिति शेषः । रूपादिमत्त्वाविशेषादिति भावः । अविशेषोऽसिद्ध इत्याशङ्कते ॥ **न चेति** ॥ घटादे रूपादिमत्त्वेऽप्यवयवित्वादनित्यत्वं परमाणूनां च तदभावात् नित्यत्वमिति भावः ॥ **रूपादिमत्त्वादेवेति** ॥ रूपादिमत्त्वेनैव हेतुना घटादिवदवयवित्व-साधनादविशेष एवेति भावः ॥ **उक्तमेवेति** ॥ शङ्कासमयेऽस्तु वेत्यनेनेत्यर्थः । **तत्सम-वायिकारणेति** ॥ तस्य परमाणोः समवायिकारणाभावेत्यर्थः ॥ परमाणोः समवायिकारणाङ्गीकारे तस्यापि पुनःकारणान्तराङ्गीकारे अनन्तावयवारब्धत्वाविशेषान्मेरुसर्षपयोरपि तुल्यपरिमाणत्वा-पत्तिरिति भावः ॥ **तदुत्पत्त्यभावात्** ॥ तस्य परमाणोरुत्पत्त्यभावप्रसङ्गादित्यर्थः ।

## वाक्यार्थमञ्जरी

नित्यत्वे घटादेरपि तथात्वापत्तिः । अनित्यत्वे कारणाभावेन परमाण्वनुत्पत्तिरिति पक्षद्वयेऽपि दोषसत्त्वादित्यर्थः ॥ **अवयवित्वादिति** ॥ कार्यत्वे सति रूपवत्वस्यैवानित्यत्व-प्रयोजकत्वादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ अपरिग्रहाच्चात्यन्तमनपेक्षा ॐ ॥ १७ ॥**

**श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्षता ।**

**'आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थकाम्' इति मोक्षधर्मे ।**

## सत्तर्कदीपावली

**न चैवमपौरुषेयवेदमूलसिद्धान्तोऽनुमानेन विघटयितुं शक्यते । वेदविरुद्धानुमानस्य प्रत्यक्ष-**

(सत्तर्कदीपावली)

**विरुद्धानुमानवदप्रमाणत्वात्। 'अक्षपादकणादौ च साङ्ख्ययोगौ च हैतुका' इति नारदीयवचनात्। अहमासं पण्डितको हैतुको वेदनिन्दकः। आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थकामिति भृगालवचनाच्च। न कणादाक्षपादमतं वेदमूलमिति वक्तुं शक्यते। तदेतदाह। रूपादिमत्त्वादित्यादिना।**

## तत्त्वप्रदीपिका

**श्रुतिस्मृत्यपरिगृहीतत्वात्तद्विरुद्धत्वाच्चातिशयेनानपेक्ष्यता शिष्टैरस्य समयस्य। आन्वीक्षिकीं दृष्टवदुत्प्रेक्षणरूपाम्।**

## तत्त्वप्रकाशिका

**एवं प्रपञ्चेन दूषितं परमाण्वारम्भवादमप्रामाणिकत्वेनापि दूषयत्सूत्रं पठित्वा व्याचष्टे ॥ अपरिग्रहाच्चेति ॥ न केवलं श्रुत्याद्यपरिगृहीतत्वं तस्य तद्विरुद्धत्वं चेति भावेनाह ॥ अन्वीक्षिकीमिति ॥ अहमासं पण्डितको हैतुको वेदनिन्दकः। आन्वीक्षिकीमित्यादि सृगालवाक्यम्। अतः परमाण्वारम्भवादस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं पूर्वाध्यायोक्तमीश्वरस्यानन्तगुणत्वमिति सिद्धम्।**

## गुर्वर्थदीपिका

'आन्वीक्षकीं तर्कविद्याम्' इत्यत्र केवलं स्वदुर्मतिमनुसृत्य पदार्थानां यदीक्षणं तत्सम्बन्धिनी आन्वीक्षिकी, न तु श्रुतिस्मृत्यनुसारिण्यान्वीक्षिकी। सृगालवाक्यमित्यत्र सृगालो जम्बुकः। इन्द्र-जम्बुकविवादस्थलीयवाक्यमित्यर्थः।

## भावबोधः

**अप्रामाणिकत्वेनापीति** ॥ तथा च सौत्रश्चशब्दः पूर्वोक्तसमुच्चयार्थ इति भाष्याभिप्राय इति भावः ॥ **तद्विरुद्धं चेति** ॥ अनेनानुक्तसमुच्चयार्थोऽपि च शब्द इति भाष्याभिप्राय इत्युक्तं भवति। कथमनेन श्रुतिविरुद्धत्वमुक्तमित्यतस्तत्पूर्वार्धोदाहरणपूर्वकमाह– **अहमासमिति** ॥ **सृगालवाक्यमिति** ॥ सृगालरूपेन्द्रवाक्यमित्यर्थः। अनेन तर्कविद्यानुरागस्य सृगालजन्महेतुत्वं सूचितं भवति। अत्र यद्यपि समवाय्यसमवायिनिमित्तभेदादिति परकीयकारणनिर्देशानुसारेण समवायाभ्युपगमादिति सूत्रस्य प्राथम्यं भवेत्। तथाप्यस्य प्राथम्ये समवायिकारणनिरासे

(भावबोधः)

तत्प्रत्यासन्नासमवायिकारणमपि निरस्तमेवेति पुनस्तन्निराकरणस्यानावश्यकत्वे परपरिकल्पितासमवायिकारणावान्तरवैचित्र्यं न दूषितं स्यात् । अतस्तत्प्रक्रियाया आत्यन्तिकाप्रामाणिकत्वप्रदर्शनाय आद्ये– सूत्रे असमवायिकारणवैचित्र्यनिरासोक्तिः । द्वितीये– तदभाव इति तच्छब्देन पूर्वसूत्रस्थमहदादिशब्दोक्तपरिणामसन्निधापितद्व्यणुकादिकार्यपरामर्शसौकर्याय निमित्तकारणनिरासोक्तिः । तृतीये– अवशिष्टसमवायिकारणनिरासोक्तिः । एवं कारणत्रयनिरासेन पराभिमतसृष्टिं न्यक्कृत्य, चतुर्थे प्रलयनिरासोक्तिः । पञ्चमे– परमाणूनां पूर्वसूत्रोक्तनित्यत्वविपर्ययसाधनम् । षष्ठे– पञ्चमोक्तानुमानस्याप्रयोजकत्वसिद्धसाधनत्वशङ्कोद्धारः । सप्तमे– वैशेषिकमतस्याप्रामाणिकत्वप्रमाणविरुद्धत्वयोरुक्तिरिति सूत्रक्रमः ।

## भावदीपः

**तद्विरुद्धत्वं चेति** ॥ सूत्रे अपरिग्रहादिति नञस्तदभावतद्विरुद्धरूपार्थद्वयमिति दर्शितम् ॥ **सृगालेति** ॥ देवेन्द्रो जम्बुकरूपेणागत्य कश्चित्प्रति वक्ति । अहमासमित्यादिना । तेन दृष्टवदुत्प्रेक्षारूपतर्कासक्तेः सृगालजन्महेतुत्वं सूच्यत इति भावः ॥ **अत इति** ॥ महदित्यादिसूत्रोक्तदूषणगणात् श्रुत्यादिप्रमाणशून्यत्वात्तद्विरुद्धत्वाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

**एवं प्रपञ्चेन दूषितमिति** ॥ युक्तिभिर्दूषितमित्यर्थः ॥ **अप्रामाणिकत्वेनापीति** ॥ तथा च सौत्रश्चशब्दः पूर्वोक्तसमुच्चयार्थ इति भावः । श्रुत्यादीत्यादिपदेन स्मृतिपुराणाद्यागम उच्यते ॥ **तद्विरुद्धं चेति** ॥ अनेनानुक्तार्थसमुच्चयार्थोऽपिशब्द इति भावः । सूत्रे अपरिग्रहादिति नञस्तद्विरुद्धतदभावरूपार्थद्वयमिति भाव इति केचित् ॥ **सृगालवाक्यमिति** ॥ सृगालरूपेन्द्रेण तर्कविद्यानुरागस्य सृगालजन्महेतुत्वोक्तेरिति भावः । तथा च मोक्षधर्मे ।

इन्द्रः सृगालरूपेण बभाषे क्रुद्धमानसम् । अहमासमित्याद्युक्त्वा तस्येयं फलनिष्पत्तिः सृगालत्वं यतो ममेति । सूत्रक्रमस्तु सृष्टिसंहारयोः सृष्टेः प्राथमिकत्वात् सूत्रत्रये सृष्टिः चतुर्थे सहास्य निरासः । तत्रापि परेण प्रलये समवायिनिमित्तकारणेऽङ्गीकृत्यासमवायिकारणविरहात् कार्यविरहाङ्गीकारेण सृष्टावसमवायिकारणस्यान्तरङ्गत्वात् प्रथमे तन्निरासः । द्वितीये

(वाक्यार्थमुक्तावली)
ईश्वरेच्छादिनिमित्तस्य सर्वप्रयोजकत्वेन प्राबल्यविवक्षया तन्निरासः । तृतीये समवायिकारण-निरासः । पञ्चमे समवायिकारणपरमाणूनां नित्यत्वनिरासः । षष्ठे निरासकानुमानस्या-प्रयोजकत्वादिपरिहारः । सप्तमे वैशेषिकादिमतस्याप्रामाणिकत्वतद्विरोधोक्तिरिति ।

## तत्त्वसुबोधिनी

**अप्रामाणिकत्वेनापीति** ॥ तथा च सौत्रश्चशब्दः पूर्वोक्तहेतुसमुच्चयार्थः । इति भाष्याभिप्रायः इति भावः ॥ **तद्विरुद्धत्वं चेति** ॥ तथा चानुसमुच्चयार्थोऽपि चशब्दः इति भावः । कथमेवं श्रुतिविरुद्धत्वम् उक्तमित्यतः तत्पूर्वोदाहरणपूर्वकमाह ॥ **अहमासमिति** ॥ **सृगालवाक्यमिति** सृगालरूपेन्द्रेण तर्कविद्यानुरागस्य सृगालजन्महेतुतोक्तेत्यर्थः । यद्यप्यत्र समवायिकारणादिकं क्रमेण निरास उचितः । तथा च समवायेत्यस्य प्राथम्यं भवेत् तथापि समवायिकारणनिरासेन प्रत्यासन्नासमवायिकारणमपि निरस्तमिति । पुनस्तन्निराकरणस्यानावश्यकत्वे परपरिकल्पितम-समवायिकारणान्तरवैचित्र्यं न दूषितं स्यात् अतस्तत्प्रक्रिययात्यन्ताप्रामाणिकत्वप्रदर्शनायाद्ये सूत्रे समवायिकारणवैचित्र्यनिरासोक्तिः द्वितीये परामर्शसौकर्याय निमित्तकारणनिरासः । तृतीयेऽ-वशिष्टसमवायिकारणनिरासः । चतुर्थे प्रलयनिरासः । पञ्चमे परमाणूनां रूपादिमत्वहेतुना-नित्यत्वविपर्ययसाधनम् । षष्ठे पञ्चमोक्तानुमानस्याप्रयोजकत्वादिनिरासः । सप्तमे वैशेषिकमतस्य अप्रामाणिकत्वप्रमाणविरुद्धत्वयोर्निरुक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

तस्य परमाणोरारम्भवादस्य । अतश्चायमविरुद्धः समन्वय' इत्यनुव्याख्यानं मनसि निधायाधिकरणार्थमुपसंहरति ॥ **अत इति** ॥

## वाक्यार्थमञ्जरी

परमाण्वारम्भवादस्य श्रुत्याद्यपरिगृहीतत्वात्तद्विरुद्धत्वाच्चानपेक्षात्यन्तमनादरणं युक्तमित्यर्थः । कथमनेन श्रुतिविरुद्धत्वमुक्तमित्यतस्तत्पूर्वार्धोदाहरणपूर्वकमाह ॥ **अहमासमिति** ॥ **सृगाल-वाक्यमिति** ॥ सृगालरूपेन्द्रवाक्यमित्यर्थः । अनेन तर्कविद्यानुरागस्य जम्बुकजन्महेतुत्वं सूचितं भवति ।

॥ **इति वैशेषिकाधिकरणम्** ॥ ६ ॥

# ७. अथ समुदायाधिकरणम्

## सूत्रभाष्यम्

परमाणुपुञ्जवादिमतं निराकरोति–

**॥ ॐ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॐ ॥ १८ ॥**

**समुदायस्यैकहेतुकत्वं न युज्यते । उभयहेतुकेऽप्यन्योऽन्याश्रयात्तदप्राप्तिः । अन्यथा सर्वदा समुदायसत्त्वं स्यात् ।**

## सत्तर्कदीपावली

परमाण्वारम्भवादवत्परमाणुपुञ्जवादोऽप्यनुपपन्नः । तथा हि । परमाणुपुञ्जशब्दादिभेदः समुदायस्तावदेकपरमाणुहेतुकश्चेत्प्रलये समुदायस्याप्यविच्छेदः स्यात् । बहुपरमाणुहेतुकश्चेद्बहुसमुदाययोर्भेदोऽङ्गीकृतः स्यात् । न च तथा सति बहुत्वैकत्वे समुदायस्य समुदायिभूतानां बहुत्वमिति समुदायहेतुकत्वं बहुत्वं किं न स्यादिति । अन्योन्याश्रयतया परमाणुपुञ्जवादोऽपास्तः स्यात । तदाह **॥ परमाणुपुञ्जेत्यादिना ॥**

## तत्त्वप्रदीपिका

चतुर्विधेषु बौद्धेषु वैभाषिकाः सौत्रान्तिकाश्च बाह्यार्थवादिनः । ते तावदुभयेऽपि परमाणूनां पुञ्जविशेषं जगत्क्षणभङ्गिसङ्गिरन्ते । विज्ञानवेदनासंज्ञासंस्कारानन्यस्कन्धांश्च । तत्र प्रथमे प्रत्यक्षमेतत्प्रचक्षते । अपरे तु नितरां मूढतमाः प्रतिबिम्बेनानेन बुद्ध्यारोपितेन बिम्बादन्यदनुमेयमितीत्येष भेदः । तेषां परमाणुकारणनिरासप्रसङ्गसङ्गतं मतमधुना निरस्यति । समुदायउभयहेतुकेऽपि तदप्राप्तिः । न तावत्परमाणुसमुदायस्यैकहेतुकत्वम् । समुदायत्वाभावप्रसङ्गात् । द्व्यादिहेतुके समुदायेऽङ्गीक्रियमाणेऽन्योन्याश्रयात्तस्यायुक्तिः, द्वित्वादिसिद्धौ समुदायसिद्धिः, तत्सिद्धौ द्वित्वादिसिद्धिरिति । द्व्यादिहेतुकत्वानङ्गीकारे द्वितीयानपेक्षत्वादेकस्यैव समुदायत्वमिति सर्वदा समुदायः स्यात् । अतः समुदाय एव न युज्यते द्वय्यामपि पदव्याम् । समुदायविशेषात्मना जगज्जन्म दूरापेतम् ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति **॥ परमाणुपुञ्जेति ॥** द्विविधसमयिनां मध्ये हैतुकनिरासानन्तरं

(तत्त्वप्रकाशिका)

**पाषण्डिनां निराकरणं प्राप्तम् । पाषण्डिनोऽपि द्विविधाः । अवैदिका वैदिकाश्च । तत्रावैदिकानामतिविरोधिनां निराकरणं प्रथमप्राप्तम् । तत्र बौद्धजैनानां मध्ये बौद्धस्यैव प्राथमिकत्वादादौ तन्निराक्रिया युक्ता । बौद्धानां बहुविधत्वेऽपि परमाणुकारणताभ्युपगन्तृनिराकरणसङ्गत्या वैभाषिकसौत्रान्तिकमतमत्र निषिध्यत इति भावः । अत्र विष्णोर्जगत्कारणत्वे बौद्धमतविरोधनिरासादस्ति शास्त्रादिसङ्गतिः । हरिर्जगत्कर्तेत्युक्तम् । तत्र बौद्धमतविरोधेनाभावशङ्का स्यादिति तद्दूषणीयमेव । ईश्वरस्य जगत्कारणत्वमेव विषयः । युक्तमयुक्तं वेति सन्देहः । समयविवादः सन्देहबीजम् । न युक्तमिति पूर्वपक्षः । रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितं खलु जगत्परमार्थसत् तदशेषं परमाणुसमुदायमात्रं न त्ववयवी नाम कश्चिदस्ति । परमाणुसमुदाय एव घटादिबुद्ध्युपपत्तौ परमाणुपरिणामस्य तदारब्धस्य वाऽवयविनोऽभ्युपगमस्य व्यर्थत्वात् । विद्यमानं च सर्वं क्षणिकमेव एतदेव हि पदार्थानां सत्त्वं यत्कालतः क्षणिकत्वं देशतः परमाणुत्वम् । तच्चैतत्कार्यं कालकर्मनिमित्तेन भवत्यतः किमीश्वरेण । न च तदनभ्युपगमे मानविरोधः । आगमप्रामाण्यानभ्युपगमात् । अतो न लक्षणं युक्तमित्येवं प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ समुदाय इति ॥ न विष्णोर्जगत्कारणत्वमयुक्तम् । बौद्धानामनुपपन्नभाषित्वेन तत्कल्पनाया दुष्टत्वात् । तथा हि । कालकर्मादिनिमित्तेन क्षणिकः परमाणुनिमित्तकः समुदायो भवति । न त्ववयवी कश्चिदस्तीति यदुक्तं तत्र प्रष्टव्यम् । किमयं समुदाय एकपरमाणुहेतुकोऽनेकपरमाणुहेतुको वेति । आद्यस्तावदनुपपन्नः । एकस्मात्समुदाय इत्यस्य व्याहतेः । द्वितीयोऽपि किं मिलितानेकहेतुको वा विरलानेकहेतुको वा । नाद्यः । मिलितानेकतः समुदायः समुदाये सति मिलितत्वमित्यन्योन्याश्रयतया समुदायानुपपत्तेः । नोत्तरः । अमिलितपरमाणूनां सदा सद्भावेन समुदायस्यापि सदातनत्वापत्त्या प्रलयाभ्युपगमविरोधापातादिति भावः । अत्रातिपीडायामनवस्थापि द्रष्टव्या ।**

## गुर्वर्थदीपिका

यद्यपि 'बुद्धो नाम्ना जिनसुत' इति वचनाज्जिनः प्राथमिकः, बुद्धस्तु पश्चात्तनः । तथाऽपि शिशुरूपेण बुद्धेन वेदनिन्दात्मके पाषण्डमते प्राकृते तत्र किञ्चिदङ्गीकृत्य पुनर्जिनेन वेदनिन्दात्मकं मतान्तरं कृतमिति भावेनोक्तम् ॥ **बौद्धस्यैव प्राथमिकत्वादिति** ॥ **बौद्धस्य** बुद्धकृतमतस्य । रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितमित्यत्र रूपपदेन पृथिव्यप्तेजोवाय्वाख्यभूतानि तत्तद्व्यवहारालम्बनपरमाणवश्च गृह्यन्ते । निर्विकल्पकं ज्ञानं विज्ञानम् । वेदना दुःखम् । सुखं तु दुःखाभाव एव । न ततोऽतिरिक्तम् । अतिरेकपक्षे तदपि दुःखशबलत्वाद्वेदनापदे-

(गुर्वर्थदीपिका)

नोच्यते। सविकल्पकं ज्ञानं संज्ञा। संस्कारः समनन्तरप्रत्ययाख्या स्मृतिः। इदं चतुष्टयमान्तरम्। आत्मा ज्ञानसन्ततिरेव न ततोऽतिरिक्त इति भावः। परमाणुसमुदाय एवेत्यस्य विवाहचतुर्थदिने गजाकारेण राशीभूताविकृततण्डुलवत्तत्तदर्थाकारेण पुञ्जीभूताविकृतपरमाणुसमुदाय एवेत्यर्थः। एतदेव हि पदार्थानां सत्त्वमित्यत्र पदार्थानां परमाणुसमुदायात्मकघटादिपदार्थानाम्। अर्थक्रियाकारित्वं हि सत्त्वम्। तच्च क्षणे क्षणे स्वसदृशासंस्थानान्तरकरणेन विकुर्वद्रूपवत्वे सत्येव स्यात्। अतः क्षणिकत्वमेव सत्त्वमिति भावः। मिलितानेकहेतुक इत्यत्र सकृद्धटोत्पत्त्यनन्तरं पुनर्यावद्धटसत्त्वं घटाकारेण मिलितैस्तैरेव परमाणुभिः क्षणेक्षणे घटसमुदायात्मककार्योत्पत्तिपरम्परां वदता सृष्टैकविध्याय प्राचीनघटाकारसमुदायात्मककार्यमपि घटाकारेण मिलितपरमाणुभ्य एव वक्तव्यम्। मिलितत्वं च घटाद्याकारेण समीपस्थपरमाणुसमुदायत्वम्। अन्यथा विरलानेकहेतुकत्वाख्यद्वितीयकोटेरविशेषापातात्। एवं च कारणीभूतमिलितत्वसम्पत्तिरेव सम्बन्धविशेषघटितपरमाणुसमुदाये सत्येव भवति। स च समुदायः उत्पत्स्यमानघटाकारसमुदायातिरिक्तो न परेण वक्तुं शक्यते। कार्यसमुदायातिरिक्तघटकसमुदायान्तरस्य परेणानङ्गीकारात्। स एव चेत्। न समुदाये सति मिलितत्वं मिलितत्वे सति समुदाय इति कथं नान्योन्याश्रय इति भावः। उत्पत्स्यमानादन्येन समुदायेन मिलितत्वं चेत्तस्यापि तथा तस्यापि तथेत्यनवस्थेत्याह ॥ **अत्रातिपीडायामिति** ॥ अप्रामाणिकसमुदायकल्पनेन प्रमेयस्य बहुपीडनादतिपीडायामित्युक्तम्।

## भावबोधः

एतदधिकरणस्य पूर्वाधिकरणेनानन्तरसङ्गतिमाह– **बौद्धानामिति** ॥ सौत्रान्तिकवैभाषिकमतमिति। सौत्रान्तिकमते रूपादिप्रपञ्चस्यानुमेयत्वाङ्गीकारेण वैचित्र्यसत्त्वेऽप्यधिकरणदूषणांशस्योभयमतसाधारण्येनोभयमतमप्यत्र निषिध्यत इति भावः ॥ **युक्तमयुक्तं वेति** ॥ अत्रेश्वरस्य जगत्कारणत्वं किं न युक्तम् उत युक्तमिति चिन्ता। तदर्थं वैभाषिकसौत्रान्तिकसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति। तदर्थं सौत्रान्तिकवैभाषिकौ किमुपपन्नभाषिणावुतानुपपन्नभाषिणाविति। तदर्थं तत्परिकल्पितपदार्थक्षणिकत्वादिप्रक्रियायां साध्यसाधकभावाभावौ वर्तेते उत न वर्तेते इति ॥ **रूपविज्ञानेति** ॥ रूपरसगन्धस्पर्शशब्दात्मकाः परमाणवो रूपस्कन्धः। निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः। वेदनापरपर्यायं दुःखं चैकस्कन्धः। सुखं

(भावबोधः)

दुःखाभाव एव । सुखमपि वेदनास्कन्ध इति केचित् । सविकल्पकज्ञानं संज्ञास्कन्धः । समनन्तरप्रत्ययः संस्कारस्कन्ध इति द्रष्टव्यम् । वैशेषिकादिमताभिप्रायेणाह– **तदारब्धस्येति** ॥ भाष्ये सौत्रापिशब्दसमुच्चेयप्रदर्शनाय समुदायस्यैकहेतुत्वं न युज्यत इत्युक्तम् । एकहेतुकत्वमेकपरमाणुहेतुकत्वमित्यर्थः । उभयहेतुकेऽपीत्यत्रोभयशब्दो मिलितानेकपरमाणुपरः । अङ्गीकृते सतीति शेषः । तदप्राप्तिरित्यत्र तच्छब्दः समुदायपरामर्शकः । अन्यथेत्यस्य मिलितानेकहेतुकत्वानङ्गीकारे विरलानेकपरमाणुहेतुकत्वाङ्गीकार इत्यर्थः इति भाष्याक्षरार्थमभिप्रेत्य तदभिप्रायमाह– **किमयं समुदाय इत्यादिना** ॥

ननु येभ्यो मिलितानेकपरमाणुभ्यो समुदायो, न तत्समुदायजन्याः । किं तु समुदितपरमाण्वन्तरादिति नान्योन्याश्रय इत्यत आह– **अतिपीडायामिति** ॥

## भावदीपः

अत्रैतन्मतनिरासे परमाणुपुञ्जेति पदप्रयोगसूचितां सङ्गतिं वक्तुमाह ॥ **द्विविधेति** ॥ प्रागुक्तद्विविधेत्यर्थः । तामाह ॥ **बौद्धानामिति** ॥ **वैभाषिकेति** ॥ तन्मतयोरनतिभिन्नार्थत्वादिति भावः । आकाशे चेति सूत्रानुगुण्याय जगत्स्वरूपं व्यनक्ति ॥ **रूपेति** ॥ विषयेन्द्रियाद्यात्मना स्थिताः रूपरसगन्धस्पर्शशब्दात्मकाः परमाणवो रूपस्कन्धः । निर्विकल्पकज्ञानं विज्ञानस्कन्धः । दुःखं वेदनास्कन्धः । सुखं च दुःखाभाव एव । सुखमपि वेदनास्कन्ध इत्येकदेशिनां मतम् । कुण्डली गौर्गच्छतीत्यादिसविकल्पकज्ञानं संज्ञास्कन्धः । तेषां वासनासंस्कारस्कन्धः । इत्येवं रूपेणावस्थितमित्यर्थः । असति प्रतिज्ञेत्यादिसूत्रोपयोगायाह ॥ **परमार्थेति** ॥ अर्थक्रियाकारिरूपपारमार्थिकसत्यमित्यर्थः । आद्यसूत्रनिरस्यमाह ॥ **तदशेषमिति** ॥ वेदान्तिरीत्याऽऽह ॥ **परिणामस्येति** ॥ वैशेषिकरीत्याऽऽह ॥ **तदारब्धस्येति** ॥ द्वितीयादिसूत्रोपयोगायाऽऽह ॥ **विद्यमानं चेति** ॥ क्षणिकत्वे सत्त्वं न स्यादित्यत आह ॥ **एतदेवेति** ॥ ईश्वरवादस्य तद्विरोधं दर्शयितुमाह ॥ **तच्चेति** ॥ विप्रतिषेधाच्चासमञ्जसमित्याद्युक्तदोषोऽत्र मते नेत्याह ॥ **न चेत्यादिना** ॥ **अत इति** ॥ ईश्वरस्यैवानुपयोगादित्यर्थः । समुदायादिखण्डनस्य सङ्गतत्वद्योतनायाह ॥ **न विष्णोरिति** ॥ परमाणुनिमित्तकः समुदायो भवतीत्येतावदनुवादेनैव पूर्तौ कालकर्मेत्याद्युक्तिः सूत्रेषु वक्ष्यमाणदूषणज्ञानसौकर्यायेति ध्येयम् । सूत्रभाष्ययोरुभयशब्दोऽनेकपरो न

(भावदीपः)

द्विमात्रपर इति भावेन अनेकपरमाणुहेतुको वेति विकल्पः । भाष्यं व्याचष्टे ॥ **आद्य-स्तावदित्यादिना** ॥ भाष्ये एतत्पक्षनिरासः सौत्रापिपदसूचित इति द्योतनाय तावदित्युक्तम् । भाष्ये समुदायशब्दप्रयोगादेव सूचितां युक्तिमाह ॥ **एकस्मादिति** ॥ सूत्रभाष्ययोरुभयशब्दः 'उभादुदात्तो नित्यम्' इति सूत्रादवयवार्थे निष्पन्नत्वान्मिलितानेकपरमाणुपर इत्यभिप्रेत्य विकल्पमुखेन भाष्यं व्याचष्टे ॥ **किं मिलितेति** ॥ एकदेशस्थानेकहेतुको वेत्यर्थः । अन्यथेत्यादि व्याचष्टे ॥ **नोत्तर इत्यादिना** ॥ **अतिपीडायामिति** ॥ अन्योन्याश्रयपरिहाराय मेलनस्य मेलनान्तरेण सामीप्येन वा विशिष्टानेकहेतुकत्वे अनवस्थेत्यर्थः ।

## अभिनवचन्द्रिका

**रूपविज्ञानवेदनासंज्ञा संस्काररूपेणेति** ॥ विषयेन्द्रियाद्यात्मना स्थिताः रूपरसगन्धस्पर्शशब्दाद्यात्मकाः परमाणवो रूपस्कन्धः, अहमित्यभिमानारूढं निर्विकल्पकज्ञानं विज्ञानस्कन्धः, दुःखं वेदनास्कन्धः, सुखन्तु दुःखाभाव एव । सुखमपि वेदनास्कन्ध इति केचित् । कुण्डली गौर्गच्छतीत्यादिसविकल्पकज्ञानं संज्ञास्कन्धः, रागद्वेषमोहादिरूपः समनन्तरप्रत्ययः संस्कारस्कन्धः । एवं पञ्चस्कन्धात्मना अवस्थितं परमार्थसदित्यर्थः ॥ **यत्कालतः क्षणिकत्वमिति** ॥ व्याप्यव्यापकयोरभेदोपचारोऽयम् । ततश्च व्यापकाभावे व्याप्यायोगात् विद्यमानस्य सर्वस्य क्षणिकत्वमभ्युपेयमिति भावः । एतेन साध्यावैशिष्ट्यात् सत्त्वेन परकीयं क्षणिकत्वसाधनमनुपपन्नमिति परास्तम् ॥ **कालकर्मनिमित्तेनेति** ॥ कालकर्मनिमित्तेनैव भवति न तु उपादानेनेति भावः । एतेन परमाणूनां क्षणिकत्वे उत्तरक्षणे पुनः परमाणूत्पत्तौ उपादानाभावात् पुनः परमाणूत्पत्तिरनुपपन्नेति परास्तम् । निरुपादानसृष्टेः अभ्युपगतत्वेन उपादानाभावस्यादोषत्वात् ॥ **किमयमिति** ॥ परस्यानुपपन्नभाषित्वेन युक्तमेवायं ब्रवीतीति नियमाभावात् प्रश्नः ॥ **मिलितानेकत इति** ॥ यद्यपि न मेलनातिरिक्तः समुदायो दृश्यते इत्यात्माश्रय इत्यात्माश्रयो वक्तव्यः तथापि समुदायव्यक्तिभेदमङ्गीकृत्य पूर्वस्मात्समुदायादुत्तरसमुदायः उत्तरस्माच्च पूर्वसमुदाय इत्यङ्गीकारेऽन्योन्याश्रयो बोध्यः । व्यक्तिबाहुल्याङ्गीकारे तु अनवस्थां वक्ष्यति ॥ **सदा सद्भावेनेति** ॥ यद्यपि परमाणवः क्षणिकाः, तथापि तत्प्रवाहस्तु सदा वर्तत इति सदा सद्भावेनेत्युक्तम् ॥ **अतिपीडायामिति** ॥ यस्मात् समुदायाद्यः समुदाय उत्पद्यते न तस्मात् पूर्वसमुदायोत्पत्तिरङ्गीक्रियते किन्तु समुदायान्तरात् सोऽप्येवं, सोऽप्येवमिति नाऽन्योन्याश्रय इत्यतिपीडायामित्यर्थः ।

(अभिनवचन्द्रिका)

इयमत्र सूत्रयोजना परमाणुसमुदायेन केवलं एकपरमाणुहेतुकेऽङ्गीक्रियमाणे समुदायप्राप्तिः किन्तु उभयहेतुके समुदितानेकहेतुकेऽङ्गीक्रियमाणेऽपि तदप्राप्तिरिति ॥ **भाष्ये अन्यथेति** ॥ अन्यथा पूर्वोक्तमिलितानेकहेतुकत्वादन्यथा विरलानेकहेतुकत्वाङ्गीकारे, सर्वदा समुदायत्वं स्यादित्यर्थः ।

## वाक्यार्थमुक्तावली

परमाणुपुञ्जस्यैव घटादिबुद्धिविषयत्वमिति वादः परमाणुपुञ्जवादः ॥ **प्राथमिकत्वादिति** ॥ प्रथमनिर्मितत्वात् प्रबलत्वाच्चेत्यर्थः ॥ **बहुविधत्वेऽपीति** ॥ वैभाषिकसौत्रान्तिकमाध्यमिक-योगाचारभेदैर्बहुविधत्वेऽपीत्यर्थः । अपिशब्दान्माध्यमिकादीनामतिविरोधित्वेऽपीति ग्राह्यम् । यद्यपि परमाणुपुञ्जरूपः क्षणिको बाह्यार्थो घटादिः सन् प्रत्यक्षश्चेति वदतः सौत्रान्तिकात् सोऽनुमेय इति वदन् वैभाषिकोऽतिविरोधी । ततोऽपि ज्ञानातिरेकेण बाह्यार्थ एव नास्तीति वदन् योगाचारोऽतितरां विरोधी । ततोऽपि सर्वशून्यवादी माध्यमिकोऽतितमां विरोधीति माध्यमिकयोगाचारवैभाषिकसौत्रान्तिकाः क्रमेण निराकार्याः । तथापि परमाण्वारम्भवादनिरासेन तत्पुञ्जवादोपस्थितेः । पुञ्जरूपबाह्यार्थसत्वे वा, द्वित्वेनैकीकृत्यावान्तरभेदमविवक्षित्वा वा, तार्किकं प्रत्युक्तमीश्वरस्य वैदिकत्वमयुक्तम् । वेदस्यैवाप्रमाणत्वादिति षष्ठाक्षेपेण प्रवृत्तयोः वैभाषिकसौत्रान्तिकमतयोर्निरासः क्रियत इति भावः ॥ **युक्तमयुक्तं वेति** ॥ ईश्वरस्य जगत्कारणत्वं वैभाषिकादिपरिकल्पितपदार्थक्षणिकत्वादिप्रक्रिया विरोधादयुक्तमुत युक्तमिति चिन्ता । तदर्थं तत्प्रक्रिया प्रमाणवत्युत नेति । आकाशे चेति सूत्रानुगुण्याय जगत्स्वरूपं निरूपयति ॥ **रूपेति** ॥ विषयेन्द्रियात्मना स्थिताः रूपरसगन्धस्पर्शशब्दात्मकाः पञ्च परमाणवो रूपस्कन्धः । अहमित्यभिमानारूढं निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः । दुःखं वेदना स्कन्धः । सुखं तु दुःखाभाव एव । सुखमपि वेदनास्कन्ध इति केचित् । कुण्डली गौर्गच्छति इत्यादि सविकल्पकज्ञानं संज्ञास्कन्धः । समनन्तरप्रत्ययः संस्कारस्कन्धः । समनन्तरप्रत्ययो नाम तेषां वासनेति चन्द्रिकायाम् । स्मृतिरिति केचित् । रागद्वेषमोहादिरूपः समनन्तरप्रत्यय इत्यन्ये । तच्छास्त्रे पक्षत्रयस्याप्युक्तत्वात् टीकानामविरोधः । असति प्रतिज्ञोपरोध इति सूत्रोप-योगमाह ॥ **परमार्थेति** ॥ अर्थक्रियाकारिरूपपारमर्थिकसत्य इत्यर्थः । आद्यसूत्रनिरस्यमाह ॥ **तदशेषमिति** ॥ वेदान्तरीत्याह ॥ **तत्परिणामस्येति** ॥ वैशेषिकादिरीत्याह ॥ **तदारब्ध-**

(वाक्यार्थमुक्तावली)

**स्येति** ॥ द्वितीयादिसूत्रोपयोगमाह ॥ **विद्यमानं चेति** ॥ **यत्कालत इति** ॥ व्याप्यव्यापकयोर-भेदोपचारोऽयम् । ततश्च व्यापकाभावे व्याप्यायोगात् विद्यमानस्य सर्वस्य क्षणिकत्वमभ्युपेयमिति भावः । एतेन साध्यावैशिष्ट्याद्विद्यमानं सर्वं क्षणिकमिति सत्वेन परकीयं क्षणिकत्वसाधनमनु-पपन्नमिति निरस्तम् । अर्थक्रियाकारित्वं हि सत्त्वम् । तच्च न जलाहरणादिना सम्भवति । तस्य कादाचित्कत्वात् । क्षणिकत्वे तु द्वितीयक्षणस्थपदार्थजनकत्वेन सम्भवति । न च स्थायित्वं युक्तम् । एकेनैव घटेन कुलालशाला परिपूर्तिप्रसङ्गात् । अतः सत्त्वेन क्षणिकत्वं युक्तमेव । सत्त्वस्य क्षणिकत्त्वेनेव परमाणुत्वेनापि व्याप्तिसद्भावात्तेन परमाणुत्वमप्यनुमेयमित्याह ॥ **देशत इति** ॥ महत्वेऽवयवित्वापत्यावयवानां क्रियया संयोगे सति तत्समवेततया तत्परिणामतया वा कार्येणोत्पत्तव्यम् । तत्कार्येणाप्येवमिति सजातीयार्थक्रियावैधुर्येण सत्त्वभङ्गापत्तेरिति भावः । नन्वेको महान् इत्यादि प्रत्यक्षप्रत्ययविरोधपरिहाराय समुदायस्य गोघटादिबुद्धिविषयत्वे परमाणुमेलकेनेश्वरेण भवितव्यम् । तथाऽवयव्यनभ्युपगमे परमाणूनां गोघटादिविलक्षणाकारता च न स्यादित्यत आह ॥ **तच्चैतदिति** ॥ आदिकालीनं कार्यमित्यर्थः । अन्यदा तु कुलालादि व्यापारादिनिमित्तान्तरमस्तीति भावः ॥ **कालेति** ॥ सिद्धान्तिनाप्यवश्यमङ्गीकार्येणेति शेषः । निमित्तेनेति वदता समुदायस्य परमाणुनिमित्तकत्वमेव न तु तदुपादानकत्वमित्युक्तम् भवति । यद्वक्ष्यति **परमाणुनिमित्तक इति** ॥ सूत्रेऽपिशब्दोऽनुक्तैकपरमाणुहेतुकेऽपीति समुच्चायक इत्यभि-प्रेत्य भाष्ये समुदायस्यैकहेतुत्वमित्युक्तम् । अत्राप्राप्तिर्नाम व्याहत्या तदनुपपत्तिः । उभयहेतुक इत्यत्रोभयशब्दो नैकपरः । तथा चोभयहेतुकेत्यस्य समुदितानेकपरमाणुहेतुके विरलानेकपरमाणु-हेतुकेऽपीत्यर्थद्वयं विवक्षितम् । तत्र आद्येऽन्योन्याश्रयात्तदप्राप्तिः । द्वितीये विरलानेकपरमाणूनां सदा सत्त्वात् समुदायोऽपि सदा स्यादिति तस्य समुदायस्य प्रलयाप्राप्तिरित्यर्थमभिप्रेत्योभयहेतु-केऽपीत्यादिभाष्यं प्रवृत्तमिति भावेन विकल्पमुखेन योजयति ॥ **किमियमिति** ॥ युक्तिमेव परो वक्तीति नियमाभावात् प्रश्नः ॥ **व्याहतेरिति** ॥ समुदायो नाम किं परमाणूनां संयोग, उतानेकत्त्वसङ्ख्या, अथ वृक्षाणामिवैकदेशावच्छेदेनावस्थानं, अथ तदारब्धं द्रव्यान्तरम् । पक्ष-चतुष्टयेऽपि व्याहतिरेव । एकस्मात् संयोगात् अनेकानां सहावस्थानायोगात् । एकस्यानारम्भ-कत्वाच्चेति भावः ॥ **मिलितानेकेति** ॥ समुदितानेकहेतुको वा विरुद्धानेकहेतुको वेत्यर्थः ॥ **मिलितत्वमिति** ॥ समुदितत्वमित्यर्थः । मिलितानेकहेतुकः समुदायः । जाते हि समुदायेऽनेकेषां समुदितत्वमित्यन्योन्याश्रयत्वमित्यर्थः । ननु येभ्यो मिलितानेकपरमाण्वन्तरहेतुकः समुदायो नेत्यत आह ॥ **अत्रातिपीडायामिति** ॥

## तत्त्वसुबोधिनी

एतदधिकरणस्य पूर्वाधिकरणेन सङ्गतिमाह ॥ **द्विविधेति** ॥ **प्राथमिकत्वादिति** ॥ बौद्ध-शास्त्रस्य प्रथमनिर्मितत्त्वेन तेषां प्राथमिकत्त्वादित्यर्थः । ननु बौद्धाः वैभाषिकसौत्रान्तिक-माध्यमिकयोगाचारभेदेन चतुर्विधाः । तत्र माध्यमिकस्य सर्वशून्यवादित्वेन योगाचारस्य विज्ञानातिरिक्तपदार्था(नाम)भाववादित्वेन वैभाषिकस्य च घटादिपदार्थानां अनुमेयत्ववादित्वेन तेषां प्रबलत्वात् माध्यमिकादिक्रमेणैव निरासः कर्तव्यः । तथा च प्रथमतो वैभाषिकसौत्रान्तिक-निराकरणमयुक्तमत आह ॥ **बौद्धानामिति** ॥ तथा च पूर्वं परमाण्वारम्भवादेन तत्पुञ्ज-वादोपस्थितेरनन्तरसंगत्या, आदौ वैभाषिकसौत्रान्तिकनिरासः । तत्रापि सौत्रान्तिकमते रूपादिप्रपञ्चस्य अनुमात्वेन तयोर्वैचित्र्येऽपि परमाणुपुञ्जरूपबाह्यार्थ सत्त्ववादित्वेनैकीकृत्य अवान्तरभेदमविवक्षित्वा अत्र तन्निरासः इति भावः ॥ **रूपविज्ञानमिति** ॥ विषयेन्द्रियाद्यात्मादि-नास्थिता रूपरसगन्धस्पर्शशब्दकाः । परमाणवो रूपस्कन्धः अहमित्यभिमानारूढं दण्डायमानं निर्विकल्पकं ज्ञानं विज्ञानस्कन्धः दुःखवेदनास्कन्धः सुखं तु दुःखाभाव एव सुखमपि वेदना-स्कन्धः इति केचित् । कुण्डली गौर्गच्छतीत्यादिसविकल्पकज्ञानं संज्ञास्कन्धः । रागद्वेषमोहादि-रूपः समनन्तरप्रत्ययः संस्कारस्कन्धः इति द्रष्टव्यम् ।

ननु परमाण्वारब्धो वा तत्परिणामरूपो वाऽवयवी नास्ति चेत् तर्हि घटादिबुद्धेः निर्विषयत्वापत्तिरित्यतः आह **परमाण्विति** ॥ **तदारब्धस्येति** ॥ वैभाषिकमतानुसारेण । ननु परमाणुपरिणाम एव किं न स्वीक्रियते इत्यत आह ॥ **विद्यमानं चेति** ॥ तथा च सर्वस्यापि क्षणिकत्वात् न परिणामवादाङ्गीकरणं युक्तमिति भावः । ननु क्षणिकत्वे पदार्थानां सत्त्वं कथमित्यत आह ॥ **एतदेव हीति** ॥ **कालतः क्षणिकत्वमिति** ॥ प्रतिक्षणविनाशित्वमित्यर्थः ॥ **देशतः परमाणुत्वमिति** ॥ अणुरूपे देशे सत्त्वमित्यर्थः । तथापि समुदायादिकार्यनिमित्त-त्वेनेश्वरोऽङ्गीकर्तव्यः इत्यत आह ॥ **तच्चैतदिति** ॥ क्षणिकपरमाणुनिमित्तकः इति । क्षणिकाः ये परमाणवः तन्निमित्तकः इत्यर्थः । भाष्ये सौत्रापिशब्दसमुच्चयप्रदर्शनाय समुदायस्यैकहेतुकत्वं न युज्यते इत्युक्तं एकहेतुकत्वं एकपरमाणुहेतुकत्वम् इत्यर्थः । उभयहेतुकेऽपीत्यत्रोभयशब्दः मिलितानेकपरमाणुपरः । अङ्गीकृते सतीति शेषः । तदप्राप्तिरित्यत्र तच्छब्दः समुदायपरामर्शकः । अन्यथेत्यस्य मिलितानेकहेतुकत्वानङ्गीकारे विरलानेकपरमाणुहेतुकत्वाङ्गीकारे इत्यर्थः इति

(तत्त्वसुबोधिनी)
भाष्याक्षरार्थमभिप्रेत्य तदभिप्रायमाह ॥ **किमयमिति** ॥ **परमाणूनां सदा सद्भावेनेति** ॥ न च विरलपरमाणूनां अपि क्षणिकत्वेन सदा सद्भावोऽयुक्तः इति वाच्यम् । क्षणिकानामपि विग्रह-परमाणूनामपि वाहस्य सदासत्त्वेन तथोक्तमिति भावः । ननु एभ्यो मिलितानेकपरमाणुभ्यः समुदायो न ते तत्समुदायजन्याः किन्तु समुदितपरमाण्वान्तरादिति नान्योन्याश्रयः इत्यतः आह ॥ **अत्रातिपीडायामिति** ॥ समुदितपरमाण्वन्तरमपि परमाणुसमुदायान्तरादित्यनवस्थेति अर्थः ।

## वाक्यार्थविवरणम्

**प्राथमिकत्वादिति** ॥ यथोक्तं तात्पर्यनिर्णये । 'ततस्तु बुद्धोदितपक्षसंस्थो जिनोऽपि चक्रे मतमन्यदेव' इति । अतो बौद्धस्यैव प्राधान्येन प्राथमिकत्वमित्यर्थः । वैभाषिकसौत्रान्तिक-माध्यमिकयोगाचारभेदेनेत्यर्थः ॥ **सङ्गत्येति** ॥ वैशेषिकैः परमाणुकारणत्वं जगतोऽङ्गीकृतम् । आभ्यां तु परमाणुपुञ्जरूपत्वमिति परमाण्वङ्गीकारवादित्वेन सङ्गतिरस्तीत्यर्थः । 'पञ्चस्कन्धा-त्मना स्थितम्' । एतदनुव्याख्यानं मनसि निधाय तन्मनस्स्थितिं दर्शयति ॥ **रूपेत्यादिना** ॥ अणूनां समुदायं चेत्येतदनुसारेणाह ॥ **तदशेषमिति** ॥ पञ्चस्कन्धात्मकं जगदित्यर्थः । अवयविनोऽभावे घटादिबुद्धीनां निरालम्बनतापात इत्यत आह ॥ **परमाण्विति** ॥ अस्मद्रीत्या परिणामस्येति । तार्किकरीत्याऽऽरब्धस्येत्युक्तम् । स्वरसक्षणिकं जगदित्यानुसारेणाह ॥ **विद्य-मानं चेति** ॥ सत्त्वयुक्तमित्यर्थः । चशब्दात् परमाणुपुञ्जरूपमिति ग्राह्यम् । तथा च यत् सत् तत्क्षणिकं परमाणुपुञ्जरूपं चेत्यर्थः । ननु विद्यमानरूपसत्त्वहेतुना क्षणिकत्वपरमाणुसमुदाया-त्मकत्वसाधनं कुत इत्यतस्तादात्म्याविनाभावनियामकस्य सत्त्वादित्याह ॥ **एतदेव हीति** ॥ बौद्धमते तादात्म्यतदुत्पत्तिभ्यामेवाविनाभावः प्रसिद्धः । प्रकृते च तदुत्पत्तेरयोगात्तादाम्ये-नैवाविनाभाव इत्याशयेन सत्त्वक्षणिकत्वयोस्तादात्म्यमुक्तमिति ध्येयमिति तु सम्प्रदायविदः । अन्ये तु अप्रयोजकताशङ्कापरिहाराय तदुभयमुपपादयन्ति ।

**एतदेव हीति** ॥ अत्र विना नोपपद्यत इति शेषः । तेनैवकारान्वयः । ततश्चेत्थं योज्यम् । यदेतत्पदार्थानां सत्त्वं तत्पदार्थान्तं कालतः क्षणिकत्वं विना नोपपद्यत एव । तथा यदेतत्पदार्थानां सत्त्वं तदेतत्पदार्थानां देशतः परमाणुत्वं स्वल्पदेशे विद्यमानत्वं परमाणुपुञ्ज-रूपत्वमिति यावत् ॥ **तद्विना नोपपद्यत एवेति** ॥ अत्रोभयत्राप्युपपादकं प्रसिद्धमिति

हिशब्देनाचष्टे । तथा हि समर्थस्य आक्षेपायोगात् कुर्वद्रूपत्वाख्यार्थक्रियारूपसत्त्ववतां पदार्थानां स्थायित्वे एकस्मिन् क्षणे एकस्मादेव घटादनन्तघटोत्पत्तिप्राप्त्या कुलालशालापूर्तिप्रसङ्गात् । तत्परिहाराय तादृशसत्त्वसिद्धयेऽवश्यक्षणिकत्वमङ्गीकार्यम् । एवं सत्त्ववतां परमाणुघटादि-भावानामवयवावयविभावमङ्गीकृत्य परमाणुपुञ्जात्मकतानङ्गीकारेऽवयवी पटः किमवयवेषु तन्तुषु कार्त्स्न्येन वर्तत उतैकदेशेन । नाद्यः । पटस्यानेकत्वप्रसङ्गात् । न द्वितीयः । अवयवान् तन्तून् विहाय पटस्यैकदेशाभावात् । तथा च पट एकदेशेनावयविनि, तन्तौ एकदेशेन वर्तत इत्युक्त्या तन्तुः स्वयमेव स्वस्मिन्नस्तीत्युक्तं स्यात् । तच्चायुक्तम् । इत्येवम् अवयविनि बाधकसद्भावेन तस्य मिथ्यात्वात् सत्त्वानुपपत्तेरवश्यं परमाणुसमुदायात्मकत्वं युक्तम् । समुदायस्यैवायोगात् । समुदायो हि मेलकेन पुंसा भवति । न चास्मदादिस्तथेतीश्वरोऽङ्गीकार्य इत्याशङ्कां कालकर्म-निमित्तत इत्यनुसारेण परिहरति ॥ **तच्चैतदिति** ॥ ननु येभ्यो मिलितपरमाणुभ्यः समुदायो जायते ते मिलितानेकपरमाणवो न तत्समुदायजन्याः किं तु समुदितपरमाण्वन्तरादतो नान्यो-न्याश्रय इत्यत आह ॥ **अत्रातिपीडायामिति** ॥ परमाण्वन्तरेऽपि समुदायस्यैकपरमाणुहेतुकत्वा-सम्भवात् । अनेकपरमाणुहेतुकत्वेऽपि विरलानेकहेतुकत्वासम्भवेन मिलितानेकहेतुत्वे वाच्ये अन्योन्याश्रयापत्त्या तत्परिहाराय मिलितानेकपरमाणवो न तत्समुदायजन्याः, किं तु समुदित-परमाण्वन्तरादिति वक्तव्यम् । तस्मिन् परमाण्वन्तरेऽपि समुदायः किमेकपरमाणुहेतुकोऽनेक-परमाणुहेतुको वेत्यादिविकल्पपरम्पराप्रसरेण अनवस्था स्यादित्यर्थः ।

## वाक्यार्थमञ्जरी

**प्राथमिकत्वादिति** ॥ बुद्धोक्तमतैकदेशमवलम्ब्य जिनेन मतान्तरकरणादिति भावः ॥ **बहुविधत्वेऽपीति** ॥ वैभाषिकसौत्रान्तिकमाध्यमिकयोगाचारभेदेनेत्यर्थः । ईश्वराभावं वक्तुमाह ॥ **रूपविज्ञानेति** ॥ शरीरेन्द्रियविषयात्मनावस्थिताः रूपरसगन्धस्पर्शात्मकाः परमाणवो रूप-स्कन्धाः । निर्विकल्पकज्ञानं विज्ञानस्कन्धः दुःखं वेदनास्कन्धः । सुखं च दुःखाभाव एव । सविकल्पकं ज्ञानं संज्ञास्कन्धः । समनन्तरप्रत्ययः संस्कारस्कन्ध इति द्रष्टव्यम् । अस्मन्मताभि-प्रायेणाह ॥ **परमाणुपरिमाणस्येति** ॥ वैशेषिकमताभिप्रायेणाह ॥ **तदारब्धस्येति** ॥ **यदिति** ॥ पदार्थानां सत्त्वं नाम स्वसदृशकार्यजनकत्वरूपमर्थक्रियाकारित्वम् । तत्र यदि घटस्य स्थायित्वं तर्हि प्रतिक्षणं घटान्तरं समुत्पादयेत् । सोऽप्येवम् एवं चाल्पतरकाले कुलालशालापूर्त्तिः स्यात् ।

(वाक्यार्थमञ्जरी)
अतो घटान्तरमुत्पाद्य स्वयं नश्यतीत्यङ्गीकार्यम् । तथा घटव्याप्तत्वे तत्कार्यस्य सर्वत्रोपलब्धि-प्रसङ्गात्परिछिन्नत्वं चाङ्गीकार्यमिति भावः । समुदायः किमेकपरमाणुजन्य उतानेकपरमाणुजन्यः । आद्ये एकस्मात्समुदाय इति व्याहतमित्यपिशब्दसूचितदूषणम् । द्वितीये समुदाये उभयहेतुकेऽनेकपरमाणुजन्ये अङ्गीकृते सति तद्प्राप्तिः तस्य समुदायस्यानुपपत्तिः । अन्योन्याश्रयादित्यर्थः । ननु येभ्यो मिलितानेकपरमाणुभ्यो समुदायो जन्यते न ते तत्समुदायजन्याः किन्तु समुदितपरमाण्वन्तरजन्या इति नान्योन्याश्रय इत्यत आह ॥ अत्रातिपीडायामिति ॥ समुदित परमाण्वन्तरस्यापि मिलितानेकपरमाण्वन्तरहेतुकत्वावश्यम्भावादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ १९ ॥**

**सर्वदा विद्यमानोऽपि समुदायः परस्परापेक्षया व्यवह्रियत इति चेन्न । एकं कार्यमुत्पाद्य तस्य विनष्टत्वात्परस्परप्रत्ययस्तदपेक्षया व्यवहार इति न युज्यते । कारणे सति कार्यं भवत्येवेति हि तस्य नियमः ।**

## सत्तर्कदीपावली

**समुदायो बहुत्वसापेक्षः विरलपरमाणुषु सन्ततिषु विद्यमानः समुदायः सृष्टिकाले परस्पर-सन्निहितैकैकपरमाण्वपेक्षया व्यवह्रियत इति नेतरेतराश्रयत्वमिति यद्युच्यते तदपि सर्वविरलपरमाणुभ्यः क्षणिकेभ्यो विरलपरमाणुषूत्पद्यमानेषु निबिडपरमाणुषु पुञ्जसम्भवात् । न कालकर्मवशादपि परमाणुपुञ्जसम्भवः न हि निष्कारणकः परमाणुपुञ्जव्यवहारः सम्भवति । तदाह । इतरेतरेत्यादिना ।**

## तत्त्वप्रदीपिका

**अथापि स्यात् । नायं समुदायः कादाचित्कः । येनेतरेतराश्रयस्स्यात् । किन्तु नित्य एव । परमाणुसन्तानानां नित्यत्वात् । तथाऽपि पुरुषस्येदं चेदं चेति परस्परापेक्षया प्रतीयते । तथैव व्यवह्रियते च । एवं समुदायविषयोऽभिज्ञानादिव्यवहारः परं चापरं च प्रत्येति विषयीकरोति । अतः समुदायव्यवहारस्येतरेतरप्रत्ययत्वात् द्यादिहेतुकत्वाविरोध इति चेन्न । एकं कार्यमुत्पाद्य तस्य क्षणिकस्य कारणस्य विनष्टत्वात्परस्परापेक्षः प्रत्ययस्तदपेक्षया व्यवहार इति च वक्तुमयुक्तेः । तथा हि,**

(तत्त्वप्रदीपिका)

इदमिदमिति प्रथमतः पृथक्पृथक्प्रतीतानामिदं चेदं चेति परस्परापेक्षः समुदायविषयः प्रत्ययो जायते, पश्चाद्व्यवहारः । न च स्वरसभङ्गुराणां तेषां तावन्तं कालमवस्थातुमवसरः स्यात् । कारणे सति कार्यं भवत्येवेति हि तस्य क्षणिकवादिनो नियमः । तत्र प्रथमक्षण एव प्रथमकार्यमुत्पाद्य द्वितीयक्षणे यद्यवतिष्ठेत, तर्हि तदाऽपि कार्यान्तरोत्पत्तेरेकस्माद्धटाद्बहवो घटसन्ताना उपलभ्येरन् । सिद्धान्तभाष्यस्यान्योऽप्यर्थः । एकं सदृशं कार्यमुत्पाद्य तस्य विनष्टत्वान्न विसदृशकार्योत्पत्तिः । अतश्चासंयुक्तयोः परमाण्वोः न संयुक्तावुत्पद्येयाताम् । न चानिन्द्रियसंयोगिनः कारणादिन्द्रियसंयोगि कार्यमुत्पद्येत । न चाज्ञाताद्विज्ञातम् । न चाव्यवहारपदाद्व्यवहारपदम् । नचेन्द्रियादप्यसंयोगिन-स्संयोगि । न च तादृशादात्मनोऽन्यादृशः स्यात् । ज्ञानमेव न आत्मेति चेन्न । तर्ह्यतथाज्ञाना-त्तथाज्ञानं कुत एतत् ? कारणे सति कार्यं भवत्येवेति हि तस्य नियमः । न पुनर्विशेषकार्यमपीति । सदृशात्सदृशान्तरोत्पत्तिनियमाङ्गीकारादिति भावः । अनियमे घटादपि पट उत्पद्येत । न चादृष्टात्फलादातृणो दातृण उत्पत्तिः । अतो न विशेषकार्योत्पत्तिः ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रमुपन्यस्याक्षेपांशं तावद् व्याचष्टे ॥ इतरेति ॥ यदुक्तं समुदायस्य विरलानेकहेतुकत्वे सदातनत्वं स्यादिति तदङ्गीक्रियत एव न चैवं प्रलयानुपपत्तिः । सदातनत्वेऽपि समुदायस्य वित्तिव्यवहाराभावेन प्रलयोपपत्तेः । न च विद्यमानत्वे व्यवहाराभावोऽपि कुत इति वाच्यम् । व्यवहारादेरिदं चेदं चेति परमाणुपरस्परापेक्षानिबन्धनत्वात् । परस्परापेक्षा च परमाणूनां सामीप्यापेक्षा । न चास्ति प्रलये तत्सामीप्यमतो नोक्तदोष इति भावः । परिहारांशं व्याचष्टे ॥ नेति ॥ वित्तिव्यवहारयोः कादाचित्कतया समुदायस्य सदातनत्वेऽपि न दोष इति न युक्तम् । तथा सति कदापि समुदाये वित्तिव्यवहाराभावापातात् । विरला हि परमाणवो मिलितपरमाणूनुत्पाद-यन्ति । ते च पुरुषेण दृश्यन्ते । ते चैकैकं कार्यमुत्पाद्य नश्यन्त्येव तेऽप्येवं तथा च कथं द्रष्टुः परस्परापेक्षा ततो व्यवहारादि कथं घटेत । न ह्यन्यत्र दर्शनमन्यत्र परस्परापेक्षाऽन्यत्र व्यवहारादीति युज्यते । पुरुषस्यापि तथात्वमिति भावः । अथ विरलपरमाणुभ्यो जाता मिलितपरमाणवः स्थायिनोऽतो युक्तो व्यवहार इत्यत आह ॥ कारणे सतीति ॥ यदि परमाणवः स्थायिनस्तर्हि ते प्रतिक्षणं कार्यमुत्पादयेयुः । कारणे सति कार्यं भवत्येवेति तन्नियमात् । तथा चाल्पतरकालेऽप्य-कस्माद् घटात्कुलालशालापूर्तिप्रसङ्ग इति भावः । यद्यप्यत्र क्षणिकत्वहानिरेव वाच्या तथापि सैव तदभ्युपगमकारणप्रदर्शनेनोक्ता वेदितव्या ।

## गुर्वर्थदीपिका

तदङ्गीक्रियते एवेत्यत्र घटाकारेण विरलानेकसमुदायस्य सदातनत्वमित्यर्थः । न चास्ति प्रलये तत्सामीप्यमित्यत्र विरलपरमाणुभ्यस्समुदायजन्माङ्गीकारे कारणे सति कार्यं भवत्येवेति तेषामेव नियमेन कार्यावश्यम्भावाद्धटाकारेण दूरदूरस्थानेकपरमाणुसमुदाय एव सर्वदाऽस्ति न तु मिलितसमुदायः । कालकर्मवशात्तेषामेव परमाणूनां कदाचिदतिसाम्ये समुदायो दृश्यते व्यवह्रियते च । अन्यदा नेति भावः । घटाकारेणाविरळतया मिलितपरमाणुसमुदाये वित्तिव्यवहाराविति पक्षेऽपि प्रथमोत्पन्नक्षणिकसमुदायात्मककार्ये परमाणूनां दर्शनमात्रं द्वितीयक्षणवृत्तिकार्येऽपेक्षा-बुद्धिः तृतीयक्षणवृत्तिकार्ये व्यवहार इति किं केन सङ्गतमिति भावेनाह ॥ **न ह्यन्यत्र दर्शनमिति** ॥ अल्पतरकाल इत्यत्र घटिकार्धमात्र इत्यर्थः । सैव तदभ्युपगमेत्यत्र सैव क्षणिकत्व-हानिरेव । तदभ्युपगमे क्षणिकत्वाभ्युपगमे । कारणप्रदर्शनेन स्थायित्वे कुलालशालापूर्वाख्य-कारणप्रदर्शनेनेत्यर्थः ।

## भावबोधः

**तदङ्गीक्रियत एवेति** । नात्र समुदायो नाम परमाणूनां संयोगः । अनङ्गीकारात् । नापि द्रव्यान्तरम् । तस्यैवावयवित्वापातात् । किं त्वनेकसङ्ख्यारूप एव । स च विरलेष्वपि परमाणुषु सर्वदास्तीति भावः । व्यवहारादेरिदं चेदं चेति । अनेकत्वसङ्ख्याया अपेक्षाबुद्धिव्यङ्ग्यत्वेन तत्प्रतीतिव्यवहारयोरिदं चेदं चेति परस्परापेक्षाबुद्ध्यधीनत्वादित्यर्थः । अनेनेतरप्रत्यय अपेक्षा-बुद्धिर्यस्य व्यवहारादेः स इतरेतरप्रत्ययस्तस्य भावस्तत्त्वम् । षष्ठ्यर्थश्च जन्यजनकभाव इति सूत्राक्षरयोजना सूचिता । 'तच्च सामीप्यहेतुकम्' इत्यनुव्याख्यानं मनसि निधायाऽऽह– **परस्परापेक्षा चेति** ॥ विप्रकृष्टे इदं चेदं चेति अपेक्षाबुद्धेरदर्शनादिति भावः ॥ **पुरुषस्यापि तथात्वमिति** ॥ विषयवदात्मनोऽपि क्षणिकत्वात् परमाणुदर्शनमपेक्षाबुद्धिः समुदायव्यवहार इत्येतेषामेकविषयत्वमिवैकाधिकरणत्वमपि न युक्तमित्यर्थः ।

## भावदीपः

**तदङ्गीक्रियत एवेति** ॥ अनेकत्वसङ्ख्याया एव समुदायत्वात्तस्य च विरलेष्वपि परमाणुषु

(भावदीपः)

सत्त्वेन सदातनत्वादिति भावः ॥ **वित्तीति** ॥ ज्ञप्तिव्यवहारयोरभावेनेत्यर्थः ॥ **व्यवहारादेरिति** ॥ अनेकत्वसङ्ख्याया अपेक्षाबुद्धिव्यङ्ग्यत्वेन तत्प्रतीतिव्यवहारयोश्च इदं चेदं चेत्यपेक्षाबुध्य-धीनत्वादित्यर्थः । इतरसहितमितरदितरेतरदितीतरेतरेति सौत्रविन्यासलभ्यमाह ॥ **सामीप्यापेक्षेति** ॥ तच्च सामीप्यहेतुकमित्यनुभाष्योक्तेरिति भावः । नञोऽन्वयायाह ॥ **वित्तिव्यवहारयोरिति** ॥ असाङ्गत्यनिरासाय मध्ये हेतुमध्याहृत्य तदुपपादकत्वेन भाष्यं व्याख्यातुमाह ॥ **तथा सतीति** ॥ उत्पत्तिमात्रनिमित्तत्वादिति सूत्रशेषस्याणूनामेकैककार्योत्पत्तावेव निमित्तत्वात् द्वितीयक्षणवृत्त्य-पेक्षाबुद्ध्यादावनिमित्तत्वादित्यर्थमुपेत्यैकं कार्यमित्यादिभाष्यं व्याचष्टे ॥ **ते चैकैकं कार्यमिति** ॥ **नश्यन्त्येवेति** ॥ क्षणिकत्वादिति भावः ॥ **तेऽपीति** ॥ मिलिताणुभ्यो जाता अन्येऽपीत्यर्थः । द्रष्टुर्दर्शनवतः पुंसः । यत्र दर्शनं तत्रैव दर्शनानन्तरभाविनी इदं चेदं चेति जायमानाऽपेक्षाबुद्धिः । तत्रैव तदनन्तरभाविनौ वित्तिव्यवहारौ च कथं भवेयुरित्यर्थः ॥ **पुरुषस्यापीति** ॥ विषयवदात्म-नोऽपि क्षणिकत्वमुपेत्य परमाणुदर्शनमपेक्षाबुद्धिः समुदायवित्तिव्यवहारौ इत्येतेषामेकविषयत्वमिव एकाधिकरणत्वमपि न युक्तमित्यर्थः ॥ **तदभ्युपगम इति** ॥ क्षणिकत्वस्याभ्युपगमे कारणे सति कार्यं भवत्येवेति नियमरूपकारणोपदर्शनेन क्षणिकत्वहानिरेवोक्तेत्यर्थः ।

## अभिनवचन्द्रिका

**किं कारणे विनष्ट इति** ॥ अत्र यद्यपि किं कारणनाशकाले कार्यमुत्पद्यत इत्यपि पक्षो विकल्प्य दूषणीयः, तथापि कारणनाशोत्तरकाले जायमाने कार्ये कारणव्यापाराभाववत् कारणनाशकाले जायमाने कार्येऽपि कारणव्यापाराभावसाम्यात् प्रतिज्ञोपरोधो भवतीति तद्दूषणे-नैवाऽस्यापि दूषणं भवतीति पृथङ् न दूषितः । विद्यमाने वेति द्वितीयकल्पस्य कारणोत्तरक्षणे कारणे विद्यमाने कार्यमुत्पद्यते इति वा, कारणोत्पत्तिक्षण एव कार्यमुत्पद्यत इति वा, सम्भव-मालोच्य द्वयमपि निषेधति – **न द्वितीय इति** ॥ आद्याऽसम्भवे हेतुपरतया मूलं योजयति– **एकस्मिन् क्षण इति** ॥ अस्तु द्विक्षणावस्थायित्वं को दोषः, न च क्षणिकत्वहानिः; क्षणद्वयमेकक्षणत्वेन विवक्षित्वा क्षणिकत्वाभिधानादित्यतो दूषणमाह – **क्षणिकस्य चेति** ॥ 'विनाशकारणाभावात्' इत्यतः परं 'अवस्थानप्रसङ्गात्' इति ग्राह्यम् । ततश्चैवं योजना क्षणिकत्वेनाङ्गीकृतस्य द्विक्षणावस्थानाङ्गीकारे तदुत्तरत्र तृतीयादिक्षणेषु विनाशकारणमुद्गर-प्रहारादेरभावात्तृतीयादिक्षणेष्वप्यवस्थानमङ्गीकार्यम् । ततश्च पुनस्तस्मात् कार्योत्पत्तयः स्युः ।

(अभिनवचन्द्रिका)

'कारणे सति कार्यं भवत्येव' इति नियमात् । तेभ्यः कार्येभ्यश्च तथा कार्योत्पत्तयः स्युरिति सर्वकार्याणां, कारणकार्याणां, कार्यकार्याणां च, यौगपद्यमेकस्मिन् कालेऽवस्थानं स्यादिति । कारणोत्पत्त्युत्तरकाले कार्यमित्यङ्गीकारे एकं घटमुत्पाद्य स्थितस्य कुलालस्य सायङ्काले कार्याणां कार्यकार्याणां चावस्थानात् शालापरिपूर्त्तिः स्यादिति भावः । द्वितीयासम्भवपरतयापि मूलांशं योजयति – **तथेति** ॥ अस्मिंस्तु पक्षे एकं घटमुत्पाद्य स्थितस्य कुलालस्य द्वितीयक्षणे अघटत्वप्रसङ्ग इति भावः । भाष्ये 'निस्सन्तान' इति । सूत्रे अल्पाच्तरं पूर्वं प्रयोज्यमित्यभिप्रेत्य, ससन्तानविनाशे परेण सङ्केतितः प्रतिसङ्ख्याविरोधशब्दः पूर्वनिर्दिष्टः; तावन्मात्रेण तस्य प्राधान्यं मा विज्ञायीति भावेन परेण निस्सन्तानविनाशे सङ्केतितोऽप्रतिसङ्ख्या विरोधशब्दः प्रथमं व्याख्यात इति बोध्यम् ।

## वाक्यार्थमुक्तावली

**तदङ्गीक्रियते एवेति** ॥ मन्मतेऽनेकत्वसङ्ख्यारूपस्य समुदायस्य विरलानेकपरमाणुहेतुकत्वेन तादृशपरमाणूनां सदा सत्त्वात्समुदायस्य सदातनत्वमङ्गीक्रियत एवेति भावः ॥ **व्यवहारादेरिति** ॥ अनेकत्वसङ्ख्याया अपेक्षाबुद्धिव्यङ्ग्यत्वेन तत्प्रतीतिव्यवहारयोश्चेदं चेदं चेत्यपेक्षाबुद्धिजन्यत्वादिति भावः । इतरसहितमितरदितरेतरदितीतरेतर इति सौत्रविन्यासलब्धमाह ॥ **सामीप्येति** ॥ नेदिष्ठ-मन्तिकतमं स्यात् 'दूरं विप्रकृष्टकम्' इत्यमरः । विप्रकृष्टयोरिदं चेदञ्चेत्यपेक्षाबुद्ध्यदर्शनादित्यर्थः । एतेनेतरसहितमितरदितरेतरत् तस्य प्रत्ययोऽपेक्षाबुद्धिर्यस्य व्यवहारादेर्हेतुः स इतरेतरप्रत्ययस्तस्य भावस्तत्वं तस्मादित्यर्थः । तथा चानेकत्वसङ्ख्यारूपसमुदायव्यवहारादेरिदं चेदं चेति समीपस्थेतर-सहितेतरविषयकापेक्षाबुद्धिजन्यत्वात् प्रलये सामीप्यभावेन तद्धेतुकापेक्षाबुद्धिव्यवहारसमुदायबुद्धी-नामभावात्तदभावविवक्षया प्रलयोपपत्तिरिति तदप्राप्तिर्नेति सूत्रखण्डार्थ उक्तो भवति । सिद्धान्तांशेन चान्वयमाह ॥ **वित्तिव्यवहारयोरिति** ॥ असाङ्गत्यनिरासाय मध्ये हेतुमध्याहृत्य तदुपपादकत्वेन सौत्रहेतुविवरणपरं भाष्यं गमयति ॥ **तथा सतीति** ॥ कुतस्तदभावापत्तिरित्यतस्तन्मतं परिष्करोति ॥ **विरला हीति** ॥ मिलितपरमाणूनित्यनेकत्वसङ्ख्याविशिष्टपरमाणूनुत्पादयन्ति । ते च पुरुषेण दृष्यन्त इति हि त्वन्मतमित्यर्थः ।

ननु वेदनमेव पुमानिति सौगता मन्यन्ते तत्कथं पुरुषेण दृश्यन्त इत्यनूद्यत इति चेत् ज्ञानं हि द्विविधं भवति । प्रवृत्तिज्ञानमालयज्ञानं चेति । तत्रालयज्ञानं प्रवृत्तिज्ञानदुःखसंस्कारास्पदं

(वाक्यार्थमुक्तावली)
पुमानित्युच्यते । प्रवृत्तिज्ञानं तु समुदायत्ववेदनमिति न विरोधः । ततश्च किमित्यत उत्पत्तिमात्रनिमित्तत्वादिति सूत्रशेषस्याणूनामेकैककार्योत्पत्तावेव निमित्तत्वात् द्वितीयक्षणवृत्त्यपेक्षा बुध्यादावनिमित्तत्वादित्यर्थमुपेत्यैकं कार्यमिति भाष्यं व्याचष्टे ॥ **नश्यन्त्येवेति** ॥ क्षणिकत्वादेवेति भावः ॥ **तेऽपीति** ॥ मिलिताणुभ्यो जाता अन्येऽपीत्यर्थः ॥ **पुरुषस्यापीति** ॥ विषयवदात्मनोऽपि क्षणिकत्वमुपेत्य परमाणुदर्शनमपेक्षाबुद्धिः समुदाये वित्तिव्यवहार इत्येतेषामेकविषयत्वमिवैकाधिकरणत्वमपि न युक्तमित्यर्थः ॥ **तदभ्युपगमकारणेति** ॥ पराभ्युपगतक्षणिकत्वहानिरित्युक्तपराभ्युपगमोपपादनाय तन्मत उपन्यस्तं स्थायित्वे कार्यकरत्वावश्यम्भावात् कुलालशालापरिपूर्तिः स्यादिति अभ्युपगमकारणमुक्तमित्यर्थः ।

## तत्त्वसुबोधिनी

**तदङ्गीक्रियत एवेति** ॥ नात्र समुदायो न परमाणूनां संयोगः अनङ्गीकारात् । नापि द्रव्यान्तरम् । तस्यैवावयवित्त्वापातात् । किन्तु अनेकत्वसङ्ख्यारूप एव स च मिलितेति वा विरलेष्वपि परमाणुषु सर्वदास्तीति भावः ॥ **व्यवहारादिदं चेदं चेति** ॥ अनेकत्वसङ्ख्याया अपेक्षाबुद्धिव्यङ्ग्यत्वेन तत्प्रतीतिव्यवहारयोरिदं चेदं चेत्यपेक्षाबुद्ध्यधीनत्वादित्यर्थः । अनेन इतरेतरप्रत्ययः अपेक्षा बुद्धिः यस्य व्यवहारादेः सः इतरेतरप्रत्ययः तस्य भावः तत्त्वम् । षष्ठ्यर्थश्च जन्यजनकभावः इति सूत्राक्षरयोजना सूचिता । सामीप्यपेक्षेति विप्रकृष्टे । इदं चेदं चेत्यपेक्षा बुद्धेरदर्शनादिति भावः ॥ **ततः इति** ॥ परस्परापेक्षातः इत्यर्थः । पुरुषस्यापि· तथात्वमिति विषयवदात्मनोऽपि क्षणिकत्वेन परमाणुदर्शनमपेक्षाबुद्धिः समुदायव्यवहारः इत्येतेषां एकविषयत्वमिवैकैकाधिकरणत्वमपि न युक्तमित्यर्थः । ननु परमाणूनामस्थायित्वाङ्गीकारे क्षणिकत्वहानिरेव वक्तव्या, एतद्दूषणं अनुपयुक्तमित्यत आह ॥ **यद्यपीति** ॥ **तदभ्युपगमेति** ॥ क्षणिकत्वाभ्यपगमे कारणप्रदर्शनेनेत्यर्थः । एकस्मात् घटात् अल्पतरकाले कुलालशालापरिपूर्तिरिव क्षणिकत्वाङ्गीकारे बीजमिति भावः ।

## वाक्यार्थविवरणम्

**विद्यमानत्वे । सदातनस्य समुदायस्येति** वर्तते ॥ **वित्तिव्यवहारयोरिति** ॥ वित्तिर्वेदनमपेक्षाबुद्धिरिति यावत् । **समुदायत्ववेदनतद्व्यवहारयोरित्यर्थः** । यथोक्तं सुधायाम् । अनेक-

(वाक्यार्थविवरणम्)

परमाणव एव समुदायः । तदनेकत्वं च समुदायत्वम् । तन्मिलितेष्विव विरलेष्वपि विद्यते । किन्तु न समुदायत्ववेदनं भवति । इतरपरमाणुसहितेतरपरमाणुज्ञाने सति समुदायत्वज्ञानं भवति । अपेक्षा-बुद्धेरनेकत्वव्यञ्जकत्वात् । न चेतरेतरप्रत्ययो विरलपरमाणुषु सम्भवति । न हि मथुरापाटली-पुत्रस्थितयोरितरेतरप्रत्ययो दृष्ट इति ॥ **मिलितपरमाणूनुत्पादयन्तीति** ॥ तदेव तेषां समुदायत्वमिति भावः । यथोक्तं सुधायाम् विरलपरमाणुभ्यः सन्निकृष्टाःपरमाणवो जायन्ते तदेव तेषां समुदायत्वमिति समुदायरूपं कार्यं तु परमाणुदर्शनापेक्षाबुद्धिव्यवहाराणामेकविषयत्ववदेकाधिकरणत्वमपि न युक्तम् । कुत इति चेत्तत्राह ॥ **पुरुषस्यापीति** ॥ वेत्तुरात्मनो क्षणिकत्वमङ्गीकृतं यतोऽत इत्यर्थः । तदुक्तम् । 'आत्मानं च क्षणस्थितम्' इति । तथा च द्रष्टा अपेक्षाबुद्धिमान् व्यवहर्ता च भिन्न एवेति न तेषामेकाधिकरणत्वमिति भावः । अत्र मिलितपरमाणूनां स्थायित्वाङ्गीकारपक्षे अपसिद्धान्त एव वाच्य इत्यर्थः ॥ **सैवेति** ॥ क्षणिकत्वहानिरेवेत्यर्थः ॥ **तदभ्युपगमेति** ॥ स्थायित्वाङ्गीकारे अल्पतरकाले एकस्माद्घटात् कुलालशालापूर्तिरूपं बाधकमेव क्षणिकत्वाभ्युपगमे परस्य कारणम् । एवं च स्थायित्वाङ्गीकार एकस्मिन् क्षणे कुलालशालापूर्तिप्रसङ्गरूपबाधकोक्त्या क्षणिकत्व-हानिरेवोक्ता भवतीत्यर्थः ।

## वाक्यार्थमञ्जरी

समुदायस्य सर्वदा सत्त्वेऽपि तत्प्रतीतिव्यवहारयोरितरेतरप्रत्ययत्वादिदं चेदंचेत्यपेक्षाबुद्ध्य-धीनत्वात्तदभावे तत्प्रतीत्याद्यभावेन लयाद्युपपत्तिरिति चेन्न । विरलपरमाणुजातमिलितपरमाणूनां तादृशसमुदायोत्पत्तिमात्रे निमित्तत्वादपेक्षाबुद्ध्यादौ निमित्तत्वाभावादित्यर्थः ॥ **तदङ्गीक्रियत एवेति** ॥ नात्र समुदायो नाम परमाणूनां संयोगः । अनङ्गीकारात् । नापि द्रव्यान्तरं तस्यैवा-वयवित्वात् । किंत्वनेकत्व सङ्ख्यारूप एव । स च विरलेष्वपि परमाणुषु सर्वदास्तीति भावः । वित्तिः प्रतीतिः । व्यवहारादेरिदञ्चेदं चेति । अनेकत्वसङ्ख्याया अपेक्षाबुद्धिव्यङ्ग्यत्वेन तत्प्रतीति व्यवहारयोरप्यपेक्षाबुद्ध्यधीनत्वादित्यर्थः । **सामीप्यापेक्षेति** ॥ विप्रकृष्टे इदं चेदं चेत्यपेक्षा-योगादिति भावः । घटेतेत्यनन्तरं कथमित्यनुवर्तते । कात्र कथन्तेत्यत आह ॥ **न हीति** ॥ त्रयाणामेकविषयत्वेनैव कार्यकारणभावादिति भावः । तथात्वं क्षणिकत्वं तथा चैकस्य पुरुषस्य दर्शनमन्यस्यापेक्षाबुद्धिरन्यस्य व्यवहार इति भिन्नाधिकरणत्वान्न तेषां कार्यकारणभाव इति भावः । तदुभ्युपगम सति । एतद्बाधकवशात्त्वया क्षणिकत्वमेवाङ्गीकार्यम् । स्थायित्वाङ्गीकारे च तद्धानिरित्येवमर्थादुक्तैवेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ उत्तरोत्पादे च पूर्वनिरोधात् ॐ ॥ २० ॥**

कार्योत्पत्तावेव कारणस्य विनाशाच्च न विशेषकार्योत्पत्तिः ।

## सत्तर्कदीपावली

एतदेव विवृणोति । उत्तरेत्यादिना ।

## तत्त्वप्रदीपिका

इतश्च न विशेषकार्योत्पत्तिः । यद्विनाशरहितं कारणं स्वतः कार्य-मात्रोत्पादनपरम् । न च सहकार्यन्तरसंयोगस्यावसरं दद्यात् । येन विशेषकार्यसम्भवः ।

## तत्त्वप्रकाशिका

एवं विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिमभ्युपेत्य व्यवहाराद्यसम्भवो दर्शितः । अथ विशेषकार्योत्पत्तिमपि निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **उत्तरेति** ॥ न क्षणिकमते विशेप-कार्योत्पत्तिश्च युक्ता । कारणस्य स्वसदृशकार्यजनन एव सामर्थ्यात् । अन्यथा घटात्पटोत्पत्ति-प्रसङ्गात् । न च वाच्यं सदृशकार्योपजननसमर्थमपि कारणं कार्यमुत्पाद्य पश्चाद्वैसादृश्यमुत्पादयतीति । न चातिप्रसङ्गः ॥ **अदृष्टाधीनत्वादिति** ॥ सदृशमेकं कार्यमुत्पाद्यैव कारणस्य विनष्टत्वात् । अन्यथा क्षणिकत्वविरोध इति भावः ।

## गुर्वर्थदीपिका

सदृशमेकं कार्यमुत्पाद्यैव कारणस्य विनष्टत्वादित्यनेन प्रागेकवारं स्वसदृशाविरलकार्योत्पादे सति पूर्वस्य कारणचक्रस्य क्षणिकत्वेन नष्टत्वात्पुनस्तस्मिन्कार्ये वैसादृश्यजनकता न घटते । उत्तरवैसादृश्योत्पादेऽधिकरणतया पूर्वस्य कार्यस्यापि क्षणिकतया नष्टत्वेन न तत्र वैसादृश्य-जनकतेति द्वेधाऽप्यनुपपत्तिः परस्येति सूत्रार्थस्सूचितो भवति । अन्यथा क्षणिकत्वविरोध इत्यत्र एकैकक्षणवर्त्तिकार्यजनकत्वमेव क्षणिकत्वमित्यर्थः ।

## भावबोधः

**विशेषकार्योत्पत्तिमपि निराकुर्वत्सूत्रमिति** ॥ विसदृशकार्योत्पत्तिमपीत्यर्थः । अत्रैकं कार्यमुत्पाद्य तस्य विनष्टत्वादित्यादिभाष्यानुसारेण द्वितीयसूत्रं विरलपरमाणुकार्याणां मिलित-परमाणूनामपेक्षाबुद्धिविषयत्वादिनिराकरणपरतया व्याख्याय कार्योत्पत्तावेवेत्यादिभाष्यानुसारेण विसदृशकार्योत्पत्तिनिरासकतया व्याख्यातेऽपि 'इति चेत् कार्यसम्भूतिमात्रव्यापृतिकारणम् । न तु कार्यविशेषेषु व्यापृतं कारणं भवेत्' इत्यनुव्याख्याने 'कारणानि खलु स्वसदृशकार्यजनन-व्यापाराणि, न तु विसदृशकार्यजनने व्यापृतानि' इति सुधायां च विसदृशकार्यरूपविशेषादि-कार्योत्पत्तिनिरासकतया द्वितीयसूत्रं प्रकारान्तरेण व्याख्याय,

'उत्तरोत्पत्तिमात्रेण विनाशात् पूर्ववस्तुनः ।
न संस्कारार्पकत्वं च युज्यते कस्यचित् क्वचित्' ॥

इत्यनुव्याख्याने, अथ मतं कारणक्षणाः कार्येषु संस्कारानर्पयन्ति अतः पूर्वात्मसंस्कार-योगिनाम् उत्तरोत्तरेषामात्मनामनुमानादिव्यवहारा इत्येतन्निराकरणाय सूत्रमुत्तरोत्पादे चेत्यादि सुधायां तृतीयसूत्रं बौद्धमते संस्कारनिरासकतया प्रकारान्तरेण व्याख्यातमिति ज्ञेयम् ॥ **विशेष-कार्योत्पत्तिश्चेति** ॥ अनेन सौत्रश्चशब्दोऽध्याहृतसाध्येनान्वितः । अत एव भाष्ये विशेषकार्यो-त्पत्तिश्चेत्युक्तमित्युक्तं भवति । न विशेषकार्योत्पत्तिरिति भाष्योक्तसाध्ये कार्योत्पत्तावेव कारणस्य विनाशादित्यस्य साक्षाद्धेतुत्वासम्भवात्, 'अतः सामान्यरूपत्वं कार्याणामपि सर्वशः' इत्यनु-व्याख्यानं मनसि निधाय साक्षात् साधकं हेतुमाह– **कारणस्येति** ॥

'अतोऽनियत्या यत्किञ्चिद्यस्य कस्यापि कारणम्'

इत्यनुव्याख्यानं मनसि निधायाह– **अन्यथेति** ॥ **उत्पाद्यैवेति** ॥ अनेन सौत्रश्च शब्द एवकारार्थः । यथाश्रुतोऽन्वितोऽपीति । भाष्ये कार्योत्पत्तावेवेत्यनेन व्याख्यात इत्युक्तं भवति । अन्यथा **क्षणिकत्वविरोध इति** ॥ न च स्वतः सदृशकार्यजननसमर्थमपि कारणमदृष्टसहकृत-मादावेव विसदृशकार्यमुत्पादयतीति न क्षणिकत्वेऽपि विरोध इति वाच्यम्; तथा सत्यदृष्टसह-कृतात् पटादपि कदाचिद् घटोत्पत्तिप्रसङ्गादिति भावः ।

## भावदीपः

**अथेति** ॥ अभ्युपगमाभावरूपार्थान्तरे अथशब्दः । विरलेभ्यो मिलिताणुरूपविशेष-कार्योत्पत्तिमपीत्यर्थः । इति चेन्नेति सूत्रान्नञनुवृत्तिं मत्वा भाष्यस्थचकारस्यान्वयमाह ॥ **न क्षणिकमते विशेषकार्योत्पत्तिश्चेति** ॥ सौत्रश्चशब्दोऽवधारण इति मत्वा कार्येत्यादिभाष्यं व्याचष्टे ॥ **कारणस्येति** ॥ उत्पत्ताविति विषयसप्तमी मत्वा सामर्थ्यादिति हेतुमध्याहृत्य एकां व्याख्यां कृत्वा अधुना उत्पत्तौ सत्यामेवेति सतिसप्तमीं मत्वा यथान्यासं व्याख्यातुं व्यावर्त्यशङ्कामाह ॥ **न च वाच्यमिति** ॥ सूत्रमप्येवं द्वेधा योज्यम् । अन्यथा असङ्गतिप्रसङ्गादिति भावः ॥ **अन्यथेति** ॥ नन्वेवं स्वतः सदृशकार्यजनका अप्यणवोऽदृष्टसहकृता आदावेव विसदृशानुत्पादयेयुरिति चेन्न । तथात्वे स्वतः सदृशजनकोऽपि घटोऽदृष्टसहकृतः कदाचित्पटमपि जनयेदिति तात्पर्यात् ।

## वाक्यार्थमुक्तावली

**विशेषकार्योत्पत्तिमपीति** ॥ विरलाणुभ्यो विसदृशमिलितानुरूपविशेषकार्योत्पत्तिमित्यर्थः । सूत्रे चशब्दोऽवधारण इति भावेन भाष्ये कार्योत्पत्तावेवेत्युक्तम् । समुच्चये चेति भावेन विनाशाच्चेत्युक्तम् । पूर्वसूत्रात्तदप्राप्तिरित्यनुवर्तते । तस्य समुदायरूपविशेषस्याप्राप्तिरनुत्पत्तिरित्यर्थमभिप्रेत्य न विशेषकार्योत्पत्तिरित्युक्तम् । तत्र विनाशाच्चेति चशब्दः । विशेषकार्योत्पत्तिरित्यनेनान्वीयत इति भावेन व्याचष्टे ॥ **क्षणिकमत इति** ॥ अस्तूत्तरोत्पादे पूर्वनिरोधः विशेषकार्योत्पादकत्वं किं न स्यात् इत्यभिप्रेत्याप्रयोजकत्वपरिहाराय 'कुतः सामान्यरूपत्वं कार्याणामपि सर्वशः' इत्यनुव्याख्यानं मनसि निधाय सूत्रे भाष्ये च विषयसप्तमीं मत्वा कारणस्य सामर्थ्यादिति साक्षाद्धेतुमध्याहृत्य भाष्यं व्याचष्टे ॥ **कारणस्येति** ॥ 'अतोऽनियत्या यत्किञ्चित् यस्य कस्यापि कारणं' इत्यनुव्याख्यानं मनसि निधायाह ॥ **अन्यथेति** ॥ अधुनोत्पत्तौ सत्यामेवेति सप्तमीत्वाद्यथान्यासं व्याख्यातुं व्यावर्त्यांशमाह ॥ **न च वाच्यमिति** ॥ **न चातिप्रसङ्ग इति** ॥ घटात् घटोत्पत्तिरनन्तरं पटोत्पत्तिरित्यतिप्रसङ्गो नेत्यर्थः । न चादृष्टवशादेव विसदृशजनकत्वं स्यादिति वाच्यम् । अदृष्टस्य कार्यैकोन्नेयत्वादिति भावः । तथा चोत्तरोत्पादे कारणस्य सदृशकार्योत्पादविषय एव सामर्थ्यात् उत्तरसदृशकार्योत्पादे सत्येव पूर्वस्य कारणस्य विनाशात् तदप्राप्तिः न विशेषकार्योत्पत्तिश्चेति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**विशेषकार्योत्पत्तिमपीति** ॥ विसदृशकार्योत्पत्तिमित्यर्थः ॥ **विशेषकार्योत्पत्तिश्चेति** ॥ अनेन सौत्रचशब्दाध्याहृतेन साध्येनान्वितः इति भावः । न विशेषकार्योत्पत्तिरिति भाष्योक्तसाध्ये हेतुमाह ॥ **कारणस्येति** ॥ अन्यथेति सदृशकार्यजनकत्वाभावे इत्यर्थः ॥ **उत्पाद्यैवेति** ॥ अनेन सौत्रचशब्दः एवकारार्थः भाष्ये कार्योत्पत्तावेवेत्यनेन व्याख्यातः ॥ **अन्यथा क्षणिकत्वविरोध इति** ॥ यदि स्वतः सदृशजनका अप्यणवः अदृष्टसहकृताः आदावेव विसदृशानुत्पादयेयुः तर्हि स्वतः सदृशजनकोऽपि घटः अदृष्टसहकृतः कदाचित् पटमुत्पादयेदिति भावः ।

## वाक्यार्थविवरणम्

**विशेषकार्येति** ॥ विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिरूपविसदृशकार्योत्पत्तीत्यर्थः । एवमुत्तरत्र विशेषशब्दो विसदृशपरः ॥ **कार्यमुत्पाद्येति** ॥ आदौ स्वसदृशमेव कार्यमुत्पाद्येत्यर्थः । पश्चादित्यनन्तरं तत्रेति शेषः । आदौ घटोऽपि स्वसदृशं पटमुत्पाद्य तत्र वैसादृश्यं पश्चादुत्पादयतीति स्यादित्येवंरूपोऽतिप्रसङ्गः ॥ **अदृष्टेति** ॥ घटात्पटो नोत्पद्यते तादृशादृष्टाभावादिति भावः ॥ **विनष्टत्वादिति** ॥ तथा च न द्वितीयक्षणे तत्र वैसादृश्योत्पादकत्वं सम्भवतीति भावः । ननु द्वितीयक्षणेऽपि तस्य स्थायित्वमङ्गीक्रियत इति नोक्तशेष इति चेत्तत्राह ॥ **अन्यथेति** ॥ **अतिप्रसङ्गादिति** ॥ प्रत्युत विनाशकार्यत्वं स्यादिति भावः ।

## वाक्यार्थमञ्जरी

**विशेषेति** ॥ विशिष्यत इति विशेषः विसदृश इत्यर्थः । विरलेभ्यो निमित्तोत्पत्तिरिति यावत् एवमग्रेऽपि । उत्तरस्य स्वसदृशकार्यस्योत्पादे च उत्पत्तावेव पूर्वस्य कारणस्य निरोधान्नाशान्न विसदृशकार्योत्पत्तिश्चेत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॐ ॥ २१ ॥**

**कारणे विनष्टे कार्यमुत्पद्यते चेत्तत्कार्यमिति प्रतिज्ञाहानिः । तत्काले कारणमस्ति चेद्विनाशकारणाभावाद्यौगपद्यं सर्वकार्याणाम् ।**

## सत्तर्कदीपावली

पूर्वपरमाणुसादृश्यकारणं यदभिप्रेतम् उत्तरपरमाणोः पूर्वपरमाण्वाहितसंस्कारत्वम् । तदनुपपन्नम् । उत्तरपरमाणुकाले पूर्वपरमाण्वभावात् । न ह्यविद्यमानोऽन्यत्र संस्कारमादधाति । सादृश्यकारण-संस्कारार्थमपि सादृश्यसंस्कारकारणसंस्कारापेक्षयाऽनवस्थापत्तेश्चेत्यभिप्रायः । दूषणान्तरैरपि क्षणिकत्वं दूषयति ॥ असतीत्यादिना ॥ क्षणमेकं स्थित्वाभावः क्षणान्तरे परभावमुत्पादयति चेत्क्षणिको न स्यात् । पूर्वनाशानन्तरमुत्तरो जायेत चेत्पूर्वभावादुत्तरो जायत इत्यभ्युपगमहानिः स्यात् । पूर्वभाव-क्षण एवोत्तरो जायेत चेदुत्तरोत्तरव्यक्तीनामेकक्षण एवावस्थानप्रसङ्गेन क्षणान्तरे घटो न दृश्येत इत्यर्थः ।

## तत्त्वप्रदीपिका

इतश्चानुपपन्नो वैनाशिकवादः । तथाहि कार्योत्पत्तिकाले कारणमस्ति वा न वा । न तावन्नास्ति । न हि लोके नष्टस्य वस्तुनः किञ्चित्कार्यमुत्पद्यमानं दृष्टम् । अतो विनष्टे कारणे जायमानं तत् कार्यमिति न प्रतिज्ञायेत । कार्योत्पत्तिकाले कारणमस्ति चेत्कार्योत्पत्तावविनाशिनः पश्चाद्विनाशकारणाभावात्कार्यकारणयोर्यौगपद्यम् । तत्कार्याणामपि तन्न्यायावतारात्सर्वकार्याणां युगपद्भावप्रसङ्गः ।

## तत्त्वप्रकाशिका

एवं विसदृशकार्योत्पत्तिनिरासेन व्यवहारादिकं पराकृत्येदानीं प्रतिक्षणोत्पत्तिमेव च निराकुर्वत्सूत्र-मुपन्यस्य व्याचष्टे ॥ असतीति ॥ न प्रतिक्षणं कार्योत्पत्तिर्युक्ता । तथा हि । किं कारणे विनष्टे कार्यमुत्पद्यते विद्यमाने वा । नाद्यः । यस्मिन्विनष्टे यदुत्पद्यते तस्य तत्कार्यत्वेऽतिप्रसङ्गात् । न द्वितीयः । एकस्मिन्क्षणे त्वयमात्मानं लब्ध्वा कार्योत्पत्तिक्षणेऽपि तस्यावस्थाने कारणस्य द्विक्षण-कत्वप्रसङ्गात् । क्षणिकस्य च द्विक्षणावस्थाने तदुत्तरत्र विनाशकारणाभावात्पुनस्तस्मात्कार्योत्पत्तयः स्युः तेभ्यश्च तथेति सर्वकार्याणां यौगपद्यं स्यात् । तथा यस्मिन् क्षणे कारणं तस्मिन्नेव कार्या-वस्थानप्रसङ्गात् तत्कार्याणां चैवमिति सर्वकार्याणां यौगपद्यं प्रसज्येत । न च क्षणार्धे समुत्पन्नं क्षणार्धे कार्यमुत्पादयतीति युक्तम् । क्षणस्य पूर्वमध्यापरकलाविकलत्वाभिलापादिति भावः ।

## गुर्वर्थदीपिका

सर्वकार्याणां यौगपद्यं स्यादित्यत्रापरिमितघटादिकार्याणां घटिकामात्रेणोत्पत्त्या कुलालादि-शालायां यौगपद्यं स्यादित्यर्थः ।

## भावबोधः

**एवमिति ॥** विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिनिरासे समुदायस्यैवासम्भवेन दर्शनापेक्षाबुद्ध्यादेरसम्भवादिति भावः । कारणे विद्यमाने कार्यमुत्पद्यत इति कोऽर्थः ? एकस्मिन् क्षणे स्वयमात्मानं लब्ध्वा कार्योत्पत्तिक्षणेऽपि कारणं वर्तत इति वार्थः? उत कार्यं कारणसत्तासमानकालीनसत्ताकमिति विकल्पं मनसि निधायाद्यपक्षोत्तरत्वेन समग्रं भाष्यं योजयति– **एकस्मिन् क्षण इति ॥ सर्वकार्याणां यौगपद्यमिति ॥** घटिकादिस्थूलकालावच्छेदेन युगपदवस्थानं स्यात् । तथा चाल्पतरकाले कुलालशालापूर्तिप्रसङ्ग इति भावः । इदानीं विनाशकारणाभावादित्यंशं परित्यज्य यौगपद्यं सर्वकार्याणामिति भाष्यं द्वितीयपक्षोत्तरत्वेनापि व्याचष्टे– **तथा यस्मिन् क्षण इति ॥** क्षणिकं हि कारणम् । कार्यं च तत्सत्तासमानकालीनसत्ताकं चेत् कार्यकारणयोः सहोत्पाद इत्युक्तं स्यात् । तत् कार्याणामप्ययमेव न्याय इति तत्समानभाविनामशेषकार्याणामेकक्षणावस्थानरूपं यौगपद्यं स्यात् । तच्च प्रत्यक्षादिविरुद्धमिति भावः । अत एव सुधायाम् ।

'यौगपद्यं सति भवेदुत्पाद्यानामशेषतः' ।

इत्यनुव्याख्यानं तत्र विनाशकारणाभावादित्यस्याभावात् । द्वितीयपक्षनिरासपरत्वेनैव व्याख्यातम् ।

## भावदीपः

विशेषकार्योत्पत्तिनिरासस्य प्रकृतोपयोगं दर्शयन्ननुवदति ॥ **एवमिति** ॥ विरलाणुभ्यो मिलिताणूत्पत्त्ययोगे तद्विषयदर्शनसामीप्यहेतुकापेक्षाबुद्ध्यादेरयोगादिति भावः ॥ **उत्पत्तिमेवेति ॥** दूरे वित्तिव्यवहारादिचिन्तेत्येवार्थः । असङ्गतिनिरासाय योग्यसाध्यमुक्त्वा तदुपपादकत्वेन भाष्यं योजयति ॥ **न प्रतिक्षणमिति** ॥ अत्रापि पूर्वत्रेव नञनुवर्तते । उत्तरोत्पाद इति च प्रथमान्ततयेति भावः । कारणे नष्ट इति पराङ्गीकारादस्य पक्षस्य पूर्वं निर्देशः । कारणे सति कार्यमित्यत्र किं कारणं यस्मिन् क्षणे आत्मालाभः तदुत्तरस्मिन् कार्योत्पत्तिक्षणेऽपि स्थित्वा कार्यमुत्पादयतीत्यभिमतम् उतात्मलाभक्षण एव कार्यमुत्पादयतीति हृदि विकल्प्य आद्ये भाष्यादौ यौगपदपद्यशब्देनाविच्छेदेनोत्पत्तिरभिमतेति भावेन तत्काल इत्यादिभाष्यं व्याचष्टे ॥ **एकस्मिन् क्षण इति ॥ तदुत्तरत्रेति ॥** तृतीयक्षण इत्यर्थः । यौगपद्यपदस्य सहावस्थानमर्थमुपेत्य

(भावदीपः)
अन्त्यपक्षदूषणपरतयापि भाष्यं व्याचष्टे ॥ **यौगपद्यमिति** ॥ एकस्यापि विनाशकाभावादेकक्षण-वृत्तित्वरूपसहावस्थानं स्यादित्यर्थः । अस्मिन् पक्षे सव्येतरगोविषाणवत् कार्यकारणभावव्याघात इत्यपि ध्येयम् ।

## वाक्यार्थमुक्तावली

सूत्रे नेत्यस्ति । उत्तरोत्पाद इति प्रथमान्तं सप्तम्यन्तं चानुवर्तते । पूर्वेत्यतः पूर्वस्मिन्निति च। प्रतिक्षणमिति योग्यतयान्वेति । न प्रतिक्षणमुत्तरस्य पश्चाद्भाविनः कार्यस्योत्पादो युक्तः । पूर्वस्मिन् कारणेऽसति उत्तरोत्पादे प्रतिज्ञोपरोधः । अन्यथा पूर्वस्मिन् कारणे सति उत्तरोत्पादे उत्तरेषां कार्याणां यौगपद्यं स्यादिति सूत्रयोजनामभिप्रेत्यानुवृत्तिलब्धं साध्यांशं व्याचष्टे ॥ **न प्रतिक्षणमिति** ॥ तदुपपादकत्वेन विकल्पमुखेन सूत्रं सङ्गमयितुं प्रतिज्ञाय विकल्पयति ॥ **तथा हीति** ॥ प्रतिज्ञाहानिमुपपादयति ॥ **अतिप्रसङ्गादिति** ॥ कारणे विद्यमाने कार्यमुत्पद्यत इति द्वितीये प्रष्टव्यम्। कारणमेकस्मिन् क्षणे स्वयमात्मानं लब्ध्वा कार्योत्पत्तिक्षणे स्वयं स्थित्वा कार्यमुत्पादयतीति कारणे सति कार्यं भवतीत्युच्यते उतात्मलाभक्षणे एव कार्यमुत्पादयतीति । एवमन्यथेतद्द्वेधा विकल्प्य तदनुसारेण तत्काले कारणमस्ति चेत् इति भाष्यस्यापि कार्यकाले कारणमस्ति चेदित्यर्थः । तत्र द्वेधा कारणस्य द्वितीयक्षणरूपकार्यकालानुप्रवेशेन वा कार्यस्या-द्यक्षणरूपकारणकालानुप्रवेशेन वेति मत्वाऽद्यपक्षोत्तरत्वेन तत्काल इत्यादि समग्रभाष्यं व्याचष्टे ॥ **एकस्मिन्क्षण इति** ॥ **तदुत्तरत्रेति** ॥ तृतीयक्षण इत्यर्थः । तस्मात् कारणात् तेभ्यः कार्येभ्यो यौगपद्यं स्यादिति घटिकादिस्थूलकालावच्छेदेन युगपदवस्थानं स्यात् । तथा च अल्पतरकाले कुलालशाला परिपूर्तिरिति भावः । यद्वा कार्याणां यौगपद्यं नाम सन्ततत्वम् । सर्वकार्य-जनिरविच्छिन्ना स्यादिति भावः । द्वितीयोत्तरत्वेनापि नाशकारणाभावादित्यंशं परित्यज्य व्याचष्टे ॥ **तथा यस्मिन् क्षण इति** ॥ क्षणिकं हि कारणं, कार्यं च तत्सत्तासमानकालीनसत्ताकं चेत् कार्यकारणयोः सहोत्पाद इत्युक्तं स्यात् । तत्कार्याणामयमेव न्याय इति तत्सन्तान-भाविनामशेषकार्याणामेकक्षणावस्थानरूपयौगपद्यं स्यात् । तच्च प्रत्यक्षादिविरुद्धमिति भावः । किञ्चास्मिन् पक्षे सव्येतरविषाणवत्कार्यकारणभावव्याघात इत्यपि द्रष्टव्यम् ॥ **पूर्वमध्येति** ॥ क्षणस्य निरंशत्वाङ्गीकारादिति भावः ।

## तत्त्वसुबोधिनी

एवमिति विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिनिरासे समुदायस्यैवासम्भवेन दर्शनापेक्षा बुद्ध्यादेरसम्भवादिति भावः । कारणे विद्यमाने कार्यमुत्पद्यते इति कार्यः । एकस्मिन् क्षणे स्वयमात्मानं लब्ध्वा कार्योत्पत्तिक्षणेऽपि कारणं वर्तते इति वा उत कार्यं कारणसत्तासमान-कालीनसत्ताकमिति वेति विकल्पं मनसि निधाय आद्यपक्षोत्तरत्वेन समग्रं भाष्यम् योजयति ॥ **एकस्मिन् क्षणे इति ॥ सर्वकार्याणामिति ॥** यौगपद्यं, घटिकादिकालावच्छेदेन युगपदवस्थानं स्यात् । तथा चाल्पतरकाले कुलालशालापूर्तिप्रसङ्गः इति भावः । पूर्वं अविच्छेदेनोत्पत्ति-यौगपद्यमित्यभिप्रेत्योक्तं, इदानीं सहावस्थानयौगपद्यमित्यभिप्रेत्य यौगपद्यम् । सर्वकार्याणामिति भाष्यं द्वितीयपक्षोत्तरत्वेनापि व्याचष्टे ॥ **तथा यस्मिन् क्षणे इति** ॥ क्षणिकं हि कारणं कार्यमपि तत्सत्तासमानकालीनसत्ताकश्चेत् कार्यकारणयोः इत्युक्तं स्यात् तत्कार्याणामप्ययमेव न्याय इति तत्संतानभाविनामशेषकार्याणामेकस्मिन् क्षणावस्थानरूपं यौगपद्यं स्यात् । तच्च प्रत्यक्षादिविरुद्धमिति भावः ।

## वाक्यार्थविवरणम्

यौगपद्यं स्यात् । घटिकादिस्थूलकाल इति शेषः ॥ **तथा यस्मिन् क्षण इति** ॥ क्षणिकं हि कारणम् । कार्यं च तत्सत्तासमानकालीनसत्ताकं चेत् कार्यकारणयोः सहोत्पाद इत्युक्तं स्यात् । तत्कार्याणामप्ययमेव न्याय इति तत्सन्तानभाविनामशेषकार्याणामप्ययमेव न्याय इति तत्सन्तान-भाविनामशेषकार्याणामेकक्षणावस्थानरूपं यौगपद्यं स्यात् । तच्च प्रत्यक्षादिविरुद्धमिति भावः ॥ **क्षणस्येति** ॥ ''पूर्वमध्यापरकलारहितः क्षणः' इत्युक्तेरिति द्रष्टव्यम् ।

## वाक्यार्थमञ्जरी

तर्हि घटोऽपि स्वसदृशघटमुत्पाद्य तत्र वैसादृश्यमुत्पादयेदित्यत आह ॥ **न चेति** ॥ किं कारणे नष्टे कार्यमुत्पद्यते विद्यमाने वा । आद्ये असति नष्टे कारणे कार्योत्पत्तिरित्यङ्गीकारे तस्य कार्यमिति प्रतिज्ञाया उपरोधो हानिरित्यर्थः । अन्यथा विद्यमाने कारणे कार्योत्पत्तिरिति द्वितीयपक्षाङ्गीकारे कार्याणां यौगपद्यमविच्छिन्नोत्पत्तिरेकदावस्थानं च स्यादित्यर्थः । **अति-**

(वाक्यार्थमञ्जरी)

**प्रसङ्गादिति** ।। तन्तुनाशोत्तरक्षणजन्यघटस्य तत्कार्यत्वप्रसङ्गादित्यर्थः । आत्मानं स्वरूपम् । विनाशकरणाभावादिति द्वितीयक्षणस्यैव तन्नाशकारणत्वादिति भावः ।। **यौगपद्यमिति** ।। घटिकादिस्थूलकालावच्छेदेन युगपदवस्थानं स्यात् तथा चाल्पतरकाले कुलालशालापूर्तिप्रसङ्ग इति भावः । यौगपद्यं प्रकारान्तेणोपपादयति ।। **तथेति** ।। कारणं हि क्षणिकं यदि कार्यमपि तत्सत्तासमानकालीनसत्ताकं तर्हि कार्यकारणयोः सहोत्पाद इत्युक्तं स्यात् तत्कार्याणामप्येवमेव न्याय इति तत्संतानभाविनामशेषकार्याणामेकक्षणावस्थानरूपं यौगपद्यं स्यात् तच्च प्रत्यक्ष-विरुद्धमिति भावः ।। **न च क्षणार्थेति** ।। तथा च न द्विक्षणिकत्वप्रसङ्ग इति भावः ।। **पूर्वमध्येति** ।। पूर्वमध्यान्त्यभागराहित्याभिधानादित्यर्थः ।

## सूत्रभाष्यम्

**।। ॐ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधप्राप्तिरविच्छेदात् ॐ ।। २२ ।।**

कारणे सति कार्यं भवत्येवेति नियमान्निस्सन्तानः ससन्तानश्च विनाशो न युज्यते ।

## सत्तर्कदीपावली

प्रतिसङ्ख्यायते परिदृश्यत इति प्रतिसङ्ख्यानिरोधो मुद्गराभिहतघटनाशः सन्तानोच्छेदरूपः । अप्रतिसङ्ख्यानिरोधस्तु प्रतिक्षणघटनाशः सन्तत्युच्छेदरहितः । उभावपि नाशावनुपपन्नौ कारणे सति कार्यं भवत्येवेत्यभ्युपगमात् । कारणं कार्ये सत्येव भवति न तु तन्नाशानन्तरमिति पदार्थाविच्छेदापत्तेः । तदाह ।। **प्रतिसङ्ख्येत्यादिना** ।।

## तत्त्वप्रदीपिका

न च कस्यापि विनाशस्तस्य युक्त इत्याह– **प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधप्राप्तिरविच्छेदात्** ।। क्षणानां प्रतिसङ्ख्यया निरोधो निस्सन्तानः सन्तानमन्तरेण विनाशः, स्वाभाविकः सदृशकार्यान्तरो-त्पत्तिरूपः । अपरः ससन्तानो नैमित्तिको विसदृशकार्योत्पत्तिरूपः सर्वसम्मतः । एतौ द्वावपि विनाशौ न युज्येते । कारणे सति कार्यं भवत्येवेति नियमे पूर्वाविनाश एवापरोत्पत्त्यङ्गीकारादन्यस्य च विनाशकारणस्यानिरूपणात् ।

## तत्त्वप्रकाशिका

**एवं क्षणिकवादे कार्योत्पादं पराकृत्य विनाशं च पराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ प्रतिसङ्ख्येति ॥ सन्तानमन्तरेण यः प्रतिक्षणं विनाशः यश्च सन्तानेन सह क्षणिकमते तयोरनुपपत्तिः । तथा हि । प्रतिक्षणं कारणं कार्यं निर्वर्त्य नश्यतीति वक्तव्यम् । तत्र स्वकार्यवियोगकाले कारणं सदेवेति कार्यमुत्पादयेत् । कारणे सति कार्यं भवत्येवेति नियमाभ्युपगमात् । तदुत्पत्त्यनन्तरं चैवमिति कथं प्रतिक्षणं नाशो युज्येत । नाप्यन्यः । सतो हि घटस्यात्यन्तिको नाशः । अतोऽसौ सत्त्वात्कार्यमुत्पादयेदेव । कारणे सति कार्यं भवत्येवेति नियमात् । तत्कार्यं चैवमिति कथं सन्तानोच्छेदावसर इति भावः । सन्तानो नित्य एवेति चेन्न । प्रलयानुपपत्तेः । विविक्ततया प्रलयोपपत्तिरिति निरस्तम् । सन्तानस्य नित्यत्वे क्षणिकत्वविरोधः । अवास्तवत्वान्नासौ क्षणिक इति चेन्न । सन्तानिनामपि तथात्वापातात् । न हि सन्ति सन्तानिनो न सन्तान इति युक्तम् । एतेन समुदायस्यावास्तवत्वं परास्तम् । समुदायोऽपि समुदायिमात्रं तदतिरिक्तो वा । नाद्यः विरोधात् । द्वितीये स एवावयवी । अवास्तवत्वे घटादिबुद्धीनां निरालम्बनत्वापातात् । परमाणव एवालम्बनमिति चेन्न । तेषामनेकत्वादतीन्द्रियत्वाच्चेति ।**

## गुर्वर्थदीपिका

स्वकार्यवियोगकाल इत्यत्र विरलपरमाणवो निबिडतया पुञ्जीभूय कार्याकारा भवन्ति । इदमेव समुदायरूपकार्यजनकत्वं नाम नान्यत् । त एव च क्षणेक्षणे तत्र तत्र विरलीभवन्ति पुनः पुञ्जीभवन्ति च । तत्र तेषामेव विरलीभावो नाशः, पुञ्जीभवस्तूत्पत्तिरिति परस्य हृदयम् । इदं चानुपपन्नम् । तेषामेव परमाणूनां विनाशाय स्वकार्यवियोगकाले सत्त्वं वक्तव्यम् । अन्यथा कार्यकारणभावायोगात् । सतश्च निबिडपुञ्जीभावाख्यकार्याकारणत्वरूपकार्यजनकत्वनियमात्पौनःपुन्येन निबिडतैव स्यात् । विरलतायाः कदापि नावसर इति न ससन्ताननाशोपपत्तिरिति भावः । किञ्च तस्यैव क्षणे विरळतायां जलप्रस्रवणप्रसङ्गेन पातुं घटे जलसङ्ग्रहोऽपि परस्य न स्यात् । अतोऽपि क्षणे विरळतारूपनाशः न परेण वक्तुं शक्यत इति ज्ञेयम् । विविक्तितया प्रलयोपपत्तिरिति निरस्तमित्यत्र अमिलितपरमाणूनां सदा सद्भावेन समुदायस्यापि सदातनत्वापत्त्या लयाभ्युपगमविरोधादित्यनेन निरस्तमित्यर्थः । अवास्तवत्वे घटादिबुद्धीनामित्यत्र समुदायस्यावास्तवत्वेन अस्मदभिमतावयविनो वैलक्षण्याङ्गीकार इत्यर्थः ।

## भावबोधः

निर्गतः सन्तानो यस्मान्नाशात् स निःसन्तान इति विग्रहमभिप्रेत्य तात्पर्यमाह– **सन्तानमन्तरेणेति** ॥ ससन्तानशब्दार्थमाह– **यश्चेति** ॥ अत्र यद्यपि 'बुद्धिपूर्वविनाशो हि प्रतिसङ्ख्यानिरोधधीः । अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसङ्ख्यया' । इति **बौद्धोक्त्यनुसारेण** सूत्रे प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोध इति निर्देशः कृतः । तथाप्यबुद्धिपूर्वकस्य प्रतिक्षणं जायमाननिस्सन्ताननाशस्य प्रथमभावित्वात् बुद्धिपूर्वकस्य घटादेरात्यन्तिकविनाशरूपससन्तानरूपस्यानन्तरभावित्वात् कार्यक्रममनुसृत्य निस्सन्तानः ससन्तानश्चेति भाष्ये व्यत्यासेन व्याख्यातमिति भावः ॥ **प्रतिक्षणं कारणं कार्यं निर्वर्त्येति** । अन्यथा ससन्ताननाशोत्पत्तेरिति भावः ॥ **स्वकार्यवियोगकाल इति** ॥ कार्योत्पत्त्युत्तरक्षण इत्यर्थः ॥ **कारणं सदेवेति** ॥ असतः कार्येण वियोगायोगादिति भावः ॥ **विविक्ततयेति** ॥ वित्तिव्यवहारविषयमिलितपरमाणुजन्यपरमाणूनां विरलतयेत्यर्थः ॥ **निरस्तमिति** ॥ 'उत्तरोत्पादे च पूर्वनिरोधात्' इति विसदृशकार्यजनकत्वनिराकरणेनेत्यर्थः ।

## भावदीपः

सूत्रे प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधशब्देन बुद्धिपूर्वकविनाशयोरुक्तावपि तौ काविति शङ्कापनुत्तये भाष्ये निस्सन्तानससन्तानविनाशपदेन व्यत्यासेन व्याख्यानं कृतम् । तदर्थं वदन् भाष्यं व्याचष्टे ॥ **सन्तानमन्तरेणेति** ॥ सन्तानः परम्परा । अविच्छेदादिति सौत्रहेत्वंशं विवरितुमाह ॥ **प्रतिक्षणमिति** ॥ **स्वकार्यवियोगेति** ॥ कार्योत्पत्तिक्षणे कारणं तावत् सदेव । क्षणिकस्य उत्पत्तिकाल एव वियोगकाल इति वियोगकालेऽपि कारणं सदेवेति कार्यमुत्पादयेदित्यर्थः । तत्र भाष्योक्तं हेतुं योजयति ॥ **कारणे सतीति** ॥ **विविक्ततयेति** ॥ मिलिताणूनां विरलतयावस्थानं प्रलय इति निरस्तम् । तेभ्यो विसदृशमिलिताणूनामुत्पत्त्ययोगादेरुक्तत्वादिति भावः ।

## अभिनवचन्द्रिका

**विविक्ततयेति** ॥ वित्तिव्यवहारविषयमिलितपरमाणुजन्यपरमाणूनां विरलतयेत्यर्थः ॥ **निरस्तमिति** ॥ 'उत्तरोत्पादे च पूर्वनिरोधात्' इति विसदृशकार्यजनकत्वनिराकरणेनेत्यर्थः ।

(अभिनवचन्द्रिका)

मया समुदायावास्तवत्वस्यानुपन्यस्तत्वात् तन्निराकरणमयुक्तमित्यत आह– **समुदायोऽपीति** ।। समुदायस्तु वास्तव इति वदन् किं समुदायः समुदायिमात्रं, तदतिरिक्तो वेति प्रष्टव्य इत्यर्थः ।। **स एवावयवीति** ।। यस्त्वया अवास्तवत्वेनाभ्युपगतोऽवयवी तदभिन्नत्वात् कथं समुदायस्यावास्तवत्वं नोक्तमिति भावः । अस्तु तर्हि समुदायस्याप्यवास्तवत्वं को दोष इत्यतः 'एतेन' इत्युक्तहेतुं विवृणोति – **अवास्तवत्व इति** ।।

## वाक्यार्थमुक्तावली

निर्गतः सन्तानो यस्मात्स निःसन्तान इति विग्रहमभिप्रेत्य तत्तात्पर्यमाह ।। **सन्तानमन्तरेणेति** ।। सन्तानं परित्यज्य स्वयमेवेत्यर्थः । स सन्तानशब्दार्थमाह ।। **यश्चेति** ।। अत्र यद्यपि 'बुद्धिपूर्वविनाशो हि प्रतिसङ्ख्यानिरोधधीः । अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसङ्ख्यया' इति बौद्धोक्त्यनुसारेण सूत्रे प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधेति निर्देशः कृतः । तथाप्यबुद्धिपूर्वकस्य प्रतिक्षणं जायमाननिःसन्ताननाशस्य प्रथमभावित्वात् बुद्धिपूर्वकस्य घटादेर्दण्डप्रहारादिनात्यन्तिकविनाशरूपस्य ससन्तानविनाशस्यानन्तरभावित्वात् कार्यक्रममनुसृत्य निःसन्तानः ससन्तानश्चेति भाष्ये व्यत्यासेन व्याख्यातमिति भावः । अविच्छेदात् इति सौत्रहेत्वंशं विवरितुमाह ।। **प्रतिक्षणमिति** ।। **निर्वर्त्येति** ।। उत्पाद्येत्यर्थः । अन्यथा सन्तानसाहित्येन नाशापत्तेरिति भावः ।। **स्वकार्यवियोगकाल इति** ।। कार्योत्पत्युत्तरकाल इत्यर्थः । कार्यमुत्पादयेद्यतः कारणं ततः सदेवेति योज्यम् । असतः कार्येण वियोगायोगादिति भावः । तत्र भाष्योक्तं हेतुं योजयति ।। **कारणे सतीति** ।। **विविक्ततयेति** ।। मिलिताणूनां विरलतयावस्थानं प्रलय इति निरस्तम् । तेभ्यो विसदृशमिलिताणूनामुत्पत्त्ययोगादेरुक्तत्वात् मिलिताणुभ्यो मिलितानामेव सदोत्पत्तिश्च स्यात् । कारणे सति कार्यं भवत्येवेत्युक्तत्वादिति भावः । दूषणान्तरमाह ।। **सन्तानस्येति** ।। सन्तानस्य सत्त्वाद्यत्सत्तत् क्षणिकमित्यङ्गीकृते क्षणिकत्वविरोध इत्यर्थः ।। **न हीति** ।। एतेन कारणे सन्तानिनि सति वास्तवे सति कार्यमपि सन्तानाख्यं भवत्येव सदेति नियमात् इति व्याख्यातं भवति ।। **एतेनेति** ।। कारणे परमाणौ सति वास्तवे सति कार्यं समुदायाख्यमपि भवत्येव सदेवेति नियमेनेत्यर्थः । दूषणान्तरं विकल्पमुखेनाह ।। **समुदायोऽपीति** ।। **विरोधादिति** ।। समुदायिनां वास्तवत्वं तन्मात्रस्यावास्तवत्वमिति विरोधादित्यर्थः ।

(वाक्यार्थमुक्तावली)

यद्वा ऐक्ये समुदायसमुदायिभावविरोधादित्यर्थः ॥ **द्वितीये स एवेति** ॥ सोऽवयव्येवावास्तव इत्यर्थः । अवयविनोऽप्यवास्तवत्वमस्त्वित्यत आह ॥ **अवास्तवत्व इति** ॥

## तत्त्वसुबोधिनी

निर्गतः सन्तानः यस्मात् नाशात् सः निःसन्तान इति विग्रहमभिप्रेत्य तत्तात्पर्यमाह ॥ **सन्तानमन्तरेणेति** ॥ ससन्तानशब्दार्थमाह ॥ **यश्चेति** ॥ यद्यपि बुद्धिपूर्वकविनाशौ प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाविति बौद्धानां परिभाषा ॥ उक्तं हि 'बुद्धिपूर्वविनाशो हि प्रतिसङ्ख्यानिरोधधीः । अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसङ्ख्ययेति' । तथापि प्रतिक्षणविनाश-सन्तानविनाशौ प्रति सङ्ख्याप्रतिसङ्ख्यानिरोधशब्दार्थत्वेनोक्तौ इत्यविरोधः । **प्रतिकार्यनिर्व-र्त्यैति** ॥ अन्यथा सन्तानसाहित्येन नाशापत्तेरिति भावः ॥ **स्वकार्यवियोगकाल इति** ॥ कार्योत्पत्तिक्षणे कारणं तावत् सदेव, क्षणिकस्य चोत्पत्तिकाल एव वियोगकाल इति । वियोग-कालेऽपि कारणं सदेवेति भावः ॥ **नाप्यन्य इति** ॥ ससन्तान इत्यर्थः । सन्तान इति समुदायरूपकार्यप्रवाह इत्यर्थः ॥ **सन्तानो नित्य एवेति चेदिति** ॥ तथा च सन्तानस्य नित्यत्वात् प्रत्यक्षे निःसन्तानो विनाशो युज्यते इति भावः ॥ **विरलतयेति** ॥ (विविक्ततयेति) वित्तिव्यवहारविषयनिमित्तपरमाणुजनकविरलपरमाणूनां विरलतयेत्यर्थः ॥ **निरस्तमिति** ॥ उत्परोत्पादे च पूर्वनिरोधादिति विसदृशकार्यजनकत्वनिराकरणे इत्यर्थः । दूषणान्तरमाह ॥ **सन्तानस्येति** ॥ **सन्तानिनामिति** ॥ समुदायानामित्यर्थः ॥ **तथात्वापातादिति** ॥ अवास्तव-त्वापातादित्यर्थः । अस्तु समुदायस्यावास्तवत्वं इत्याशङ्क्य अतिदेशेन दूषयति ॥ **एतेनेति** ॥ अतिदेशार्थमेवाह ॥ **समुदायोऽपीति** ॥ **विरोधादिति** ॥ समुदायिनां समुदाय इति भेदस्यैव प्रतीयमानत्वेन अभेदे विरोधः इत्यर्थः ॥ **स एवेति** ॥ समुदाय एवेत्यर्थः ॥ **अवास्तवत्वे इति** ॥ अवयविभूतस्य समुदायस्य अवास्तवत्वे इत्यर्थः ।

## वाक्यार्थविवरणम्

**सन्तानमन्तरेणेति** ॥ अबुद्धिपूर्वकनिरोधरूपप्रतिसङ्ख्यानिरोधाख्यनिस्सन्ताननाश इत्यर्थः ॥ **सन्तानेनेति** ॥ मुद्गरादिना बुद्धिपूर्वकनिरोधरूपप्रतिसङ्ख्याख्यससन्ताननाश इत्यर्थः । निस्सन्तानः ससन्तानश्चेति भाष्ये प्रतिसख्याऽप्रतिसङ्ख्येतिपदयोर्व्यत्यासेनार्थ उक्तो द्रष्टव्यः ॥ **कारणं**

(वाक्यार्थविवरणम्)

**सदेवेति** ॥ 'सत एव ह्यन्यस्माद्वियोगो नासत इति' भावः । तदुत्पत्त्यनन्तरं चैवमिति । तदपि कार्यं निर्वर्त्य नश्यति । स्वकार्यवियोगकाले च स्वयं सदेवेत्यर्थः ॥ **अन्यः** ॥ ससन्ताननाशः ॥ **आत्यन्तिको नाश इति** ॥ आद्यक्षणे स्वयमुत्पद्य द्वितीयक्षणे सन्तानमुत्पाद्य पश्चात्तृतीयक्षणे सन्तानेन सह नश्यतीति वक्तव्यमित्यर्थः ॥ **सत्त्वादिति** ॥ असतो नाशायोगादिति भावः ।

ननु सन्तानोच्छेदाभावोऽस्माकमिष्ट एव । सन्तानस्य नित्यत्वाङ्गीकारात् । 'आकाशौ द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इत्याशयेन शङ्कते ॥ **सन्तान इति** ॥ पूर्वपूर्वकारण-नाशेनोत्तरोत्तरकार्यसन्तानस्य नित्यत्वेऽपि न प्रलयानुपपत्तिः । मिलितानेकपरमाणुभ्यो विरलानेकपरमाणवः पुनर्यदोत्पद्यन्ते तदा परमाणूनां विविक्तत्वं विरलभाव एव प्रलय इत्युच्यत इति चेत्तत्राह ॥ **विविक्ततयेति** ॥ कारणस्य विसदृशकार्यजनकत्वनिरासेन मिलितेभ्यो विरल-परमाणूत्पत्त्ययोगादित्यर्थः । दूषणान्तरमाह ॥ **सन्तानस्येति** ॥ स्थायित्वप्राप्त्या क्षणमात्रा-वस्थायित्वरूपक्षणिकत्वं विरुद्धमित्यर्थः । क्षणिकत्वमेव सन्तानस्य मया नाङ्गीकृतं यद्विरुद्ध-तेत्याशङ्कते ॥ **अवास्तवत्वादिति** ॥ सत्त्वशून्यत्वादित्यर्थः । क्षणिकत्वसाधकत्वरूपहेतोस्तत्रा-नङ्गीकारादित्याशयः ॥ **तथात्वापातात्** ॥ अवास्तवत्वापातेनाक्षणिकत्वापातात् ।

ननु कथं घटादिसन्तानिनामक्षणिकत्वमापाद्यते, क्षणिकतासाधकस्य सत्त्वहेतोस्तत्र सत्त्वा-दित्यत आह ॥ **न हीति** ॥ तथा च यदा सन्तानिनो वास्तवत्वमङ्गीकृतं तदा सन्तानानामपि वास्तवत्वमङ्गीकृतप्रायमेव । धर्मिणः सत्त्वे तद्धर्मस्य सन्तानस्यावास्तवत्वायोगेन सत्त्वप्राप्त्या क्षणिकत्वसम्भवेन नित्यत्वाङ्गीकारे तद्विरोधः स्यादेवेत्याशयः ॥ **एतेनेति** ॥ समुदायिनां वास्तवत्वे तद्धर्मस्य समुदायस्यावास्तवत्वायोगेनेत्यर्थः ॥ **अवास्तवत्वम्** ॥ यत्परेणाङ्गीकृतमिति भावः । युक्त्यन्तरं चाह ॥ **समुदायोऽपीति** ॥ **विरोधादिति** ॥ समुदायस्य समुदायि-मात्रत्वाङ्गीकारे तदत्यन्ताभेदप्राप्त्या समुदायिनां वास्तवत्वाङ्गीकारेण समुदायस्यापि वास्तवत्व-स्यैव प्राप्त्या समुदायस्यावास्तवत्वाङ्गीकारे विरोध इत्यर्थः ॥ **स एवेति** ॥ योऽतिरिक्तः समुदायोऽङ्गीकृतः स एवेत्यर्थः ॥ **अवयवी** ॥ प्राप्तस्त्वन्मत इति शेषः । तस्याऽपि समुदाय-रूपावयविनो अवास्तवत्वान्न दोष इति चेत्तत्राह ॥ **अवास्तवत्व इति** ॥ **निरालम्बनत्वम्** ॥ निर्विषयत्वम् ॥ **परमाणवः** ॥ **समुदिताः** ॥ **तेषामिति** ॥ अनेकत्वादेको घट इति बुद्धिविषयत्वं न सम्भवति । अतीन्द्रियत्वात् प्रत्यक्षो घट इति बुद्धिविषयत्वं न सम्भवतीति ध्येयम् ।

## वाक्यार्थमञ्जरी

प्रतिसङ्ख्या बुद्धिः अप्रतिसङ्ख्या तदभावः बुद्धिपूर्वकं मुद्गरप्रहरादिना घटनाशः प्रतिसङ्ख्या-नाशः स एव ससंताननाश इत्युच्यते पुनर्घटानुत्पादात् तद्भिना प्रतिक्षणं जायमानो नाशः अप्रतिसङ्ख्यानाशः स एव निःसंताननाश इत्युच्यते । घटोत्पत्तिविच्छेदाभावात् । तथा च ससन्ताननाशप्रतिक्षणनाशयोरप्राप्तिरनुपपत्तिः कुतः कार्यजननाविच्छेदादित्यर्थः । **निर्वर्त्य** निष्पाद्य अन्यथा सन्तानसाहित्येन नाशापत्तेरिति भावः ॥ **स्वकार्यवियोगकाल इति** ॥ कार्योत्पत्त्युत्तरक्षण इत्यर्थः ॥ **कारणं सदेवेति** ॥ असतः कार्येण वियोगायोगादिति भावः ॥ **विविक्ततयेति** ॥ वित्तिव्यवहारविषयमिलितपरमाणुजन्यपरमाणूनां विरलतयेत्यर्थः ॥ **निरस्तमिति** ॥ उत्तरोत्पादे च पूर्वनिरोधादिति विसदृशकार्यजनकत्वनिराकरणेनेत्यर्थः ॥ **अवास्तवत्वादिति** ॥ सत्वस्यैव तत्प्रयोजकत्वादिति भावः ॥ **न हीति** ॥ औपाधिकसत्त्वस्योपाधिसत्त्वाधीनत्वादिति भावः । कथमित्यतः समुदायावास्तवत्वं तेनाङ्गीकारयन्न तेनेत्युक्तं विशदयति ॥ **समुदायेत्यादिना** ॥ **विरोधादिति** ॥ विरलपरमाणूनां समुदायोत्पादकत्वाङ्गीकारेण तन्मात्रत्वे जन्यजनकभावविरोधादित्यर्थः ॥ **स एवावयवीति** ॥ स च त्वया नाङ्गीकृत इति भावः । अवास्तवोऽवयवी अङ्गीक्रियत इत्यत आह ॥ **अवास्तवत्व इति** ॥ **तेषामिति** ॥ तथा च न तेषामेको घट इति साक्षात्कारविषयत्वमिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ उभयथा च दोषात् ॐ ॥ २३ ॥**

**कारणे सति कार्यं भवत्येवेति नियमे सर्वदा कार्यभावान्न कार्यकारणविशेषः । अनियमे कार्यानुत्पत्तिः ।**

## सत्तर्कदीपावली

**कारणे सति कार्यं भवत्येवेत्यनेन कारणक्षण एव कार्यं भवतीत्युक्तत्वात् । कार्यकारणयोरेककालत्वेन गोभृङ्गयोरिव न कार्यकारणभावः एकस्मिन्क्षणे शङ्कनीयः । निरंशत्वाभ्युपगमात् क्षणस्य । तदाह ॥ उभयथेत्यादिना ॥**

## तत्त्वप्रदीपिका

यदा कारणं भवति तदा कार्यं भवत्येवेति नियमे कारणकाले सर्वदाकार्यभावान्न कार्यकारणयोर्विशेषः । सव्येतरगोविषाणवद्युगपद्भावित्वात् । अथ नासौ नियमस्तर्हि कारणक्षणेऽनुत्पन्नं कार्यं नैवोत्पद्येत पश्चात्कारणाभावात् । न चैकस्मिन्नेव क्षणे पूर्वापरीभावः । पूर्वापरकालकलाविकलो हि क्षण इष्यते ।

## तत्त्वप्रकाशिका

तथापि न सतां भावानां क्षणिकता शक्या निषेद्धुम् । अर्थक्रियाकारित्वं खलु सत्त्वं नाम । न च तत्क्षणिकतामन्तरेणोपपन्नम् । यद्याद्यक्षणे घटो घटान्तरमुत्पाद्य न स्वयं नश्यति तदा घटान्तरमपि तथेत्यनन्तकार्यापत्तिः । अतोऽर्थक्रियाकारित्वसत्त्वसिद्ध्यै क्षणिकत्वमेष्टव्यं भावानामित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ।। **उभयथेति** ।। अर्थक्रियाकारित्वं सत्त्वं तदन्यथानुपपत्त्या क्षणिकत्वं भावानामिति वदन् प्रष्टव्यो जायते । कारणे सति कार्यं भवत्येवेति नियमोऽस्ति न वेति । यद्यस्ति तदा कार्यस्यापि यावत्कारणभावित्वात्सव्येतरगोविषाणवन्न कार्यकारणभावः । नियमाभावे तत्कालेऽर्थक्रियाकारित्वाभावेनासत्त्वापत्त्या न कदापि ततः कार्योत्पत्तिः स्यात्तथा च क्षणिकता व्याहन्यत इति भावः । न च वाच्यं कथं तर्हि घटादिसत्त्वव्यवस्थेति । जलाहरणादियोग्यतयैव तदुपपत्तेः ।

## गुर्वर्थदीपिका

यद्याद्यक्षणे इत्यत्र क्षणेक्षणे घटस्य घटान्तरजनकत्वाख्यकुर्वद्रूपत्वरूपार्थक्रियाकारित्वलक्षणसत्त्वमङ्गीकृत्य शङ्कत इति ज्ञेयम् । यद्यस्ति तदेत्यत्र कारणे सति कार्यं भवत्येवेति नियममङ्गीकुर्वता परेणास्मदादिवत्कारणस्य पूर्वक्षणवर्तित्वं कार्यस्योत्तरक्षणवर्तित्वं च वक्तुं न युक्तम् । अस्माकं क्षणिकत्वाभावेन पूर्वक्षणवर्तिन एव कारणस्य कार्यक्षणेऽपि सत्त्वसम्भवेन कार्यकारणभावस्यापि सम्भवात् । तव मते क्षणिककारणस्य पूर्वक्षणवर्तित्वे तदैव नष्टस्य पुनः कार्यक्षणे सत्त्वासम्भवेन कार्यकारित्वं न स्यात् । अतः कार्यक्षण एव कार्यकारणयोरुभयोरपि सत्त्वं वक्तव्यम् । एवं चैककालवर्तित्वात्सव्येतरगोविषाणवन्न कार्यकारणभाव इति भावः ।

## भावदीपः

अर्थापत्तिनिरासपरत्वं स्फोरयन् परिष्कृत्य भाष्यं व्याचष्टे ॥ **अर्थक्रियाकारित्वं सत्त्वमिति** ॥ **तथा च क्षणिकतेति** ॥ सत्त्वस्यैवाभावे कल्पकाभावादिति भावः ।

## अभिनवचन्द्रिका

शङ्कते – **तथापीति** ॥ **तदेति** ॥ अत्र 'तदा' इत्यनन्तरं 'घटान्तरम्' इत्यतः पूर्वं 'द्वितीयादि-क्षणेषु घटान्तरमुत्पादयेत्' इति ग्राह्यम् ॥ **घटान्तरमपीति** ॥ घटान्तरमपि प्रथमघटवदनेकघटा-नुत्पादयेदित्यनन्तकार्यापात इत्यर्थः ॥ **कारणे सति कार्यं भवत्येवेति** ॥ 'कारणे सति कार्यं भवत्येव' इति योऽयं नियमस्त्वयाऽऽश्रितः स किं वास्तवः, अवास्तवो वेत्यर्थः । एतेन परकीयनियमाङ्गी-कारस्य स्पष्टत्वात् नियमोऽस्ति वा, न वेति विकल्पोऽनुपपन्न इति परास्तम् ॥ **तथा चेति** ॥ पक्षद्वये सत्त्वाभावेन साधनाभावात् क्षणिकता न सिद्ध्यतीत्यर्थः ।

## वाक्यार्थमुक्तावली

**तत्र घटान्तरमपीति** ॥ द्वितीयादिक्षणे पूर्वघट इव घटान्तरमपीत्यर्थः । यद्वा आद्यक्षण एव घटान्तरमपि घटान्तरमुत्पादयेदित्यनन्तकार्यापात इत्यर्थः । **तत्काले** कारणकाले ॥ **न कदापीति** ॥ असतः कारणत्वायोगादिति भावः ॥ **व्याहन्यत इति** ॥ सत्त्वस्यैवाभावे कल्पकाभावादिति भावः । सूत्रार्थस्त्वतिरोहितः ।

## वाक्यार्थविवरणम्

जगतः क्षणिकत्वे अर्थापत्तिमाशङ्कते ॥ **तथापीति** ॥ अत्र सर्वत्रार्थक्रियाकारित्वं नाम कुर्वद्रूपत्वमिति ज्ञेयम् ॥ **यावत्कारणभावित्वादिति** ॥ क्षणिकं हि कारणम् । कार्यं च तत्सत्ता-समानकालीनसत्ताकम् । अतो यावत्कारणमस्ति तदैव कार्यस्य भावित्वं प्राप्तमित्यर्थः ॥ **तत्काले** ॥ स्वसत्ताकाले । कारणस्येति शेषः ॥ **कदाऽपि** ॥ उत्तरक्षणेऽपि ॥ **तथा चेति** ॥ सत्त्वरूपसाधकाभावादित्यर्थः ॥ **तर्हि** ॥ कुर्वद्रूपत्वाख्यार्थक्रियाकारित्वं खण्डयित्वा, तदनङ्गी-कारे ॥ **जलेति** ॥ तथा च जलाहरणादिकार्यसमर्थत्वमेवार्थक्रियाकारित्वम् । तेनैव घटादौ सत्त्वं सिध्यति । न कुर्वद्रूपत्वाख्यार्थक्रियाकारित्वेनेत्याशयः ।

## वाक्यार्थमञ्जरी

शङ्कते ॥ **तथापीति** ॥ कारणे सति कार्यं भवत्येवेति नियमे समानकालीनत्वेन कार्य-कारणभावानुपपत्तिः अनियमेऽसत्त्वापत्तिरित्युभयपक्षेऽपि दोषादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ आकाशे चाविशेषात् ॐ ॥ २४ ॥**

**दीपादिषु विशेषदर्शनात्क्षणिकत्वेनान्यत्रापि क्षणिकत्वमनुमीयते चेदाकाशादिष्व-विशेषदर्शनादन्यत्रापि तदनुमीयेत ।**

## सत्तर्कदीपावली

यदि परिमाणभेदसिद्धक्षणिकत्वाद्दीपवत् सत्त्वहेतुना जगत्क्षणिकत्वं साध्येत । तर्हि तेनैव हेतुना आकाशवद्दीपादिजगदक्षणिकत्वसाधनेन तत्क्षणिकत्वबाधः स्यात् ।

## तत्त्वप्रदीपिका

दीपादौ क्षणे क्षणे विशेषदर्शनमनुवर्णयन्तः क्षणिकत्वं सम्प्रतिपिपादयिषन्ति । ततस्तद्दृष्टान्तेन जगतः क्षणिकत्वमनुमिमते, यत्सत्तत्क्षणिकं यथा दीपादि, सच्च विवादास्पदीभूतमिति । तत्र प्रतिविधत्ते । एवं चेदाकाशदिगादिष्वविशेषदर्शनात्स्थिरत्वं निदर्श्यान्यत्रापि तद्वत्तदनुमीयेत । न च दीपादिष्वपि प्रतिक्षणं विशेषो दृश्यते, येन क्षणिकत्वं निदिदर्शयिषेयुः । यदि चाऽकाशादेर-भावरूपत्वमिष्यते तर्ह्यभावस्य स्थिरत्वमिष्टम् । स्थिरत्वधर्मस्य भावरूपस्यैव यावदाकाश-भावित्वेनाक्षणिकत्वं चेष्यताम् । न च मूर्तद्रव्याभाव आकाश इति वाच्यम् । धर्म्याद्यभाने तद्भानात् यदि ह्ययमभावः स्यात्तर्हि तद्भान एव तदतिरिक्तो भायात् । मूर्तद्रव्यमत्र नास्तीति चाभावभाने धर्मित्वेन भाताकाशस्तस्य कथमभावः स्यात् । न चायमभावस्य स्वगतत्वेन व्यपदेशः । यस्मिन्नियन्तं कालमेकाऽपि नासीत्तस्मिन्नेव प्रदेशे पश्योत्पत्य बलाका बद्धमालाः परिवलयन्त्यो लसन्तीति तदभावधर्मिण एव तद्भावेऽप्यनुभानात् । अत आकाशदृष्टान्तेन स्थिराः सर्वभावा इति सिद्धम् ।

## तत्त्वप्रकाशिका

**मा भूदर्थापत्त्या क्षणिकत्वसिद्धिर्यत्सत्तत्क्षणिकं यथा दीपादि । सन्तश्चामी भावा इत्यनुमानेन सेत्स्यति । न च साध्यविकलता दृष्टान्तस्य । यद्विरुद्धधर्माधिकरणं तन्नाना यथा घटपटौ तथा चायं दीपः पूर्वोत्तरक्षणस्थोऽपि विरुद्धधर्माधिकरणं परिमाणविशेषदर्शनात् इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ आकाशे चेति ॥ न चोक्तानुमानेन भावानां क्षणिकत्वसिद्धिः । यत्सत् तदक्षणिकम् । यथा आकाशमित्यन्यत्राकाशदृष्टान्तेनाक्षणिकत्वस्यापि साधयितुं शक्यत्वात् । न चाकाशे साध्याभावः । विशेषदर्शनाभावेन क्षणिकत्वसाधकाभावादिति भावः । अथ हेत्वन्तरेण तत्र क्षणिकत्वसिद्धिरिति चेन्न । पञ्चस्कन्धातिरिक्तत्वेन तत्र तदनभ्युपगमात् । न चोत्पत्त्यनन्तरमेव मुसलाहतघटे व्यभिचारः । तत्रापि पूर्वमध्यापरकलाविकलकालवृत्तित्वाभावात् । आकाशे न सत्त्वमिति चेत् । किमिदं सत्त्वं यदाकाशे न सम्प्रतिपन्नम् । अर्थक्रियाकारित्वं चेत्तर्हि त्वदनुमानेऽसिद्धिः साधनविकलता च निदर्शनस्य । अथ स्वरूपेण विद्यमानता भावरूपता वा साऽऽकाशे न नास्ति ।**

## गुर्वर्थदीपिका

परिमाणविशेषदर्शनादित्यत्र उत्पत्तिदशायामणोर्दीपस्य क्षणेक्षणे अभिवृद्धौ परिमाणविशेषदर्शनादिति भावः । परस्य चाक्षणिकत्वस्यापि साधयितुं शक्यत्वादिति वदता दीपेऽपि प्रागणोरेव दीपस्य क्रमेण वृध्याख्यावस्थाविशेष एव जायते न तु मध्ये मध्ये नाशोऽपि । अतो न प्रदीपोऽपि दृष्टान्त इति सूचितम् । अत एव त्वदनुमानेऽसिद्धिरित्यत्रास्माकमिति शेषः । कुर्वद्रूपत्वं हि परस्यार्थक्रियाकारित्वं, तच्चार्थक्रियाकारित्वयोग्यतयैव सत्त्वमङ्गीकुर्वतामस्माकमसिद्धमिति भावः । यद्वाऽऽविपालगोपालं क्षणे क्षणे घटपरम्परोत्पादनस्य प्रत्यक्षतोऽदर्शनादसिद्धिरित्यर्थः ।

## भावबोधः

तत्र तदनभ्युपगमादिति । 'आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इति बौद्धोक्तिरिति भावः । त्वदनुमानेऽसिद्धिरित्यादि । 'उभयथा च दोषात्' इत्यत्र प्रपञ्चे प्रदीपादौ

(भावबोधः)

च बौद्धाङ्गीकृतार्थक्रियाकारित्वस्य दूषितत्वादिति भावः । सा चाकाशे न नास्तीति । किं त्वस्त्येव ततश्च नास्मदीयहेतौ त्वदुक्तं साधनवैकल्यमिति भावः ।

## भावदीपः

शङ्कते ॥ **माभूदिति** ॥ दीपादिष्वित्यादिभाष्यं विवृण्वन् परीत्योदाहरणोपनयौ द्वावेवाह ॥ **यत्सदिति** ॥ शङ्काभाष्यस्य प्रागेव विवृतत्वात् परिहारभाष्यं नञध्याहारेण व्याख्याति ॥ **न चोक्तेति** ॥ सर्वं क्षणिकं वदतापि बौद्धेन सेयं दिगित्यादिप्रत्यभिज्ञाया न भ्रान्तित्वं वाच्यम् । पञ्चस्कन्धेभ्योऽन्यत्वादित्यादितत्त्वनिर्णयोक्तमाह ॥ **पञ्चस्कन्धातिरिक्तत्वेनेति** ॥ उक्तं च तत्रैव टीकायाम् । आकाशस्य प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधयोर्द्वयोर्विनाशयोश्च पञ्चस्कन्धेभ्योऽन्यत्वान्नित्यत्वमिति बौद्धसिद्धान्तः । यथोक्तम् । 'आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इत्यादि । भाष्ये सौत्राकाशपदलक्षणामुपेत्याकाशादिष्विति दिशा द्विविधविनाशस्य चादिपदेनोक्तावपि टीकायां यथासूत्रमाकाशमात्रोक्तिराकाशे साध्यसाधनयोरभावरूपास्वारस्यशङ्कानिरासाय । अत एव तत्र साध्यादिसमर्थनमिति ज्ञेयम् ॥ **तत्रापीति** ॥ तादृशकालवृत्तित्वस्यैव त्वया क्षणिकत्वाङ्गीकारादिति भावः । आकाश इति छेदो न त्वाकाशेनेति ॥ **त्वदनुमानेऽसिद्धिरिति** ॥ अर्थक्रियाकारित्वं कदाचित्कार्यकरत्वं चेत् गगनेऽपि तस्य सत्त्वात् तत्र तन्नेति वदता त्वया प्रतिक्षणं कार्यकरत्वं सत्त्वमिति वाच्यम् । तच्च पक्षे प्रपञ्चे दृष्टान्ते दीपे च नेत्यसिद्धिः साधनविकलता च दृष्टान्तस्येत्यर्थः ॥ **न नास्तीति** ॥ किं त्वस्त्येव । ततश्च मदीयहेतौ त्वदुक्तं साधनवैकल्यं नेति शेषः ।

## अभिनवचन्द्रिका

**मा भूदर्थापत्त्येति** ॥ क्षणिकत्वं विनापि अर्थक्रियाकरित्वस्योपपन्नत्वशङ्काप्रतिरुद्धत्वेन माभूदर्थापत्त्या क्षणिकत्वसिद्धिः 'यस्तत्' इत्यनुमानेन तु सेत्स्यतीत्यर्थः । इयांस्तु विशेषः यदा हेतुः साध्यं विना पक्षेऽनुपपद्यमानत्वेन अनुसंहितः पक्षे साध्यं गमयति इति तदाऽर्थापत्तिः, यदा तु अन्यत्र गृहीतव्याप्तिबलेन पक्षे साध्यं गमयति तदा अनुमानमिति । एतेन क्षणिकत्वरूपसाध्यं विनाऽप्युपपन्नस्य सत्त्वस्य तेन व्याप्त्यभावादनुमानेन सेत्स्यतीत्ययुक्तमिति परास्तम् । क्षणिकत्वं विनाप्युपपन्नमिति शङ्कामात्रसद्भावेऽपि वस्तुतस्तेन विनोपपन्नत्वाभावात् ।

(अभिनवचन्द्रिका)

न च व्याप्तिनिश्चयाऽयोगः । पक्षे व्यभिचारसन्देहस्यातिप्रसङ्गेन व्याप्तिनिश्चयविरोधित्वाभावात् ॥ **त्वदनुमानेऽसिद्धिरिति** ॥ 'उभयथा च दोषात्' इत्यत्र अर्थक्रियाकारित्वरूपसत्त्वस्य दूषितत्वादिति भावः ।

## वाक्यार्थमुक्तावली

दीपादिष्वित्यादिभाष्यस्य दीपदेहफलादिषु प्रतिक्षणं परिमाणविशेषदर्शनात्ततश्च प्रतिक्षणं विशेषदर्शनाद्भेदानुमानात्क्षणिकत्वनिश्चयेनान्यत्र नीलादिप्रपञ्चेऽपि क्षणिकत्वमनुमीयते चेदाकाशादिष्वविशेषदर्शनात्पूर्वोत्तरक्षणयोः परिमाणविशेषादर्शनादविशेषदर्शनादभेदानुमानादक्षणिकत्वनिश्चयेनान्यत्रापि तदनुमीयेतेत्यर्थमभिप्रेत्यावर्तयन्व्याचष्टे ॥ **माभूदित्यादिना** ॥ सौत्रश्चशब्दः प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधसमुच्चायक इति भावेन भाष्ये आकाशादिष्वित्युक्तम् । नन्वेवं सति बहुवचनायोगः । निरोधयोरेवान्यपदार्थत्वात् । न चादिपदेन दिशोऽपि ग्रहणे बहुवचनोपपत्तिरिति वाच्यम् ।

तन्मते 'आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इति नित्यत्रयाङ्गीकारविरोधोपपत्तेः । विष्णुतत्त्वनिर्णयटीकायां स यो दिगित्यादिप्रत्यभिज्ञाया इत्येतद्व्याख्यावसरे दिक्शब्देनात्राकाशो गृह्यते । अव्याकृताकाशस्यैव दिक्त्वज्ञापनार्थमादिग्रहणेन सोऽयं विनाश इत्यस्य ग्रहणमिति दिक्पदस्याकाशार्थकत्वमुक्त्वाऽऽदिपदेन विनाशद्वयं स्वीकृत्य तन्मते नित्यत्रयोपपादनाच्च । न्यायवल्यां पद्मनाभतीर्थश्रीमच्चरणैः सेयं दिगित्यस्य सोऽयमाकाश इत्यर्थकथनेनाकाशातिरिक्तस्य दिगाख्यस्यादिपदेन सङ्ग्राह्यत्वानवगमाश्चेति । अत्रोच्यते । आकाशादिष्विति भाष्यस्याकाश एवादिः प्रमुखो एषामाकाश प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधानां मध्य इति व्याख्यायमानत्वेन बहुवचनबाधकाभावात् । अथ नारायणपण्डिताचार्यरचिततत्त्वमञ्जर्यां सेयं दिगित्यादिशब्देन तदिदं गगनमिति प्रत्यभिज्ञा गृह्यते इत्युक्तत्वात् । आकाशदिशोरैक्येऽपि प्राच्यादित्वरूपावान्तरविशेषविवक्षयाऽत्रादिशब्देन दिशां ग्रहणात् बहुवचनं युक्तम् । नित्यं त्रयमित्युक्तिस्त्ववान्तरभेदमविवक्षित्वेत्यदोषः । टीकायामाकाशमात्रस्य दृष्टान्तीकरणं तु निरोधद्वये परिमाणविशेषप्रसक्तेरेवाभावेन साध्यसाधनवैकल्यशंकानुदयादाकाशस्य बहुवादिरीत्या भावरूपत्वेन तत्प्रसक्तिसत्त्वात्तत्र साध्यादिसमर्थनायेति ज्ञेयम् । अत एव सूत्रे मुखत आकाशग्रहणम् । अनुव्याख्याने चाकाशे चाविशेषत इत्याकाशमात्रस्य ग्रहणम् ।

(वाक्यार्थमुक्तावली)

सूत्रार्थस्तु दीपादिभ्यः सत्वेनाविशेषान्नीलादीनां क्षणिकत्वसाधने आकाशादौ परिमाण-विशेषदर्शनादविशेषात् पूर्वोत्तरक्षणयोरभेदान्नीलादिपदार्थानां चाकाशेन सत्त्वाविशेषादत एव क्षणिकत्वेऽप्यविशेषान्नोक्तानुमानेन भावानां क्षणिकत्वसिद्धिः अविशेषात्पक्षद्वयेऽप्यनुमान-स्येति ।। **अथ हेत्वन्तरेणेति** ।। परिमाणभेदेनाकाशे क्षणिकत्वासिद्धावपि कालादिभेदेन यादृश तादृशविरुद्धधर्माधिकरणत्वेनेत्यर्थः ।। **न चोत्पत्यनन्तरमेवेति** ।। तत्र सर्वहेतुसद्भावा-दक्षणिकत्वादिति भावः ।। **तत्रापीति** ।। पराभिमतनिरंशक्षणे वृत्तित्वं नात्यनेकक्षणवृत्तित्वमेवा-स्तीति भावः । त्वदनुमानेऽसिद्धिरिति । उभयथा च दोषादित्यत्र प्रपञ्चे प्रदीपादौ बौद्धाङ्गी-कृतार्थक्रियाकारित्वस्य निरस्तत्वादिति भावः ।

ननु स्वरूपेण विद्यमानताभावरूपत्वं वाऽत गगनस्य च मूर्ताभावत्वादभावस्य च निःस्वरूपत्वाङ्गीकारान्नसत्त्वमित्याशङ्क्य निषेधति ।। **अथेति** ।। प्रतियोगिप्रतीतिमन्तरेण विधि-मुखेन च भासमानत्वान्नाभाववत्वम् । अत एव च न निःस्वरूपत्वमिति भावः ।

## तत्त्वसुबोधिनी

दृष्टान्ते क्षणिकत्वं साधयितुं विरुद्धधर्माधिकरणत्वस्य नानात्वेन व्याप्तितां तदाह **यदिति** ।। प्रतिक्षणं नानात्वे साधिते क्षणिकत्वं सिध्यतीति भावः ।। विरुद्धधर्मवत्वमेव दीपेऽसिद्धमित्यत-स्तत्साधयति, **अयं प्रदीप इति** ।। **विशेषदर्शनाभावेनेति** ।। परिमाणविशेषदर्शनाभावेनेत्यर्थः । सति हि परिमाणविशेषदर्शने, तेन विरुद्धधर्मवत्वमनुमाय तेन क्षणिकत्वं अनुमातव्यं तदेव नेति भावः ।। **तत्र तदनभ्युपगमादिति** ।। आकाशे क्षणिकत्वानभ्युपगमादित्यर्थः । 'आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इति बौद्धोक्तेरिति भावः ।। **त्वदनुमानेऽसिद्धिरित्यादि** ।। अर्थक्रियाकारित्वं, कदाचित् कार्यकारित्वं चेत् गगनेऽपि तस्य सत्त्वात् तत्र तत्रेति वदता त्वया प्रतिक्षणं कार्यकरत्वमिति वक्तव्यं तच्च पक्षे प्रपञ्चे दृष्टान्ते दीपे न चास्ति इत्यसिद्धिरित्यर्थः ।। **सा आकाशे न नास्तीति** ।। किन्तु अस्त्येव । ततश्च प्र(त्वदीय)दीपहेतौ तदक्तसाधनवैकल्यं नेति शेषः ।

## वाक्यार्थविवरणम्

'सौगतास्तु सोपनीतिमुदाहृतम्' इति उदाहरणोपनयाख्यावयवद्वयस्यैव बौद्धैरङ्गीकारात्

(वाक्यार्थविवरणम्)

तथैव प्रयोगमाह ॥ **यत्सत्तदिति** ॥ कोऽत्र विरुद्धो धर्मः अदर्शनादित्यत आह ॥ **परिमाण-विशेषेति** ॥ उच्चनीचत्वादिपरिमाणभेदेत्यर्थः ॥ **अन्यत्र** ॥ जगति ॥ **विशेषदर्शनेति** ॥ परिमाणभेददर्शनेत्यर्थः ॥ **हेत्वन्तरेणेति** ॥ परिमाणभेदातिरिक्तेन सत्त्वरूपहेत्वन्तरेणेत्यर्थः । तथा च पुनः साध्यवैकल्यमेवेति भावः ॥ **तत्र** ॥ आकाशे ॥ **तदनभ्युपगमात्** ॥ हेत्वन्तरेणापि क्षणिकत्वानभ्युपगमात् । यथोक्तम् । 'आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इति । क्षणिकत्वरूपसाध्यस्यापि सत्त्वात्र व्यभिचार इत्याह ॥ **तत्रापीति** ॥ **वृत्तित्वेति** ॥ तद्रूप-क्षणिकत्वेत्यर्थः । उक्तानुमाने दृष्टान्ते साधनवैकल्यमाशङ्कते । **आकाश इति** ॥ प्रश्नस्या-सङ्गतिपरिहारायाह ॥ **यदिति** ॥ **अर्थक्रियाकारित्वं चेदिति** ॥ कुर्वद्रूपत्वाख्यमित्यर्थः ॥ **त्वदनुमान इति** ॥ सत्त्वेन क्षणिकत्वानुमानेऽसिद्धिः । प्रपञ्च एतादृशार्थक्रियाकारित्वा-योगस्योभयथा च दोषादित्यनेनोक्तत्वादित्यर्थः ॥ **दृष्टान्तस्येति** ॥ प्रदीपेऽप्येतादृशार्थ-क्रियाकारित्वायोगस्यापि तत्रैवोक्तप्रायत्वादित्यर्थः । स्वरूपविद्यमानता वा भावरूपता अर्थ-क्रियाकारिता विवक्षितेति शेषः । अतो नासिद्धिर्नापि साधनवैकल्यमिति भावः ॥ **न नास्ति** ॥ अस्त्येव । अतो न साधनवैकल्यमिति भावः ।

## वाक्यार्थमञ्जरी

पूर्वोत्तरक्षणस्थदीपयोर्भेदे क्षणिकत्वं सेत्स्यतीत्याह ॥ **यद्विरुद्धेति** ॥ आकाशे परिमाण-विशेषाभावात्तस्य स्थायित्वे अन्यस्यापि तथात्वं शक्यसाधनमित्यर्थः ॥ **तत्र तदनभ्युपगमा-दिति** ॥ 'आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्' इति तदुक्तेरिति भावः ॥ **तत्रा-पीति** ॥ त्वदभिमतक्षणिकत्वं तत्र नास्ति तस्य बहुक्षणवृत्तित्वादिति भावः ॥ **त्वदनुमाने सिद्धेरिति** ॥ उभयथा च दोषादित्यत्र प्रपञ्चप्रदीपादौ च बौद्धाङ्गीकृतार्थक्रियाकारित्वस्य दूषि-तत्वादिति भावः ॥ **न नास्तीति** ॥ किं त्वस्त्येव । ततश्च नास्मदुक्तहेतोस्त्वदुक्त-साधनवैकल्यमिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ अनुस्मृतेश्च ॐ ॥ २५ ॥**

**तदेवेदमिति प्रत्यभिज्ञानाच्च । प्रत्यभिज्ञाया भ्रान्तित्वे विशेषदर्शनस्यापि भ्रान्तित्वम् ।**

## सत्तर्कदीपावली

तदेवेदं दीपादिकमिति जगत्क्षणिकत्वं बाध्यते। बाधकाभावेऽपि यदीयं प्रत्यभिज्ञा बाध्येत, तर्हि दीपस्य क्षणिकत्वसाधकपरिमाणभेददर्शनमपि भ्रमः स्यात्। अविशेषात्। ततश्च जगत्क्षणिकत्वसाधकानुमानदृष्टान्तः साध्यविकलः स्यात्। न चाकाशस्यासत्त्वाङ्गीकाराज्जगदक्षणिकत्वसाधकानुमानदृष्टान्तः साध्यविकल इति वाच्यम्। घटोऽस्तीतिवदाकाशोऽस्तीति विधिमुखप्रत्ययवेद्यत्वेनाकाशसत्त्वसिद्धेः। अन्यथा घटसत्त्वमपि न स्यात्। न चात्मनः क्षणिकत्वं वदता जगतः क्षणिकत्वमनुमातुं शक्यते। व्याप्त्याद्यनुसन्धातुरभावात्। तदाह। आकाशेत्यादिना।

## तत्त्वप्रदीपिका

यत्पूर्वदृष्टं तदेवेदमिति प्रत्यभिज्ञाप्रमाणाच्च न क्षणभङ्गिनो दृष्टाभावाः। सादृश्यनिबन्धना प्रत्यभिज्ञा भ्रान्तिः। तत्सदृशे तदैक्यप्रतीतिरूपत्वादिति चेन्मैवम्। अबाधितानुभवस्य भ्रान्तित्वकल्पनायुक्तेः। अपरथा विशेषदर्शनस्यापि क्षणिकत्वसाधकस्य भ्रान्तित्वोक्तौ किमुत्तरं स्यात्? विशेषदर्शनेन हि पूर्वोत्तरकालवर्तिवस्तुभेदकल्पनेन तत्सादृश्यनिबन्धना प्रत्यभिज्ञा भ्रान्तिः कल्प्यते। अपि च पूर्वदृष्टस्य वस्तुन उत्तरकालेऽभावाद्धि तदेवेदमिति प्रत्यभिज्ञा भ्रान्तिः कल्प्यते। पूर्वद्रष्टुरुत्तरकालमभावे कथं तत्सदृशमिदमिति तत्सादृश्यप्रतीतिस्तदेवेदमिति भ्रान्तिश्च स्यात्। अप्रतीतौ सादृश्यस्य सादृश्यात्प्रत्यभिज्ञेति दुरुक्तं स्यात्। न च क्षणभङ्गुरः पुरुषः प्राच्यपाश्चात्यैक्यविषयां प्रत्यभिज्ञां भ्रान्तिं जानीयात्। तस्मात्तत्पक्षे विशेषेण सर्वदर्शनस्यापि भ्रान्तित्वं स्यात्।

कथं च भिन्नकालीनस्य कारणस्य संस्कारार्पकत्वं कार्ये स्यात्। येन सादृश्यसिद्धिराशास्यते। क्षणविनाशिनोऽसङ्ख्या भावास्तत्सादृश्यहेतवः संस्काराः तत्सन्तानाश्चेति गरीयसीयं कल्पना। किञ्चैकसन्तानसंस्काराणां मिथस्सादृश्यमन्तरेण तन्निमित्तं वस्तुसादृश्यं नोत्पद्येत। अतिप्रसङ्गात्। संस्कारसादृश्यसिद्धावपि संस्कारान्तरापेक्षायामनवस्था। अनपेक्षायां वस्तुसादृश्यसिद्धावेव सा स्यात्। अतस्सादृश्यासम्भवेन प्रत्यभिज्ञाया अभ्रान्तित्वाद्वस्तूनां स्थायित्वसिद्धिः। तदेव च यथार्थत्वं सूत्रयामासानुपदेन। सर्वप्रत्यभिज्ञाया भ्रान्तित्वे सन्तानप्रत्यभिज्ञाया भ्रान्तित्वप्रसङ्गः। न च दीपादिप्रत्यभिज्ञा भ्रान्तिरिति वाच्यम्। कदाचिद्विशेषदर्शनमात्रेण धारावाहिकप्रत्यभिज्ञानां भ्रान्तित्वकल्पनायोगात्। न च विशेषदर्शनमात्राद्विनाशसिद्धिः। अन्यथा सङ्कोचवति विकासिनि वा सिचये सन्तानभेदप्रसङ्गात्। सन्तानस्यावस्तुत्वाद्विषम उपन्यास इति चेन्न। वस्त्वभेदे

(तत्त्वप्रदीपिका)

तदपलापायोगात् । भेदे सत्त्वे क्षणिकत्वप्रसङ्गात् । अन्यथाऽपसिद्धान्तात् । असत्त्वे तदस्तित्वादि-व्यवहारायुक्तेः । उभयवैलक्षण्यस्य पुरस्तान्निरस्तत्वात् । अतः प्रत्यभिज्ञाबलाद्वस्त्वेकत्वसिद्धिः । संस्कारसहिताक्षार्थसंयोगजन्यत्वात्प्रत्यभिज्ञायाः ।

अनुस्मृतेरिति सूत्रयाम्बभूव, स्मृतिप्रामाण्यबलादपि वस्तुस्थायित्वसिद्धिं लिलम्भयिषन् यथार्थायाः स्मृतेः प्रामाण्ये कोऽतिप्रसङ्ग इति ।

एतेनैतदप्यपास्तम् । यदाहुरनुभूतिं तत्साधनं वा प्रमाणं ब्रुवाणा अनुभूतविषयत्वान्न प्रमाणं स्मृतिरिति । अनुभूतविषयस्याप्रामाण्ये धारावाहिकप्रत्ययानां तथात्वप्रसङ्गः । न च सर्वथाऽनुभूत-विषयत्वं स्मृतेः । अनुभूतत्वविशेषविषयत्वात् । तदनुभूतं मयेति हि स्मरन्ति । न चानुभूतत्वं पूर्वानु-भूतम् । इदमहमनुभवामीति हि तदाऽनुभवो नातीतत्वविषयः । अभिहितं चैतत्सकलसामयिकसामन्त-सार्वभौमेन सर्वं भगवता भाष्यकारेणानुभाष्ये 'स्मृतिप्रमाणत्वमपि ह्यतीतत्वविशेषितम्' इति ।

न च स्मृत्यप्रामाण्यवादिनामनुभूते प्रमाणसिद्धिः । स्मर्यमाणत्वलिङ्गादनुभूतानुमानमिति चेन्नैवम् । तदनुभूतं स्मर्यमाणत्वादिति हि तत् । तत्र धर्मिग्राहकप्रमाणमनुमृग्यताम् । स्मृतेरप्रामाण्ये तस्य प्रथमतः प्रतिषेधो न प्राज्ञानां हर्षमावहति । परिलुप्यते चैतदपलापिनां प्रत्यक्षादिप्रमाणप्रवृत्तिः तत्पुरस्सरस्सर्वो व्यवहारश्च । यथार्थतामात्रेण च सर्वनिर्वाहो दुर्वचः । यथार्थस्याप्रामाण्ये कारणा-भावात् । अनुवादस्याप्रामाण्ये चाभ्यासस्याप्रामाण्यकारणतापत्तिः । अप्राथमिकानां च तत्त्वमस्यादि-वाक्यानामप्रामाण्यप्राप्तिः । न चाफलवत्त्वादप्रामाण्यम् । प्रत्यक्षादावपि क्वापि नैष्फल्यदर्शनात् । क्वचिदिहापि साफल्यदर्शनात् । तस्मात्स्मृतेः प्रत्यभिज्ञायाश्च विवक्षितप्रामाण्यसिद्धेर्वस्तुनः स्थायित्व-सिद्धिः । क्षणिकवादिनोरप्यनुमेयवादी प्रत्यक्षवादिनि वरिष्ठान्गुणानाधत्ते प्रामाणिकमखिलं परिहर-न्परिगृह्णन्नप्रामाणिकं गरीयसीं कल्पनामाश्रयन्निति ।

## तत्त्वप्रकाशिका

एवं प्रतिपक्षेणानुमानं निरस्य बाधेनापि पराकुर्वत्सूत्रं पठित्वा व्याचष्टे ॥ **अनुस्मृतेश्चेति** ॥ परिलूनपुनर्जातकुन्तलकलापप्रत्यभिज्ञावद् भ्रमोऽयमित्यत आह ॥ **प्रत्यभिज्ञाया इति** ॥ किं प्रत्यभिज्ञाया बाधितत्वेन भ्रान्तित्वं कल्प्यते बाधकमन्तरेण वा । नाद्यः । तदभावात् । द्वितीये दीपादिविशेषदर्शनस्य भ्रमत्वप्रसङ्ग इति भावः । विरुद्धधर्माध्यासो बाधकमिति चेन्न । तस्य कालादिभेदेनोपपत्तेः । न हि तादृशोऽन्यत्वमस्मत्सम्मतम् । अन्यथैकक्षणेऽपि भावभेदप्रसङ्गात् । एतेन

(तत्त्वप्रकाशिका)

**प्रदीपोऽपि व्याख्यातः । घटोऽयं निरन्तरोत्तरक्षणवृत्तिध्वंसप्रतियोगी घटत्वान्मुसलाहतैकक्षण-वृत्तिघटवदिति चोक्तरीत्या परास्तम् । घट इति च किं परमाणवः पक्षीक्रियन्ते समुदायो वा । नाद्यः । दृष्टान्ताभावात् । न द्वितीयः । तस्यावस्तुत्वात् । अतो वैभाषिकादिमतस्य अनुपपन्नत्वेना-विरोधकत्वाद्युक्तमीश्वरस्याशेषजगत्कारणत्वलक्षणमिति सिद्धम् ।**

## गुर्वर्थदीपिका

एकक्षणेऽपि भावभेदप्रसङ्गादित्यत्र परत्वापरत्वाभ्यामुदरे पृथुत्वेन कण्ठमूलयोस्तदभावेन चैकक्षणवर्तिघटादिभावानामपि नानात्वप्रसङ्गादित्यर्थः । एतेन प्रदीपोऽपि व्याख्यात इति वदिष्यति । दृष्टान्ताभावादित्यत्र बहुषु क्षणेषु मुसलाहते च घटे निरस्तरोत्तरक्षणवृत्तिध्वंस-प्रतियोगित्वस्याभावेन दृष्टान्ते साध्याभावादित्यर्थः । तस्यावस्तुत्वादित्यत्र अवस्तुत्वात् क्षणिकत्वात् । पूर्वक्षणे यः पक्षीकृतस्तत्रोत्तरक्षणे कथ्यमानहेतोरभावेन स्वरूपासिद्धिः । उत्तरक्षणवृत्तिघटे हेतुसद्भावेऽपि तस्यापक्षीकरणादाश्रयासिद्धिरित्यर्थः । किंच आदिसृष्टौ कर्तृनिरपेक्षकालकर्मसहितपरमाणुस्वभावादेव महीमहीधरादिमहाकार्योत्पत्ताविदानीन्तनतुच्छ-घटादिकार्योत्पत्तिरपि कुतो न तत्स्वभावादेव जायते । कारणे सति कार्यं भवत्येवेति तवैव नियमः । कुतो वा घटादिकार्याय कुलालस्य मृदाद्यनुसरणं, किन्त्वतीन्द्रियपरमाणूनां दर्शन-स्पर्शनदण्डताडनादिकं कर्तुं तप एव कुर्यात् । तवापि घटादिलब्धये कुलालादाद्यनुसरणम् । कुतो वा जडतया विवेकरहितानां परमाणूनां नीलघटस्थले नीलानामेव मेलनम् । शुक्लघटस्थले च कथं शुक्लानामेव मेलनं नीलकम्बलादीनां शीतनिवारकत्वदर्शनेन शुक्लरूप्यघटादीनां जलाहरणोप-योगित्वदर्शनेन च भोजकादृष्टरूपकर्मणोऽपि न नीलत्वादौ पक्षपातः । किञ्च समुदिताविकृत-परमाणूनामेव घटत्वे निबिडतन्त्वाश्लिष्टपटवत् घटेऽपि जलप्रस्रवणं स्यात् । अविकृतपुञ्जीभूत-तण्डुलराश्यादीनामपि जलनिरोधकत्वदर्शनात् । प्रत्युत जलादिना विकृतमृण्मयसेतोरेव जल-निरोधकत्वदर्शनेन च जलनिरोधके घटेऽपि विकारावश्यम्भावात् । कुलालकराभ्यां पिण्डी-करणदण्डताडनचक्रभ्रमणादिना साकारविकारस्य प्रत्यक्षतो दर्शनेन सर्वानुभवविरुद्धत्वाच्च । अपि च तण्डुलपरमाणूनामविकृततण्डुलाकारेणैव समुदायैरन्नाभावात्तव मरणं स्यात् । अन्नपरमाणूनां पृथक्त्वे क्वथ्यमानभाण्डजले तण्डुलप्रक्षेपवैय्यर्थ्यं स्यात् । अन्नार्थं तण्डुलसङ्ग्रहोऽपि न स्यात् । अपूपकरणाय तण्डुलपेषणं च न स्यात् । प्रत्यक्षत एव क्वथ्यमानजलस्थतण्डुलानामेवान्नाकार-

(गुर्वर्थदीपिका)
विकारदर्शनाच्चानन्यगत्या तण्डुलानामेवान्नाकारेण विकारेण विकारेऽङ्गीकृते किमपराद्धं घटादि-प्रपञ्चेन । अतः स्वस्वानुभवविरुद्धत्वाच्चोपेक्ष्यमेवेदं क्षणिकमतम् । यदि च तुच्छेऽपि कार्ये दृष्टत्वात्कर्तुरपेक्षा तर्हि दृष्टानुसारान्महति कार्ये महाकर्ता जगदीशोऽप्यपेक्षित इति स एव सर्वकर्ताऽस्तु किमनया सर्वानुभवविरुद्धया चर्चया । अतो यत्किञ्चिदेतत् ।

## भावबोधः

**अन्यथैकक्षणेऽपीति** ॥ एकक्षणवर्तिनोऽपि घटस्य पुरुषभेदेन ज्ञातत्वाज्ञातत्वयोर्विरुद्ध-धर्मयोर्दृष्टेर्भेदः स्यादित्यर्थः ॥ **एतेनेति** ॥ प्रतिज्ञाभ्रान्तित्वनिराकरणेनेत्यर्थः । तथा च यद्विरुद्धधर्माधिकरणं तन्नाना यथा घटपटौ । तथा चायं प्रदीप इत्यत्र प्रदीपस्य भेदमात्रसाधने सिद्धसाधनता स्यात् । पूर्वोत्तरक्षणावस्थायिप्रदीपस्य भेदाभेदाङ्गीकारेण भेदस्यास्माभिरप्यङ्गी-कृतत्वात् । तावता क्षणभङ्गासिद्धेः । तस्मादभेदाभावः साध्यः । तथा च पूर्वोत्तरक्षणयोर-भेदावगाहि सोऽयं दीप इति प्रत्यभिज्ञाबाधः । न च सा भ्रान्तिः । बाधकाभावादिति भावः ॥ **दृष्टान्ताभावादिति** ॥ मुसलाहतैकक्षणवर्तिपरमाण्वात्मकघटरूपदृष्टान्तस्वरूपे तत्र साध्यसाधन-योश्च मम विप्रतिपत्तेरित्यर्थः ।

अत्राद्ये– घटादिव्यवहारालम्बनत्वेन परपरिकल्पितपरमाणुसमुदायानुपपत्त्युक्तिः । द्वितीये– समुदायानुपपत्त्यभावमाशङ्क्य कारणस्य विसदृशकार्यजनकत्वमभ्युपेत्यापि तदुद्धारः । तृतीये– विसदृशकार्यजनकत्वस्याप्यसम्भवोक्तिः । चतुर्थे– प्रतिक्षणोत्पत्तेरेव निरासोक्तिः । पञ्चमे– पराभिमतनाशनिरासोक्तिः । षष्ठे– क्षणिकत्वे पराभिमतार्थापत्तिभङ्गः । सप्तमे– तत्रैव पराभिमतानुमानस्य सत्प्रतिपक्षत्वोक्त्या निरासः । अष्टमे– तस्यानुमानस्य प्रत्यभिज्ञाप्रत्यक्ष-बाधोक्तिरिति सूत्रक्रमः ।

## भावदीपः

**बाधेनापीति** ॥ तेन सूत्रभाष्ययोश्च शब्दसमुच्चय इति न क्षणिकत्वं भावानामित्यनुषङ्ग इति च सूचितम् । भाष्यस्थापादनस्य निर्बीजतानिरासाय विकल्पमुखेनार्थमाह ॥ **किमिति** ॥ **विरुद्धधर्मेति** ॥ आम्रफलादौ श्यामत्वाश्यामत्वादिविरुद्धधर्माध्यासस्तदेवेदमिति प्रत्यभिज्ञायाः प्रमात्वे बाधकमित्यर्थः । तस्य श्यामत्वादेरित्यर्थः । यद्यपि तार्किकाणां तत्रापि भेदस्तथापि

(भावदीपः)

तदेवेदमिति प्रत्यभिज्ञानान्न भेदोऽस्मत्सम्मत इत्याह ॥ **न हीति** ॥ **अन्यथेति** ॥ अभेदे प्रमितेऽपि भेदश्चेदेकक्षणवर्तिनोर्घटपटयोर्भेददर्शनात्तद्दृष्टान्तेनैकक्षणवर्तिनोऽपि घटस्य स्वस्माद्भेदः स्यादित्यर्थः । यद्वा एकक्षणवर्तिनोऽपि घटस्य पुरुषभेदेन ज्ञातत्वाज्ञातत्वयोर्दृष्टेर्भेदः स्यादित्यर्थः ॥ **एतेनेति** ॥ कालादिभेदेनोपपत्तिकथनेनेत्यर्थः । बालयुवशरीरवत् प्रदीपेऽत्यन्तभेदाभावेऽपि कालादिभेदेन परिमाणभेद इति भावः ॥ **उक्तरीत्येति** ॥ तत्रापि पूर्वमध्यापरकलाविकलकालवृत्तित्वादित्युक्तदिशा तादृशोत्तरक्षणाप्रसिद्ध्या दृष्टान्ते साध्यासंमतेरित्यर्थः । परनियमभञ्जनाय घटोऽयमित्यादिरूपेण त्र्यवयवोक्तिः । पक्षविकल्पेनापि दोषमाह ॥ **घट इति चेति** ॥ **दृष्टान्ताभावादिति** ॥ मुसलाहतैकक्षणवृत्तिपरमाण्वात्मकघटरूपदृष्टान्तस्वरूपे तत्र साध्यसाधनयोश्चास्माकं विप्रतिपत्तेरित्यर्थः । अत इति सृष्टिप्रलयादेरयुक्तत्वात्तदनुमानस्य बाधप्रतिरोधग्रस्तत्वाच्चेत्यर्थः ।

## अभिनवचन्द्रिका

**अन्यथा क्षणेऽपीति** ॥ एकस्मिन्नेव क्षणे संयोगतदभावाभ्यां विरुद्धधर्माधिकरणत्वेन भावभेदः स्यादित्यर्थः ॥ **उक्तरीत्याऽपास्तमिति** ॥ 'अनुस्मृतेश्च' इत्युक्तरीत्या बाधितविषयत्वादित्यर्थः ॥ **घट इति च किमिति** ॥ घटशब्देन परमाणून् लक्षयित्वा घटत्वशब्देन परमाणुत्वमेव हेतुत्वेन विवक्ष्यते, आहोस्वित् परमाणुसमुदायं पक्षीकृत्य घटत्वमेव हेतूक्रियत इति भावः ॥ **दृष्टान्ताभावादिति** ॥ मुसलाहतस्य घटस्य समुदायत्वेनाऽपरमाणुत्वात्तत्र हेत्वभावात् व्याप्तिग्रहणस्थलं नास्तीति भावः ॥ **तस्यावस्तुत्वादिति** ॥ सत एव त्वया क्षणिकत्वस्य साधनीयत्वेनाऽवस्तुनः तत्साधनमनुपयुक्तमिति भावः ।

**पूर्वपक्षस्तु**– न विष्णोर्जगत्कारणत्वं युक्तम् वैभाषिकसौत्रान्तिकमतविरुद्धत्वात् । तथा हि रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितं खलु जगत् परमार्थसत् । तदशेषं परमाणुसमुदायात्मकम् । न त्ववयवी नाम कश्चिदस्ति । परमाणुसमुदाय एव घटादिबुध्युपपत्तौ परमाणुपरिणामस्य तदारब्धस्य वाऽवयविनोऽभ्युपगमस्य व्यर्थत्वात् । विद्यमानं च सर्वं क्षणिकमेव । सत्त्वस्य क्षणिकत्वव्याप्यत्वात् । व्यापकाभावे व्याप्यायोगात् । न चैतत् कार्यजातं कालकर्मरूपनिमित्तेनैव भवति । नोपादानापेक्षा । ततः पूर्वपूर्वपरमाणूनां विनाशेन उपादानाभावेऽपि उत्तरोत्तरपरमाणूनां सृष्टिः, कालकर्मादिनैव भवतीति किमीश्वरेण कृत्यम् । न चेश्वरे प्रमाणमस्ति वेदादेरप्रमाणत्वात् । अत ईश्वरस्यैवाऽभावात्तस्य जन्मादिकारणत्वमयुक्तमिति ।

(अभिनवचन्द्रिका)

**सिद्धान्तस्तु–** युक्तमेव विष्णोर्जगत्कारणत्वाभिधानम् । वैभाषिकसौत्रान्तिकयोरनुपपन्नभाषित्वेन तत्समयस्याप्रामाणिकत्वात् । तथा हि यदुक्तं कालकर्मादिनिमित्तेन क्षणिकपरमाणुनिमित्तकः समुदायो भवति, न त्ववयवी कश्चिदस्तीति, तत्र प्रष्टव्यः । किमयं समुदायः एकपरमाणुहेतुकोऽनेकमरमाणुहेतुको वेति । नाद्यः । एकस्मात् समुदाय इत्यस्य व्याहतत्वात् । द्वितीयेऽपि किं मिलितानेकहेतुको विरलानेकहेतुको वा । नाद्यःमेलनस्यैव समुदायत्वेनाऽऽत्माश्रयात् । समुदायद्वयस्य कार्यकारणभावाङ्गीकारेऽन्योन्याश्रयात् । व्यक्तिबाहुल्याङ्गीकारेऽनवस्थानात् । नोत्तरः विरलपरमाणुप्रवाहस्य सदा सद्भावेन समुदायरूपकार्यविलयात्मकप्रलयाभावप्रसङ्गात् ।

ननु अस्त्येव सदा समुदायोत्पत्तिः तथापि न प्रलयाभावः, वित्तिव्यवहाराभावादेव प्रलयोपपत्तेरिति चेत्, न वित्तिव्यवहारयोः कदाप्ययोगेन सृष्ट्यभावप्रसङ्गात् । तथा हि ादौ परमाणूनां दर्शनं ततोऽपेक्षा ततो व्यवहार इति क्रमः । न चासावुपपद्यते । परमाणूनां क्षणिकत्वेन कार्यमुत्पाद्य नष्टत्वात् । न हि अन्यत्र दर्शनम्, अन्यत्रापेक्षा, अन्यत्र व्यवहार, इति सम्भवति । अतिप्रसङ्गात् । एवं पुरुषेऽपि । किञ्च न परमते विशेषकार्योत्पत्तिः सम्भवति । कार्यस्य स्वसदृशकार्यजनकत्वस्वाभाव्यात् । न च स्वसदृशं कार्यमुत्पाद्य पश्चाद्वैसादृश्यमपि जनयतीति वाच्यम् । कार्योत्पादे तस्य नष्टत्वेन वैसादृश्यजननायोगात् । किञ्च प्रतिक्षणं कार्योत्पत्तिं वदन् प्रष्टव्यः, किम्, असति कारणे कार्यमुत्पद्यते, उत सति । आद्ये प्रतिज्ञा हानिः । द्वितीये प्रथमक्षणोत्पन्नानां विरलपरमाणूनां कार्योत्पत्तिसमयेऽपि भावे, क्षणिकत्वनियमाभावेन विनाशकसम्पत्तिपर्यन्तमवस्थानं स्यात् । तन्मते च 'कारणे सति कार्यं भवत्येव' इति नियमात् पुनः पुनः कार्योत्पत्तिः स्यादिति सकलकार्याणां यौगपद्यं स्यात् । अथवा परमाणूनां क्षणिकत्वात् यस्मिन् क्षणे परमाणवः, तस्मिन्नेव क्षणे कार्यमिति कार्यकारणयोः पौर्वापर्यं न स्यात् । न च क्षणेषु पूर्वापरमध्यभागोऽस्ति । येन प्रथमभागे परमाणूत्पत्तिः, द्वितीयभागे तु कार्यजनकत्वमिति स्यात् । अपि च न परमते विनाशो युज्यते । तथा हि तन्मते विनाशो द्विविधः कार्यमुत्पाद्य तमपहाय तत्क्षणे नाशः, तस्याप्येवमिति प्रतिक्षणं नाशः, स एव निस्सन्तानविनाशोऽप्रतिसङ्ख्यानिरोध इति च गीयते । सन्तानं विनैव कारणस्य नष्टत्वात् । अपरस्तु कार्यमुत्पाद्य तेन सहैव मुद्गरप्रहारादिना क्षणमात्रे नाशः । स एव

(अभिनवचन्द्रिका)

ससन्ताननाशः प्रतिसङ्ख्यानिरोध इति च गीयते । तत्राद्यस्तावन्न युज्यते । कार्यमुत्पाद्य तत्परित्यागसमये सत्त्वेन सतश्च कार्यजनकत्वनियमात् कार्यमेवोत्पादयेत्, न तु नश्येत् । तद्वियोगसमयेऽप्येवमिति न कदापि निस्सन्तानो नाशः । नापि ससन्तानविनाशो युज्यते । सतो घटस्य ह्यात्यन्तिको विनाशः । अतोऽसौ सत्त्वात् कार्यमुत्पादयेत्, न तु नश्येत् । एवमुत्तरत्रापि सत्त्वात् कार्यमेवोत्पादयेन्न तु नश्येदिति ससन्तानोच्छेदावसाराभावात् । तथापि न सतां भावानां क्षणिकता निषेद्धुं शक्या । सत्त्वं नामार्थक्रियाकारित्वम् । न च क्षणिकतामन्तरेण तदुपपन्नम् । यदि घट आद्यक्षणे घटान्तरमुत्पाद्य, स्वयं न नश्यति, तर्हि द्वितीयादिक्षणेषु घटान्तराण्यपि जनयेत् । घटान्तराण्यपि तथेत्यनन्तकार्यापातः । तस्मादर्थक्रिया-कारित्वरूपसत्त्वसिद्ध्यै भावानां क्षणिकत्वमेष्टव्यमिति चेत्, अत्र वक्तव्यम् अर्थक्रियाकारित्वं सत्त्वं तदन्यथानुपपत्त्या क्षणिकत्वमिति वदता 'कारणे सति कार्यं भवत्येव' इति नियम आश्रितः स किं वास्तवो न वा । आद्ये कार्यकारणयोः सव्येतरविषाणवत् समानकालीनत्वात् कार्यकारणभावो न स्यात् । द्वितीये प्रथमक्षणे कार्यानुत्पादकत्वेनार्थक्रियाकारित्वाभावादसत्त्वं स्यात् । ततः कदापि कार्योत्पत्तिर्न स्यात् । ततश्च सत्त्वान्यथानुपपत्त्या कल्प्यमानं क्षणिकत्वं च न स्यात् ।

ननु माभूदर्थापत्त्या क्षणिकत्वसिद्धिः, यत् सत् तत् क्षणिकं यथा दीपादि । सन्तश्च अमी भावादित्यनुमानेन सेत्स्यति । न च वाच्यं दृष्टान्तस्य साध्यविकलतेति । यद्विरुद्धधर्माधि-करणं तन्नाना, यथा घटपटौ । तथा च अयं दीपः पूर्वोत्तरक्षणयोर्विरुद्धधर्माधिकरणं परिणाम-विशेषदर्शनादिति चेत्, न यत् सत् तदक्षणिकं यथा आकाशमिति अक्षणिकत्वस्यापि साधयितुं शक्यत्वात् । न चाकाशे साध्याभावः । विशेषदर्शनाभावेन क्षणिकत्वसाधकाभावात् । न च हेत्वन्तरेण तत्सिद्धिः । पञ्चस्कन्धातिरिक्तत्वेन तत्र तदनभ्युपगमात् । आकाशे सत्त्वं नास्तीति चेत्, किमिदं सत्त्वं यदाकाशे नास्ति, अर्थक्रियाकारित्वं चेत्, त्वन्मते पूर्वोक्तरीत्या कस्याप्यर्थ-क्रियाकारित्वासम्भवेनासिद्धिः । साधनविकलता च निदर्शनस्य । अथ स्वरूपेण विद्यमानता, भावरूपता वा । सा चाकाशेऽप्यस्त्येवेति व्यभिचारो दुष्परिहरः । किञ्च सोऽयं घट इति प्रत्यभिज्ञा विरोधः । तथा स्थायित्वसिद्धेः । न च प्रत्यभिज्ञा भ्रन्तिः बाधकाभावात् । घटोऽयं निरन्तरोत्तरक्षणवृत्तिध्वंसप्रतियोगी घटत्वात् मुसलाहतैकक्षणवृत्तिघटवदिति च उक्तरीत्या

(अभिनवचन्द्रिका)

परास्तम् । किञ्च घटशब्देन परमाणून् लक्षयित्वा घटत्वशब्देन परमाणुत्वमेव हेतुतया विवक्ष्यते, उत समुदायमेव पक्षीकृत्य घटत्वमेव हेतुतया विवक्ष्यते । नाद्यः मुसलाहतस्य घटस्य समुदायत्वेन परमाणुत्वाभावात् । तत्र हेत्वभावेन व्याप्तिग्रहणाभावप्रसङ्गात् । न द्वितीयः सत एव त्वया क्षणिकत्वस्य साधनीयत्वेनावस्तुनः तत्साधनस्यानुपयुक्तत्वात् । अतो वैभाषिकसौत्रान्तिक-मतस्यानुपपन्नत्वेन अविरोधकत्वात् युक्तमीश्वरस्याशेषजगत्कारणत्वलक्षणमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**बाधेनापीति** ॥ एतेन सौत्रश्चशब्दो दूषणान्तरसमुच्चयार्थः । न क्षणिकत्वं भावानामित्यनु-षङ्गार्थश्चेत्युक्तं भवति ॥ **दीपादीति** ॥ दीपादौ परिमाणविशेषदर्शनस्येत्यर्थः ॥ **विरुद्धधर्मेति** ॥ अवयवोपचयापचयादिनिमित्तकपरिमाणादिविशेषादिविरुद्धधर्माक्रान्तत्वमित्यर्थः ॥ **तस्येति** ॥ परिमाणभेदादेरेकस्मिन्नेव कालादिभेदेन विरुद्धधर्मवति विशेष इत्यर्थः । वक्ष्यते चैतत् । वैशेषिकादयो देवदत्तादेरपि पार्थिवद्रव्यस्य पाकेन प्रतिक्षणमात्रविनाशेन द्व्यणुकादिक्रमेणो-त्पादाङ्गीकारेण तादृशविरुद्धधर्मवत्यप्यन्यत्वमभ्युपयन्तीत्यतोऽस्मदित्युक्तम् । नन्वस्मन्मतेऽपि सोऽयं देवदत्त इत्यत्र त्रयी गतिः । तद्देशकालोपलक्षितविशेष्यस्य तद्देशकालवैशिष्ट्यम् । एतद्देशकालसम्बन्धप्रागभाववतस्तद्देशकालवैशिष्ट्यं वा । विशिष्टद्वयस्यैक्यं वा पक्षत्रयेऽपि भेदाभेदाङ्गीकारादन्यत्वसद्भावात् कथमुच्यते ॥ **न हि तादृशेऽन्यत्वमिति** ॥ कथं वा तदेवेदमिति प्रत्यभिज्ञा न भ्रान्तिः । अत एव तत्त्वोद्योतटीकायामनित्यदेशकालसम्बन्धित्वस्य सत्वान्न सोऽयं देवदत्त इत्याद्युपमा चेति व्याख्यावसरे द्रष्टव्यम् । एवं प्रत्यभिज्ञायास्त्रिधा गति-मुक्त्वाऽनुस्मृतेरिति सूत्रस्य विशिष्टद्वयस्य भेदाभेदसद्भावादभेदमात्रविषयप्रत्यभिज्ञाविषयत्वमुक्त-मिति चेन्न । समाहितमेतत्सुधायाम् ।

ननु भवन्मतेऽपि प्रत्यभिज्ञा भ्रान्तिरेव । परिणामवादे पूर्वोत्तरवस्तुनोर्भेदाभेदाङ्गीकारात् । तदेवेदमिति प्रत्यभिज्ञया चात्यन्तभेदस्यावगाहनादिति चेदुच्यते । यदा हि पूर्वोत्तरकाल-वर्तिनोर्भेदाभेदः प्रत्यभिज्ञाविषयोऽङ्गीक्रियते तदा सावधारणस्य प्रत्यभिज्ञानस्य भ्रमत्वेऽपि तदिदमिति न भ्रमस्तेनैव च स्थायित्वसिद्धिः । यदा तु कालादिद्वयसम्बन्धसावधारणमपि न भ्रम इति । तथा च तत्त्वोद्योतटीकायामनुस्मृतिसूत्रस्य तदिदमिति प्रत्यभिज्ञया पूर्वोत्तरविशिष्ट-

(वाक्यार्थमुक्तावली)
द्वयस्यैक्यविषयत्वमिति व्याख्यातत्वेऽपीह भाष्ये तत्कालादिसम्बन्धे वेनत्कालादिसम्बन्धीति विशेष्यमात्रप्रत्यभिज्ञापरतया तदेवेदमिति सावधारणतया व्याख्यायमानत्वान्न विरोधः नापि प्रत्यभिज्ञाभ्रान्तिरिति ।

ननु विशिष्टद्वयं प्रत्यभिज्ञाविषयं सुधाविरोधात् । तथा हि न च गुणाद्याश्रयस्य भेदे प्रमाणमस्ति । विशिष्टयोर्भेदेऽपि न तद्गुणाद्याश्रयस्य । किन्तु गुणाद्याश्रयाश्रितं वस्त्वन्तरं तदिति सुधायां जिज्ञासाधिकरणे, नीलपटसद्भावेऽपि पीतपटाभाव इत्यत्र यदि विशिष्टविषयौ विधिनिषेधौ तदा भिन्नविषयत्वेन विरोधाभावः । नीलपीतपटयोर्भिन्नत्वादिति सुधायां वैशेषिकनये। एकविशेष्योपादानकयोः विशिष्टयोः स्पष्टं भेदस्यैवोक्तत्वादिति चेन्न, अस्त्येव विशिष्टद्वयैक्यम् । तत्त्वोद्योतटीकायां 'विशिष्टद्वयैक्ये विशेषणैक्यं स्यादिति चेन्न धूमवदग्नि-मतोरैक्येऽपि धूमाग्न्योर्भेददर्शनात्' इति वचनात् । तथाग्निविशिष्टधूमवैशिष्ट्यमुपजायते न तु केवल इति जिज्ञासाधिकरणसुधायाम् । पूर्वोत्तरवस्तुनोर्भेदाविति प्राक् पठित्वैतदधिकरणसुधायां च विशिष्टयोरैक्यप्रतिपादनात् । तर्हि विरोध इति चेन्न, व्यवहितकालीनयोरेकविशेष्यो-पादानकयोर्विशिष्टयोरत्यन्तभेदः । यत्र तु पूर्वविशिष्टे सत्येव विशेष्ये विशिष्टान्तरमुपजायते तत्र विशिष्टभिन्ने विशेष्ये विशिष्टान्तरोत्पादात् विशिष्टयोरैक्यमिति विवक्षितत्वादविरोधात् इत्यलं विस्तरेण ॥ **क्षणेऽपीति** ॥ संयुक्तत्वासंयुक्तत्वादिविरुद्धधर्मस्य भावादेकस्मिन्नेव क्षणे घटादे-र्भावस्य पदार्थस्य भेदप्रसङ्ग इत्यर्थः ॥ **एतेनेति** ॥ विरुद्धधर्माध्यासस्य कालादिभेदेनो-पपत्तिमुक्त्वा प्रत्यभिज्ञाया भ्रान्तित्वनिराकरणेनेत्यर्थः । इदमुक्तं भवति । यद्विरुद्धधर्माधिकरणं तन्नाना यथा घटपटौ । तथा चायं प्रदीप इत्यत्र प्रदीपस्य भेदमात्रसाधने सिद्धसाधनता । पूर्वोत्तरक्षणवर्तिप्रदीपस्य भेदाभेदाङ्गीकारेण भेदस्यास्माभिरङ्गीकृतत्वात् । तावता क्षणभङ्गा-सिद्धेः। तस्मात् अभेदाभावः साध्यः । तत्र पूर्वोत्तरक्षणयोरभेदावगाहिन्या सोऽयं दीप इति प्रत्यभिज्ञया बाधः । न च सा भ्रान्तिः । बाधकाभावात् । पूर्वोत्तरक्षणयोः परिमाणभेदो बाधक-मिति चेन्न, अत्यन्तभेदाभावेऽपि कालभेदेन परिमाणभेदोपपत्तेरिति । विनश्यदवस्थापन्नघटेन सिद्धसाधनता वारणाय घटोऽयमिति पक्षविशेषणम् ॥ **उक्तरीत्येति** ॥ अनुस्मृतेश्चेत्युक्तरीत्या बाधितविषयत्वादित्यर्थः । **दृष्टान्ताभावादिति** ॥ मुसलाहतैकक्षणवृत्तिपरमाण्वात्मकघटरूप दृष्टान्तस्वरूपे तत्र साध्यसाधनयोश्च मम विप्रतिपत्तेः । मुसलाहतघटे परेण सिसाधयिषित पूर्वमध्यापरकलाविकलकालरूपोत्तरक्षणवर्तिप्रध्वंसप्रतियोगित्वस्य परमाणुत्वरूपघटत्वस्य वा

(वाक्यार्थमुक्तावली)

अस्माभिरनङ्गीकारादिति भावः ॥ **तस्यावस्तुत्वादिति** ॥ परमते परमाणुसमुदायस्यासत्त्वात् सत एव क्षणिकत्वस्य वाच्यत्वात् अपसिद्धान्त इति भावः । अत्र सूत्रचतुष्टयं परमते कार्योत्पत्तिनिराकरणाय प्रवृत्तम् । तत्राद्ये परपरिकल्पितपरमाणुसमुदायानुत्पत्त्युक्तिः । द्वितीये उक्तमाक्षिप्य कारणस्य विसदृशकार्यजनकत्वमभ्युपेत्य तदुद्धारः । तृतीये विसदृशकार्यजनकत्व-स्याप्यसम्भवः । चतुर्थे प्रतिक्षणोत्पत्तेरेव निरासः पञ्चमे तु पराभिमतविनाशनिरासः । षष्ठे पदार्थानां प्रतिक्षणोत्पत्तिविनाशेनाङ्गीकृतक्षणिकत्वेऽर्थापत्तिनिरासः । सप्तमेऽनुमानस्य प्रतिपक्षेण निरासः । अष्टमे प्रत्यभिज्ञया बाधोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**तस्य कालादिभेदेनेति** ॥ चूतफले श्यामत्वाश्यामत्वादिः कालादिभेदेनोपपन्नः । ननु विरुद्धधर्माध्यासस्य कालादिभेदेनोपपत्तिः कुतः, विरुद्धधर्मवत्त्वेन भेद एव किं न स्यादिति, तत्राह ॥ **न हीति** ॥ **तादृशे विरुद्धधर्म इति** ॥ यद्यपि तार्किकाणां तत्रापि भेदः, तथापि तदेवेदमिति प्रत्यभिज्ञानात् न भेदोऽस्मत्सम्मत इत्यर्थः ॥ **अन्यथैकक्षणेऽपीति** ॥ अभेदे प्रमितेऽपि भेदश्चेत् एकक्षणवर्तिनोर्घटपटयोर्भेददर्शनात् तद्दृष्टान्तेनैकक्षणवर्तिनोऽपि घटस्य स्वस्माद्भेदः स्यादित्यर्थः । यद्वा एकक्षणवर्तिनोऽपि घटस्य पुरुषभेदेन ज्ञातत्वाज्ञातत्वयोर्दृष्टेर्भेदः स्यादित्यर्थः ॥ **एतेन प्रदीपोऽपीति** ॥ प्रत्यभिज्ञाभ्रान्तित्वनिराकरणेनेत्यर्थः । बालयुवशरीरवत् दीपेष्वत्यन्तभेदाभावेऽपि कालभेदेन परिणामभेदः । तथा च यद्विरुद्धधर्माधिकरणं तन्नाना यथा घटपटौ तथा चायं दीपः इति इत्यत्र भेदमात्रस्य साधने सिद्धसाधनता । भेदाभेदाङ्गीकारेण भेदमात्रस्य मयाङ्गीकारात् अभेदाभावसाधने तु पूर्वोत्तरक्षणयोरभेदावगाहि सोऽयं दीपः इति प्रत्यभिज्ञाबाधः इति भावः ॥ **उक्तरीत्येति** ॥ प्रत्यभिज्ञासूत्रोक्तरीत्येत्यर्थः । दूषणान्तरं चाह ॥ **घट इति चेति** ॥ **दृष्टान्ताभावादिति** ॥ मुसलाहत्तैकक्षणवर्तिपरिमाणात्मकघटरूपदृष्टान्तस्वरूपे तत्र साध्यसाधनयोश्च मम विप्रतिपत्तेरित्यर्थः ॥ **अवस्तुत्वादिति** ॥ घटस्य परमाणुसमुदायात्म-कत्वस्य त्वयैव कल्पितत्वेन त्वत्कल्पनायाश्चाप्रामाणिकत्वेन समुदायस्यासत्त्वादित्यर्थः । तथा चाश्रयासिद्धिरिति भावः । अत्राद्ये सूत्रे समुदायानुपपत्त्युक्तिः । चतुर्थे प्रतिक्षणोत्पत्तिनिरासः । पञ्चमे पराभिमतनाशनिरासः । षष्ठे क्षणिकत्वे पराभिमतार्थापत्तिभङ्गः । सप्तमे पराभिमतानु-मानस्य सत्प्रतिपक्षोक्तिः । अष्टमे पराभिमतानुमानस्य प्रत्यक्षप्रत्यभिज्ञानबाधोक्तिः इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**दीपादीति** ॥ दीपादौ परिमाणभेददर्शनस्य भ्रमत्वे नानात्वसाधकाभावेन न दृष्टान्ते साध्यवैकल्यं दृढमित्याशयः । ननु प्रत्यभिज्ञाया बाधितत्वेन नैव भ्रान्तित्वं कल्प्यते तदभावादित्युक्तमिति चेत्तत्राह ॥ **विरुद्धेति** ॥ एकस्मिन्नपि घटे श्यामरूपवत्त्वरक्तरूपवत्त्वलक्षणविरुद्धधर्माधिकरणत्वमस्तीत्यर्थः ॥ **उपपत्तेः** ॥ एतादृशविरुद्धधर्माध्यासस्येति शेषः । तथा च पदार्थभेदसाधकत्वाभावेन न प्रत्यभिज्ञाप्रामाण्यसाधक' इति भावः । एतदेव आह ॥ **न हीति** ॥ तादृशकालादिभेदेनोपपन्नविरुद्धधर्माध्यासवति वस्तुनीत्यर्थः ॥ **अस्मादिति** । किन्तु देशकालादिव्यवस्थापकाभावविशिष्टस्यैव विरुद्धधर्माध्यासस्य पदार्थभेदसाधकत्वमस्माभिरङ्गीकृतम् । न ह्येतादृशं प्रकृतेऽस्तीति भावः ॥ **अन्यथेति** ॥ यादृशतादृशविरूद्धधर्माध्यासस्यापि भावभेदहेतुत्वे ॥ **क्षणेऽपीति** ॥ एकस्मिन्नेव क्षणे विद्यमानघटेऽपि पुरुषभेदेन ज्ञातत्वाज्ञातत्वरूपविरुद्धधर्माध्याससम्भवादिति भावः ॥ **एतेन प्रदीपोऽपि व्याख्यात इति** ॥ एतेन प्रत्यभिज्ञाभ्रान्तित्वनिराकरणेन व्याख्यातः निराकृतः । तथा च 'यत् विरुद्धधर्माधिकरणं तन्नाना यथा घटपटौ । तथा चायं प्रदीप' इत्यत्र पूर्वोत्तरक्षणवर्तिदीपभेदमात्रसाधने सिद्धसाधनता स्यात् । पूर्वोत्तरक्षणावस्थायिनः प्रदीपस्य भेदाभेदाङ्गीकारेण भेदस्यास्माभिरङ्गीकृतत्वात् । तावता क्षणिकत्वासिद्धेः । तस्मादभेदाभावः साध्यः । तत्र च पूर्वोत्तरक्षणयोरभेदावगाही सोऽयं दीप इति प्रत्यभिज्ञाबाधः । न च सा भ्रान्तिः । बाधकाभावात् । तथा च साध्यवैकल्यमिति भावः । प्रपञ्चक्षणिकत्वे अनुमानान्तरमाशङ्क्य निषेधति ॥ **घटोऽयमिति** ॥ **निरन्तरेति** ॥ अव्यवहितोत्तरक्षणेत्यर्थः । इदमेव च क्षणिकत्वमिति भावः ॥ **उक्तरीत्येति** ॥ विनाशस्य दूषितत्वादिति भावः ॥ **दृष्टान्ताभावादिति** ॥ मुसलाहतैकक्षणवर्तिपरमाण्वात्मकघटरूपदृष्टान्ते स्वरूपे मम विप्रतिपत्तेरिति भावः ॥ **अवस्तुत्वादिति** ॥ त्वन्मते अर्थक्रियाकारित्वाख्यसत्त्ववत एव पदार्थस्य क्षणिकत्वाङ्गीकारात् परमाणुसमुदायस्य पञ्चस्कन्धातिरिक्तत्वेन तादृशसत्त्वानङ्गीकारे क्षणिकत्वालाभात् तत्रोक्तरूपक्षणिकत्वसाधने बाध इति भाव इत्याहुः । यद्वा तस्यावस्तुत्वे असत्त्वप्राप्त्या आश्रयासिद्धिरिति भावः ।

## वाक्यार्थमञ्जरी

तदेवेदमिति प्रत्यभिज्ञानाच्च नानुमानात्क्षणिकत्वसिद्धिरित्यर्थः ॥ **परिलूनेति** ॥ छिन्नोत्पन्न-

(वाक्यार्थमञ्जरी)

केशसमुदाये यथा सादृश्यात्स एवायमिति प्रत्यभिज्ञा तथा पूर्वोत्तरक्षणस्थदेवदत्तयोः सादृश्यात्स एवायमिति प्रत्यभिज्ञेत्यर्थः ॥ **विरुद्धधर्मेति** ॥ देवदत्ते वृद्ध्यादिरूपेत्यर्थः ॥ **अन्यथा क्षणेऽपीति** ॥ कालभेदेन विरुद्धधर्मवत्यपि भेदे एकक्षणवृत्तिनोऽपि देवदत्तस्य पुरुषभेदेन ज्ञातत्वाज्ञातत्वरूपविरुद्धधर्माधिकरणत्वेन भेदः स्यादित्यर्थः ॥ **प्रदीप इति** ॥ तस्यापि कालभेदेन विरुद्धधर्माधिकरणत्वोपपत्तेरिति भावः ॥ **निरन्तरेति** ॥ अव्यवहितेत्यर्थः ॥ **उक्तरीत्याऽपास्तमिति** ॥ अनुस्मृतेश्चेत्युक्तरीत्या बाधितविषयत्वादित्यर्थः ॥ **दृष्टान्ताभावादिति** ॥ मुसलाहतैकक्षणवृत्तिपरमाण्वात्मकघटाख्यदृष्टान्तस्वरूपे तत्र साध्यसाधनयोः सत्त्वे च विप्रतिपत्तेरिति भावः ॥ तस्यावस्तुत्वादिति ॥ सत एव त्वया क्षणिकत्वस्य साधनीयत्वेनावस्तुनस्तत्साधनमनुपयुक्तमिति भावः ।

**॥ इति समुदायाधिकरणम् ॥ ७ ॥**

## ८. अथ असदधिकरणम्

## सूत्रभाष्यम्

शून्यवादमपाकरोति–

**॥ ॐ नासतोऽदृष्टत्वात् ॐ ॥ २६ ॥**

अदृष्टत्वादसतः कारणत्वं न युज्यते ।

## सत्तर्कदीपावली

क्षणिकपरमाणुपुञ्जवादान्निराकृत्य जगच्छून्यवादमुपक्षिप्य दूषयति ॥ **शून्यवादमित्यादिना** ॥ न च शून्याज्जगदुदितमिति वक्तुं शक्यते दृष्टान्ताभावात् ।

## तत्त्वप्रदीपिका

नित्यं निर्विशेषमद्वितीयं स्वयम्प्रकाशमपास्तगुणदोषं वाङ्मनसागोचरं शून्यं जगत्कारणं माध्यमिका मन्यन्ते । तत्संवृत्या प्रत्ययमात्रविनिवेशिन्या विलासरूपोऽयं भेदप्रपञ्चो न तत्त्वतो विद्यते । तद्दृष्टिरपि विकल्परूपा यावत्संवृतिसंव्यवहारमात्रनिर्वहणी निर्वर्तते । स्वप्नवदेव शून्यात्मप्रतिबोधे समूलं समुपशाम्यतीत्येतन्मतमपाकरोति ॥ **ॐ नासतोऽदृष्टत्वात् ॐ** ॥ असतो जगत्कारणत्वं न युज्यतेऽदृष्टत्वात् । न हि काप्यदृश्यस्य कारणत्वं वा साधनीयम् । दृश्यत्वेऽपसिद्धान्तः । न चासतो जगत्कारणत्वं प्रमाणेन दृष्टम् । न ह्यसतः कारणत्वं क्वापि दृष्टम् । न च तादृशं शून्यं प्रमाणदृष्टम् ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति ॥ **शून्येति** ॥ अत्र हरेर्जगत्कारणत्वे शून्यमतविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । जगत्कारणमीश्वर इत्युक्तम् । तत्र शून्यसमयविरोधेऽभावबुद्धिः स्यादित्यतोऽसौ निराकर्तव्य एव । परमेश्वरस्य जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति सन्देहः । मतविमतिः सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । एकं शून्यमेव खल्वन्तत्रयविरहितं परमार्थतो विद्यमानं तस्मादेवैतदशेषं जगदुदेति । न च तस्यासङ्गस्य जगत्कारणत्वानुपपत्तिः । संवृतिसम्बन्धेनोपपत्तेः । न च श्रुतिविरोधः । तत्प्रामाण्यानभ्युपगमात् । अतः शून्यादेव जगदुदयसम्भवादीश्वरेणोपयोगा-

(तत्त्वप्रकाशिका)

**भावात्सुतरामयुक्तं लक्षणमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ न शून्यस्य जगत्कारणत्वं युक्तम् । तत्प्रमाणाभावात् । न तावत्प्रत्यक्षमत्रास्ति । नाप्यनुमानम् । काप्यसतः कारणत्वादर्शनेन दृष्टान्ताभावात् । आगमस्तु नेष्टो दृष्टो वेति भावः ।**

## गुर्वर्थदीपिका

ननु शून्यं तत्त्वमिति शून्यवादिनो मतं तत्कथमसत इत्युक्तं सूत्रकृतेति चेत् न 'भावार्थ-प्रतियोगित्वं भावत्वं वा न तत्त्वतः' इति वदता शून्यवादिना भावाभावविलक्षणत्वं यदसल्लक्षणं तच्छून्येऽप्यङ्गीकृतम् । किं बहुना सर्वधर्मशून्यतां वदता कथं नासत्वमुररीकृतम् । न हि सर्वधर्मशून्यः कश्चित्पदार्थो लोके दृष्टः । येन तत्त्वं नाम भवेत् । ईदृशस्यापि तत्त्वाख्या चेत् शशविषाणस्यापि कुतो न स्यात् । अतोऽसत्त्वमवर्जनीयमिति भावः सूत्रकारस्य । आगमस्तु नेष्टो दृष्टो वेत्यस्य त्वदीयागमः न ममेष्टः मदीयागमस्तव नेष्टः त्वत्प्रमेयप्रतिपादको दृष्टो वेत्यर्थः ।

## भावबोधः

**शून्यमतविरोधेति** ॥ पञ्चस्कन्धात्मकप्रपञ्चस्य सत्त्वे क्षणिकत्वस्थायित्वचिन्ता । तत्सत्त्वमेव नास्ति । कुतस्तत्क्षणिकत्वादिचिन्तावसर इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भावः ॥ **युक्तमिति** ॥ अत्र परमेश्वरस्य जगत्कारणत्वं किं न युक्तमुत युक्तमिति चिन्ता । तदर्थं शून्य-समयः किं श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं शून्यवादिपरिकल्पितं शून्यस्य जगत्कारणत्वं किं सम्भवत्युत न सम्भवतीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । तदर्थं शून्यस्य जगत्कारणत्वसाधकमनुमानमनाभासमुत तर्कपराहतत्वेनाभासमिति । तथा तदभिमतं शून्यस्य जगदारोपाधिष्ठानत्वं, सम्भवत्युत नेति । तदर्थं जगतः किमसत्त्वमुत सत्त्वमिति । तदर्थं जगतोऽसत्त्वाङ्गीकारे सत्त्वादिति प्रतीतिविरोधो न प्राप्नोत्युत प्राप्नोतीति । तदर्थं जगद्विषयक-सत्त्वप्रतीतिः स्वाप्नादिपदार्थसत्त्वप्रतीतिवत् भ्रान्तिरुत प्रमेति । तदर्थं तद्वदत्र बाधकमस्त्युत नास्तीति ।

ननु प्रमाणाभाव एव प्रमेयाभावं साधयति । न पुनः प्रमाणविशेषाभावः । मा भूदस्मदादि-प्रत्यक्षव्यावृत्या धर्माद्यभावसिद्धिः । तथा च कथं सूत्रभाष्ययोरदृष्टत्वादिति प्रत्यक्षाभावकथनं

(भावबोधः)

व्यभिचारादित्यतो नायं साक्षाद्धेतुः । किं तु हेतुसाधकं हेतुरित्यभिप्रेत्यापेक्षितं साक्षाद्धेतु-मध्याहरति– **तत्प्रमाणाभावादिति** ।। कथं तत्र प्रमाणाभाव इति जिज्ञासायामनुमानागमयोः प्रत्यक्षमूलत्वेन ततः प्रत्यक्षमेव वरं प्रमाणमिति तदभाव एव सूत्रभाष्ययोरुक्तमभिप्रेत्याह– **न तावत् प्रत्यक्षमत्रास्तीति** ।। ननु तर्हि सूत्रभाष्ययोरनुमानागमाभावोऽपि वक्तव्यः । यत्किञ्चि-द्विशेषाभावेन सामान्याभावसाधनायोगादिति चेन्न; प्रत्यक्षेण कचिद्दृष्टमेवानुमानेन साधनीयमिति प्रत्यक्षस्यानुमानोपजीव्यत्वात् प्रत्यक्षाभावोक्त्यैतदभावस्यापि लाभाद्वेदादिप्रामाण्यस्य शून्य-वादिना तदीयागमप्रामाण्यस्य चास्माकमनिष्टत्वेनागमस्यावक्तव्यत्वाच्चेत्यभिप्रेत्याह– **नाप्यनुमान-मित्यादिना** ।।

## भावदीपः

अपरः शून्यमखिलमित्याद्यनुभाष्यं हृदि कृत्वा आद्यसूत्रनिरस्यमाह ।। **एकं शून्यमेवेति** ।। एवं चोभयहेतुकेऽपीत्युक्तदोषोऽत्र नेति भावः । नाभावः वैधर्म्याच्चेति सूत्रनिरस्योक्तिः एवेति । क्षणिकत्वपक्षोक्तदोषश्च नेति भावेनोक्तमन्तत्रयेति । देशतः कालतो वस्तुतोऽतत्रयशब्दि-ताणुत्वानित्यत्वभेदै रहितमित्यर्थः । शून्यं चेन्निस्स्वरूपं किमित्यत उक्तम् ।। **परमार्थत इति** ।। सर्वधर्मोज्झितत्वाच्छून्यमिति नामेति भावः ।। **संवृतीति** ।। संवृतिरज्ञानम् । विप्रतिषेधाच्चा समञ्जसमित्यादिदोषश्च नेत्याह ।। **तत्प्रामाण्येति** ।। **अत इति** ।। अप्रमाणतया श्रुत्यादि-विरोधाभावादित्यर्थः । व्युत्क्रमेण भाष्यं व्याचष्टे ।। **नेति** ।। ननु अदृष्टमात्रेण कथं कारणत्वा-भावः । ईश्वरस्यापि तदभावापातादित्यतो मध्ये हेतुमाह ।। **तत्प्रमाणेति** ।। तत्तत्र कारणत्वे तदुपपादकत्वेनादृष्टत्वादित्येतस्य शून्यकारणत्वस्याप्रत्यक्षत्वात् । असति कारणत्वस्य क्वाप्यननु-भावात् । असत्कारणत्वे आगमस्यादृष्टत्वादिति त्रेधार्थं मत्वाह ।। **न तावदित्यादिना** ।। **क्वाप्यसत इति** ।। शून्यं सदिति पराङ्गीकारेऽपि सर्वधर्मराहित्ये सति असत्त्वमवर्जनीयमित्यापाद्य दूषणमिदमिति ध्येयम् ।। **दृष्टो वेति** ।। 'असद्वा इदमग्र आसीत्' इत्यादिस्तु एतेन सर्वे व्याख्याता इत्यादावन्यार्थत्वेन निर्णीत इति भावः । तत्त्वप्रदीपे तु अदृष्टत्वात् प्रमाणेनादृष्टत्वा-दित्येवोक्तम् ।

## अभिनवचन्द्रिका

**शून्यमतेति** ।। ननु नेदं सूत्रं शून्यमतनिरासकं, 'न शून्यादृष्टत्वात्' इति पाठप्रसङ्गात् ।

(अभिनवचन्द्रिका)

न च तथा पाठोऽस्ति किन्तु नासत इति । तेन असन्मतनिरासाय 'नासतोऽदृष्टत्वात्' इति सूत्रम् । अभावाद्भावोत्पत्तिरिति पक्षे उदासीनानामप्रयतमानानां कृषीवलादीनां सस्यादिकार्य-सिद्धिः स्यादिति वक्तुं 'उदासीनानामपि चैवं सिद्धिः' इति सूत्रं प्रणीतमिति सूत्रद्वयं पूर्वाधिकरणशेष इति चेत्, न उपमर्दितात् कारणात्कार्योत्पाद इति पक्षस्य 'असति प्रतिज्ञोपरोध' इति सूत्रेण दूषितत्वात्तन्निरासाय पुनः सूत्रप्रणयनानुपपत्तेः । यदपि अभावाद्भावोत्पत्तिरिति पक्षे उदासीनानामप्रयतमानानां कृषीवलादीनां सस्यादिकार्यसिद्धिः स्यादिति तदतिस्थवीयः । सतः कारणस्य उपमर्दे सति कार्यमिति परो मन्यते । तत्र कः प्रसङ्गः उदासीनस्य कार्यसिद्धेः । यदि हि अत्यन्ताऽसत एव कार्यं परो मन्येत तदैवेदं दूषणं सङ्गच्छेत । न च तथा परो मन्यते । अतो नेदं सूत्रद्वयं पूर्वाधिकरणशेषः, अपि तु शून्यमतनिरासाय पृथगधिकरणमिति । ननु चोक्तं तथात्वे 'न शून्याददृष्टत्वात्' इति सूत्रणीयमिति, सत्यम्, 'न शून्याददृष्टत्वात्' इति सूत्रणीयं, तथापि शून्यस्य कारणत्वाभावे असत्त्वरूपयुक्तिसूचनार्थं तथोक्तम् । यद्यपि शून्यवादी शून्यस्य नासत्त्वमभ्युपैति, तथापि पराभिमते शून्ये प्रमाणाभावादसत्त्वं सेत्स्यतीति सूत्रकारो मन्यते ॥ **परमेश्वरस्य जगत्कारणत्वं विषय इति ॥**

ननु अस्मिन्नधिकरणे शून्यकारणत्वं निराक्रियते । अतः शून्यस्य जगत्कारणत्वं विषयः । युक्तं न वेति सन्देह इति वक्तव्यम् । न च शून्यवादनिरासस्य विष्णोर्जगत्कारणत्वसिद्ध्यर्थत्वेन तस्यैव प्राधान्याद्विष्णोर्जगत्कारणत्वं विषय इत्याद्येव वाच्यमिति वाच्यम् । आनन्दमयाधि-करणस्यापि विष्णुजिज्ञास्यत्वसिद्ध्यर्थत्वेन तस्यैव प्राधान्यात्तत्रापि विष्णोर्जिज्ञास्यत्वं विषय इत्याद्युक्तिप्रसङ्गात् । किञ्च अधिकरणभेदज्ञापनाय हि विषयो निरूपणीयः । प्रतिपाद्यभेदा-यत्तत्वादधिकरणभेदस्य । न हि विष्णोर्जगत्कारणत्वेन विषयेण अधिकरणानि भिद्यन्त इति शक्यते वक्तुम् । एतदध्यायगतसर्वाधिकरणसाधारणत्वात् जगत्कारणत्वस्येति चेत् सत्यमिह शून्यकारणत्वं विषय इत्याद्येव वक्तव्यमिति, तथापि तद्विचारस्य विष्णुकारणत्वसिद्ध्यर्थत्वेन तस्यैवैतदधिकरणप्रधानप्रमेयत्वादेतत्सन्देहाहितस्य सन्देहस्य जगत्कारणत्वेऽपि भावात् विष्णो-र्जगत्कारणत्वं विषय इत्याद्युक्तम् ।

ननु चोक्तमानन्दमयाद्यधिकरणेष्वपि विष्णोर्जिज्ञास्यत्वं विषय इत्यादि वक्तव्यमिति, सत्यमुक्तं दुरुक्तं तत्, वैषम्यात् । आनन्दमयाद्यधिकरणेषु ब्रह्मणो जिज्ञास्यत्वसिद्धिवत् आनन्दमयत्वादि-

(अभिनवचन्द्रिका)

गुणसिद्धिरपि प्रधानं प्रयोजनम् । परं तु तज्जिज्ञास्यत्वं च सर्वाधिकरणसाधारणं तत्तद्गुणलाभस्तु असाधारणम् । ततः साधरणं विषयं परित्यज्यासाधारणो निरूपितः । इह तु विष्णो-र्जगत्कारणत्वसिद्धिरेव मुख्यं प्रयोजनं समयनिराक्रिया तु तादर्थ्यात् । न हि समयो व्यसनितया निराक्रियते किन्तु विष्णोर्जगत्कारणत्वविरोधित्वात् । यद्यपि अनेन विषयनिरूपणेन नाधिकरण-भेदसिद्धिः, तथापि टीकाकृता अधिकरणभेदसिद्ध्यै विषयस्य निरूपितत्वात् तदनुक्तिर्न दोषाय । अधिकरणभेदसिद्धये तु शून्यस्य जगत्कारणत्वं विषय इत्याद्यूह्यम् । एवमेवञ्जातीयकं सर्वत्र द्रष्टव्यम् । अदृष्टत्वादित्येतत् प्रमाणादृष्टत्वादित्येवंपरमिति भावेनाह – **तत्प्रमाणाभावादिति ॥**

ननु प्रमाणादृष्टत्वादित्ययुक्तम् । प्रत्यक्षस्यैव तत्प्रमाणत्वादित्यत्राप्येतदेवोत्तरमिति भावेनाह– **न तावत्प्रत्यक्षमिति ॥ असतः कारणत्वाऽदर्शनेनेति ॥** ननु दृष्टान्तनिराकरणाय कारणत्वस्य क्वाप्यदर्शनादिति वक्तव्यं न तु असतः कारणत्वादर्शनादिति । असतः कारणत्वादर्शनेऽपि सतस्तु तद्दर्शनेन तस्यैव दृष्टान्तत्वसम्भवात् । न हि पर्वते साध्यसाधनाय, पर्वतान्तरे साध्य-साधनयोः सहचारं दर्शयन्ति । नापि परेण शून्यस्य जगत्कारणत्वसाधनायाऽसत्त्वं हेतुरित्युक्तं, येनाऽसत्त्वस्य सत्यत्वसम्भवात् असदेव दृष्टान्त इति निर्बन्धः स्यादिति चेत्, सत्यं 'कारणत्वस्य क्वाप्यदर्शनात्' इत्येव वक्तव्यमिति, तथापि न तथा वक्तुं शक्यते । कारणत्वस्य दण्डादौ बहुलमुपलम्भादसतः कारणत्वादर्शनादित्युक्ते हि कश्चिद्दोषो भवति । तथा हि शून्यस्य कारणत्वमनुमानेन साधयता दृष्टान्तो वक्तव्यः । न च शून्यमेव दृष्टान्त इति शक्यते वक्तुं, तस्य पक्षत्वात् । नापि शून्यभिन्नः । तस्य त्वन्मतेऽसत्त्वेन, असति च कारणत्वस्य क्वाप्यदर्शनेन कारणत्वाभावस्यासत्त्वेन हेतुना तत्रानुमातुं शक्यत्वेन, साध्यवैकल्यादित्याशयेन दृष्टान्ता-भावाभिधानसम्भवात् । आगमस्तर्हि प्रमाणं भविष्यतीत्यत्रापि एतदेवोत्तरमिति भावेनाह– **आगमस्त्विति ॥**

## वाक्यार्थमुक्तावली

पञ्चस्कंधात्मकस्य प्रपञ्चस्य सत्त्वक्षणिकत्वस्थायित्वचिन्ता । तत्सत्त्वमेव नास्ति कुत-स्तत्क्षणिकत्वादिचिन्तावसर इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ॥ **युक्तमयुक्तं वेति ॥** अत्र विष्णोः कारणत्वं शून्यसमयविरोधाद्युक्तं उत युक्तमिति चिन्ता । तदर्थं तत्कल्पिता

(वाक्यार्थमुक्तावली)

शून्यस्य जगत्कारणता प्रमाणवती तदविरुद्धा उत तद्विरहिणी तद्विरुद्धा चेति । अपरः शून्यमखिलमित्याद्यनुभाष्यं हृदि कृत्वा आद्यसूत्रनिरस्यमाह ॥ **एकमिति** ॥ शून्यमेव परमार्थतो विद्यमानं न ततोऽन्यदस्तीत्यर्थः । शून्यपरमाणुष्वेव भेदाभावात् । उभयहेतुकेऽपीत्युक्तदोषानवकाश इत्युक्तम् एकमिति । एवकारेण नाभावो वैधर्म्याच्चेति सूत्रद्वयनिरस्योक्तिः । तस्य पारमार्थिकत्वे हेतुरन्तत्रयेति । देशतः कालतः परिच्छेदशून्यं, वस्त्वन्तरात् भेदरूपवस्तुतः परिच्छेदशून्यं चेत्यर्थः । तेन क्षणिकत्वपक्षोक्तो दोषोऽपि नेति ज्ञेयम् । परमार्थसत्त्वे कुतस्तच्छून्यनामकमित्यतो निर्धर्मकत्वादिति भावेनोक्तं **एकं निर्विशेषमिति** ॥ खल्वित्यनेन तस्य स्वप्रकाशतया प्रसिद्धतामाह । तच्च परप्रकाश्यत्वाभावो न तु स्वकर्मकप्रकाशत्वम् । कुतस्तत् परप्रकाश्यं न भवतीत्यतोऽप्युक्तम् ॥ **एकमिति** ॥ सधर्मिक एव प्रमाणप्रवृत्तिदर्शनान्निर्धर्मके तदयोगादिति भावः । एतच्च नासत इत्युक्तासत्त्वपर्यवसानायेति बोध्यम् ।

ननु यदि शून्यमेव परमार्थसत्तर्हि किं पञ्चस्कन्धात्मकं जगदसदेव । तथात्वे कथं सदिति प्रतिभास इत्याशङ्कां परिहरन् सृष्टिविषयेऽपि विगानं दर्शयति ॥ **तस्मादिति** ॥ संवृतिरज्ञानम् । एतेन पारमार्थिकसत्यत्वाभावेऽपि सांवृतसत्यत्वाङ्गीकारात् सदिति प्रतिभास इत्युक्तं भवति । विप्रतिषेधाच्चेत्युक्तदोषमुद्धरति ॥ **न चेति** ॥ **सुतरामिति** ॥ ईश्वरेणोपयोगाभावेन तस्यैवाभावाल्लक्षणं सुतरामयुक्तमित्यर्थः । यद्यपि शून्यं नासदित्युपेतं माध्यमिकैः । तथापि सर्वविशेषविनिर्मुक्तत्वेन गगनकुसुमसमत्वादसत्त्वमापाद्य दूषणाभिधानमिति सुधोक्तरीत्या ज्ञातव्यम् ।

ननु प्रमाणाभाव एव प्रमेयाभावं साधयति न पुनः प्रमाणविशेषाभाव इत्यतो नायं साक्षाद्धेतुः किन्तु हेतुसाधकहेतुरित्यभिप्रेत्य साक्षाद्धेतुमध्याहरति ॥ **तत्प्रमाणाभावादिति** ॥ तदुपपादकतया सौत्रं हेतुं व्याचष्टे ॥ **न तावदित्यादिना** ॥ परागमोऽस्माकं नेष्टः । अस्मदागमस्तु परस्य नेष्टः । नापि तादृशोऽस्मदागमो दृष्ट इत्यर्थः । तेन सूत्रे कारणत्वमित्यध्याहारः । प्रमाणाभावादिति शेषः । कुतस्तदभाव इत्यतोऽसतः कारणत्वस्य प्रत्यक्षेणादृष्टत्वात् । अनुमानेन सिद्ध्यङ्गीकारे क्वापि दृष्टान्तेऽदृष्टत्वात्, आगमस्योभयसम्प्रतिपन्नस्यादृष्टत्वात्, तादृशास्मदागमस्यैवादृष्टत्वादिति योजनोक्ता भवति । अनुव्याख्याने तु 'प्रमाणं च दृष्टिरेवाखिलाद्धरम्' इत्यत्रागमाभावस्य शिष्यैरेव ज्ञातुं शक्यत्वात् प्रत्यक्षाभावोक्त्याऽनुमानाभावस्य लब्धत्वात् प्रत्यक्षाभाव एवात्रोक्त इत्युक्तम् । स्पष्टमेतत्सुधायाम् ।

## तत्त्वसुबोधिनी

पञ्चस्कन्धात्मकस्य प्रपञ्चस्य सत्त्वे क्षणिकत्वावस्थायित्वचिन्ता तत्सत्त्वमेव नास्ति । अत तत्क्षणिकत्वादिचिन्तावसरः इति पूर्वपक्षाक्षेपेणोत्थानादनन्तरसङ्गतिरिति भावः । ननु शून्यस्य जगदुत्पादकत्वे सम्बन्धस्य तस्योत्पादकत्वायोगात् । सम्बन्धस्योत्पादकत्वं वक्तव्यम् । तच्च न सम्भवतीति तस्यासङ्गतत्वात् इत्याशङ्क्य निषेधति ॥ **न चेति** ॥ **संवृतिसम्बन्धेनेति** ॥ संव्रीयते अनेनेति संवृतिः अविद्या तत्सम्बद्धेनेत्यर्थः । सौत्रस्यादृष्टत्वात् इत्यस्य शून्यकारण (कारणत्व)- स्याप्रत्यक्षत्वादिति असति कारणत्वस्य क्वाप्यननुभवादिति । असत्कारणत्वे आगमस्यादृष्टत्वात् इति त्रेधार्थमभिप्रेत्याह न तावत् प्रत्यक्षमित्यादिना । यद्वा ननु शून्यस्य जगत्कारणत्वाभावे सूत्रभाष्ययोः प्रमाणविशेषाभावो उक्तः स चानुपपन्नः प्रमाणसामान्याभावस्यैव प्रमेयाभाव- साधकत्वेन तद्विशेषाभावस्य तत्साधकत्वाभावादित्यतो नायं साक्षात् हेतुः किन्तु हेतुसाधकहेतु- रित्यभिप्रेत्याक्षेपितं साक्षात् हेतुं अध्याहरति । **तत्प्रमाणाभावात् इति** ॥ कथं तत्र प्रमाणाभावः इति जिज्ञासायां अनुमागमयोः प्रत्यक्षमूलत्वे ततः प्रत्यक्षमेव वरं प्रमाणमिति तदभाव एव सूत्र- भाष्ययोरुक्त इत्यभिप्रेत्याह ॥ **न तावदिति** ॥ ननु सूत्रादौ प्रत्यक्षाभावकथनं चेत् अनुमानागमयोरप्यभावो वक्तव्यः यत्किञ्चिद्विशेषाभावेन सामान्याभावसाधनायोगादिति चेन्न, प्रत्यक्षेण क्वचित् दृष्टमेव अनुमानेन साधनीयमिति प्रत्यक्षस्यैवाभावोक्त्या तदभावस्यापि लाभात् वेदादिप्रामाण्यस्य शून्यवादिनः तदीयागमप्रामाण्यं चास्माकं अनिष्टत्वेनागमस्यावक्तव्याच्चेत्यभि- प्रेत्याह ॥ **नाप्यनुमानमित्यादि** ॥

## वाक्यार्थविवरणम्

शून्यमतम् । माध्यमिकमतम् 'अनन्तं देशकालतः वस्तुतश्च' इत्यनुव्याख्यानानुसारेण अन्तत्रयरहितमित्युक्तम् । 'पारमार्थिकसत्यत्वं शून्यान्यस्य न हि क्वचित्' इत्येतदनुसारेण परमार्थत इत्युक्तम् । 'शून्यात् संवृतियोगेन विश्वमेतत् प्रवर्तते । सृष्टिकाले पुनश्चान्ते स्तिमितं शून्यतां व्रजेत्' इत्यनुसारेणाह ॥ **तस्मादित्यादि** ॥ जगत् प्रवर्तते । नश्यति चेति शेषः । **तस्य** । शून्यस्य ॥ **श्रुतीति** ॥ ईश्वरस्य जगत्कारणत्वप्रतिपादका 'यतो वा' इत्यादिः ॥ **नेष्ट इतीति** ॥ वेदादिप्रामाण्यस्य त्वयाऽनङ्गीकारादिति भावः ।

## वाक्यार्थमञ्जरी

**शून्यमतेति** ॥ शून्यजगत्कारणत्वाभिधायिमाध्यमिकमतेत्यर्थः **अन्तत्रयेति** ॥ देशकाल-वस्तुभ्यः परिच्छेदरहितमित्यर्थः ॥ **असङ्गस्येति** ॥ निष्क्रियस्येत्यर्थः । स्पष्टमेवं सुधायाम् । संव्रियतेऽनेनेति संवृतिरविद्या । असतः शून्यस्य जगत्कारणत्वं न युक्तम् असत्कारणत्वस्य लोकेऽदृष्टत्वादिति भावः । त्वद्रीत्या त्वां बोधयामीत्यत आह ॥ **दृष्टो वेति** ॥

## सूत्रभाष्यम्

**॥ ॐ उदासीनानामपि चैवं सिद्धिः ॐ ॥ २७ ॥**

असतः कारणत्वे उदासीनानां हेयोपादेयबुद्धिवर्जितानां खपुष्पादीनामपि सकाशात्कार्यसिद्धिः । चशब्दान्न चेदन्यत्रापि न स्यादविशेषात् ।

## सत्तर्कदीपावली

न हि शशभृङ्गात्किञ्चिदुत्पन्नं दृश्यते । अन्यथा वन्ध्यासुतादपि पुत्रोत्पत्तिः स्यात् इत्यर्थः ।

## तत्त्वप्रदीपिका

उदासीनानामपि चैवं सिद्धिः । असतः कारणत्वाङ्गीकार उदासीनानां हेयोपादेयबुद्धि-विषयत्वादुद्गत्याऽसीनानां खपुष्पादीनां सकाशादपि कार्यसिद्धिः । तथोदासीनानां हेयोपादेय-बुद्धिरहितानाम्प्रवृत्तानां पुरुषाणामपि कार्यसिद्धिः ।

## तत्त्वप्रकाशिका

नन्वदृष्टमपि जगत्कारणत्वं शून्यस्याभ्युपगतं चेत्को दोष इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ **उदासीनानामिति** ॥ यद्यदृष्टमप्यसतः कारणत्वं कल्प्येत । एवं तर्हि खपुष्पादीनामपि सकाशात्सौरभ्यादिसिद्धिः स्यात् । न च साऽभ्युपगन्तुं शक्यते । तेषां हेयोपादेयबुद्धिविषयतावर्जितत्वादिति भावः । खपुष्पादीनामकारणत्वेऽपि शून्यादेव जगदुत्पत्तौ को दोष इत्यत आह ॥ **चशब्दादिति** ॥ इति सूचितमिति शेषः । अन्यत्र शून्यात् ।. असत्त्वाविशेषादिति भावः ।

## गुर्वर्थदीपिका

हेयोपादेयबुद्धिवर्जितानामित्यनेन उदास्यन्त इत्युदासीना इति सौत्रोदासीनपदस्य व्युत्पत्तिं सूचयति, सकाशादिति शेषं पूरयतो भाष्यकारस्यान्यत्रेति स्ववचनेऽपि पञ्चमी विवक्षितेति भावेनान्यत्रेत्यस्यार्थकथनं **शून्यादिति** ॥ तर्ह्यन्यस्मादित्येव कुतो नोक्तं भाष्यकृतेति चेन्नि-मित्तत्वार्थकविभक्त्यनर्हत्वस्फोरणायेति ब्रूमः ।

## भावबोधः

ननु न शून्याज्जगदुत्पत्तौ प्रमाणाभावः, अनुमानस्यैव तथात्वात् । न च दृष्टान्ताभावदोषः, तावता दृष्टानुमानानुपपत्तावपि विमतं सकारणकं कार्यत्वादिति सामान्यतः कारणसिद्धौ कारणं प्रलयेऽसद्भवितुमर्हति वस्तुत्वादिति तस्य सत्त्वनिषेधे परिशेषादसत एव जगत्कारणत्व-सिद्धेरित्यभिप्रेत्य शङ्कते– **नन्वदृष्टमपीति** ॥ **कल्प्येतेति** ॥ सामान्यपरिशेषाभ्यामिति शेषः । अनुमानेन तर्कपराहतिप्रतिपादकतया सूत्रभाष्ये योजयति– **एवं तर्हीति** ॥ सौत्रहेत्वर्थगर्भ-मुदासीनानामित्येतदुपेक्षणीयबुद्धिविषयत्वमुच्यत इति भ्रान्तिवारणाय भाष्ये व्याख्यातं **हेयो-पादेयबुद्धिवर्जितानामिति** ॥ तदयुक्तम् । अचेतनत्वेन तद्वर्जितानामपि तन्त्वादीनां हेतुत्वा-दित्यतस्तदभिप्रायमाह– **तेषामिति** ॥ न चैवमुपेक्षणीयबुद्धिविषये व्यभिचारः, तद्बुद्धिविषयता-वर्जितत्वस्यापि विवक्षितत्वादिति भावः । भाष्यस्थं खपुष्पाद्यन्यबौद्धाभिमतशून्यप्रतिपादक-मन्यत्रेति पदं कार्यसिद्धिरित्यनेनानुषक्तेनान्वयदर्शनार्थं पञ्चम्यन्तत्वेन व्याचष्टे– **अन्यत्र शून्यादिति** ॥

## भावदीपः

सौत्रैवंशब्दार्थो भाष्ये असतः कारणत्व इति दर्शयन् तदापादनानुगुणं व्याख्याति ॥ **यद्यदृष्टमपीति** ॥ व्याख्येयस्य सौत्रैवंशब्दस्यानुवादः **एवं तर्हीति** ॥ सूत्रे खपुष्पादीना-मित्यनुक्त्वोदासीनानामित्युक्तस्य भावं वक्तुं तद्व्यावर्त्यमाह ॥ **न च सेति** ॥ एतच्छङ्कानिवर्तक-मुदासीनानामित्यस्य व्याख्यानरूपं भाष्यस्थं हेयोपादेयबुद्धिवर्जितानामिति हेतुगर्भं विशेषण-मयुक्तम् । तद्वर्जितानामपि तंत्वादीनां हेतुत्वादित्याशङ्क्यार्थमाह ॥ **तेषामिति** ॥ तन्त्वादयस्तु

(भावदीपः)
तद्बुद्धिविषया एवेति न दोष इति भावः । कार्यसिद्धिपदान्वयायान्यत्रेति पदं व्याचष्टे ॥ **अन्यत्रेति** ॥ अन्यस्मात् शून्यादिति यावत् ।

## अभिनवचन्द्रिका

**अदृष्टमपीति** ॥ दृष्टान्त इति शेषः । अयं भावः माभूत्कारणत्वस्य क्वाप्यदर्शनादन्वयदृष्टान्तः । व्यतिरेक्यनुमानात्तु शून्यस्य जगत्कारणता सेत्स्यतीति । एतेन अप्रामाणिकस्वीकारस्यैव दोषत्वेन प्रमाणदृष्टस्वीकारे को दोष इति प्रश्नानुपपत्तिरिति परास्तम् ॥ **खपुष्पादीनामपि सकाशात् इति** ॥ तत्रापि व्यतिरेक्यनुमानस्य कर्तुं शक्यत्वादिति भावः ॥ **खपुष्पादीनामिति** ॥ अकारणत्वेऽपीत्यतः परं 'अस्तु शून्यस्य कारणत्वम्' इति शेषः । अन्यत्रेति पदमनूद्य व्याचष्टे ॥ **अन्यत्र शून्यादिति** ॥

## वाक्यार्थमुक्तावली

ननु विमतं सकारणकं कार्यत्वादिति सामान्यतः कारणसिद्धौ कारणं प्रलयेऽपि सद्भवितुमर्हति वस्तुत्वादिति तस्य सत्त्वनिषेधे परिशेषादसतः कारणत्वसिद्धेः कथमनुमानाभावः । न चात्र दृष्टान्ताभावदोषोऽस्तीत्याशयेन शङ्कते ॥ **नन्वदृष्टमपीति** ॥ अभ्युपगतं चेत्सामान्यपरिशेषाभ्यामिति शेषः । सूत्रे एवमित्यस्यैवं सतीत्यर्थमभिप्रेत्य भाष्येऽसतः कारणत्व इति सति सप्तमी प्रयुक्ता । उदासीनानामित्यस्योद्गत्यासीनानामित्यर्थः । योग्यतया हेयोपादेयबुद्धिविषयत्वादिति लभ्यते इति भावेन भाष्ये हेयोपादेयबुद्धिवर्जितानामित्युक्तम् । बुद्धिविषयतावर्जितानामित्यर्थः । अन्यथा तन्त्वादौ व्यभिचारप्रसङ्गात् । उदासीनानामिति च हेतुगर्भं विशेषणमिति हृदि निधाय अनुमानेन तर्कपराहतिप्रतिपादनपरतया सूत्रे भाष्यं योजयति ॥ **एवं तर्हीत्यादिना** ॥ उपेक्षणीयस्य तृणादेरपि कदाचिद्धेयोपादेयबुद्धिवर्जितानामित्यनेनैव हेयोपादेयोपेक्षाबुद्धिवर्जितानामिति लाभान्न तत्र व्यभिचारः । तदुक्तं सुधायाम्– 'उदासीनानां हेयोपादेयोपेक्षणीयबुद्ध्यविषयाणाम्' इति । अन्यत्रेत्यस्यान्यस्मादित्यभिप्रेत्यानूद्य विषयमाह ॥ **अन्यत्र शून्यादिति** ॥

## तत्त्वसुबोधिनी

ननु न शून्याज्जगदुत्पत्तौ प्रमणाभावः अनुमानस्यैव तथात्वात्, न च दृष्टान्ताभावदोषः तावता

(तत्त्वसुबोधिनी)

दृष्टानुमाननुपपत्तावपि विमतं सकारणकं कार्यत्वादिति सामान्यतः कारणसिद्धौ कारणं प्रलये असत् वस्तुत्वात् घटवदिति तस्य सत्त्वनिषेधे परिशेषात् असतः एव जगत्कारणत्वसिद्धेरित्यभिप्रेत्य शङ्कते ॥ **नन्विति** ॥ **कल्प्येतेति** ॥ सामान्यसिद्धिपरिशेषाभ्यामिति शेषः । ननु माने तर्कपराहतिप्रतिपादकतया सूत्रभाष्यं योजयति ॥ **एवं तर्हीति** ॥ भाष्ये सौत्रहेत्वर्थगर्भमुदासीना-नामित्येतत् उपेक्षणीयबुद्धिविषयत्वमुच्यते इति भ्रान्तिनिवारणाय हेयोपादेयबुद्धिवर्जितानामिति व्याख्यातम् । तदयुक्तम् । अचेतनत्वेन तद्वर्जितानां अपि तंत्वादीनां हेयत्वादित्याशङ्क्य तद्बुद्धिविषयतावर्जितत्वं भाष्ये विवक्षितमिति तंत्त्वादयश्च पटादीनां उपादेयादिबुद्धिविषया एवेति न दोष इत्याह **हेयोपादेयेति** ॥ भाष्यस्थं खपुष्पाद्यन्यबौद्धाभिमतशून्ये प्रतिपादकं अन्यत्रेति पदं कार्यसिद्धिरित्यनेनानुषक्तेन अन्वयार्थं वैषम्यार्थत्वेन व्याचष्टे ॥ **अन्यत्र शून्यादिति** ॥ तत्र **हेतुरसत्वेति** ॥

## वाक्यार्थविवरणम्

**अकारणत्वेऽपि** ॥ असत्त्वेन सौरभ्यादिकार्यं प्रति अकारणत्वेऽपीत्यर्थः ॥ **को दोष इति** ॥ प्रकृते असतोऽपि शून्यस्य कारणत्वाङ्गीकार इति शेषः । अन्यत्रेत्येतदनूद्य व्याख्याति ॥ **शून्यादिति** ॥ तथा च असत्त्वात् खपुष्पादीनां सकाशात् कार्यसिद्धिर्न चेत् तर्हि अन्यत्र शून्यादपि कार्यसिद्धिर्न स्यात् । असत्त्वाविशेषात् । इति भाष्ययोजना द्रष्टव्या ।

## वाक्यार्थमञ्जरी

नेति वर्तते । अप्रयोजकत्वं शङ्कते ॥ **नन्वदृष्टमपीति** ॥ एवमसतः कारणत्वे सति उदासीनानां हेयोपादेयधीविषयत्वराहित्यादुदासीनानां गगनारविन्दादीनामसतां सकाशात् सौरभ्यादिकार्यसिद्धिः स्यादित्यर्थः । तर्केऽप्यप्रयोजकत्वं शङ्कते ॥ **खपुष्पादीनामिति** ॥ अन्यत्रेत्यनुवादः शून्यादिति व्याख्या परमार्थतोत्पद्येतेत्यन्वयः ।

## सूत्रभाष्यम्

**॥ ॐ नाभाव उपलब्धेः ॐ ॥ २८ ॥**

**न च जगदेव शून्यमिति वाच्यम् । दृष्टत्वात् ।**

## सत्तर्कदीपावली

शून्यात्सत्यजगदसम्भवेऽपि मिथ्याजगत्किं न स्यात् इत्याशङ्कायामाह । नाभाव इत्यादिना ।

## तत्त्वप्रदीपिका

यच्चोक्तं, शून्याध्यस्तं जगत्तत्त्वतो नास्त्येवेति । अत्रोच्यते नाभाव उपलब्धेः । न च जगदेव शून्यमिति वाच्यम् । दृष्टत्वात् सत्त्वेनोपलब्धेः । असदेव चेत्कथं दृश्येत ।

## तत्त्वप्रकाशिका

भवेदेतद्दूषणं यदि शून्यतत्वात्परमार्थतो मृदो घट इव जगदुत्पद्येत । नैतदस्ति । संवृति-वशाच्छून्यमेव जगदाकारेण विवर्तत इत्यभ्युपगमात् । न हि शून्ये जगदध्यस्तमित्यत्रोक्तदोषप्रसरः । असत एव रजताकारेण प्रतीयमानत्वादित्याशङ्कां परिहरत्सूत्रं पठित्वा व्याचष्टे ॥ **नेति** ॥ शून्यमेव जगदाकारेणावभाति न परमार्थतो जगदस्तीत्ययुक्तं सदिति दृष्टत्वादित्यर्थः । न चासदेव रजता-कारेणावभातीति युक्तम् । नेदं रजतं किं तु शुक्तिरेवेति बाधविरोधात् ।

## गुर्वर्थदीपिका

असत एव रजताकारेणेत्यत्रासतो रजतात्मतयाऽसतः शुक्तिशकलस्येत्यर्थः । 'न च जगदेव शून्यम्' इत्यनेन न भवति अस्तीत्यभावपदेन सत्तारहितं शून्यमभिप्रैति । शून्यस्यैव जगदा-कारेण निवृत्तत्वाज्जगदेव शून्यमिति भावः । शून्ये आरोपितमिति फलितोऽर्थ इति भावेनोक्तं **शून्यमेव जगदाकारेणेति** ॥ न चासदेवेत्यस्य निरधिष्ठानभ्रमवादिनो मम मतेऽसदेव शुक्ति-काशकलं रजतात्मना सदिति भाति, तद्वदसदेव शून्यं जगदात्मना सदिति प्रतीयताम् । अतः सौत्रहेतुरप्रयोजक इत्यर्थः । असदेवारोपाधिष्ठानं सत्त्वप्रतीतिश्च रजतसत्त्वप्रतीतिवदन्यथासिद्धेति शङ्काद्वयस्यापि सकृदेवोत्तरमाह ॥ **नेदं रजतमिति** ॥ एवं च बाधबलाद्रजतभ्रमेऽपि सती शुक्तिरेवाधिष्ठानं रजतं तु न सत् । अतस्तदात्मना प्रतीयमाने रजतेऽपि तद्वदविद्यमानमेव तत्त्वं प्रतीयताम्, असतः शून्यस्यात एव सत्त्वरहितस्याधिष्ठानतायां तदात्मना प्रतीयमानेऽपि जगति न तद्बलात्सत्त्वोपलब्धिः । किं तु तद्वत् बाधाभावाच्च, जगत्स्वभावभूतसत्त्वमेवेदमिति सत्त्वोपलब्धिबलादेव जगदनारोपितत्वसिद्धिरिति सौत्रहेतुः त्वन्मतस्यैव हेतिरभूदिति भावः ।

## भावदीपः

विवर्तते विपरीतज्ञानविषयो भवतीत्यर्थः । न चादृष्टिविरोध इत्यत आह ॥ **असत एवेति** ॥ तन्मते भ्रान्तेर्निरधिष्ठानत्वादसत एव रजताकारेणेत्युक्तम् । भाष्यस्थैवकारान्वयं वदन् तद्व्यावर्त्यं दर्शयति ॥ **शून्यमेवेति** ॥ दृष्टान्तं निराह ॥ **न चेति** ॥ **नेदमिति** ॥ तथा च सदेवान्याकारेण प्रतीयते न त्वसत् । येन तद्दृष्टान्तेनेहापि तथा स्यादिति भावः ।

## अभिनवचन्द्रिका

**परमार्थतो मृद इति** ॥ 'त्वन्मते' इति शेषः । एतेन मृदो घटोत्पत्तेरपि परमते अपारमार्थि-कत्वात्, पारमार्थिकत्वाभिधानमयुक्तमिति परास्तम् । असत एव रजताकारेणेति । शून्यस्यैव रजतात्मना प्रतिभासस्यानुभवसिद्धत्वेन घटाद्यात्मना प्रतिभासो नानुपपन्न इति भावः ॥ **बाध-विरोधादिति** ॥ बाधकज्ञाने शुक्तेरेवाधिष्ठानत्वस्य स्पष्टमुपलम्भात् शून्यस्य रजतभ्रमाधिष्ठान-त्वाङ्गीकारो न युक्त इति भावः ।

**पूर्वपक्षस्तु–** न विष्णोर्जगत्कारणत्वं शून्यसमयविरुद्धत्वात् । तथा हि एकमेव शून्यमन्तत्रय-रहितं परमार्थसत् । तस्मादेवाशेषं जगदुदेति । न चाऽसङ्गस्य तदनुपपत्तिः संवृतिसम्बन्धेन तदुपपत्तेः । न च श्रुतिविरोधः तत्प्रामाण्यानभ्युपगमात् । ततश्च शून्यसमयविरुद्धत्वादयुक्तं विष्णोर्जगत्कारणत्वलक्षणमिति ।

**सिद्धान्तस्तु–** युक्तमेव विष्णोर्जगत्कारणत्वम् । शून्यसमयस्याप्रामाणिकत्वात् । तथा हि यत्तावदुच्यते शून्यमेव जगत्कारणमिति न तद्युक्तम् । प्रमाणाभावात् । प्रमाणं भवत् प्रत्यक्षमनुमानमागमो वा स्यात् । न तावत् प्रत्यक्षं तत्रास्ति । नाप्यनुमानं, दृष्टान्ताभावात् । ननु घटादावेव कारणत्वदर्शनात् कथं दृष्टान्ताभाव इति चेत्, सत्यं दृश्यते तत्र कारणत्वं तथापि नासौ दृष्टान्तः । तस्य त्वन्मतेऽसत्त्वेन असति च प्रतिवादिना कारणत्वस्यानुपलब्धत्वेन असत्त्वेन कारणत्वाभावस्यानुमातुं शक्यत्वेन, साध्यवैकल्यात् । आगमोऽपि बौद्धाद्यागमो वा वेदादिर्वा । नाद्यः तत्प्रामाण्यस्य प्रतिवादिनोऽसंमतेः । न द्वितीयः तत्प्रामाण्यस्य वाद्यसंप्रतिपत्तेः । तथाविधवेदानुपलम्भाच्च ।

(अभिनवचन्द्रिका)

ननु माभूत्कारणत्वस्य क्वाप्यदर्शनादन्वयदृष्टान्तः, व्यतिरेक्यनुमानात्तु शून्यस्य जगत्कारणता सेत्स्यतीति चेत्, न हेयोपादेयबुद्धिविषयतावर्जितानां खपुष्पादीनां सकाशात् सौरभ्यादिकार्यसिद्धिप्रसङ्गात् । व्यतिरेक्यनुमानस्य तत्रापि कर्तुं शक्यत्वात् । स्यादेतत् । यदि शून्यतत्त्वात् परमार्थतो मृदो घट इव जगदुत्पद्यत इति ब्रूमः, न चैवं किं नाम संवृतिवशात् शून्यमेव जगदाकारेण विवर्तत इति ब्रूमः । न हि शून्ये जगदध्यस्तमित्यत्रोक्तदोषावकाशः । शून्यस्यैव रजताकारेण प्रतीयमानत्वादिति चेत्, न तथात्वे जगतो मिथ्यात्वप्रसङ्गात् । न चेष्टापत्तिः । सदिति प्रतीयमानत्वात् । यदत्रोक्तं शून्यमेव रजताकारेण प्रतीयत इति, तत्र शुक्तेरेव रजतारोपाधिष्ठानत्वस्यानुभवसिद्धत्वेन शून्यस्य तदधिष्ठानत्वाभावात् । ननु सदिति दृश्यमानस्यापि स्वप्नजाग्रत्वादे रज्जुभुजङ्गादेरसत्त्वात्, तद्वज्जगतोऽसत्त्वं किं न स्यादिति चेत्, न । स्वप्न एवायं न जाग्रत्, रज्जुरियं न सर्प इति बाधकप्रत्ययविषयत्ववत्, प्रकृते बाधकप्रत्ययविषयत्वाभावेन वैषम्यात् । तदेवं शून्यमतस्याप्ययुक्तत्वात् युक्तमीश्वरस्य जगत्कारणत्वलक्षणमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

**विवर्तते इति ॥** विपरीतज्ञानविषयो भवतीत्यर्थः ॥ **असत एवेति ॥** तस्यासत्ख्यातिवादित्वेन भ्रान्तेर्निरधिष्ठानकत्वाङ्गीकारादसत एव रजताकारेणेत्युक्तम् । तथा च नादृष्टिविरोधो नाप्यतिप्रसङ्ग इति भावः । सूत्रे भवतीति भावः न भावोऽभावः असदिति यावत् । जगदिति शेषः । तथा च शून्यव्यतिरेकेण जगदसदिति न वाच्यम् । उपलब्धेः सदिति दृष्टत्वादिति सूत्रार्थमाह ॥ **शून्यमेवेति ॥** असत एव रजताकारेणेत्युक्तदृष्टान्तं निराह ॥ **न चासदेवेति ॥ बाधविरोधादिति ॥** बाधकज्ञाने शुक्तेरेवाधिष्ठातृत्वस्य स्पष्टमुपलम्भात् शून्यस्य रजतभ्रमाधिष्ठानत्वाङ्गीकारो न युक्त इति भावः ।

## तत्त्वसुबोधिनी

**उक्तदोषेति ॥** शून्यस्य जगत्कारणत्वे खपुष्पादीनामपि सकाशात् कार्यसिद्धिः स्यादिति उक्तदोषेत्यर्थः । कुतः नेत्यत आह ॥ **असत एवेति ॥** तथा चेदं रजतमित्यादौ असतः रजताकारेण प्रतीयमानत्वस्य दृष्टत्वात् । प्रकृतेऽपि शून्यस्य तज्जगदाकारेण प्रतीयमानत्वं

(तत्त्वसुबोधिनी)

युक्तमित्यर्थः । यदा शून्यस्यैव जगदारोपाधिष्ठानत्वे इदं रजतमिति भ्रमोक्तिरिति भावः । ननु इदं रजतमित्यत्रासतः रजताकारेण प्रतीयमानत्वात् प्रकृतेऽपि शून्यमेव जगदाकारेण प्रतीयत इत्युक्तं, किं च तत्रासत एवाधिष्ठानं तु शुक्तिरित्याशङ्क्य दृष्टान्तासंप्रतिपत्त्या दूषयति ॥ **न चेति** ॥

## वाक्यार्थविवरणम्

जगतः परमार्थत उत्पद्येत इत्यन्वयः ॥ **विवर्तते** ॥ तदारोपाधिष्ठानं भवतीत्यर्थः । ननु असतो नाधिष्ठानत्वं युक्तम् । नासतो दृष्टत्वादित्युक्तदोष इत्यत आह ॥ **न हीति** ॥ **उक्तदोष इति** ॥ अदृष्टत्वादित्युक्तदोषः । शून्यात् परमार्थतो जगत् उत्पद्यते । मृदो घट इवेत्युक्तावेवोक्त-दोषप्रसङ्गो न तत्राध्यस्तमित्युक्तावित्यर्थः । कुत इत्यतोऽसत एवाधिष्ठानत्वदर्शनादित्याह ॥ **असत एवेति** ॥ एतन्मतेऽधिष्ठानस्याप्यसत्त्वेनासत एवेत्युक्तम् ॥ **बाधेति** ॥ अधिष्ठान-सत्त्वावबोधकबाधेत्यर्थः ।

## वाक्यार्थमञ्जरी

विपरिवर्तते विपरीतज्ञानविषयो भवति । उक्तदोषः अन्यत्रादृष्टत्वरूपः असत एव शून्यस्यैव । जगदभावः शून्यव्यतिरेकेण नास्तीति न युक्तम् उपलब्धेः सदित्युपलभ्यमानत्वा-दित्यर्थः ॥ **बाधविरोधादिति** ॥ तथात्वे शून्यमेवेति स्यादिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥ २९ ॥**

**न च दृष्टस्यापि स्वप्नादिवदभावः । तस्योत्तरकाले स्वप्नोऽयं नायं सर्प इत्याद्यनुभवात् । न चात्र तादृशं प्रमाणमस्ति ।**

## सत्तर्कदीपावली

दृष्टत्वान्न जगन्मिथ्येत्येतन्न युज्यते । स्वप्नादिवन्मिथ्यात्वसम्भवादित्याशङ्क्य परिहरति ॥ **वैधर्म्यादिति** ॥ स्वप्नस्य जाग्रत्त्वं मिथ्या तथा दृष्टोऽपि रज्जुसर्पोऽपि मिथ्या स्वप्नोऽयं नायं सर्प इति बलवत्प्रमाणबाधितत्वात् सर्वदृष्टजगत्सत्यत्वस्य केनाप्यबाधितत्वान्न जगन्मिथ्येत्यर्थः ।

## तत्त्वप्रदीपिका

अन्धो देवप्रिय दृश्यस्यापि जगतो मिथ्यात्वमभिरोचयन्ते भूयांसो न्यायशरणाः । तथा च प्रयुज्यते– विमतं मिथ्या दृश्यत्वात्स्वप्नवदिति । न चासिद्धो हेतुः । दृश्यत्वमात्रस्य सम्प्रतिपन्नत्वात् । मिथ्यात्वं च रज्जुसर्पादौ सम्प्रतिपन्नमेव प्रतिपाद्यत इति न साध्यासिद्धिः । अत आह– **ॐ वैधर्म्याच्च न स्वप्नादिवत् ॐ ॥** यदुक्तं दृश्यस्यापि स्वप्नादिवत्तत्वतोऽभाव इति तदयुक्तम् । तस्योत्तरकाले स्वप्नोऽयं नेदं जागरितमित्यनुभवात् । न हि स्वप्नवस्तुनोऽभावः प्रतीयते । स्वप्ने गजमपश्यमिति ह्यावयन्ति । तत्र जाग्रत्त्वप्रतीतिरेव भ्रान्तिः । न चैकदेशभ्रान्तित्वेन सर्वभ्रान्तित्वम् । शून्यादिप्रतीतावपि तत्प्रसङ्गात् । अतस्साध्यविकलस्स्वप्नदृष्टान्तः । न च तज्जाग्रत्त्ववद्रज्जुसर्पवद्वा मिथ्यात्वं वाच्यम् । तस्य नेदं जागरितं नायं सर्प इति विपरीतप्रमाणेनाभावानुभवात् । न चात्र तादृशं प्रमाणमस्ति । उक्तमनुमानमिति चेन्न । प्रत्यक्षदृष्टस्यानुमानमात्रेण क्वापि बाधादृष्टेः । उपजीव्यविरोधेन तस्यैवाभासत्वोपपत्तेः । अनैकान्तिकश्चायं हेतुः । आत्मनोऽपि दृश्यत्वात् अन्यथा तद्व्यवहारायोगात् । विपक्षत्वप्रतिपत्तेश्च । लक्षणायां च दृश्यत्वं स्यात् । 'लक्ष दर्शने' इति धातोः । न च जगदेव शून्यं मन्वाना मिथ्यात्वं दृश्यत्वं च सम्प्रतिपद्यन्ते । मिथ्या दृश्यत्वं चेन्नास्ति दृश्यत्वमित्युक्तं स्यात् । एवं चादृश्यत्वादिति किं नावोचन्त ? यदि चात्रान्यतरपक्षीयो विमतं दृश्यत्वं वाऽनिर्वाच्यं वक्ति, तदसिद्धं प्रतिवादिनः । सोऽपि परमार्थतोऽसत्त्वमेवेच्छतीति नैव पक्षभेदः । अतो नानुमानेन मिथ्यात्वम् । न चात्र नायं सर्प इत्यादिवदपरोक्षानुभवो भविष्यतीत्यत्र प्रमाणमस्ति ।

## तत्त्वप्रकाशिका

ननु सदिति दृश्यमानस्य स्वप्नस्य रज्जुभुजङ्गादेश्चासत्त्वं दृष्टमतो जगतः सत्त्वेन दृष्टस्याप्यसत्त्वं किं न स्यादित्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे **॥ वैधर्म्याच्चेति ॥** न जगतः सत्त्वेनोपलब्धस्यापि स्वप्नादिवदसत्त्वं वाच्यम् । स्वप्नस्यासत्त्वस्यैवाभावात् । स्वप्नजाग्रत्त्वं दृष्टान्त इति चेन्न । तथापि न तद्वदसत्त्वं जगतः । ततो जाग्रत्त्वादेः स्वप्न एवायं न जाग्रत् रज्जुरियं न सर्प इत्यादि बाधकविषयत्वेन वैलक्षण्यादित्याशयः । प्रकृतेऽपि बाधकादसत्त्वं किं न स्यादित्याशङ्कां चशब्दाभिप्रायेण परिहरति **॥ न चेति ॥** तदेवं शून्यमतस्याप्ययुक्तत्वाद्युक्तमीश्वरस्य जगत्कारणत्वलक्षणमिति सिद्धम् ।

## गुर्वर्थदीपिका

अस्तु ममोत्तरं तथापि स्वाप्नपदार्थसत्ताभ्रमवत् रज्जुभुजङ्गादेः सत्ताभ्रमवच्च जगत्सत्त्व-

(गुर्वर्थदीपिका)

प्रतीतिरपि सदेव किञ्चिदधिष्ठानं परिकल्प्य भ्रान्तिः किं न स्यादिति शङ्कते **नन्विति** । बाधकविषयत्वेन वैलक्षण्यादिति वदतोऽपवादकाभावे प्रामाण्यस्य स्वतस्त्वात् स्वोपलब्धिरेवार्थ-सत्त्वसाधिकेति भावः । परकपोलकल्पितबाधकसम्भवेऽपि प्रमाणोपनीतबाधो नास्तीति सूचनाय 'न च तादृशं प्रमाणमस्ति' इत्युक्तम् ।

## भावबोधः

**चशब्दाभिप्रायेणेति** ॥ न स्वप्नादिवदित्यत्र हेत्वन्तरस्यानुक्तत्वेन 'च' शब्दस्योक्तसमुच्चाय-कत्वासम्भवादिति भाष्याभिप्राय इति भावः ।

अत्राद्ये– शून्यस्य जगत्कारणत्वाभावे प्रमाणाभावरूपहेतुमभिप्रेत्य तत्साधकतयेतर-प्रमाणमूलभूतप्रत्यक्षाभावोक्तिः । द्वितीये– शून्यस्य जगत्कारणत्वे पराभिमतानुमानस्य तर्क-पराहत्युक्तिः । मृद्घटादिवत् शून्यप्रपञ्चयोः कार्यकारणभावाङ्गीकारे स्याददृष्टविरोधः । शून्यमेव जगदाकारेणावभाति; न परमार्थतो जगदस्तीत्यङ्गीकारे तु नोक्तदोष इत्याशङ्कापरिहाराय । तृतीये– जगतोऽसत्त्वाङ्गीकारे सदिति प्रत्यक्षविरोधोक्तिः । प्रपञ्चसत्त्वग्राहिप्रत्यक्षस्य स्वप्नादि-प्रतीतिवत् भ्रान्तित्वशङ्कानिरासाय चतुर्थे तयोर्बाधकसद्भावरूपवैलक्षण्योक्तिरिति सूत्रक्रमः ।

## भावदीपः

सूत्रादिस्थादिपदार्थमाह ॥ **रज्जुभुजङ्गादेश्चेति** ॥ न चेत्यादिभाष्यं व्याचष्टे ॥ **न जगत इति** ॥ भाष्ये अनुवर्तितंभावशब्दार्थो सत्त्वमिति । सन्ध्ये सृष्टिराह हीति वक्ष्यमाणाविरोधाय भाष्यभावमाह ॥ **स्वप्नस्येति** ॥ **नेति** ॥ नासत्त्वमित्यन्वयः ॥ **तत इति** ॥ जगत इत्यर्थः ॥ **चशब्देति** ॥ जगति बाधाभावादित्यनुक्तसमुच्चये सौत्रश्चशब्द इति दर्शितम् । तत् तस्मा-न्निष्प्रमाणकत्वात्प्रमाणविरुद्धत्वाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

रज्जुभुजङ्गादेरिति सौत्रादिपदार्थकथनम् । सूत्रे जगत इति लभ्यते । उपलब्धेरित्येतत् उपलब्धस्यापीति तात्पर्यताऽनुवर्तते । अभाव इति च । तथा च वैधर्म्यादित्यस्य साध्यधर्म-विकलत्वाद्दृष्टान्तस्येत्यर्थ इत्यभिप्रेत्य तावद्योजयति ॥ **न जगत इति** ॥ उक्तं च तत्त्वप्रदीपे

(वाक्यार्थमुक्तावली)

स्वप्नादिवज्जगद्दृश्यत्वादिना न मिथ्या । स्वप्न एवायं न जाग्रदिति प्रतीत्या जाग्रत्वाद्येकदेशस्यैव मिथ्यात्वेन सर्वस्य तदभावेन साध्यवैकल्यादिति । एतदर्थज्ञापनायैव भाष्ये स्वप्नोऽयमिति । स्वप्नत्वाबाध उक्तः । अन्यथा नायं सर्प इतिवत् न जाग्रदिति वक्तव्यं स्यात् इति ज्ञेयम् । नायं सर्प इति भाष्यानुसारेण वैधर्म्यादित्यस्य बाधभावाभावाभ्यां वैधर्म्यादित्यर्थान्तरं वक्तुमाह– **स्वप्न-जाग्रत्वमिति** ॥ उक्तं च तत्त्वप्रदीपे 'जाग्रत्वस्य दृष्टान्तत्वे बाधभावाभावाभ्यां वैधर्म्यादिति' ॥ **प्रकृतेऽपि बाधकादिति** ॥ यदुक्तं जगतो बाधाभावरूपं स्वप्नवैलक्षण्यं तदयुक्तम् । प्रत्यक्ष-बाधाभावेऽपि श्रुत्यनुमानबाधसद्भावादिति भावः ।

न चात्र तादृशमिति भाष्यस्यात्र प्रपञ्चस्य बाध्यत्वे तादृशजगदबाध्यत्वे यथा निरवकाशं प्रत्यक्षमस्ति यथा वा जाग्रत्वसर्पादेर्बाध्यत्वे प्रत्यक्षमस्ति तादृशं निरवकाशं प्रमाणं श्रुत्यनुमान-रूपं नास्तीत्यर्थः । श्रुतेः सावकाशत्वादनुमानस्याप्रमाणत्वादिति भावः । उक्तं च तत्त्वोद्योत-टीकायां न्यायवल्यां पद्मनाभतीर्थश्रीमच्चरणैः 'न च स्वप्नाद्युपलब्धिवज्जगन्नास्तीति वाच्यम् । बाधकाभावात् । स्वप्नाद्युपलब्धस्यासत्त्वं बाधकसद्भावाद्युज्यते । अनुमानं श्रुतिर्वा जगत् बाधयितुं न शक्नोत्येव । तद्बाधकानन्यथासिद्धप्रत्यक्षसिद्धत्वात्' इति । एतेनैतदपि निरस्तम् । चशब्द-स्योक्तशङ्कापरिहारकत्वे दूषणार्थसमुच्चयार्थचकार इति तत्त्वोद्योतटीकाविरोध इति । अनुमाना-दागमाच्च बाधात् स्वप्नादिवैधर्म्यमसिद्धमित्युक्तशङ्कापरिहारकस्यापि चशब्दस्य प्रत्यक्षविरोध-लक्षणदूषणान्तरसमुच्चायकत्वोपपत्तेः । उक्तं चानुव्याख्याने 'चेति दृष्टिविरुद्धताम् । निष्प्रमाणत्वमप्यस्य सूत्रयामास विश्वकृत्' इति । अत्राद्ये शून्यस्याविवेचितजगत्कारणत्वे प्रत्यक्षादिप्रमाणाभावोक्तिः । द्वितीये पराभिमतपरिशेषानुमानस्य तर्कपराहत्युपपादनेन तद-भावोक्तिः । तृतीये पराभिप्रेतविवर्तकारणत्वनिराकरणाय जगतोऽसत्त्वे प्रत्यक्षविरोधः । चतुर्थे सत्त्वेनोपलब्धस्यापि स्वप्नादिवदसत्त्वशङ्कायां तद्वैधर्म्योक्त्या निरास इति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**स्वप्नजाग्रत्वमिति** ॥ स्वाप्नजाग्रत्पदार्थयोरैक्यमित्यर्थः । तस्य चासत्वात् दृष्टान्तत्वं सिध्यतीति भावः । तद्वत् स्वाप्नजाग्रत्ववत् । कुतः इत्यतः स्वाप्नजाग्रत्पदार्थैक्यस्य जगतश्च बाधाबाधरूपवैलक्षण्यादित्याह ॥ **तत इति** ॥ जाग्रतः इत्यर्थः । जाग्रत्वादेः स्वाप्नजाग्र-

(तत्त्वसुबोधिनी)

त्पदार्थैक्यादेः वैलक्षण्यं एव दर्शयति ॥ **स्वप्न एवायमिति** ॥ **चशब्दाभिप्रायेणेति** ॥ न स्वप्नादिवत् इत्यत्र हेत्वन्तरस्यानुक्तत्वेन चशब्दस्योक्तसमुच्चायकत्वासम्भवादिति भाष्याभिप्रायः इति भावः । अत्र आद्ये सूत्रे शून्यस्य जगत्कारणत्वे प्रत्यक्षाद्यभावोक्तिः । द्वितीये तत्रैवानुमानस्य तर्कपराहत्युक्तिः । तृतीये जगतोऽसत्त्वाङ्गीकारे प्रत्यक्षविरोधोक्तिः । चतुर्थे बाधकसदसद्भावरूपवैलक्षण्योक्तिः इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**स्वप्नजाग्रत्त्वम्** ॥ स्वप्ने आरोपितं जाग्रत्त्वम् । जाग्रद्दृष्टपदार्थैक्यं तच्चासदिति भावः । कुतो न स्यादित्यत आह ॥ **ततो जाग्रत्वादेरिति** ॥ आदिपदेन रज्जुभुजङ्गादेश्चेति ग्राह्यम् । जाग्रत्त्वादेः सकाशाज्जगत इति शेषः ।

## वाक्यार्थमञ्जरी

**स्वाप्नस्य गजादेः** ॥ स्वप्नजाग्रत्वादिवन्नेदं जगदसत् कुतः वैधर्म्यात् स्वप्न एवायं न जाग्रदिति बाधविषयत्वाख्यवैलक्षण्यादित्यर्थः । जाग्रत्त्वं जाग्रदभेदः ततः जगतः सकाशात् ।

॥ इति असदधिकरणम् ॥ ८ ॥

## ९. अथ अनुपलब्ध्यधिकरणम्

## सूत्रभाष्यम्

विज्ञानवादमपाकरोति–

॥ ॐ न भावोऽनुपलब्धेः ॐ ॥ ३० ॥

न विज्ञानमात्रं जगत् । तथाऽनुभवाभावात् ।

## तत्त्वप्रदीपिका

यथा शून्यवादिनः शून्यं तथा प्रायो विज्ञानवादिनो विज्ञानं मन्यन्ते । तत्र यथासम्भवमुक्तदोपाः प्रप्नुयुरेवावकाशम् । वैशेषिकदोष एव प्रादुष्करिष्यते । ॐ न भावोऽनुपलब्धेः ॐ । न विज्ञानमात्रं जगदिति वाच्यम् । न हि ज्ञानात्मकं तदनुभूयते । तदज्ञासिषमिति ज्ञानविषयत्वेनैव । पराचीनप्रतीचीनतया प्रतीयमानयोरनयोर्विषयविषयिणोर्न कोऽपि कोविदोऽभेदवार्तामावर्तयीत । अतो न सहोपलम्भनियमाद- भेद इति वाच्यम् । न च विनष्टविद्यमानत्वेनोपलभ्यमानयोरतीतवृष्टितत्संविदोरभेदाशङ्का बालकेष्वपि प्रापणीया । नापि भविष्यतां दिनकरोदयादीनां वर्तमानतत्संविदभेदं आशङ्कितुं शक्येत । अतस्समान- देशे समानकाले चानुपलब्धेर्न ज्ञानज्ञेययोरैक्यम् । द्वयोश्च सहोपलम्भ इष्यते । द्वितीयाभावे केन सहोपलम्भः स्यात् । अतस्सहोपलम्भ एवाभेदं निवारयति ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति ॥ **विज्ञानेति** ॥ अत्रेश्वरस्य जगत्कारणत्वे विज्ञानवादविरोध- निरासादस्ति शास्त्रादिसङ्गतिः । ईश्वरो जगत्कारणमित्युक्तम् । तत्र च योगाचारमतविरोधेऽनु- पपन्नत्वप्रसङ्गादवश्यं निरसनीयं तद्भवति । हरेर्जगत्कारणत्वमेव विषयः । युक्तमयुक्तं वेति सन्देहः । समयविवाद एव सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । नित्यं निरञ्जनं विज्ञानतत्त्वमेकमेव खलु विद्यमानम् । तन्मात्रमेवेदं जगन्न तु ततोऽतिरिक्तमस्ति । ततो जगदुदये नेश्वरेण कृत्यमित्ययुक्तं लक्षणमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ **नेति** ॥ न विज्ञानातिरिक्तं जगदिति वदन् प्रष्टव्यो जायते । किं विज्ञानतत्त्वे जगदध्यस्तमिति पक्ष उत परमार्थतो विज्ञानजगतोरभेद एवेति । तत्राद्योऽतीताधिकरणन्यायेन निराकर्तव्यः । नापि द्वितीयः । विज्ञानात्मकं जगदित्यत्र प्रमाणा- भावादिति भावः । न च 'सहोपलम्भनियमादभेदो नीलतद्धियोः ।' इति युक्तम् । भेदप्रतीतिविरोधात् ।

(तत्त्वप्रकाशिका)

**न चेयं भ्रान्तिः । बाधकाभावात् । अनुमानस्यैव बाधकत्वे स्फुटमितरेतराश्रयत्वं सहोपलम्भादभेद इति प्रतिज्ञाहेत्वोर्विरोधश्च । साहित्यस्य भेद एवोपपत्तेः । न च यत्प्रकाशते तद्विज्ञानं यथा ज्ञानम् । प्रकाशन्ते च नीलादय इति युक्तम् । प्रकाशत इति विज्ञानविषयत्वाभ्युपगमे स्ववृत्तिविरोधेन दृष्टान्ते साधनाभावः । अज्ञाने व्यभिचारश्च प्रकाशत्वाभिप्रायेऽसिद्धिरिति ।**

## गुर्वर्थदीपिका

'विज्ञानमात्रं जगत्' इति वदता भाष्यकारेण जगद्भावो भावना ज्ञानं नेति सूत्रार्थः सूचितो भवति । सहोपलम्भनियमादित्यस्य नीलमहं जानामीति सहोपलम्भनियमादित्यर्थः । भेदप्रतीतिविरोधादित्यस्यैकस्य कर्मतयाऽपरस्य क्रियात्वेन यो भेदः प्रतीयते तद्विरोधादित्यर्थः । अन्यथा समूहालम्बनज्ञाने सहोपलभ्यमानयोर्घटपटयोरप्यभेदप्रसङ्गः । घटोऽयमित्यपि प्रतीतेर्न नियम इति चेत् नीलोऽयमित्यपि प्रतीतेस्तत्रापि न नियम इत्युत्तरम् । अनुमानस्यैवेत्यत्र नीलं, नीलबुद्ध्यभिन्नं, नियमेन सहोपलभ्यमानत्वाद् बुद्धिवदित्यनुमानस्य । बाधकत्वे भेदप्रतीतिबाधकत्वे । इतरेतराश्रयत्वम् अनुमानप्रामाण्यसिद्धौ भेदप्रतीतेर्बाधसिद्धिः, भेदप्रतीतिबाधे च बाधितविषयत्वाभावादनुमानस्य प्रामाण्यसिद्धिरितीतरेतराश्रयत्वमित्यर्थः । अङ्गीकृत्य चेदमुदितं वस्तुगत्या प्रत्यक्षेण बाधेऽनुमानस्यैव कालात्ययापदिष्टत्वात् भेदविरोधिज्ञाने नान्यापेक्षेति ज्ञेयम् ।

## भावबोधः

**विज्ञानवादिमतविरोधेति** ।। योगाचारैर्न माध्यमिकवत् प्रपञ्चस्यारोपितत्वमङ्गीक्रियते, किं तु सद्रूपज्ञानात्मकत्वमेव । तत्र न पूर्वोक्तदोषावकाश इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः ।। **युक्तमिति** ।। अत्र हरेर्जगत्कारणत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं विज्ञानवादिसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं विज्ञानवादिपरिकल्पितं प्रपञ्चस्य विज्ञानात्मकत्वं किं सम्भवत्युत नेति । तदर्थं विज्ञानात्मकत्वे जगतः प्रमाणाभावतद्विरोधौ न स्त उत स्त इति । विज्ञानात्मकं जगदित्यत्रेति । नाभाव इति, पूर्वसूत्र इवात्रापि भवतीति कर्तृसाधनेन भावशब्देन सद्रूपं ज्ञानमुच्यते । विज्ञानवादे ज्ञानादन्यस्यासत्त्वात् । ज्ञानमित्युक्त्वा भाव इत्युक्तिस्तु 'नाभाव उपलब्धेः' इति शून्यवादिनं प्रत्युक्तदोषः, नास्माकमिति पूर्वपक्षोत्थानसूचनार्थमिति भावः ।

(भावबोधः)

ननु ज्ञानजगतोरभेदे प्रत्यक्षाभावेऽप्यनुमानं स्यादित्याशङ्क्य निराकरोति– **न चेति** ॥ **भेदप्रतीतिविरोधादिति** ॥ अनेनानुपलब्धेरिति सौत्रो हेतुरुपलब्धिविरोधादिति प्रकारान्तरेण व्याख्यातः ॥ **इतरेतराश्रयत्वमिति** ॥ प्रत्यक्षस्य भ्रान्तित्वेऽनुमानप्रामाण्यम्, तस्मिंश्च प्रत्यक्षस्य भ्रान्तित्वमित्यन्योन्याश्रयत्वमित्यर्थः ॥ **स्ववृत्तिविरोधेनेति** ॥ स्वस्यैव क्रियात्वेन कर्मत्वेन वृत्तिविरोधादित्यर्थः । एतच्च मतान्तराभिप्रायेण । अत एव दोषान्तरमाह– **अज्ञान इति** ॥ ज्ञानप्रागभावादौ ज्ञानावरणसंवृतौ च व्यभिचारः । न हि ज्ञानाभावादिरपि ज्ञानं, विरोधादिति भावः ।

## भावदीपः

**नित्यमिति** ॥ प्रवाहतो नित्यमित्यर्थः । ज्ञानस्य क्षणिकत्वात्कैवल्यान्वयायैतदुक्तिः । नासत इत्युक्तदोषो नेति भावेनोक्तम् ॥ **विद्यमानमिति** ॥ विज्ञानमात्रं जगदिति भाष्यं व्यनक्ति ॥ **तन्मात्रमेवेति** ॥ तथा च नाभाव इत्याद्युक्तदोषोऽपि नेति भावः । छलोत्तरत्वनिरासाय विकल्प्यान्तिमपक्षे भाष्यं व्याचष्टे ॥ **किं विज्ञानेति** ॥ भाष्यस्थानुभवशब्दः प्रमाणत्रयजन्य-प्रमामात्रपर इति भावेनाह ॥ **प्रमाणाभावादिति** ॥ परोक्तमनुमानमाशङ्क्य निराह ॥ **न च सहेति** ॥ तथानुभवाभावादिति भाष्यस्य प्रत्युत वैपरीत्येनैवानुभवादित्यर्थमुपेत्याह ॥ **भेदेति** ॥ **स्फुटमिति** ॥ भेदप्रतीतेर्भ्रान्तित्वे सिद्धे तस्या अविरोधकत्वादनुमानेनाभेदसिद्धिः । सिद्धे च तेनाभेदे भेदप्रतीतेर्भ्रान्तित्वसिद्धिरिति स्फुटमितरेतराश्रयत्वमित्यर्थः । तद्रीत्या अवयवद्वये-नानुमानान्तरमाशङ्कते ॥ **न च यदिति** ॥ तथानुभवेत्यस्य स्वविषयज्ञानाभावादित्यर्थमुपेत्याह ॥ **स्ववृत्तीति** ॥ पररीत्यैतत् । यद्वा तार्किकादिमते स्ववृत्तिविरोधः न तु सिद्धान्तिमते । साक्षिणः स्वप्रकाशत्वाङ्गीकारादिति पूर्वत्रारुच्या दोषान्तरमाह ॥ **अज्ञाने व्यभिचारश्चेति** ॥ ज्ञानप्रागभावादौ ज्ञानावरणे संवृतौ च व्यभिचार इत्यर्थः । एतेन तथा प्रकाशविषयत्वेनानु-भवाभावात् ज्ञानाभावसत्त्वादिति भावपदवृत्त्या भाष्यार्थः सूचितः । न हि ज्ञानाभावादिरपि ज्ञानम् । विरोधादिति भावः । तथा प्रकाशत्वेनानुभवाभावादित्यप्यर्थमुपेत्याह ॥ **असिद्धिरिति** ॥ भेदप्रतीत्या घटादेर्ज्ञानस्वरूपत्वा(नुभवा)भावात् । प्रतीतेर्भ्रान्तित्वं तु पूर्ववन्निरस्यमिति भावः । इतिशब्दः समाप्तौ ।

## अभिनवचन्द्रिका

**नित्यं निरञ्जनमिति** ॥ 'अयं घटः, अयं पट' इत्यादिज्ञानानि भिन्नानीव दृश्यन्ते, तथापि न तेषां भेदो मन्तव्यः, किन्तु एकमेव विज्ञानतत्त्वम् अनेकज्ञेयाकारं भवतीति मन्तव्य-मिति भावः ॥ **अतीताधिकरणन्यायेनेति** ॥ 'सदिति दृष्टत्वादिति न्यायेन' इत्यर्थः ॥ **बाधकाभावादिति** ॥ उपलक्षणमेतत् । नीलादीनां प्रतीत्या सहोपलम्भनियमवत् भेदस्यापि स्वप्रतीत्या सहोपलम्भनियमात् स्वज्ञानात्मकत्वेन वास्तवत्वाचेत्यपि द्रष्टव्यम् ॥ **स्ववृत्ति-विरोधेनेति** ॥ ननु साधनवैकल्यं स्वरीत्योच्यते, उत परमतेन । न तावदाद्यः, अस्मन्मते ज्ञानेऽपि ज्ञानान्तरविषयत्वसद्भावेन स्ववृत्तिविरोधेऽपि दृष्टान्ते साधनसम्भवात् । न ह्यस्मन्मते पटोऽयमिति ज्ञानं न ज्ञेयं तदभावापातात् । नापि स्ववृत्तिविरोधः । ज्ञानमिति ज्ञानस्य स्वविषयत्वाभ्युपगमात् । नापि द्वितीयः । विज्ञानमेकमेव तत्त्वम् अन्यत् सर्वं तदात्मकमिति वदता परेण ज्ञानस्य स्वविषयत्वनैयत्याभ्युपगमादिति चेत्, न ब्रूमो वयं विज्ञानवादिरीत्या साधनवैकल्यमिति नाप्यस्मद्रीत्येति किं नाम यदि त्वदनुमानं मायावादी पश्येत्, तर्हि तेन एकस्यैव क्रियात्वकर्मत्वयोरनङ्गीकारात् साधनवैकल्यमाक्षिपेदेवेति ब्रूमः । न च विज्ञानस्यापि विज्ञानान्तरविषयत्वसम्भवेन न स्ववृत्तिविरोध इति वाच्यम् । विज्ञानवादिमते विज्ञानतत्त्व-स्यैकत्वेन विज्ञानान्तराभावात् ॥ **अज्ञाने व्यभिचारश्चेति** ॥ अज्ञानस्य ज्ञानत्वं विरोधादङ्गी-कर्तुमनुचितमिति साध्याभावनिश्चयसम्भवाद्व्यभिचार इति भावः । बौद्धेन श्रुत्यादिप्रामाण्या-नङ्गीकारात् कथं श्रुत्यादिविरोधाभिधानमित्यत आह- **एतच्चेति** ॥

**पूर्वपक्षस्तु–** न विष्णोर्जगत्कारणत्वं युक्तं, विज्ञानवादिमतविरुद्धत्वात् । तथा हि नित्यं निरञ्जनं विज्ञानतत्त्वमेकमेव खलु विद्यमानं तन्मात्रमेतदशेषं जगत्, न ततोऽतिरिक्तं किञ्चिदस्ति । अतो जगदुत्पत्तावीश्वरेण कृत्याभावादयुक्तं लक्षणमिति ।

**सिद्धान्तस्तु–** युक्तमेव हरेर्जगत्कारणत्वं विज्ञानवादिसमयस्यायुक्तत्वेनाविरोधकत्वात् । तथा हि विज्ञानातिरिक्तं जगन्नास्तीति वदन् प्रष्टव्यः, किं विज्ञानतत्त्वे जगदध्यस्तम्, उत विज्ञान-तत्त्वजगतोरभेद इति । नाद्यः सदिति प्रतीयमानत्वेनारोपितत्वायोगात् । न द्वितीयः जगतो ज्ञानात्मकत्वे प्रमाणाभावात् । न च सहोपलम्भनियमादभेदो नीलतद्धियोरिति वाच्यम् ।

(अभिनवचन्द्रिका)

भेदप्रतीतिविरोधात् । न च, सा भ्रान्तिः । बाधकाभावात् । नीलादीनां स्वप्रतीत्यभेदवत् भेदस्यापि स्वप्रतीत्यभेदेन यथार्थत्वात्तत्प्रतीतेर्भ्रमत्वायोगाच्च । साहित्यस्य भेदव्याप्तत्वेन सहोपलम्भादभेद इति प्रतिज्ञाहेत्वोर्विरोधाच्च । ननु यत्प्रकाशते तद्विज्ञानं, यथा ज्ञानं, प्रकाशन्ते च नीलादय इति अनुमानेन नीलादीनां ज्ञानत्वसिद्धिरिति चेत्, न प्रकाशत इत्यनेन ज्ञानविषयत्वमुच्यते आहोस्वित् प्रकाशत्वं वा । नाद्यः मायावादिना स्ववृत्तिविरोधेन विज्ञाने साधनवैकल्याभिधाने निरुत्तरत्वप्रसङ्गात् । अज्ञाने व्यभिचाराच्च । नेतरः असिद्धेः । किं च ज्ञानस्य क्षणिकत्वेन जगतश्च स्थायित्वान्न तयोरैक्यम् । सकलश्रुतिस्मृतिविरुद्धत्वाच्च सकलमपि बौद्धमतं न सद्भिर्ग्राह्यम् । अतस्तद्विरोधाभावात् युक्तं विष्णोर्जगत्कारणत्वमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

॥ **विज्ञानवादविरोधेति** ॥ शून्यवादिनं प्रति नासतोऽदृष्टत्वादित्युक्तदोषो नास्माकम् । अस्माभिः पारमार्थिकसद्विज्ञानात्मकत्वाङ्गीकारात् विश्वस्येत्यष्टमाक्षेपेणाप्रवृत्तस्य विज्ञानवादस्य विरोधनिरासादस्ति शास्त्रादिसङ्गतिः । अव्यवहितसङ्गतिश्चेति भावः ॥ **युक्तमयुक्तमिति** ॥ विज्ञानवादविरोधाद्विष्णोः कारणत्वमयुक्तमुत युक्तमिति चिन्ता । तदर्थं तत्प्रक्रिया प्रमाणवत्युत नेति । 'ज्ञानमेवाखिलज्ञेयाकारं प्रभासत' इत्यनुव्याख्यानं मनसि निधाय योगाचारमतमुपन्यसति ॥ **नित्येति** ॥ विज्ञानतत्त्वमेव विद्यमानम् । न रूपादयश्चत्वारः स्कन्धा इत्यर्थः । विज्ञानाङ्गीकारेऽपि विशेषमाह ॥ **एकमिति** ॥ ननु विज्ञानसन्ततीनामेकैकस्यामपि सन्ततौ पूर्वोत्तरज्ञानभेदस्य सत्त्वात् कथमेकत्वमित्यत आह ॥ **नित्येति** ॥ घटज्ञानपटज्ञानादिसन्ततीनामेकैकस्यामपि सन्ततौ पूर्वोत्तरज्ञानभेदस्य चारोपितत्वेनानित्यत्वाद्विज्ञानस्य च नित्यत्वात्तन्निर्विशेषमेवेत्यर्थः । भेदस्य संवृत्त्यारोपेऽपि न तेन ज्ञानस्य लेप इत्याह ॥ **निरञ्जनमिति** ॥

ननु ज्ञेयमपि रूपादिकं प्रत्यक्षसिद्धं तत्कथं विज्ञानमेव तत्त्वमित्यत आह ॥ **तन्मात्रमेवेदं जगदिति** ॥ ज्ञानमेव ज्ञेयाकारं, न तु ज्ञेयं ज्ञानाद्भिन्नमस्तीत्यर्थः । तथा च नासतो नाभाव इत्युक्तदोषो नास्तीत्यर्थः । कुतो ज्ञेयस्य ज्ञानाकारत्वमित्यत आह ॥ **खल्विति** ॥ प्रसिद्धमित्यर्थः । ज्ञानं प्रकाशते तेन प्रकाशमानत्वस्य ज्ञानत्वेन व्याप्तौ सिद्धायां नीलादेरपि प्रकाशमानस्य ज्ञानत्वसिद्धिरिति भावः । यद्वा यदा नीलादिकं ज्ञानेन सह प्रकाशमानं प्रसिद्धम् । तेन तयोरभेदः । 'सहोपलम्भनियामादभेदो नीलतद्धियोः' इति वचनादिति भावः । युक्तमेव परो

(वाक्यार्थमुक्तावली)

वक्तीति नियमाभावात् सामान्यवाक्यं विकल्प्य द्वितीयपक्षोत्तरत्वेन सूत्रं सङ्गमयति ॥ **न विज्ञानेति** ॥ किं ज्ञेयं स्वरूपेणासदेव विज्ञानसमारोपितं विज्ञानात्मकमित्युच्यते किं वा परमार्थसत एव ज्ञेयस्य जगतो विज्ञानात्मकत्वं भेदमात्रं त्वसदिति विकल्पार्थः । सूत्रे जगदिति प्रकृतम् । तथा च जगद्भावो ज्ञानं न भवति अनुपलब्धेः । जगतो ज्ञानात्मकत्वस्य प्रमाणे-नानुपलब्धत्वादिति सूत्रार्थं मनसि निधायाह ॥ **न द्वितीय इति** ॥ भावपदेन कथं ज्ञानलाभ इति चेत् भवतु तर्ह्यनुभवेऽपि वर्तते । अत एव अनुभव इति प्रयोगः । अन्वित्युपसर्गस्तु धात्वर्थव्यञ्जक एव । ज्योतिश्चरणाभिधानादितिवत् । तदुक्तं सुधायां 'जगद्भावो ज्ञानं न भवतीत्यर्थः । भवतेरनुभवार्थत्वात् । उपसर्गो हि धातुलीनस्यार्थस्य व्यञ्जक एव' इति । प्रसिद्ध-ज्ञानपदं विहाय भाव इत्युक्तिस्तु परमते विज्ञानातिरिक्तसदभावात् भवतीति भावः सन्निति व्युत्पत्या भावशब्देन ज्ञानस्य सत्त्वं ज्ञापयितुम् । नाभाव इत्युक्तदोषो नेति दर्शयितुमिति ज्ञेयम् ॥ **अतीताधिकरणेति** ॥ सदिति दृष्टत्वादिति न्यायेनेत्यर्थः ॥ **प्रतीतिविरोधादिति** ॥ अनेनानुपलब्धेरित्येतत् सौत्रो हेतुः उपलब्धिविरोधादिति व्याख्यातो भवति ॥ **बाधकाभावादिति** ॥ एतेनापि अनुपलब्धेरित्येतत् बाधकानुपलब्धेरित्यपि व्याख्यातं भवति ॥ **स्फुटमिति** ॥ प्रत्यक्षस्य भ्रान्तित्वेऽनुमानप्रामाण्यम् । तस्मिंश्च सति प्रत्यक्षस्य भ्रान्तित्वमिति स्फुटमितरेतरा-श्रयत्वमित्यर्थः ॥ **स्ववृत्तीति** ॥ स्वस्यैव क्रियात्वेन कर्मत्वेन विरोधादित्यर्थः । पररीत्यैतत् । सिद्धान्ते साक्षिणः स्वप्रकाशत्वाङ्गीकारात् । अत एव दोषान्तरमाह ॥ **अज्ञान इति** ॥ ज्ञानप्रागभावादौ ज्ञानावरणसंवृत्तौ च व्यभिचारः । न हि ज्ञानाभावादिरपि ज्ञानं, विरोधा-दित्यर्थः ॥ **असिद्धेरिति** ॥ तस्यैव सिसाधयिषितत्वादिति भावः ।

## तत्त्वसुबोधिनी

अत्रेश्वरेति योगाचारैर्न माध्यमिकवत् प्रपञ्चस्यारोपितत्वं अङ्गीक्रियते किन्तु सद्रूपज्ञाना-सत्त्वमेव तत्र च न पूर्वोक्तदोषावकाश इति पूर्वपक्षोत्थानादनन्तरसङ्गतिः इति भावः ॥ **न विज्ञानातिरिक्तं जगदिति** ॥ अत्रापि नाभाव इति पूर्वसूत्र इव भवतीति भावः इति कर्तृसाधनेन भावशब्देन सद्रूपज्ञानमुच्यते । विज्ञानवादे ज्ञानादन्यस्य सत्त्वात् ज्ञानमित्यनुक्त्वा भाव इत्युक्तिस्तु नासतो दृष्टत्वादिति शून्यवादिनं प्रत्युक्तदोषो नास्माकमिति पूर्वपक्षोत्थानार्थम् । यद्वा भूप्राप्तौ भूचिन्तयोरिति वचनात् चिन्तात्मकज्ञानार्थोऽपि भूधातुरस्तीति भावः । युष्माकं

(तत्त्वसुबोधिनी)
भाः साकारत्वेनाभिमतं ज्ञानमिति वाभिप्रेत्य भाव इत्युक्तिः ॥ **तत्राद्य इति** ॥ सत्त्वेन प्रतीयमानत्वाद्बाधकाभावाच्च न ज्ञाने जगदध्यासः इत्यर्थः । द्वितीयं प्रत्याह– **ज्ञानात्मकमिति** ॥

ननु ज्ञानजगतोरभेदे प्रत्यक्षाभावेऽपि अनुमानं स्यादित्याशङ्क्य निराकरोति ॥ **न चेति** ॥ **भेदप्रतीतीति** ॥ अनेनानुपलब्धेरिति सौत्रो हेतुरुपलब्धिविरोधादिति प्रकारान्तरेण व्याख्यातः ॥ **इतरेतराश्रयत्वमिति** ॥ प्रत्यक्षस्य भ्रान्तेऽनुमानप्रामाण्यं तस्मिंश्च सति अनुमानस्याप्रामाण्यमित्यन्योन्याश्रयत्वं भवत्पक्षेऽपीति भावः इति प्रत्यक्षस्य भ्रान्तित्वमित्यन्योन्याश्रयत्वमित्यर्थः । न चैवमनुमानस्याप्रामाण्ये प्रत्यक्षस्याभ्रान्तित्वं तस्मिंश्च सति अनुमानस्याप्रामाण्यमित्यन्योन्याश्रयत्वं, भवत्पक्षेऽपीति वाच्यम् । प्रत्यक्षस्य प्रबलतयानुमानविरोधपरिहारानपेक्षमेव प्रामाण्यस्थितेः तदसम्भवादिति भावः ॥ **स्ववृत्तिविरोधेनेति** ॥ स्वस्यैव क्रियात्वेन कर्मत्वेन वृत्तिविरोधादित्यर्थः । ननु तार्किकादिमते स्ववृत्तिविरोधः न तु सिद्धान्ते । साक्षिणः स्वप्रकाशत्वाङ्गीकारादित्यरुच्या दोषान्तरमाह– **अज्ञाने व्यभिचारं चेति** ॥ ज्ञानप्रागभावादौ ज्ञानावरणे संवृतौ च व्यभिचारः । न हि ज्ञानाभावादिरपि ज्ञानविरोधादिति भावः ॥ **प्रकाशत्वाभिप्राय इति** ॥ प्रकाशरूपत्वाभिप्राय इत्यर्थः । नीलादीनामप्रकाशरूपत्वाय सिद्धमिति भावः ।

## वाक्यार्थविवरणम्

'ज्ञानमेवैकमखिलज्ञेयाकारं प्रभासत' इत्येतदनुसारेणाह ॥ **नित्यमित्यादिना** ॥ सूत्रे भावशब्दो विज्ञानवाचीति ज्ञेयम् ॥ **अतीतेति** ॥ विज्ञानमेव जगदाकारेणावभाति । जगच्च तत्राध्यस्तम् । न परमार्थतोऽस्तीत्येतदयुक्तम् । सदिति प्रतीयमानत्वादिति शून्येऽध्यस्तत्वनिराकरणन्यायेन विज्ञानाध्यस्तत्वपक्षोऽपि निराकर्तव्य इत्यर्थः ॥ **सहोपलम्भनियमादिति** ॥ विमतं ज्ञानव्यतिरेकेणासत् । ज्ञानव्यतिरेकेणानुपलभ्यमानत्वादित्यनुमानेनाह ॥ **प्रकाशत इति** ॥ कोऽर्थः प्रकाशविषयत्वं वा प्रकाशरूपत्वं वेति विकल्प्य आद्यं निराचष्टे ॥ **प्रकाश इतीति** ॥ ज्ञाने ज्ञानविषयत्वं क्रियात्वकर्मत्वयोरेकत्र विरोधान्न युक्तमित्यर्थः । अज्ञाने ज्ञानप्रागभावे तद्ध्वंसे चेत्यर्थः । द्वितीयं निराह ॥ **प्रकाशत्वेति** ॥ पक्षे नीलादौ प्रकाशरूपत्वानङ्गीकारेणास्माकमसिद्धिरित्यर्थः ।

## वाक्यार्थमञ्जरी

भावः ज्ञानात्मकं जगदिति न युक्तं तथाऽननुभवादित्यर्थः ॥ **अतीताधिकरणन्यायेनेति** ॥ सदिति दृष्टत्वादिति न्यायेनेत्यर्थः । ननु ययोः सहोपलम्भस्तयोरभेदो यथा घटरूपयोः सहोपलभ्येते च नीलतज्ज्ञाने परस्परव्यतिरेकेणानुपलब्धेरित्यनुमानं मानमित्याशङ्क्याह ॥ **न चेति** ॥ **इतरेतराश्रयत्वमिति** ॥ प्रत्यक्षस्य भ्रान्तित्वे अनुमानप्रामाण्यं तस्मिंश्च सति प्रत्यक्षस्य भ्रान्तित्वमित्यन्योन्याश्रयत्वमित्यर्थः ॥ **स्ववृत्तिविरोधेनेति** ॥ स्वस्यैव क्रियात्वेन कर्मत्वेन च वृत्तिविरोधादित्यर्थः । एतच्च परमतेन सिद्धान्ते साक्षिणः स्वप्रकाशत्वाङ्गीकारादत एव दोषान्तरमाह ॥ **अज्ञान इति** ॥ ज्ञानप्रागभावादौ ज्ञानावरणसंवृतौ च व्यभिचारः । न हि ज्ञानाभावादिरपि ज्ञानं विरोधादिति भावः ॥ **असिद्धिरिति** ॥ ज्ञानस्वरूपत्वस्यासम्मतेरिति भावः ।

## सूत्रभाष्यम्

**॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥**

**ज्ञानं क्षणिकम् । अर्थानां च स्थायित्वमुक्तम् । अतश्च नैक्यम् ।**

## सत्तर्कदीपावली

**जगच्छून्यवादं निराकृत्य जगद्विज्ञानवादमुपक्षिप्य दूषयति । ज्ञानार्थयोरभेदे अहं घट इति प्रतीतिः स्यात् । न त्वयं घट इति । अतो नार्थस्य ज्ञानाकारत्वं युज्यते अनुभवविरुद्धत्वात् । जगतः स्थायित्वेन साधितत्वात् । ज्ञानस्य क्षणिकत्वादपि न जगदाकारं ज्ञानमित्यर्थः ।**

## तत्त्वप्रदीपिका

**न च क्षणिकस्थायिनोरैक्यम् ।**

## तत्त्वप्रकाशिका

**युक्त्यन्तरेणापि जगतो विज्ञानात्मकत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ ॐ क्षणिकत्वाच्चेति ॐ ॥ न च ज्ञानेऽपि क्षणिकत्वं भ्रान्तमिति वाच्यम् । मानाभावात् ।**

## भावदीपः

सौत्रश्चशब्दः समुच्चये इति भावेनाह ।। **युक्त्यन्तरेणापीति** ।। विरुद्धधर्मवत्त्वरूपेणापीत्यर्थः ।

## वाक्यार्थमुक्तावली

आशुतरविनाशित्वाच्च भावस्य ज्ञानस्य न जगत् भावो विज्ञानात्मकमिति सूत्रार्थः ।

## तत्त्वसुबोधिनी

**मानाभावादिति** ।। बाधकाभावादित्यर्थः ।

## वाक्यार्थविवरणम्

**मानेति** ।। बाधकरूपमानेत्यर्थः ।

## वाक्यार्थमञ्जरी

ज्ञानस्य क्षणिकत्वात्पदार्थानां स्थायित्वाच्च नाभेद इत्यर्थः ।

## सूत्रभाष्यम्

**।। ॐ सर्वथाऽनुपपत्तेश्च ॐ ।। ३२ ।।**

**प्रमाणाभावात्सर्वश्रुतिस्मृतियुक्तिविरुद्धत्वाच्च नैते पक्षा ग्राह्याः ।**

## सत्तर्कदीपावली

**बौद्धनिराकरणमुपसंहरति ।। सर्वथेत्यादिना ।।**

## तत्त्वप्रदीपिका

**प्रत्यक्षक्षणिकत्वकल्पने परोक्षप्रत्यक्षबिम्बप्रतिबिम्बजगद्युगलकल्पने शून्यविज्ञानयोरद्वैतकल्पने प्रकटने प्रच्छादने वा वेदविद्वेषिणां पक्षा नोपपद्यन्ते, स्थायिनोर्जीवेशयोश्चानङ्गीकारात् । सर्वप्रमाणाभावात्सर्वप्रमाणविरुद्धत्वाच्च । अतो न ग्राह्याः ।**

## तत्त्वप्रकाशिका

एवं प्रत्येकं दूषितानि बौद्धमतानि पुनः सामान्यदूषणेन पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सर्वथेति** ॥ श्रुत्यादिकमुक्तं वक्ष्यमाणं च द्रष्टव्यम् । एतच्चाधिकारिणं प्रति । अतो बौद्धराद्धान्तस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं हरेर्जगत्कारणत्वलक्षणमिति सिद्धम् ।

## भावबोधः

बौद्धेन श्रुत्यादिप्रामाण्यानङ्गीकारात्तद्विरोधाभिधानमसङ्गतमित्यत आह– एतच्चेति ॥ अत्राद्ये– ज्ञानात्मकं जगदित्यत्र प्रमाणाभावोक्तिः । द्वितीये– तद्विरुद्धधर्माधिकरणत्वरूपानुमानविरोधोक्तिः । तृतीये पूर्वमतद्वयसहितैतन्मते प्रमाणाभावतद्विरोधयोरुक्तिरिति सूत्रक्रमः ।

## भावदीपः

**श्रुत्यादिकमुक्तमिति** ॥ 'न ऋते त्वत्क्रियते' 'यच्च किञ्चिज्जगत्सर्वं' ब्रह्मण्येवेदमाविरासीत् । स एवं भूयो निजवीर्यचोदितामित्यादीत्यर्थः । युक्तयः सूत्रोक्ता एव । वक्ष्यमाणं पत्युरित्यादावित्यर्थः । परमते श्रुत्यादेरमानत्वादाह ॥ **अधिकारिणं प्रतीति** ॥ शास्त्रेऽधिकृतं मुमुक्षुं प्रति तदङ्गीकृतप्रामाण्येन श्रुत्यादिना विरोध उच्यत इत्यर्थः ॥ **अत इति** ॥ अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

अत्र नेत्यनुवर्तते । एते पक्षा इति शेषः । अनुपपत्तेरित्युपपादकप्रमाणाभावात्तद्विरोधाच्चेत्यर्थः ॥ **एतच्चेति** ॥ तेन वेदाप्रामाण्यवादिनं प्रति कथं तदुपन्यास इति निरस्तमिति भावः । अत्राद्ये परपक्षे प्रमाणाभावप्रत्यक्षविरोधोक्तिः । द्वितीयेऽनुमान विरोधोक्तिः । तृतीये बौद्धमतचतुष्टयस्य हेयत्वोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

ननु प्रतिवादिना बौद्धेन श्रुत्यादिप्रामाण्यानङ्गीकारात्तं प्रति तद्विरोधाभिधानमसंगतमित्यत आह ॥ **एतच्चाधिकरणं प्रतीति** ॥ तथा च शास्त्राधिकृतं मुमुक्षुं प्रति तदङ्गीकृतप्रामाण्येन

(तत्त्वसुबोधिनी)

श्रुत्यादिना विरोध उच्यते इत्यर्थः । अत्राद्ये जगतो ज्ञानात्मकत्वे प्रमाणाभावोक्तिः । द्वितीये तत्रैवानुमानविरोधोक्तिः । तृतीये मतत्रयसाधारणदोषोक्तिः इति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

'तर्कैर्दृढतमैरेव वाक्यैश्चागमवादिनाम्' इत्यनुव्याख्यानानुसारेणाह ॥ **एतच्चेति** ॥ श्रुति-विरोधकथनमित्यर्थः । श्रुत्यादिविरुद्धत्वाद्बौद्धमतमग्राह्यमित्यधिकारिणं प्रत्येवोच्यते, न बौद्धं प्रति । अतः श्रुत्यप्रामाण्यवादिनं प्रति कथं तद्विरोधः सूत्रकारेणोच्यत इति शङ्कानवकाश इति ध्येयम् ।

## वाक्यार्थमञ्जरी

न सर्वं बौद्धमतं युक्तं सर्वश्रुत्यादिविरुद्धत्वेन सर्वथानुपपन्नत्वादित्यर्थः । उक्तं प्रथमाधि-करणमारभ्य वक्ष्यमाणं समाप्तिपर्यन्तं बौद्धेन श्रुत्यादिप्रामाण्यस्यानभ्युपगमात्तं प्रति तद्विरोधा-भिधानमयुक्तमित्यत आह ॥ **एतच्चेति** ॥

॥ इति अनुपलब्ध्यधिकरणम् ॥ ९ ॥

# १०. अथ नैकस्मिन्नधिकरणम्

## सूत्रभाष्यम्

स्याद्वादिमतं दूषयति–

॥ ॐ **नैकस्मिन्नसम्भवात्** ॐ ॥ ३३ ॥

सत्स्यादसत्स्यात्सदसत्स्यात्ततोऽन्यच्च स्यादित्येतन्नैकस्मिन्युज्यते । अदृष्टत्वेनासम्भवात् ।

## सत्तर्कदीपावली

वेदप्रामाण्याभ्युपगमरहितत्वाविशेषाद्बौद्धपक्षनिराकरणानन्तरं जैनपक्षमुपक्षिप्य दूषयति ॥ **स्यादित्यादिना** ॥ जगत्सत्स्यादसत्स्यात्सदसत्स्यात् सदसद्विलक्षणं च स्यादिति स्याद्वादिमतं न युज्यते । परस्परपराहतत्वात् । न हि यदेव वस्तु सत्स्यादित्युक्तं तदेव तत्रैव तस्मिन्काल एव स्वेनैव रूपेणासत्स्यादितिवक्तुं शक्यते विरोधात् ।

## तत्त्वप्रदीपिका

अथ वेदबाह्यान्तर्भावादनन्तरमेव जैनमतं निराकरोति । ॐ **नैकस्मिन्नसम्भवात्** ॐ । सत्स्यादसत्स्यात्सदसत्स्यादुभयविलक्षणं च स्यात् चकारादुभयमुभयविलक्षणं च स्यात् न च तत्स्यात्, उक्तं सर्वं च स्यादिति जैना जल्पन्ति तत्तद्गतदोषपरिजिहीर्षवः सार्वत्रिकदोषसमाजभाजनीभूताः । ततोऽन्यच्च स्यादित्यस्यान्योऽर्थः उक्तं त्रयं न स्यात्, सत्स्यान्न च स्यादसत्स्यान्न च स्यात्सदसत्स्यान्न च स्यादिति, तत्रैवावान्तरभेदोऽयम् । नैतत्सप्तप्रकारत्वमेकस्मिन्वस्तुनि वक्तुं युज्यते । न ह्येता भङ्ग्यः क्वचिदेकत्र दृष्टाः । न च सदसद्भङ्ग्व्यतिरेकिण्यो भङ्ग्य एव दृष्टाः । अदृष्टकल्पने सप्तभङ्गिनियमोऽपि भङ्गी स्यात् ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति ॥ **स्यादिति** ॥ अत्रेश्वरस्य जगत्कारणत्वे जैनमतविरोधनिरासादस्ति शास्त्रादिसङ्गतिः । ईश्वरो जगत्कारणमित्युक्तम् । तच्च स्याद्वादिमतविरोधे मन्दस्यानुपपत्तिशङ्का स्यादिति तन्निरासः कर्तव्य एव । तत्परमात्मनो जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति सन्देहः । समयविगानं सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । सदसदुभयमुभयविलक्षणं सदसदुभयविलक्षणं

(तत्त्वप्रकाशिका)

**नैतत्सर्वं चेति सप्तभङ्गिजगदात्मादृष्टात्परिदृष्टसाधनैश्च भविष्यति । स च कायपरिमाणः । अतः किमीश्वरेणेति लक्षणसूत्रमयुक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ।। नेति ।।** यदुच्यते **जैनैर्जगत्सप्तभङ्गीति न तद्युक्तम् । व्यवस्थितसदसत्प्रकारद्वयातिरिक्तप्रकारस्याप्रामाणिकत्वेनासम्भवात् । एकैकप्रकाराभ्युपगमे दोषदर्शनादेतदुपेयत इति न वाच्यम् । तथा सति दोषभीरुणा सर्वमपि परित्याज्यं स्यात् । सदसत्प्रकारद्वये च न कोऽपि दोष इति भावः ।**

## गुर्वर्थदीपिका

नैतत्सर्वमित्यस्य एतत्सर्वस्याभाव इत्यर्थः । अन्यथा एतत्सर्वं न स्यादित्युक्ते स्याद्वादभङ्गः स्यात् । ततोऽन्यच्च स्यादिति भाष्ये ततः पूर्वोक्तपक्षत्रयादन्यत् पक्षचतुष्टयं च स्यादित्यर्थः । व्यवस्थितसदित्यत्र कालभेदेन देशभेदेन स्वरूपतश्च सतः त्रिविधा व्यवस्था द्रष्टव्या । एकत्र एकदा एकस्यैव स्वरूपेण सत्त्वमसत्त्वं च नोपपद्यते । नापि कैश्चिदङ्गीक्रियते, सदसत्त्वादयस्तु सर्वथाऽसम्भाविताः पूर्वोत्तरव्याहताश्चेत्यर्थः । दोषभीरुणेत्यस्य एकैकपक्षे दोषाश्चेत्सर्वे पक्षाः दोषवन्त इत्यागतम् । तथा च दोषवतां सर्वेषां परित्याग एव कार्यः । न तु एकैकदोषभीरुणा सकलदोषवत्यो सप्तभङ्ग्योऽप्यङ्गीकार्याः । न ह्येकैकसर्पाद्भीतः युगपद्दशसर्पसमुदायमङ्गीकुर्वाणः कोऽपि प्रेक्षावान् दृष्ट इति भावः सूत्रकारस्य ।

## भावबोधः

**जैनमतविरोधेति ।।** शून्यवाद्युक्तमसत्त्वं विज्ञानसत्त्ववाद्युक्तसत्त्वं च स्यादिति वदतां जैनानां तत्पक्षोक्तपूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भावः ।। **युक्तमिति** ।। अत्र हरेर्जगत्कारणत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं जैनसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं तत्परिकल्पितं प्रपञ्चस्य सत्यत्वं जीवस्य देहपरिमाणत्वं च किं युक्तमयुक्तमिति । तदर्थं जीवकायपरिमाणत्वस्थूलाण्वादिदेहप्राप्तौ सर्वशरीरव्यापिचेष्टाभावातिरेकौ न प्राप्नुत उत प्राप्नुत इति । तदर्थं देहपरिमाणत्वाभावे शरीरावच्छेदमन्तरेण स्वतः परिमाणाभावः प्राप्नोत्युत नेति । तदर्थं देहमन्तरेण परिमाणाङ्गीकारेण जीवनिःस्वरूपत्वं देहनित्यत्वं वा न प्राप्नोत्युत प्राप्नोतीति ।

'आह क्षपणको विश्वं सदसद्द्व्यमद्वयम् ।
द्वयाद्वयमतत्सर्वं सप्तभङ्गि सदातनम्' ।।

(भावबोधः)

इत्यनुव्याख्यानं मनसि निधायाह– **सदसदुभयमिति** ।। तत्र सदित्येकः प्रकारः । असदिति द्वितीयः । उभयं सदसदात्मकमिति तृतीयः । उभयविलक्षणं सदसद्विलक्षणमिति चतुर्थः । एतावता सत्स्यादित्यादिभाष्यं यथाश्रुतं व्याख्यातं भवति । सदसदुभयविलक्षणमिति पञ्चमषष्ठौ । अत्र सत्तद्विलक्षणं चेति पञ्चमः । असत्तद्विलक्षणं चेति षष्ठः । सर्वं सदसदात्मकं नैतत् सर्वं सदसद्विलक्षणमिति सप्तम उक्त इति द्रष्टव्यम् । अनेन सत्स्यादित्यादिभाष्यं सत्स्यात्ततोऽन्यच्च स्यात्, असत्स्यात्ततोऽन्यच्च स्यात्, सदसत् स्यात्ततोऽन्यच्च स्यादिति प्रकारान्तरेण व्याख्यातं भवति । व्याहतिपरिहाराय **व्यवस्थितमिति** ।।

## भावदीपः

**जैनमतेति** ।। प्रागुक्तदिशा अवैदिकेषु बौद्धनिरासानन्तरम् अस्यावसरप्राप्तत्वादिति भावः । भाष्ये सत्स्यादिति स्याच्छब्दस्तिङन्तप्रतिरूपकोऽनेकार्थद्योतको निपात इति भावेन 'आह क्षपणको विश्वं सदसद्द्वयमद्वयम् । द्वयाद्वयमतत्सर्वं सप्तभङ्गिसदातनम्' इत्यनुभाष्यदिशा सप्तपक्षपरत्वेन भाष्यं व्याचष्टे ।। **सदसदुभयेत्यादिना** ।। सदित्याद्यः प्रकारः । असदिति द्वितीयः । उभयं सदसदात्मकमिति तृतीयः । उभयविलक्षणमिति चतुर्थः । सदसदुभयविलक्षणमिति पञ्चमषष्ठौ । तत्र सत्तद्विलक्षणं चेति पञ्चमः । असत्तद्विलक्षणं चेति षष्ठः । सर्वं सदसदात्मकं नैतत्सर्वं सदसद्विलक्षणमिति सप्तम उक्तो ध्येयः । एतेन भाष्ये पक्षचतुष्टयस्य स्पष्टत्वेऽपि शिष्टपक्षत्रयं तु तदन्यदित्येतच्छतुर्थप्रकारार्पकमेव पदं प्रागुक्तत्रितयशेषं कृत्वा सत्त्वे सति सद्विलक्षणम् असत्त्वे सत्यसद्विलक्षणं सदसत्त्वे सति सदसद्विलक्षणमित्येवं रूपेण बोध्यमिति दर्शितम् । पूर्वाक्षेपार्थमाह ।। **आत्मादृष्टादित्यादि** ।। एवं चेति सूत्रनिरस्यमाह ।। **स चेति** ।। आत्मेत्यर्थः । अनुक्तोपालम्भभ्रान्तिं निरस्यन् भाष्यं प्राग्विवृतत्वादिदानीं सामान्यतो व्याचष्टे ।। **यदुच्यत इति** ।। **व्यवस्थितेति** ।। देशकालाभ्यामिति योज्यम् । एतच्च वस्तुनो निस्स्वरूपत्वनिवृत्त्यर्थं वा अंशेऽसिद्धिनिवृत्त्यर्थं वोक्तम् । व्याहतिनिरासाय **व्यवस्थितेति** ।। अदृष्टत्वेनेत्येतत्प्रमाणसामान्याभावपरत्वेन व्याचष्टे ।। **अप्रामाणिकत्वेनेति** ।। 'तत्तद्दोषनिवृत्त्यर्थं स्वीकृता तत्तदात्मता । यदि तैरखिलैर्दोषैर्लिप्यते चलदर्शनं' इत्याद्यनुभाष्योक्तमाह ।। **एकैकप्रकारेति** ।। **परित्याज्यमिति** ।। अन्यथा सर्वपक्षोक्तदोषलेपः स्यादिति भावः ।। **सदसदिति** ।। देशकालाभ्यां व्यवस्थितेति योज्यम् ।

## अभिनवचन्द्रिका

'आह क्षपणको विश्वं सदसद्द्वयमद्वयम् ।
द्वयाद्वयमतत्सर्वं सप्तभङ्गि सदातनम् ॥'

इत्यनुव्याख्यानानुसारेणाह– **सदसदुभयमिति** ॥ सदित्येकः प्रकारः, असदिति द्वितीयः, उभयं सदसदात्मकमिति तृतीयः, उभयविलक्षणं सदसद्विलक्षणमिति चतुर्थः, सदसदुभयविलक्षणमिति पञ्चमषष्ठौ, नैतत्सर्वं सर्वं चेति सप्तमः । तत्र सत्त्वे सति सद्विलक्षणमिति पञ्चमः, असत्त्वे सति असद्विलक्षणमिति षष्ठः । सदसदात्मकं सदसद्विलक्षणमिति सप्तम इति विवेकः । 'स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यं च, स्यान्नास्ति चावक्तव्यं च, स्यादस्ति च स्यान्नास्ति चावक्तव्यं च' इति क्षपणकोक्तेः ।

## वाक्यार्थमुक्तावली

शून्यवाद्युक्तमसत्त्वं विज्ञानवाद्युक्तं सत्त्वं च स्यादिति वदतां स्याद्वादिनामस्माकं नैकैकपक्षोक्तदोष इति पूर्वाक्षेपेणास्य प्रवृत्तेरनन्तरसङ्गतिरिति ज्ञेयम् ॥ **युक्तमिति** ॥ परमात्मनो जगत्कारणत्वं क्षपणकपक्षविरोधादयुक्तमुत युक्तमिति चिन्ता । तदर्थं तत्प्रक्रिया प्रमाणवत्युत नेति चिन्ता ।

'आह क्षपणको विश्वं सदसद्वयमद्वयम् ।
द्वयाद्वयमतत्सर्वं सप्तभङ्गिसनातनम्' ॥

इत्यनुव्याख्यानं मनसि निधाय सत्स्यादित्यादि भाष्यार्थं मत्वा तन्मतमुपन्यस्यति ॥ **सदसदिति** ॥ तत्र सदित्येकः प्रकारः । असदिति द्वितीयः । उभयं सदसदात्मकमिति तृतीयः । उभयविलक्षणं सदसद्विलक्षणमिति चतुर्थः । एतावता सत्स्यादित्यादिभाष्यं यथा श्रुतं व्याख्यातं भवति । सदसदुभयविलक्षणमिति पञ्चमषष्ठौ । तत्र सत्तद्विलक्षणश्चेति पञ्चमः । असत्तद्विलक्षणं चेति षष्ठः । सर्वं सदसदात्मकं नैतत्सर्वं सदसद्विलक्षणमिति सप्तमः । अनेन सत्स्यादित्यादि भाष्यं सत्स्यात् ततोऽन्यच्च स्यात् असत् स्यात् ततोऽन्यच्च स्यात् सदसत् स्यात् ततोऽन्यच्च

(वाक्यार्थमुक्तावली)

स्यादिति प्रकारान्तरेण व्याख्यातं भवति । पूर्वाक्षेपार्थमाह ॥ **आत्मेति** ॥ धर्माधर्मसंज्ञित-जीवादृष्टात्कालाकाशपुद्गलशब्दितवाह्यसाधनैश्चेत्यर्थः । एवं चेति सूत्रनिरस्यं तदीयं प्रमेयान्तर-मनुवदति ॥ **स चेति** ॥ सूत्रे विरोधस्फोरणाय एकस्मिन्नित्युक्तम् । अनुपलब्धेरित्यनुवर्तते । एकस्मिन् जगति सप्तप्रकारत्वं न युज्यते अप्रामाणिकत्वेनासम्भावितत्वादित्यर्थं मत्वा व्याचष्टे ॥ **यदुच्यत इति** ॥ कथं प्रमाणविरोध इत्यत उक्तम् ॥ **व्यवस्थितसदसद्वयेति** ॥ सर्वं हि स्वदेशकालोपाधौ सद्देशान्तरेऽसदित्येव प्रतीयते । न तु स्वोपाधावेव सत्त्वमसत्त्वं चातस्तदति-रिक्तस्य प्रत्यक्षादिविरुद्धत्वेन तदसिद्धत्वेन चेत्यर्थः । तत्तद्दोषनिवृत्यर्थं स्वीकृता तत्तदात्मता । 'यदि तैरखिलैर्दोषैर्लिप्यते चलदर्शन' इत्यनुभाष्यमनुरुन्ध्याह ॥ **एकैकेति** ॥

## तत्त्वसुबोधिनी

अत्रेश्वरस्येति शून्यवाद्युक्तमसत्त्वं विज्ञानवाद्युक्तं सत्त्वं चाङ्गीक्रियते इति न तत्तत्पक्षोक्तदोष इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिरिति भावः ॥ **सदसदुभयमिति** ॥ तत्र सदित्येकः प्रकारः असदिति द्वितीयः । उभयं सदसदात्मकमिति तृतीयः । उभयविलक्षणं सदसद्विलक्षणमिति चतुर्थः । एतावता सत्स्यादिति भाष्यं यथाश्रुतं व्याख्यातं भवति । सदसदुभयविलक्षणमिति पञ्चमषष्ठौ । तत्र सत्त्वे सति सद्विलक्षणमिति पञ्चमः । असत्त्वे सत्यसद्विलक्षणमिति षष्ठः । सर्वं सदसदात्मकं नैतत्सर्वं सदसत्वे सति सदसद्विलक्षणमिति सप्तम उक्तमिति दृष्टव्यम् । अनेन सत्स्यादिति भाष्यं, सत्स्यात्, ततोऽन्यच्च सदसत्स्यात् ततोऽन्यच्च सदसत्स्यात् ततोऽन्यच्च स्यादिति व्याख्यातं भवति । निराकार्योत्तरमप्याह **स चेति** ॥ व्याहतिपरिहारायाह **व्यवस्थितेति** ॥

## वाक्यार्थविवरणम्

भाष्ये स्याद्वादिमतं दूषयतीत्युक्तम् । तत्र जैनानां स्याद्वादित्वं कुतः । भूयाद्वादित्वादिकं कुतो नास्तीति चेत् । अस्त्यत्र सम्प्रदायविशेषः । स्यादित्ययं न विधिलिङन्तशब्दः किं नाम चिराय मिथ्याया इत्यादिवत्तिङन्तविभक्तिप्रतिरूपकनिपातः । एकत्रापि पक्षे निष्ठाभावरूपा-नैकान्तवादद्योतकः । एवं च स्याद्वादीनामानैकान्तवादीत्यर्थः । एकत्र पक्षे अन्तः निर्णयो निष्ठा आस्था नेत्यनैकान्तवादस्तद्योतकोऽयं निपात इत्येतच्चन्द्रिकायां स्पष्टमुक्तम् । यथोक्तं शाब्दिकैः ॥ वाक्यष्वनैकान्तद्योती गम्यं प्रति विशेषणम् । स्यान्निपातोऽर्थयोगित्वाद्विभक्तिप्रतिरूपक इति ।

(वाक्यार्थविवरणम्)

सत्त्वादिकं स्यादित्येवं वाक्येषु प्रयुज्यमानः स्यादिति निपातः, वाक्यैः गम्यं यत् सत्त्वादिकं तद्विशेषणीभूतः सन् अनैकान्तद्योती स्यादिति निपातस्यानैकान्तशब्दार्थत्वयोगित्वादित्यर्थः । स्वरादिनिपातमव्ययमिति निपातत्वेऽव्ययत्वम् । सदसदुभयविलक्षणम् । सदसदिति यदुभयं द्वयं तद्विलक्षणम् । सत्त्वे सति सद्विलक्षणम् । इति पञ्चमः । असत्त्वे सति असद्विलक्षणमिति षष्ठः । नैतत् सर्वं, सर्वं सदसत् नैतत्सर्वं तद्विलक्षणम् । सदसत्त्वे सति सदसद्विलक्षणमिति सप्तम इत्यर्थः ॥ **परिदृष्टसाधनैः** ॥ मृद्दण्डचक्रादिभिः । 'वक्ति स्वप्रभमात्मानं देहमानम्' इत्येतदनुसारेणाह ॥ **स चेति** ॥ एकत्र सदसत्त्वयोर्विरोधाद्यवस्थितेत्युक्तम् । कुत्रचित् पदार्थे सत्त्वं, कुत्रचित्सदसत्त्वमिति व्यवस्थितेत्यर्थः । तत्तद्दोषनिवृत्त्यर्थं स्वीकृता तत्तदात्मता । यदीत्येतदनुसारेणाह ॥ **एकैकेति** ॥ सत्त्वाद्येकैकप्रकारमात्राभ्युपगमे असत्त्वादिवादी असत्त्वानङ्गीकारे दोषमभिधत्ते । एवमितरोऽपि । अतो दोषभीरुणा मया तदपि स्यादित्यङ्गीक्रियते । अत एव स्याद्वादित्वमित्यर्थः । 'तैरखिलैर्दोषैर्लिप्यते चलदर्शन' इत्येतदनुसारेणाह ॥ **तथा सतीति** ॥ सर्वमपि सप्तभङ्गित्वमपि त्वया सप्तभङ्गित्वाङ्गीकारेऽपि व्यवस्थितसदसत्प्रकारद्वयवादिभिरस्माभिर्दूषणमभिधीयते । अतो दोषभीरुणा त्वया सप्तभङ्गित्वपक्षपरित्याग एव गरीयानिति भावः । यथोक्तं 'अतिहाय प्रमाणाप्तनियमं सदसत्तया' इत्यादि ।

## वाक्यार्थमञ्जरी

**सदसदुभयमिति** ॥ सदित्येकः असदिति द्वितीयः सदसदात्मकमिति तृतीयः सदसद्विलक्षणमिति चतुर्थः सत्त्वे सति सद्विलक्षणमिति पञ्चमः असत्त्वे सत्यसद्विलक्षणमिति षष्ठः सदसदात्मकत्वे सति सदसद्विलक्षणमिति सप्तमः सप्तभङ्गीति सप्तप्रकारोपेतमित्यर्थः । एकस्मिन् जगति सत्त्वादिसप्तप्रकारा न युक्ताः कुतः असम्भवादप्रामाणिकत्वेनासम्भावितत्वादित्यर्थः । विरोधपरिहारायोक्तम् ॥ **व्यवस्थितेति** ॥ देशादिभेदेनेत्यर्थः । **सर्वमपि** प्रकारसप्तकमपि । तत्राप्यस्माभिर्दोषाभिधानादिति भावः । असिद्धं च सर्वत्र दोषदर्शनमित्याह ॥ **सदसत्प्रकारेति** ॥ व्यवस्थितेति योज्यम् ।

## सूत्रभाष्यम्

**॥ ॐ एवञ्चाऽऽत्माकात्स्न्र्यम् ॐ ॥ ३४ ॥**

**जीवस्य शरीरपरिमितत्वाङ्गीकारेऽण्वादिशरीरस्थस्य हस्त्यादिशरीरेऽकात्स्न्र्यं स्यात् ।**

## सत्तर्कदीपावली

स्याद्वादिना यदभ्युपगतं देहपरिमाणो जीव इति । तदनुपपन्नम् । कीटदेहपरिमाणस्य जीवस्य कर्मवशात् गजदेहे वर्तमानस्य देहाव्याप्तित्वापत्तेः । तदाह ॥ **एवं चेत्यादिना** ॥

## तत्त्वप्रदीपिका

अपि चाऽहुः । अणुत्वे सर्वाङ्गवेदनानुसन्धानायुक्तेर्व्याप्तत्वे देहान्तरगतानुसन्धानप्रसङ्गाच्छरीरपरिमाणो जीव इति । अत आह– **ॐ एवञ्चात्माऽकात्स्न्र्यम् ॐ** ॥ एवमङ्गीकारेऽण्वादिशरीरस्थस्य ततो हस्त्यादिशरीरप्रवेशे कृत्स्नशरीरव्याप्तिर्न स्यात् । हस्त्यादिशरीरस्थस्याण्वादिशरीरप्राप्तौ तच्छरीर एवाऽत्मनः कात्स्न्र्यं न स्यात् ।

## तत्त्वप्रकाशिका

यदपि जीवस्य शरीरपरिमितत्वमभ्युपेयते तत्प्रष्टव्यम् । किं तत्सर्वशरीरगतचेष्टोपपत्त्यर्थमभ्युपेयते शरीरावच्छेदमन्तरेणात्मनः परिमाणाभावप्रसङ्गभयाद्वा । तत्राद्यं पक्षं प्रतिक्षेप्तुं सूत्रमुपन्यस्य व्याचष्टे ॥ **एवं चेति** ॥ जैनमतप्रसङ्गसंनिधापितमात्मनः शरीरपरिमाणत्वमेवमिति परामृशति । यद्यात्मा सर्वशरीरचेष्टोपपत्त्यर्थं शरीरपरिमाणोऽङ्गीक्रियते एवं तर्हि पिपीलिकादिशरीरस्थस्तत्परिमाण एव स्यात् तथा च तस्यैव कर्मवशाद्गजगर्दभादिशरीरप्राप्तौ तत्रापूर्णता स्यात् । ततश्च न सर्वशरीरचेष्टेति भावः । गजादिशरीरस्थस्याणुशरीरप्राप्तावतिरेकः स्यात् । तथा च शरीरपरिमाणत्वभङ्ग इत्यपि द्रष्टव्यम् ।

## गुर्वर्थदीपिका

अण्वादीत्यत्रादिपदेन वितस्तिहस्तादिपरिमाणवन्तो गृह्यन्ते । पूर्वसूत्रे सप्तभङ्गीनां निषेध्यतया प्रसक्तत्वेनात्मनोऽप्रस्तुतत्वात् । एवं चेति कथं परात्मपरामर्श इत्यत उक्तं जैनमतप्रसङ्गसन्निधापितमिति । इति च द्रष्टव्यमिति वदता पिपीलिकादेः कृत्स्नं यच्छरीरं तत्परिमाणवत्वं कात्स्न्र्यं ततोऽतिरेकः अकात्स्न्र्यमिति सूत्रस्यार्थः सूचितो भवति ।

## भावबोधः

सूत्रे 'एवं च आत्माकात्स्न्र्यम्' इति 'च'शब्दान्वयमभिप्रेत्य तत्समुच्चयमाह– **गजादिशरीरस्थस्येति** ॥ **द्रष्टव्यमिति** ॥ भाष्ये कात्स्न्र्यमित्यनन्तरमिति शेषः ।

## भावदीपः

**तत्राद्यं पक्षमिति** ॥ द्वितीयपक्षदूषणं तु द्वितीयपक्षं प्रतिक्षिपदित्यत्राग्रे व्यक्तम् । पूर्वसूत्रे प्रकृतत्वाभावादाह ॥ **जैनमतेति** ॥ जीवस्येत्यादिभाष्यं सौत्रैवंशब्दव्याख्यानमिति दर्शयितुं भाष्यं सोपस्करमनुवदति ॥ **यद्यात्मेति** ॥ व्याख्येयं सौत्रपदमनुवदति ॥ **एवमिति** ॥ असङ्गति-निरासायापाद्यान्तरमुक्त्वा अकात्स्नर्यापादनं योजयति । तत्परिमाण एव स्यात्तथा चेत्यादि । अण्वादिहस्त्यादिपदयोर्विनिमयेन तदेव भाष्यमन्यथापि योजयति ॥ **गजादीति** ॥ भाष्ये शरीर इति सावधारणम् । अणुशरीर एवाकात्स्नर्यं पूर्णता न स्यात् । अतिरेकः स्यादिति यावदिति भावः ।

## अभिनवचन्द्रिका

अस्त्वात्मा तत्परिमाण एव बाधकाभावादित्यत आह– **तथा चेति** ॥ प्राप्तावित्यनन्तरं 'परिमाणस्य यावद्द्रव्यभावित्वेन पिपीलिकादिपरिमाणानपायात्' इति शेषः । शरीरान्तरप्राप्तौ तदीयसर्वचेष्टानुपपत्तिलक्षणप्रमाणबलेन पूर्वपरिमाणविनाशेन परिमाणान्तरोत्पादोऽङ्गीक्रियत इत्याशङ्कते ।

## वाक्यार्थमुक्तावली

**जैनमतप्रसङ्गेनेति** ॥ जैनमतप्रसङ्गेन बुद्धौ सन्निधापितमित्यर्थः । भाष्येऽण्वादीत्यत्राणुपदेन पिपीलिकाद्यणुशरीरग्रहणम् । आदिपदेन हस्त्यादिग्रहणम् । हस्त्यादीत्यादिपदेन महत्त्वेन सजातीयगर्दभादेः अणोः विजातीयस्य पिपीलिकादेश्च ग्रहणमित्यभिप्रेत्याणुशरीरस्थस्य हस्ति-गर्दभादिमहच्छरीरे कात्स्नर्यं स्यादित्यंशं तावत् व्याचष्टे ॥ **एवं तर्हीत्यादिना** ॥ उभयत्रादि-शब्दानुसारेण हस्त्यादिशरीरस्थस्य पिपीलिकाद्यणुशरीरप्राप्तावात्मनो देह एव कात्स्नर्यं स्यादति-रेकः स्यादिति यावदिति भाष्यार्थं मत्वा व्याचष्टे ॥ **गजादिशरीरस्थस्येति** ॥ सूत्रे चशब्दो जैनमतेऽनुपपत्यन्तरसमुच्चये । एवं च एवं सति शरीरपरिमाणत्वाङ्गीकारेऽणुशरीरस्थस्यात्मनो गजादिशरीरेऽकात्स्नर्यमपूर्णता स्यात् । गजादिशरीरस्थस्याणुपिपीलिकादिशरीर एव कात्स्नर्यं न स्यादतिरेकः स्यादित्यर्थः । तदुक्तं तत्त्वप्रदीपे 'एवमङ्गीकारे अण्वादिशरीरस्थस्य सतो हस्त्यादि शरीरे प्रवेशे कात्स्नर्यं शरीरव्याप्तिः न स्यात् । हस्त्यादिशरीरस्थस्याण्वादिशरीरप्राप्तौ तच्छरीर एवात्मनः कात्स्नर्यं न स्यात्' इति ।

## तत्त्वसुबोधिनी

नन्वात्मनः शरीरपरिमाणस्य पूर्वत्राप्रकृतत्वात् एवं शब्देन (परामर्शो) युक्त इत्यत आह **जैनमतेति** ॥ सूत्रे एवं आत्माकार्त्स्न्यं चेति चशब्दान्वयं समभिप्रेत्य तत्समुच्चयमाह ॥ **गजादिशरीरस्थस्येति** ॥ **द्रष्टव्यमिति** ॥ भाष्येऽकार्त्स्न्यं इत्यनन्तरमिति शेषः ।

## वाक्यार्थविवरणम्

**शरीरावच्छेदमन्तरेणेति** ॥ परिमाणरूपगुणशून्यस्य द्रव्यस्यैवाभावेनावश्यं परिमाणमङ्गीकार्यम् । तच्च शरीररूपावच्छेदमन्तरेण केवलात्मनि नास्त्येव शरीरभावे केवले आत्मनि इयत्ताविशेषरूपस्य परिमाणस्य सर्वथाऽज्ञानात् । अत आत्मनः परिमाणभावप्रसङ्गपरिहाराय परिमाणोपपत्त्यर्थं शरीररूपे परिमाणावच्छेदकेऽङ्गीकार्ये प्राप्तं तत्परिमाणत्वमिति भावः ॥ **तथा सतीति** ॥ नानाशरीरेषु प्रवेशादित्यर्थः । यथोक्तं 'नानाशरीरेषु प्रवेशादन्यथाभावात्' इति ।

## वाक्यार्थमञ्जरी

**शरीरावच्छेदमिति** ॥ यथा घटगतं परिमाणं घटाकाशे प्रतीयते न तद्व्यतिरेकेण तस्य स्वतः परिमाणमस्ति तथाऽऽत्मनो न स्वतः परिमाणं किन्तु देहपरिमाणमेव तत्र प्रतीयते अतो देहसमानपरिणामवत्वमित्यर्थः । एवं चात्मनः कायपरिमाणत्वे सत्यात्मनः पिपीलिकादेहस्थस्य गजशरीरप्राप्तौ तत्राकार्त्स्न्यं सर्वदेहाव्यापित्वं स्यादित्यर्थः ॥ **जैनमतप्रसङ्गेति** ॥ निरसनीयत्वेन बुद्धिप्रसक्ते जैनमते प्रसक्तमित्यर्थः । **अतिरेकः** आधिक्यम् ।

## सूत्रभाष्यम्

**॥ ॐ न च पर्यायादप्यविरोधो विकारादिभ्यः ॐ ॥ ३५ ॥**

**तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति न मन्तव्यम् । विकारित्वादनित्यत्वप्रसक्तेः ।**

## सत्तर्कदीपावली

**न च गजगर्दभादिदेहेषु वर्तमानस्य जीवस्य तत्तद्देहपरिमाणत्वं क्रमेणेति वाच्यम् । वृद्धिह्रासादिविकारित्वेन देहवदनित्यत्वप्रसक्तेः । तदाह ॥ न चेत्यादिना ॥**

## तत्त्वप्रदीपिका

**न च पर्यायादप्यविरोधो विकारादिभ्यः। विकारत्वादनित्यत्वम्, अनित्यत्वे चानिर्मोक्षः, ततश्च शास्त्रवैफल्यं स्यात्। तत्तद्देहसंमितये सङ्कोचविकासाङ्गीकारे स्वपरिमाणमन्यद्वाच्यम्। स्थावराणामात्मवत्त्वं च स्यात्। न च तदिष्टं दिगम्बराणाम्। सङ्कोचविकसनमपि विकारव्याप्तं चेदुक्तो दोषः।**

## तत्त्वप्रकाशिका

**यदा यच्छरीरं प्राप्नोति तदा तत्परिमाणोऽतो नोक्तदोष इत्याशङ्कां परिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ नेति ॥ न चात्मनस्तत्तच्छरीरस्थस्य तत्तत्परिमाणत्वमिति युक्तम्। तथा सति विकारित्वापत्तेः। ततश्चानित्यत्वप्रसक्तेस्तेन चानिर्मोक्षप्रसङ्गात्तथा च शास्त्रवैय्यर्थ्यापातादिति भावः।**

## गुर्वर्थदीपिका

भाष्यस्थानित्यपदेन नित्यं सदातनं न भवतीति व्युत्पत्त्या प्रागभावप्रध्वंसवत्वं च गृह्यते। नित्यो मोक्षो यस्य नेत्यनिर्मोक्षत्वं गृह्यते। न विद्यते नित्यं फलं च यस्मादिति व्युत्पत्त्या शास्त्रवैय्यर्थ्यं च गृह्यते। तेन च सौत्रादिपदस्य बहुवचनस्य च घटनेति भावेनोक्तं विकारित्वापत्तेरित्यादि। अत्राप्यस्मदुक्तव्युत्पत्त्या जन्मापि ग्राह्यम्। अन्यथा विकारस्य स्वरूपपदेनैवोक्तत्वाद् बहुवचनान्तादिपदस्य घटना न स्यादिति ज्ञेयम्।

## भावबोधः

सौत्रादिपदप्रदर्शनपरानित्यत्वप्रसक्तेरिति भाष्यमुपलक्षणपरमित्यभिप्रेत्य सौत्रबहुवचनाभिप्रायमाह– **तेन चेत्यादिना** ॥ अत्राद्ये– प्रपञ्चस्य सप्तभङ्गित्वनिरासोक्तिः। द्वितीये– जीवस्य शरीरपरिमाणत्वेऽकात्स्न्र्यादिरूपानुपपत्त्युक्तिः। तृतीये– द्वितीयोक्तानुपपत्त्याऽऽक्षेपोद्धारः। चतुर्थे– देहपरिमाणत्वाभावे जीवस्य परिमाणाभावप्रसङ्ग इत्याशङ्कापरिहाराय देहपरिमाणमन्तरेण स्वतः परिमाणानङ्गीकारे बाधकोक्तिरिति सूत्रक्रमः।

## भावदीपः

न च पर्यायादप्यविरोध इति सौत्रशङ्काभागं विवृण्वन्नेवावतारयति ॥ यदा यच्छरीरमिति ॥

(भावदीपः)

भाष्यं व्याचष्टे ॥ **न चात्मन इति** ॥ अन्यथाभावि यद्वस्तु तदनित्यमिति स्थितिरित्यनु-भाष्यानुरोधेन भाष्योक्तौ हेतू परम्परया योजयति ॥ **विकारित्वापत्तेस्ततश्चानित्यत्वप्रसक्तेरिति** ॥ नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयत इति तृतीयभाष्यादौ वक्ष्यमाणरीत्या अल्पतेजस्तैवाल्पं जीवरूपं हि संसृतौ । तथैव सुमहत्तेजः करोति भगवान्महत्' इति बृहद्भाष्ये षष्ठे अल्पजीवरूपं मुक्तौ महच्च करोतीत्युक्त्या जीवस्य नीचोच्चतादिरूपपरिमाणव्यत्ययलक्षणविकारवत्त्वेऽपि नानित्यतास्मत्पक्षे तु चैतन्यादेर्विशेषिणः । लक्षणस्य निवृत्तौ तु स्यान्न तच्चेतने क्वचिदित्यनु-भाष्याद्युक्तदिशा नानित्यतापत्तिरिति भावः । भाष्ये इष्टापत्तिनिरासाय सौत्रबहुवचनाशयं व्यनक्ति ॥ **तेन चानिर्मोक्षेति** ॥ मोक्षाभावप्रसङ्गादित्यर्थः ।

## अभिनवचन्द्रिका

**यदा यच्छरीरमिति** ॥ अत्र गुणसूत्रम् – 'अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात्' इति । अत्रोभयग्रहणं शक्यमकर्तुं मौक्तशरीरनित्यत्वस्यैव सांसारिकशरीरनित्यत्वापादकतया तस्यैव वक्तव्यत्वेन आत्मनित्यत्वस्येव तदनापादकत्वेन तस्यावक्तव्यत्वादिति चेत्, उच्यते अत्र सांसारिकशरीराणां नित्यत्वं द्वेधा आपाद्यते । यदि मौक्तं शरीरं नित्यं तर्हि शरीरत्वा-विशेषादिदमपि शरीरं नित्यं स्यात् । तथा यद्यात्मा नित्यः स्यात्, तर्हि सांसारिकं शरीरं नित्यं स्यात् । अन्यथा एतत्परिमाणनाशेन आत्मनाशापत्त्या मुक्त्यभावप्रसङ्गादिति । अत एव नित्यत्वापादकयोः शरीरात्मनित्यत्वयोः समुच्चयार्थश्चशब्दः ।

**पूर्वपक्षस्तु–** न विष्णोर्जगत्कारणत्वं युक्तं जैनमतविरुद्धत्वात् । तथा हि जैनास्तु सप्तभङ्गि जगदिति वदन्ति, सदित्येकःप्रकारः, असदित्यपरः, सदसदात्मकमिति तृतीयः, सदसद्विलक्षण-मिति चतुर्थः, सत्त्वे सति सद्विलक्षणमिति पञ्चमः, असत्त्वे सति असद्विलक्षणमिति षष्ठः, सदसदात्मकं सदसद्विलक्षणं चेति । तज्जगत् आत्मा दृष्टसाधनैर्भविष्यति । स चात्मा कायपरिमाणः । अत ईश्वरेण कृत्याभावादयुक्तं लक्षणमिति ।

**सिद्धान्तस्तु–** युक्तं विष्णोर्जगत्कारणत्वं जैनमतस्याप्रामाणिकत्वात् । तथा हि यदुच्यते जैनेन सप्तभङ्गि जगदिति तदयुक्तम् । सदसद्द्वयातिरिक्तप्रकारस्य अप्रामाणिकत्वादेकस्मिन्न-सम्भवाच्च । न चैकैकाङ्गीकारे दोषस्य विद्यमानत्वात्तदङ्गीक्रियत इति वाच्यम् । तथात्वे

(अभिनवचन्द्रिका)

दोषभयेन सर्वमपि त्याज्यं स्यात् । यदपि जीवस्य शरीरपरिमाणत्वमुक्तं तत्र प्रष्टव्यं, किं तत् सर्वशरीरचेष्टोपपत्त्यर्थमभ्युपगन्तव्यं, शरीरावच्छेदमन्तरेण आत्मनः परिमाणाभावप्रसङ्गाद्वा । नाद्यः प्राप्तव्यसर्वशरीरेषु सर्वत्र चेष्टानुपपादकत्वात् । न ब्रूमो वयमेकदेहपरिमाण एवात्मेति, किंतु यदा यच्छरीरं प्राप्नोति तदा तत्परिमाण इति । न चैवं सति प्रागुक्तदोषो भवतीति चेत्, न आत्मनो विकारित्वेनानित्यत्वप्रसङ्गात् । द्वितीये किं जीवस्य मोक्षे परिमाणमस्ति, न वेति । न तावत् द्वितीयः आत्मस्वरूपाभावप्रसङ्गात् । न हि परिमाणशून्यं द्रव्यमस्ति । अस्ति चेत् शरीरमन्तरेण परिमाणायोगात् मोक्षेऽपि शरीरमङ्गीकरणीयम् । तत्रापि वक्तव्यं, तच्छरीरं नित्यमनित्यं वा । द्वितीये संसारसमानधर्मतापातः । आद्ये शरीरत्वाविशेषादिदानीन्तनशरीरमपि नित्यं स्यात् । तस्माज्जैनमतस्यानुपपन्नत्वेन अविरोधकत्वाद्युक्तं जगत्कारणत्वलक्षणं हरेरिति सिद्धम् ।

## वाक्यार्थमुक्तावली

सूत्रे चोऽवधारणे । पूर्वसूत्रादात्मन इति बुध्या विवेकेन षष्ठ्यन्तमनुवर्तते । तथा चात्मनः पर्यायादपि क्रमादपि तत्तद्देहपरिमाणत्वाङ्गीकारादपि विरोधो न भवति । कुतः । विकारादिभ्यः इति सूत्रार्थं मत्वाऽनित्यत्वप्राप्तेरिति भाष्यमुपलक्षणं मत्वा व्याचष्टे ॥ **न चात्मन इति** ॥ स्वमते जीवस्य सुखादिभोगकृतोच्चनीचत्वरूपविकारोऽस्ति । तस्य स्वरूपसङ्कोचविकासरूपत्वात् । तथापि चैतन्यादियावद्द्रव्यभाविधर्मनिवृत्तावेवानित्यत्वोपगमात्रानित्यत्वमित्युक्तं सुधायाम् ।

## तत्त्वसुबोधिनी

सौत्रादिपदप्रदर्शनपरमनित्यत्वप्रसक्तेरिति भाष्यमुपलक्षणपरमित्यभिप्रेत्य सौत्रबहुवचनाभिप्रायमाह ॥ **तेन चेति** ॥

## वाक्यार्थविवरणम्

**ततश्चेति** ॥ 'अन्यथा भावि यद्वस्तु तदनित्यमिति स्थितिः । तन्मते तदनित्यत्वपुद्गलस्य निवारितम्' इत्युक्तेरिति भावः ॥ **तेन चेति** ॥ निरधिकारिकत्वेन मोक्षशास्त्रवैय्यर्थ्यमित्यर्थः ।

## वाक्यार्थमञ्जरी

पर्यायादपि क्रमात्तद्देहपरिमाणत्वाङ्गीकारादपि अविरोधो न च भवति कुतः विकारादिभ्यः विकारित्वानित्यत्वादिदोषप्राप्तेरित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ ३६ ॥**

**परिमाणाभावे स्वरूपाभावप्राप्त्याऽन्त्यपरिमाणस्थितेस्तदर्थत्वेन शरीरस्थितेरुभय-नित्यत्वादविशेषेण सर्वशरीरनित्यत्वं स्यात् ।**

## सत्तर्कदीपावली

देहपरिमाणत्वं जीवस्य युक्त्यन्तरेणापि विघटयति ॥ **अन्त्येत्यादिना** ॥ मुक्तजीवस्य देहावच्छिन्नपरिमाणस्य परिमाणावच्छेदकेन चरमदेहेन नित्येन भाव्यम् । परिमाणरहितद्रव्य-स्वरूपाभावात् । न चाणुत्वं महत्वं च जीवस्य वक्तुं शक्यते मुक्तस्य स्याद्वादिना । नित्यत्वे च चरमदेहस्य देहत्वाविशेषात् तद्वत्सर्वदेहस्य नित्यत्वं स्यादित्यर्थः ।

## तत्त्वप्रदीपिका

अन्त्यशरीरपातेऽपि तत्परिमाणस्थितौ प्रागपि न विपरिवर्तेत । तदा शरीरान्तर-सम्बन्धाद्विपरिवृत्तिरिति चेदुपरि च सानुमीयताम् । निवारकाभावात् ।

## तत्त्वप्रकाशिका

द्वितीयं पक्षं प्रतिक्षिपत्सूत्रं पठित्वा व्याचष्टे ॥ **अन्त्येति** ॥ शरीरावच्छेदमन्तरेणात्मनः स्वतः परिमाणाभावात् शरीरपरिमाणत्वं वदन् प्रष्टव्यः । किं मोक्षे जीवस्य परिमाणमस्ति न वेति । न तावद् द्वितीयः । परिमाणाभावे स्वरूपाभावप्राप्तेः । न हि परिमाणशून्यं द्रव्यमस्ति । अतो मोक्षे परिमाणमभ्युपगन्तव्यमेव । किं चातः । तथा सति तस्य शरीरमन्तरेणानुपपत्तेः । मोक्षेऽपि शरीर-मुररीकरणीयं प्रसज्येत । अङ्गीक्रियत एवातो नानिष्टमिति चेत्तर्हीदं भवान्पृष्टो व्याचष्टाम् । तच्छरीरमनित्यं नित्यं वा । नाद्यः । संसारसमानधर्मतापातात् । न द्वितीयः यद्यात्मा देहश्चेत्युभयं

(तत्त्वप्रकाशिका)

**नित्यं तर्हीदानींतनसर्वशरीरैः किमपराद्धम् । तेषामपि नित्यत्वं स्यात् । शरीरत्वाविशेषादिति भावः । तस्माज्जैनमतस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं जगत्कारणत्वलक्षणं विष्णोरिति सिद्धम् ।**

## गुर्वर्थदीपिका

परिमाणाभाव इत्यादिना भाष्येणान्ते विद्यमानं परिमाणम् अन्त्यं द्रव्यस्य सतः सामान्यगुणरूपपरिमाणाभावे स्वरूपस्यैवाभावप्रसङ्गेन अन्त्यावस्थितेरावश्यकत्वात् । देहाभावे स्वतो जीवे जैनैः परिमाणानङ्गीकारेण तदर्थं देहस्याप्यावश्यकत्वात्तयोरुभयोरप्यनित्यत्वे संसारसमानयोगक्षेमत्वापातेन नित्यत्वस्यावश्यकत्वात् । प्राकृतपरिमाणयोर्नित्यत्वे देहत्वाविशेषात्परिमाणत्वाविशेषाच्च सांसारिकदेहपरिमाणयोरपि नित्यत्वं स्यात् । एवं च दुःखहेतुसांसारिकदेहध्वंसासम्भवेन मोक्ष एव न स्यादिति सूत्राक्षरयोजना सूचिता ।

## भावदीपः

**द्वितीयमिति** ।। शरीरावच्छेदमन्तरेणात्मनः परिमाणाभाव इति पक्षमित्यर्थः । भाष्यकारीयाद्यापादनस्यासाङ्गत्यं निरस्यन् भाष्यं व्याचष्टे ।। **शरीरावच्छेदमिति** ।। **तस्मादिति** ।। एकस्मिन्ननेकप्रकारस्यासम्भवादात्मनः कायपरिमाणत्वायोगाच्चेत्यर्थः ।

## वाक्यार्थमुक्तावली

परमतेऽनुपपत्यन्तरसमुच्चयार्थमत्र चशब्दः । ततश्चान्त्ये मोक्षेऽवस्थितेः स्वरूपावस्थितेरित्यर्थः । अवस्थितेः परिमाणावस्थितेरावश्यकत्वात् परिमाणस्थित्यर्थं शरीरावस्थितेर्वाच्यत्वात्तस्य चानित्यत्वे संसारसमानधर्मतापत्या आत्मनः शरीरस्येत्युभयनित्यत्वात् शरीरत्वाविशेषादद्यतनानामपि सर्वशरीराणां नित्यत्वप्रसङ्ग इति सूत्रार्थं मनसि निधाय भाष्याभिप्रायमाह ।। **न तावद्द्वितीय इत्यादिना** ।। अत्राद्ये सङ्क्षेपतो जीवाजीवभेदेन द्विविधतयाङ्गीकृतस्य विश्वस्य सप्तभङ्गित्वनिरासः । द्वितीये तत्प्रभेदजीवस्य कायपरिमाणत्वनिरासाय विकल्प्याद्ये आत्माकात्स्न्यौक्तिः । तृतीये द्वितीयोक्तमाक्षिप्य तदुद्धारः । चतुर्थे कायपरिमाणत्वे द्वितीय विकल्पदूषणमिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

द्वितीयं निराह– **न हीति** ॥ अत्राद्ये सूत्रे प्रपञ्चस्य सप्तभङ्गित्वनिरासः । द्वितीये, जीवे शरीरपरिमाणत्वे कार्त्स्न्यादिरूपानुपपत्त्युक्तिः । तृतीये पूर्वोक्ताक्षेपपरिहारः । चतुर्थे स्वतः परिमाणानङ्गीकारे बाधकोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**तथा सति** । मोक्षे परिमाणेऽभ्युपगते सति ॥ **शरीरम्** ॥ तद्रूपावच्छेदम् ॥ **अनुपपत्तेः** ॥ मोक्षस्थितपरिमाणस्येत्यर्थः ॥ **संसारेति** ॥ मुक्तेरिति शेषः । तथापि शरीरनाशप्राप्त्या संसार-समानधर्मता मुक्तेः स्यादित्यर्थः ।

## वाक्यार्थमञ्जरी

अन्त्यस्य मुक्तिगतात्मपरिमाणस्यावस्थितेस्तदवच्छेदकतया नित्यदेहावश्यम्भावेनोभयस्य मुक्तात्मतद्देहयोर्नित्यत्वादद्यतनदेहानामपि नित्यत्वं स्यात् अविशेषाद्देहत्वाविशेषादित्यर्थः । किञ्चात इति प्रश्नोत्तरमाह ॥ **तथा सतीति** ॥ व्याचष्टां वदतु । इदं किमित्यत आह ॥ **तच्छरीरमिति** ॥

॥ इति **नैकस्मिन्नधिकरणम्** ॥ १० ॥

# ११. अथ पत्युरधिकरणम्

## सूत्रभाष्यम्

पाशुपतपक्षमपाकरोति–

**॥ ॐ पत्युरसामञ्जस्यात् ॐ ॥ ३७ ॥**

'यं कामये तं तमुग्रं कृणोमि ।
तं ब्रह्माणं तमृषिं तं सुमेधाम्' (ऋ.सं.१०-१२५-५)

'अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्तवा उ' (ऋ.सं. १०-१२५-५) ।

'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।
विदे हि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरावत्' (ऋ.सं.७-४०-५) ।

'एको नारायण आसीन्न ब्रह्मा नेशानो नाग्नीषोमौ' (म.ना.उ.१)

इत्यादिश्रुतेः पारतन्त्र्येणासमञ्जसत्वान्न पशुपतिरीश्वरो जगत्कर्ता ।

## सत्तर्कदीपावली

अधुना पशुपतेर्जगत्कर्तृत्वं श्रुतिभिः तावन्निराकरोति । यं कामय इत्यादिना ।

## तत्त्वप्रदीपिका

सकलगुणाश्रयः स्वतन्त्रः सर्वकर्ता पशूनां पाशबन्धमोक्षप्रदः पशुपतिरिति पाशुपताः । तत्पक्षं निराकरोति **॥ ॐ पत्युरसामञ्जस्यात् ॐ ॥** न च पशुपतेरीश्वर इति लोकसिद्धस्य रुद्रस्य सर्वेश्वरत्वं जगत्कर्तृत्वं च । एवं हि श्रुत्यर्थः । 'यं यमुग्रं कामये तं तमुग्रं कृणोमि, यं यं ब्रह्माणं कामये तं तं ब्रह्माणं करोमि' इति । इह च तात्पर्यमधिकमवगम्यते । 'अहमेव स्वयमिदं वदामि, जुष्टं देवेभिरुत मानुषेभिः' इत्यादरणीयत्ववर्णनात् । रुद्राय हन्तवे धनुरातनोमि, रुद्रं हन्तुमित्यर्थः । 'अहये हन्तवा' इतिवत् । 'शरुः' संहारशीलः । शृ हिंसायामिति धातोः । उ एव । अस्य विष्णोरेषस्य मीळ्हुषो देवस्य हविर्भिर्मनसि प्रभरणे हि वयाः सन् रुद्रो रुद्रियं महित्वं विदे । हे अश्विनौ युवामप्यन्नवर्ती वृत्तिं हविर्भिः प्रभरणे च विष्णोः सकाशादेव यासिष्टम् । 'मीढ्वान्'

(तत्त्वप्रदीपिका)

**समर्थः । वया बन्धकः । 'वय बन्धन' इति धातोः । विदे लेभे 'विद लाभ' इति धातोः । हविर्भिः प्रभरणे । कर्मणा ध्यानेन । 'प्रभृतं' प्रभरणम् । इत्थं पारतन्त्र्यादयोगो रुद्रस्य सृष्टौ ।**

## तत्त्वप्रकाशिका

**अधिकरणार्थं दर्शयति ॥ पाशुपतेति ॥** अवैदिकपाषण्डिसमयनिरासानन्तरं वैदिकाभासा निरसनीयाः । ते च पाशुपतशाक्तेयसौरस्कान्दगाणपताः । तेषु पाशुपतस्यैव प्रावल्यात्तन्मतमादौ दूष्यत इति भावः । अत्र हरेर्जगत्कर्तृत्वे पाशुपतमतविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । विष्णुरेवाशेषजगत्कर्तेत्युक्तम् । तस्य पाशुपतमतविरोधेऽदार्ढ्यं स्यादिति तन्निराकर्तव्यमेव । तद्विष्णोर्जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति सन्देहः । समयविप्रतिपत्तिः सन्देहवीजम् । न युक्तमिति पूर्वः पक्षः । पशुपतिः खलु सार्वज्ञादिगुणशाली मायामुपादानीकृत्य हरिहिरण्यगर्भादिजगदुत्पत्त्यादि करोति । तथा श्रुतिस्मृतयोऽस्मिन्नर्थे भवन्ति । तथा च का वार्ता हरेर्जगत्कारणत्वस्यातो न लक्षणसूत्रं युक्तमिति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे **॥ पत्युरिति ॥** न पत्युरज्ञजनप्रसिद्धेश्वरस्य पशुपतेर्जगत्कारणत्वं युक्तम् । पारतन्त्र्यजननमरणादिदोषित्वेन श्रुतत्वात् । न हि सकलकारणस्य दोषित्वं युक्तमिति भावः । ब्रह्मद्विषे चतुर्मुखस्य पञ्चममुखच्छेत्रे । शरवे हिंसनशीलाय । हन्त वै हन्तुमेव न तु भीषणाद्यर्थमिति भावः । **अस्य आ समन्तादीशस्याभीष्टसेचकस्य विष्णोर्देवस्य हविर्भिः प्रभरणे कृते** सत्यहङ्काररूपेण **वन्धको रुद्रो रौद्रं महिमानं यथा लेभे** तथा युवामपि विष्णुपूजयैवान्नवद्धर्तनं प्राप्तवन्तौ स्थ इत्यर्थः ।

## गुर्वर्थदीपिका

'हन्त वै हन्तुमेवेत्यत्र तुमर्थे सेसेन' इत्यादिना सूत्रेण तुमर्थे तवै प्रत्ययस्य विधानात् हन्तवे हन्तुमित्यर्थः । एवेति तुशब्दार्थकथनमिति ज्ञेयम् । आ समन्तादीष्ट इति समासे गुणे च कृते एष इत्यकारान्तः शब्द इति भावेनाह– **ईशस्येति ॥** एतच्छब्दरूपत्वे तु एतस्येत्येव स्यात् न तु एषस्येति अत उक्त एवार्थः । 'मिह सेचन' इति धातोः अभीष्टसेचकस्येत्युक्तं, तृतीयोऽतिशय इति वचनात्तकारस्य थकारः । प्रकर्षेण भृथं प्रभृथमिति भावेनोक्तं **प्रभरण इति ॥** अन्नावन्नाहुतिदानेन पूजायां बहुनैवेद्यसमर्पणेन वोदरपूर्तौ कृतायां सत्यामित्यर्थः । 'वय बन्धन' इति धातोः वयाः बन्धक इत्युक्तम् । अहङ्कारेणेति तु योग्यतया लभ्यते । रुद्रस्याहङ्कारतत्वाभिमानित्वात् । अभिनवैश्वर्यप्राप्तिसूचनार्थं रुद्रियमित्यस्यार्थकथनं रौद्रमिति । समुद्रियं लवण-

(गुर्वर्थदीपिका)
मितिवद्रुद्रियमिति पदं ज्ञेयम् । रुद्रपदवन्तो रुद्रिणस्तैः प्राप्यमिति वा रुद्रियम् । 'विद लाभे' इति धातोः विद इत्यस्यार्थकथनं लेभ इति । तद्वदेव पूर्ववर्णाभ्यासाभावोऽपि वैदिकत्वादिति ज्ञेयम् । 'इरेत्यन्ननाम' इति श्रुतेः इरावदित्यस्य अन्नवदित्यर्थकथनम् । 'वृतु वर्तने' इति धातोः सर्पिःपदवत्, सकारान्तनपुंसकं च वर्तिःपदमिति भावेनोक्तं वर्तनमिति । 'या प्रापणे' इति धातोः अयासिष्टमिति लुङि मध्यमपुरुषद्विवचनम् । तस्य 'बहुलं छन्दस्यमाङ्योगेऽपि' इति सूत्राद्डागमलोपे सति यासिष्टमित्येव रूपमिति भावेनोक्तं **प्राप्तवन्तौ स्थ इति** ॥ विष्णुपूजयेत्यस्य तु दृष्टान्तबलात्प्राप्तिः ।

## भावबोधः

अनन्तरसङ्गतिमाह– **अवैदिकपाषण्डीति** ॥ प्राथम्ये निमित्तमाह– **तेषु पाशुपतस्यैव प्राबल्यादिति** ॥ शक्तिसूर्यगणपत्यादीतरदेवापेक्षया पशुपतेः वेदे त्वापाततः पुराणादौ मोहनार्थं जगत्सृष्ट्यादिकर्तृत्वसर्वोत्तमत्वादेरुक्तत्वेन तदवलम्बनेन प्रवृत्तस्यास्य मतस्यात्यन्तवेदविरोधितया प्राबल्यादित्यर्थः ॥ **युक्तमिति** ॥ अत्र विष्णोर्जगत्कारणत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं पाशुपतसमयः किं श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं पाशुपतैः परिकल्पितं पशुपतेर्जगत्कारणत्वमुपपन्नमुत दोषित्वाशरीरत्वनिरधिष्ठानत्वादियुक्तिविरुद्धत्वेनानुपपन्नमिति । तदर्थं मायादिनित्यकारणकलापस्य पशुपतेर्जगत्सृष्ट्याद्यर्थं शरीराधिष्ठानादिरूपत्वं सम्भवत्युत नेति । तदर्थं तस्य शरीररूपत्वे तदुपादानत्यागनिमित्तकोत्पत्तिविनाशसुखदुःखादिदोषा न प्राप्नुवन्ति उत प्राप्नुवन्तीति । तदर्थं पाशुपतकर्तृत्वपक्षोक्तदोषा विष्णुकर्तृत्वपक्षेऽपि प्राप्नुवन्त्युत न प्राप्नुवन्तीति । तदर्थं विष्णोर्निर्दोषत्वादौ पशुपतेर्दोषित्वादौ प्रमाणं नास्त्युतास्तीति ॥ **पञ्चममुखच्छेत्र इति** ॥ सुधायां तु विभक्तिवचनव्यत्ययेन ब्रह्मद्विषां दैत्यानां शरवे हिंसकायेति व्याख्यातम् । एष शब्दस्य आईश इति विग्रहः । शकारस्य व्यत्ययेन षकार इत्यभिप्रेत्याह– **आ समन्तादीशस्येति** । सुधायाम् इषु इच्छायामित्यतो घञ्प्रत्यये 'पुगन्तलघूपधस्य च' इति गुणे निष्पन्नस्यास्येच्छारूपस्येति व्याख्यानं कृतम् ।

## भावदीपः

सङ्गतिमाह ॥ **अवैदिकेति** ॥ अत्र गाणपतेति पाठः साधुः । गणपतिशब्दस्य पत्युत्तर-

(भावदीपः)

पदत्वेऽपि दित्यादित्यपत्युत्तरपदाण्ण्य इति न भवति । अश्वपत्यादिभ्यश्च' इति अणूप्रत्ययेनैव भाव्यत्वात् । चतुर्थाद्यपादे अश्वपत्यादिभ्यश्च' इति सूत्रे मञ्जर्यां गाणपत्य इत्यपशब्द इत्युक्तत्वाच्च ॥ **आदाविति** ॥ अन्यमतोपलक्षणत्वेन मुखतो दूष्यत इत्यर्थः । यद्वा शक्तिमतापेक्षया आदावित्युक्तिः । सर्वज्ञत्वादिकैः सर्वैर्गुणैर्युक्तं सदाशिवमित्यनुभाष्यदिशाऽऽह ॥ **पशुपतिरित्यादि** ॥ स्रष्टृत्वादिघटनायोक्तम् ॥ **सार्वज्ञादीति** ॥ करणवच्चेदित्येतदुपयोगायाह ॥ **मायामिति** ॥ **तथा श्रुतिस्मृतय इति** ॥ सर्वासां पाशुपतोक्तदिशा तत्परत्वादिति भावः । पूर्वसूत्रात्रत्रनुवृत्तिं मत्वा सूत्रभाष्ययोः प्रतिज्ञाहेत्वंशौ व्यनक्ति ॥ **न पत्युरिति** ॥ व्याहतिनिरासायाह ॥ **अज्ञजनेति** ॥ श्रौतपदानि व्याचष्टे ॥ **ब्रह्मद्विष इति** ॥ सुधायां तु व्यत्ययमाश्रित्य ब्रह्मद्विषां शरवे हिंसकायेति व्याख्यातम् । दक्षप्रजापतिद्विष इति वेति चन्द्रिका ॥ **हिंसनेति** ॥ शृहिंसायामिति धातोः ॥ **हन्तुमेवेति** ॥ तुमर्थे 'सेसेनसेऽसेनूक्सेकसेनध्यैअध्यैनूकध्यैकध्यैन् शध्यैशध्यैन्तवैतवेङ्तवेन'' इति तवै प्रत्ययः । एष शब्दस्य आईश इति विग्रहः । शकारस्य व्यत्ययेन षकार इति भावेनाह ॥ **आसमन्तादीशस्येति** ॥ इच्छारूपस्येति सुधायां व्याख्यातम् । **मीळ्हुषो अभीष्टसेचकस्य** । मिह सेचने । **प्रभृथे** प्रभरणे ॥ **वन्धक इति** ॥ वयबन्धन इति धातोः । विदे लेभे विदिर्लाभे । **इरावत्** अन्नवत् । **यासिष्टम्** अयासिष्टम् । छन्दस्यमाङ्योगेऽपीत्यडभावः । लुङ्मध्यमपुरुषद्विवचनम् । प्राप्तवन्तौ स्थ इति ।

## अभिनवचन्द्रिका

**हन्तुमेवेति** ॥ ननु उशब्दस्य एवेति व्याख्यानमनुपपन्नम् । हननस्याकृतत्वात्, भीषणस्यैव कृतत्वात् । ततश्च हन्तुमेवेति प्रतिज्ञाय हननाकरणे भीषणमात्रकरणे च अम्भ्रण्या इच्छा मोघा स्यादिति चेत्, उच्यते न ब्रूमो वयं 'हन्त वा उ' इति हननसङ्कल्प इति येनोक्तदोषः स्यात् । किं नाम यथा क्रुद्धः पिता पुत्रं म्रियस्वेत्याक्षेपपूर्वकं दुर्गुणपरित्यागाभिप्रायेण वदति, तथा अम्भ्रण्यपि रुद्रस्याऽतिभीषणतया तद्वधमनभिप्रेत्यैव हन्तुमेव धनुरातनोमि न तु भीषणार्थमिति वदतीत्यङ्गीकारात् । 'एषस्य' इति पदं व्याचष्टे – **आसमन्तादीशस्येति** ॥ आ ईशस्येति स्थिते गुणे शकारस्य छान्दसे षत्वे च एषस्येति रूपं भवति । **मील्हुषो** इत्यस्य व्याख्यानम्– **अभीष्टसेचकस्येति** ॥

## वाक्यार्थमुक्तावली

अनन्तरसङ्गतिमाह ॥ **अवैदिकेति** ॥ भाष्यटीकयोः पाशुपतशब्देन पशुपतिसर्वोत्तमत्त्ववादित्वात् शैवपाशुपतकालामुखमहाव्रतसंज्ञकानां चतुर्णां ग्रहणम् ॥ **प्राबल्यादिति** ॥ बहुश्रुतिपुराणसंवादित्वेनास्य मतस्यातिविरोधित्वादित्यर्थः । बहुजनपरिगृहीतत्वाद्वा ॥ **आदाविति** ॥ अन्यमतोपलक्षणत्वे मुखतो दूष्यत इत्यर्थः । यद्वा शक्तिमतापेक्षयादावित्युक्तिः । न च शास्त्रयोनिसूत्रे पाशुपतस्य निरस्तत्वात् गतार्थत्वमिति वाच्यम् । तत्र पाशुपतागमानुमानावष्टम्भेन पूर्वपक्षः । अत्र तु समयिनैव श्रुतिस्मृत्यवष्टम्भेनेति पूर्वपक्षप्रमाणभेदात् । सिद्धान्तेऽप्यसामञ्जस्यादिबहुप्रमाणोपन्यासाच्च । पौनरुक्त्यभावाच्च । न च समन्वयसूत्रे श्रुत्याद्यवष्टम्भेन पूर्वपक्षे तेषामुपक्रमादितात्पर्यलिङ्गैः भगवत्परत्वस्योक्तत्वादत्र शङ्कैव नोदेतीति वाच्यम् । तत्र वेदार्थनिर्णायकत्वं पाशुपतादिव्याख्यानस्य वा वेदापातप्रतीतेर्वा न सम्भवति किन्तूपक्रमादिलिङ्गानामित्येवोक्तत्वेन वैदिकवाक्यविशेषमुपादाय समयिना स्वप्रक्रियोपपादनपूर्वकं शिवसर्वोत्तमत्त्वस्याप्रतिपादितत्वात् । सिद्धान्तिनापि प्रक्रिया विघटनपूर्वकं श्रुत्यादेरसावकाशितृत्वादिति ॥ **युक्तमिति** ॥ पाशुपतसमयविरोधादयुक्तम् उत युक्तमिति चिन्ता । तदर्थं तत्प्रक्रिया प्रमाणवत्युत नेति । स्रष्टत्वादिघटनायाह ॥ **सार्वज्ञादीति** ॥ यद्वा यत्पूर्णगुणत्वं प्रधानलक्षणं विष्णोः प्रथमभूतोक्तं तस्य शिवैकनिष्ठत्वं वक्तुमिदम् । द्वितीयसूत्रोक्तमाक्षेप्तुं हरिहरहिरण्यगर्भेत्यादि । तदनन्यत्वमित्यत्राभिप्रेतप्रकृतिमहदाद्युपादानकत्वाक्षेपाय **मायामिति** ॥ एतेन तन्मते तत्त्वं त्रिविधम् । **पशुपतिपाशा इति** ॥ पशवो हरिहिरण्यगर्भादयः । तेषां पतिर्महादेवः । पाशो मायेत्युक्तं भवति ॥ **श्रुतिस्मृतय इति** ॥ नन्वन्तर्नये देवतावाचकशब्दानां द्युभ्वादिनये विशिष्य रुद्रादिशब्दानां 'रुजं द्रावयते यस्मात् रुद्रस्तस्माज्जनार्दन' इत्यादिना समन्वयस्योक्तत्वात् कथं श्रुत्याद्यवष्टम्भेन पूर्वपक्ष इति चेन्न, 'एको रुद्रो न द्वितीयोऽवतस्थे' 'ज्ञात्वा शिवम्' इत्यादावुपक्रमादिकं रुद्रपक्षे एवास्तीति दुराग्रहेण प्रत्यवतिष्ठमानं प्रतीह शिवस्य जगत्कर्तृत्वसामर्थ्यविघटने तत्कारणत्वादिप्रतिपादकश्रुतीनां योग्यतादिविरहेण प्रतीतार्थेऽप्रामाण्योपपादनपूर्वकमुक्तसमन्वय स्थिरीकरणादित्यलम् । व्याहतिनिरासायाह ॥ **अञ्जनेति** ॥ **पञ्चममुखेति** ॥ सुधायां तु ब्रह्मद्विषां दैत्यानां हिंसकायेति । दक्षद्विष इति चन्द्रिकायाम् ॥ **न तु भीषणार्थमिति** ॥ प्रलये दुर्गया हननादिति भावः । एषशब्दस्य आईश इति विग्रहः । शकारस्य षकार इत्यभिप्रेत्याह ॥

(वाक्यार्थमुक्तावली)

**आसमन्तादिति** ।। इच्छारूपस्येति सुधायाम् । इरावदित्यस्यान्नवदिति । वर्तिरित्यस्य वर्तनमिति ।

## तत्त्वसुबोधिनी

अत्रानन्तरसङ्गतिमाह ।। **अवैदिकेति** ।। प्राथम्ये हेतुमाह ।। **तेपु पाशुपतस्यैवेति** ।। शक्तिसूर्यगणपत्यादीतरदेवापेक्षया पशुपतेः वेदपुराणादौ मोहनार्थञ्जगत्सृष्ट्यादिकर्तृत्वसर्वोत्तमत्वादेरुक्तत्वेन तदवलम्बनेन प्रवृत्तस्य मतस्यात्यन्तवेदविरोधितया प्राबल्यादित्यर्थः । पञ्चममुखछेत्र इति सुधायां तु विभक्तिव्यत्ययेन ब्रह्मद्विषां दैत्यानां शरवे हिंसकायेति व्याख्यातम् । दक्षप्रजापतिद्विष इति वा द्रष्टव्यम् । एषशब्दस्य आईश इति विग्रहः । शकारस्य व्यत्ययेन षकार इत्यभिप्रेत्याह ।। **आसमन्तादीशस्येति** ।। सुधायां तु इषु इच्छायामित्यतः घञ्प्रत्यये 'पुगन्तलघूपधस्यच' इति गुणेति निष्पन्नस्यास्येच्छारूपस्येति व्याख्यानम् ।

## वाक्यार्थविवरणम्

**श्रुतिस्मृतय इति** ।। 'जनितोत विष्णोः' इत्यादिश्रुतीत्यर्थः । अत्र सोमः पवत इति पूर्ववाक्यात् सोम इत्यनुवर्तते । उमया सहितः सोमो रुद्र इत्यर्थः । ईश्वरत्वमेव हि पतित्वम् एवं च यदा तस्येश्वरत्वापरपर्यायं पतित्वं प्रसिद्धं तदा जगत्कारणत्वं प्राप्तमेवेति तन्निषेधो न युक्त इत्यत आह ।। **अज्ञजनप्रसिद्धेति** ।। तथा चाज्ञजनप्रसिद्धत्वैव तस्येश्वरत्वं न वास्तवमिति । युक्तः तस्य जगत्कारणत्वनिषेध इत्यर्थः । असामञ्जस्याद्दोषत्वादित्यभिप्रेत्य व्याख्याति ।। **पारतन्त्र्येति** ।। आदिपदेन प्रलये अभावपराधीनपदप्राप्त्यादेर्ग्रहणम् । आ ईश इति विग्रहः । आईशित्यनयोः एकाररूपं गुणं शकारस्य षत्वं निर्वचनत्वादित्यभिप्रेत्य व्याचष्टे ।। **आ समन्तादिति** ।। **बन्धक इति** ।। वय् बन्धन इति धातोरिति ध्येयम् । बन्धकत्वमुपपादयितुमहंकारेणेत्युक्तम् । तदभिमानित्वादिति भावः । 'इरावत् वर्ति' इत्यस्य व्याख्यानमन्नवदिति । इरेत्यन्नसंज्ञेत्यन्यत्रोक्तत्वादिति ध्येयम् । 'अत्र यं कामये', 'अस्य दोषस्य' इत्याभ्यां पराधीनपदप्राप्तिः । 'अहम्' इत्यनेन मृतिः । एक इत्यनेन प्रलये अभावो जनिश्च प्रतीयत इति द्रष्टव्यम् । इत्यादिग्रहणेन 'एक' इति श्रुतिविशेषे 'स मुनिर्भूत्वा समचिन्तयत् । तत एते व्यजायन्त विश्वो हिरण्यगर्भोऽग्निर्यमो वरुणो रुद्रेन्द्रा' इति रुद्रस्य जनिः प्रतीयते । सर्वाभिरप्येताभिः पारतन्त्र्यं प्रतीयत इति ध्येयम् ।

## वाक्यार्थमञ्जरी

**प्रावल्यादिति** ॥ शक्तिसूर्यगणपत्यादीतरदेवापेक्षया पशुपतेर्वेदपुराणादौ मोहनार्थं जगत्सृष्ट्यादिकर्तृत्वसर्वोत्तमत्वादेरुक्तत्वेन तदवलम्बेन प्रवृत्तपाशुपतमतस्यात्यन्तास्मन्मतविरोधितया प्राबल्यादित्यर्थः ॥ **मायां प्रकृतिम्** ॥ पत्युः पशुपतेः न जगत्कारणत्वं कुतः असामञ्जस्यात् पारतन्त्र्यादिदोषवत्वेन तस्यासमीचीनत्वादित्यर्थः । एषशब्दस्य आईश इति विग्रहः गुणः शकारस्य व्यत्ययेन षकार इत्यभिप्रेत्याह ॥ **आसमन्तादीशस्येति** ॥ मीळ्हुषो इत्यस्यार्थः **अभीष्टसेचकस्येति** ॥ वया इत्यस्य बन्धक इति । वयबन्धन इति धातोः । कथं बन्धकत्वमत उक्तम् ॥ **अहंकाररूपेणेति** ॥ तस्य तदभिमानित्वादिति भावः । इराशब्दार्थोऽन्नमिति ।

## सूत्रभाष्यम्

**॥ ॐ सम्बन्धानुपपत्तेश्च ॐ ॥ ३८ ॥**

**अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत् ।**

## सत्तर्कदीपावली

**श्रुतिभिर्निराकृतं युक्तिभिश्च निराकरोति । सम्बन्धानुपपत्तेरित्यादिना । वैशेषिकादिवत्पशुपतेरीश्वरस्याशरीरत्वेन अङ्गीकृतत्वात् । प्राक् सृष्टेस्तु भौतिकाभावेन लीलागृहीतदेहासम्भवात् ।**

## तत्त्वप्रदीपिका

**सशरीरस्य हि कुलालादेः कर्तृत्वेन सम्बन्धो दृष्टः ।**

## तत्त्वप्रकाशिका

युक्त्यन्तरेण पशुपतेर्जगत्कारणत्वं पराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **सम्बन्धेति** ॥ जगता सम्बन्धमात्रमशरीरस्यापि सम्भवतीत्युक्तः कोऽसौ सम्बन्ध इत्यतः कार्यकर्तृभाव इति भावेनोक्तम् ॥ **कर्तृत्वेनेति** ॥ इदमुक्तं भवति । रुद्रो न कर्ता अशरीरत्वान्मृतपुरुषवदिति ।

## भावदीपः

सूत्रे चशब्दादाह ॥ **युक्त्यन्तरेणेति** ॥ पारतन्त्र्यादियुक्त्यपेक्षयेति भावः । किं तद्युक्त्यन्तर-मित्यतो निर्धारयति ॥ **इदमुक्तमिति** ॥ **मृतपुरुषवदिति** ॥ त्यक्तदेहजीववत् ।

## अभिनवचन्द्रिका

**अशरीरत्वादिति** ॥ नन्वशरीरत्वमसिद्धं तेन तथानङ्गीकारात्, भवद्भिरपि पूर्वसूत्रे जननमरणादीनामभिधानेन शिवस्य शरीराङ्गीकारात् इति चेत्, न ब्रूमो वयं सदातनमशरीरत्वं हेतुरिति, येनोक्तदोषः स्यात् । किं नाम आदिकालीनं, न च तदप्यसिद्धं श्रुत्योत्पत्तिश्रवणेन उत्पत्तेः प्राक् अशरीरत्वस्याङ्गीकरणीयत्वात् ।

## वाक्यार्थमुक्तावली

अयुक्तः कोऽसौ सम्बन्ध इति । कोऽसावयुक्तः सम्बन्ध इत्यन्वयः । सूत्रे पत्युरित्यस्ति ।

## वाक्यार्थविवरणम्

**सम्भवतीति** ॥ अशरीरस्यापि गगनादेर्जगता सम्बन्धदर्शनादिति भावः ॥ **कर्मेति** ॥ कार्यकर्तृत्वलक्षणः सम्बन्धोऽशरीरस्य न युज्यत इत्यर्थः ।

## वाक्यार्थमञ्जरी

पत्युरशरीरत्वाज्जगता कार्यकर्तृभावसम्बन्धानुपपत्तेश्च न पत्युः कारणत्वमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ ३९ ॥**

**पृथिव्याद्यधिष्ठाने स्थितो हि कुलालादिः कार्यं करोति । न चास्य तदस्ति ।**

## सत्तर्कदीपावली

अधिष्ठानासम्भवाच्च नासौ जगत्कर्ता । न हि देहरहितस्य अधिष्ठानरहितस्य कर्तृत्वं क्वचिद्दृष्टम् ।

## तत्त्वप्रकाशिका

हेत्वन्तरेण पशुपतेर्जगत्कर्तृत्वं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **अधिष्ठानेति** ॥ न रुद्रः कर्ता निरधिष्ठानत्वात् । यः कर्ता स साधिष्ठानो यथा कुलालादिरित्यर्थः ।

## भावदीपः

हेत्वन्तरमित्युक्तमवधारयति ॥ **न रुद्र इति** ॥ अन्वयव्याप्तौ दृष्टान्ताभावादाह ॥ **यः कर्तेति** ॥

## वाक्यार्थमुक्तावली

पृथिव्याद्यधिष्ठानानामितःपरमुत्पाद्यत्वादिति भावः ।

## वाक्यार्थविवरणम्

**शरीरेति** ॥ शरीराधिष्ठानयोरित्यर्थः । कुलालादयः कर्तारो दण्डादिकारकचक्रं साक्षात् प्रयत्नेनाधिष्ठातुमनीशानास्तदधिष्ठानाय साक्षात्प्रयत्नाधिष्ठेयं शरीरमपेक्षन्ते । अस्य तु विश्वकारकचक्रमेव साक्षात्प्रयत्नाधिष्ठेयं शरीरवत् स्यात् । ततः किमपरेण प्रेर्यशरीरेणेति । अत एव भगवान् विश्वमूर्तिरिति गीयते ।

## वाक्यार्थमञ्जरी

पृथिव्याद्यधिष्ठानानुपपत्तेश्च न पत्युःकारणत्वमित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ करणवच्चेन्न भोगादिभ्यः ॐ ॥ ४० ॥**

इदमेव जगत्तस्य करणवदधिष्ठानादिरूपं नित्यस्यापि कस्यचिद्भावायुज्यत इति चेन्न भोगादिप्राप्तेः । उत्पत्तिविनाशौ सुखदुःखभोगाश्च प्राप्यन्ते तद्गताः ।

## सत्तर्कदीपावली

यदि भौतिकाभावेऽपि तदुपादानस्य प्रधानस्य प्रलये विद्यमानत्वात्तदेव पशुपतेर्देहभूतमाधारभूतं भविष्यतीत्युच्यते । तर्हि पशुपतेर्जडदेहधारित्वेन देवदत्तवज्जन्ममरणसुखदुःखाद्यनुभवितृत्वं स्यात् ।

## तत्त्वप्रदीपिका

इदमेव जगत्तस्य शरीरेन्द्रियवदधिष्ठानरूपं शरीररूपं वा । नित्यस्यापि कस्यचिदुपादानस्यान्यस्य वा भावायुज्यत इति चेन्न । भोगादिप्राप्तेः । अस्य पदस्य वर्णनारूपमुत्तरभाष्यम् । विकारात्मकोपादानशरीरत्वात्तदुत्पत्त्यादयस्तस्य प्राप्यन्ते ।

## तत्त्वप्रकाशिका

उक्तमाक्षिप्य समादधत्सूत्रं पठित्वाऽऽक्षेपांशं तावद् व्याचष्टे ॥ **करणवदिति** ॥ न पशुपतेः शरीराधिष्ठानाभावेन कर्तृत्वानुपपत्तिः । कारकग्रामस्यैव साक्षात्प्रयत्नाधिष्ठेयतयाऽस्मदादिशरीर-समानत्वेन शरीरान्तरापेक्षाभावात् । साक्षात्प्रयत्नाधिष्ठेयविषयेऽपि शरीरान्तरापेक्षायां तत्रापि तत्प्रसङ्गात्तस्यैव चाधिष्ठानत्वमुपपद्यते । न च वक्तव्यं प्रलये सर्वस्यापि विनाशान्न कारकसमूह-स्याप्यधिष्ठानत्वादि युज्यत इति । प्रलयेऽपि मायादेः कारककलापस्य नित्यस्य विद्यमानत्वात् । अन्यथा कार्यजन्मासम्भवादिति भावः । परिहारांशं व्याचष्टे ॥ **नेति** ॥ तदेव स्फुटीकरोति ॥ **उत्पत्तीति** ॥ यदि कारकव्रातस्यैव साक्षात्प्रयत्नाधिष्ठेयतया शरीरादिवदेव कर्तृत्वोपयोगिता तर्हि तदुपादानहाननिमित्तोत्पत्तिमरणे च पशुपतेः स्याताम् । साक्षात्प्रयत्नाधिष्ठेयशरीरोपादानहा-नयोस्तद्दर्शनात् । तथा च सुखदुःखभोगप्राप्तिः स्यात्ततश्च न कर्तृत्वमिति भावः ।

## गुर्वर्थदीपिका

शरीरान्तरापेक्षाभावात् इत्यत्र कुलालहस्तादिकं च मृद्ग्रहणादिप्रयत्नायैवापेक्षते । स च प्रयत्नः चेतनस्य स्वत एव चेत् कारकचक्रमेव साक्षात्प्रयत्नाधिष्ठेयत्वात्, पशुपतेः करणवत् शरीरवत् सतः किं शरीरान्तरेणेति भावः । तथा च सुखदुःखभोगप्राप्तिरित्यत्र हस्तपादादि-मच्छरीराभावान्न दुःखमिति परेणाऽऽशास्यम् । हस्तपादादिरहिताभिमन्यमानभूभारेणापि भूदेव-तायाः दुःखदर्शनादिति भावः ।

## भावदीपः

पूर्वसूत्रद्वयोक्तदोषाक्षेपसमाधिपरत्वमस्य व्यञ्जयन् भाष्यं व्याचष्टे ॥ **नेति** ॥ भाष्यस्थजग-च्छब्दार्थमाह ॥ **कारकग्रामस्येति** ॥ सूत्रे करणशब्दः शरीरपरः । सृष्टौ शरीरस्य सहकारि-त्वादिति भावेनाह ॥ **अस्मदादिशरीरेति** ॥ वतिप्रत्ययार्थः ॥ **समानत्वेनेति** ॥ **तस्यैव चेति** ॥ कारकव्रातस्येत्यर्थः ।

## अभिनवचन्द्रिका

**तदुपादानहाननिमित्तोत्पत्तिमरण इति** ॥ अनेन 'तद्गता' इति भाष्यं तत्प्रयुक्ता इति व्याख्यातम् ।

**पूर्वपक्षस्तु–** न विष्णोर्जगत्कारणत्वं युक्तं पाशुपतसमयविरुद्धत्वात् । तथा हि पशुपतिःखलु सार्वज्ञ्यादिगुणशाली मायामुपादानीकृत्य हरिहिरण्यगर्भादिजगदुत्पत्त्यादि करोति । श्रुतिस्मृतयश्च अस्मिन्नर्थे भवन्ति । अतो लक्षणसूत्रमयुक्तमिति ।

**सिद्धान्तस्तु–** युक्तं विष्णोर्जगत्कारणत्वं, पाशुपतसमयस्याप्रामाणिकत्वात् । तथा हि न पशुपतिर्जगत्कर्ता पारतन्त्र्यजननमरणादिदोषदुष्टत्वात् । न चासिद्धो हेतुः, 'यं कामये तं तमुग्रं कृणोमि' इत्यादिश्रुतिसिद्धत्वात् । किं च आदिसृष्टौ तस्याशरीरत्वेन कर्तृत्वायोगः । न ह्यशरीरः कर्ता दृश्यते येनासौ तथा स्यात् । अपि च पशुपतेः अधिष्ठानं नोपलभामहे । तेन चासौ न कर्ता । ननु प्रलयकाले नित्यतया विद्यमानं प्रकृत्यादिकं साक्षात्प्रयत्नाधिष्ठेयतया शरीरादिवत् । न च साक्षात्प्रयत्नाधिष्ठेयप्रेरणाय शरीरापेक्षा । शरीरप्रेरणार्थमपि शरीरान्तरापेक्षा-प्रसङ्गात् । अतः शरीरतुल्यत्वे शरीरोपादानपरित्यागाभ्यां जननमरणवत् तदुपादानपरित्यागा-भ्यामपि जननमरणप्रसङ्गात् । ततश्च सुखदुःखभोगप्राप्तिः । अपि च पशुपतिः कर्तेति वदन् प्रष्टव्यः, किमसौ शरीरी उत नेति । आद्ये विनाशप्रसङ्गः । द्वितीये ज्ञानाभावः । न चैते दोषा विष्णुपक्षेऽपि । 'बुद्धिमान्मनोमान्' इत्यादिश्रुत्या ज्ञानाभावस्य परिहृतत्वात्, 'यदात्मको भगवान् तदात्मिका व्यक्तिः' इत्यादिना अन्तवत्त्वादिदोषाणां परिहृतत्वात् । अनयैव दिशा शाक्तेयसौरस्कान्दगाणपतानां समया निराकृता वेदितव्याः । अतः पाशुपतसमयस्यानुपपन्नत्वेन अविरोधकत्वाद्युक्तं लक्षणसूत्रमिति सिद्धम् ।

## वाक्यार्थमुक्तावली

जगच्छब्दार्थमाह ॥ **कारकग्रामस्येति** ॥ करणवदित्यस्याधिष्ठानादिरूपमिति भाष्यम् । तत्र करणपदेनोत्पत्तावन्तरङ्गतयोपयोगिशरीरमधिष्ठानं चोच्यते । अधिष्ठानादीत्यादिपदेन शरीर-मुच्यते। सम्बन्धानुपपत्तेरिति शरीरस्य प्रथमप्राप्तत्वेऽप्यधिष्ठानस्य सन्निहितत्वात् भाष्ये स्वपदेनाधिष्ठानोपादानम् । अत एवानुव्याख्याने देहादिवदित्युक्तम् । अधिष्ठानादिरूपमिति अधिष्ठानादे रूपमिव रूपं यस्येति विग्रहमभिप्रेत्य वतिप्रत्ययार्थं शरीरसाम्यं तावत्कारक-ग्रामस्योपपादयति ॥ **साक्षादिति** ॥ **प्रयत्नाधिष्ठेयतया** प्रयत्नप्रेर्यतया **तत्रापि** देहविषयेऽपि **तत्प्रसङ्गात्** देहापेक्षाप्रसङ्गादित्यर्थः । अधिष्ठानसाम्यमुपपादयति ॥ **तस्यैवेति** ॥ **अधिष्ठानत्वं** पृथिव्याद्यधिष्ठानतुल्यत्वम् ॥ **तदेव स्फुटीकरोतीति** ॥ आदिशब्दार्थकथनपूर्वकमित्यर्थः । फलतः प्राधान्येन भोगस्य सूत्रे मुखत उपादानेऽपि साधनतः प्राधान्येन स्वपदवर्णनपरभाष्ये आदि-शब्दोपात्तस्योत्पत्त्यादेः प्रथममुपपादनम् । भाष्ये सुखदुःखभोगा इति सुखदुःखव्यक्तिबाहुल्यात् बहुवचनम् । तद्वता इत्यस्य तन्निमित्तका इत्यर्थं तच्छब्दकथनपूर्वकमाह ॥ **तदुपादानेति** ॥ सूत्रे पत्युरित्यस्ति । सम्बन्धानुपपत्तेरित्यत्र प्रतियोगितया प्रकृतजगदन्तर्गतमायादिजगदत्रान्वेति । अत एव भाष्ये इदमेव जगदित्युक्तम् । ततश्च पशुपतेर्मायादिकारकमेव शरीरवदधिष्ठानवदिति चेन्न । भोगादिभ्यः सुखदुःखादिभोगानां तत्कारणोत्पत्तिविनाशयोः भोगकार्यस्य सर्वकर्तृत्वा-भावस्य च प्राप्तेरिति सूत्रार्थः । उपपादनं टीकायां स्पष्टम् ।

## वाक्यार्थविवरणम्

न चादिसृष्टेः प्राक् कारकाभावः यस्य साक्षात्प्रयत्नाधिष्ठेयता स्यादिति वाच्यम् । प्रकृत्यादेरनादेः सत्त्वात् । अन्यथा सृष्ट्यनुपपत्तिरित्याह ॥ **कारकग्रामस्यैवेत्यादिना** ॥ अधिष्ठेयं प्रैर्यम् । शरीरसमानत्वेन तस्यैव प्रकृत्यादिकारकग्रामस्यैवाधिष्ठानत्वमुपपद्यत इत्यन्वयः ॥ **शरीरान्तरिति** ॥ कारकग्रामभिन्नशरीरान्तरित्यर्थः । तमेवोपपादयति ॥ **साक्षादिति** ॥ साक्षात् प्रयत्नाधिष्ठेयं कारकग्रामादितद्विषयेऽपीत्यर्थः ॥ **तत्रापि** ॥ तस्मिन् । साक्षात्प्रयत्नाधिष्ठेय-शरीरविषयेऽपि ॥ **तत्प्रसङ्गात्** ॥ शरीरान्तरापेक्षाप्रसङ्गादित्यर्थः । तथा च अनवस्थेति भावः । समूहः । उपादानहान्योः सतोरित्यर्थः । ताभ्यामिति यावत् ॥ **तद्दर्शनात्** ॥ उत्पत्यादेर्दर्शनात् ।

## वाक्यार्थमञ्जरी

कारकजातमेव तस्य करणवद्देह इवातो न सम्बन्धानुपपत्तिरिति चेन्न भोगादिभ्यः दुःखाद्यनुभवरूपभोगोत्पत्तिमरणाख्यदोषेभ्य इत्यर्थः । कारकग्रामस्य कारणसमुदायस्याग्रहादिव्यावर्तनाय साक्षादित्युक्तम् । तत्रापि अस्मदादिशरीरेऽपि असम्भवात्पुनः सृष्टिकाले उपादानहानयोरिति सतिसप्तमी ।

## सूत्रभाष्यम्

**॥ ॐ अन्तवत्त्वमसर्वज्ञता वा ॐ ॥ ४१ ॥**

देहवत्वेऽन्तवत्वम् । अन्यथा ज्ञानाभावः । शरीरिण एव हि ज्ञानोत्पत्तिर्दृष्टा । विष्णोस्तु श्रुत्यैव सर्वे विरोधाः परिहृताः ।

'यदात्मको भगवांस्तदात्मिका व्यक्तिः ।
किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मकः शक्त्यात्मक' इति ।

'बुद्धिमनोऽङ्गप्रत्यङ्गवत्तां भगवतो लक्षयामहे । बुद्धिमान्मनोवानङ्गप्रत्यङ्गवान्' इति ।

'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमोऽक्षरः' इत्यादिकया ।

## सत्तर्कदीपावली

यदि मरणादिभयाद्देहो नास्तीत्युच्यते तर्हि घटादिवत्सर्वज्ञत्वं न स्यात् । देहिन एव घटादिज्ञानं दृष्टं नादेहिनः इत्यर्थः । सम्बन्धानुपपत्तेरित्यादिनोक्तदोषः जगत्कर्तृविष्णोः किं न स्यादिति शङ्कां परिहरति ॥ **विष्णोरित्यादिना** ॥ अप्राकृतदेहत्वेन विष्णोर्देहप्रयुक्तदोषासम्भव इत्यर्थः ।

## तत्त्वप्रदीपिका

सद्देहो निर्दोषदेहः । ज्ञानज्ञानः नाज्ञानमिश्रज्ञानः । सुखसुखः न दुःखमिश्रितसुख इत्यर्थः । आदिशब्दात् 'स्वे महिम्नि' 'किं स्विदासीदधिष्ठानम्' 'आत्मेश्वरम्' इत्यादयो द्रष्टव्याः ।

(तत्त्वप्रदीपिका)

'रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ।
ब्रह्मा मामाश्रितो नित्यं नाहं कञ्चिदुपाश्रितः ॥' इति भगवद्वचनम् ।

'बलमिन्द्रस्य गिरिशो गिरिशस्य वलं मरुत् ।
वलं तस्य हरिः साक्षान्न हरेर्बलमन्यतः' ॥ इति भारते ।

'अवयव्यवयवानां तु गुणानां गुणिनस्तथा ।
शक्तिशक्तिमतोश्चैव क्रियायास्तद्वतस्तथा ॥
स्वरूपांशांशिनोश्चैव नित्याभेदो जनार्दने ।
जीवस्वरूपेषु तथा तथैव प्रकृतावपि ॥
चिद्रूपायामतोऽनंशा अगुणा अक्रिया इति ।
हीना अवयवैश्चेति कथ्यन्ते तेऽत्यभेदतः ॥
पृथग्गुणाद्यभावाच्च नित्यत्वादुभयोरपि ।
विष्णोरचिन्त्यशक्तेश्च सर्वं सम्भवति ध्रुवम् ॥
क्रियादेरपि नित्यत्वं व्यक्तयव्यक्तिविशेषणम् ।
भावाभावविशेषेण व्यवहारश्च तादृशः ॥
विशेष्यस्य विशिष्टस्याप्यभेदस्तद्वदेव तु ।
सर्वं चाचिन्त्यशक्तित्वाद्युज्यते परमेश्वरे ॥
तच्छक्त्यैव तु जीवेषु चिद्रूपप्रकृतावपि ।
भेदाभेदौ तदन्यत्र ह्युभयोरपि दर्शनात् ।
कार्यकारणयोश्चापि निमित्तं कारणं विना' इति ब्रह्मतर्के ॥

तस्मान्न रुद्रः सर्वकर्तेति सिद्धम् । अनयैव न्यायेन स्कान्दादिमतान्यपि निराकृतानि प्रधानमल्ल-निबर्हणन्यायानुसारेण ।

## तत्त्वप्रकाशिका

उक्तपक्षावेव विकल्पभङ्ग्या दोषान्तरेण दूषयत्सूत्रं पठित्वा व्याचष्टे ॥ **अन्तवत्त्वमिति** ॥ पशुपतिः कर्तेति वदन् प्रष्टव्यो जायते किमसौ शरीरी न वेति । शरीरी चेत्परिच्छिन्नः स्याद्यज्ञदत्तवत् । तथा च न जगत्कर्तृत्वम् । यदि न शरीरी तर्हि तस्य ज्ञानमेव न स्यात् कुतः सार्वज्ञमिति च न जगत्कारणत्व-मिति भावः । शरीराभावे कुतो ज्ञानाभाव इत्यतो व्यतिरेकव्याप्तिं दर्शयति ॥ **शरीरिण एवेति** ॥

(तत्त्वप्रकाशिका)

**न च वक्तव्यमिच्छागृहीतविग्रहत्वान्नान्तवत्त्वादीति । अशरीरस्येच्छायोगात् । अनेन शरीरानपेक्षं ज्ञानं नित्यत्वादिति परास्तम् । ननु विष्णावप्येते दोषाः प्रसरन्त्येवेति कर्तृत्वानुपपत्तिरित्याशङ्कां सूत्रकृता निरस्तामपि पुनः प्रमाणविशेषैः परिहरति ॥ विष्णोस्त्विति ॥ बुद्धीति श्रुत्येश्वरस्य शरीरित्वाभिधात्र्या ज्ञानाभावादिदोषाः परिहृताः । 'यदात्मकः' इत्यादिकया तु तद्देहस्य ज्ञानाद्यात्मकभगवत्स्वरूपाभिधात्र्याऽन्तवत्त्वादिदोषाः परिहृताः । एवं पाशुपतमतनिरासन्यायेनान्येऽपि चत्वारः समया निराकृता वेदितव्याः । तस्मात्पाशुपतसमयस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं लक्षणसूत्रमिति सिद्धम् ।**

## गुर्वर्थदीपिका

उक्तपक्षावेवेत्यत्र उक्तपक्षौ पारिभाषिकशरीराधिष्ठानपक्षावित्यर्थः । शरीरी चेदित्यत्रास्मदादिवत्साक्षाच्छरीरवांश्चेदित्यर्थः । तथा च न जगत्कर्तृत्वमित्युपलक्षणम्, अस्मदादिवन्नाशवानपि स्यादित्यपि द्रष्टव्यम् । यदि न शरीरीत्यत्र शरीरी साक्षाच्छरीरवान्नेत्यर्थः । व्यज्यतेऽनया अन्तस्थः पुरुष इति व्यक्तिर्देहः । सूत्रकृता निरस्तमित्यस्य विकरणत्वान्नेति चेत्तदुक्तमिति सूत्रेण निरस्तमित्यर्थः । तद्देहस्येत्युपलक्षणं ज्ञानसुखयोरित्यपि द्रष्टव्यम् ।

## भावबोधः

**उक्तपक्षावेवेति** ॥ 'सम्बन्धानुपपत्तेः करणवच्चेत्' इत्युक्तशरीराभावतद्वत्त्वपक्षावित्यर्थः ॥ **अनेनेति** ॥ शरीराभावे ज्ञानस्यैवायोगेनेत्यर्थः ॥ **सूत्रकृता निरस्तमिति** ॥ 'आत्मनि चैवं विचित्राश्च हि सर्वोपेता च तद्दर्शनाद्, विकरणत्वान्नेति चेत्तदुक्तम्' इत्यादावित्यर्थः ॥ **प्रमाणविशेषैरिति** ॥ श्रुतिरूपैरित्यर्थः । तथा चैते सम्बन्धानुपपत्त्यादयो दोषाः शिवस्यानुमानेन शैवागमैश्च कारणत्वपक्षे आपद्यन्ते । विष्णोर्जगत्कर्तृत्वस्य तु वेदेनैवोक्तत्वात् । वेदेनैव सर्वविरोधपरिहारात् । शिवस्य तु न श्रुतिभिर्जगत्कारणत्वं, 'रुद्रो वाव लोकाधारः' इत्यादीनां विष्णावेव समन्वयस्योक्तत्वादिति भावः ।

अत्राद्ये– पशुपतेर्जगत्कर्तृत्वाभावे पारतन्त्र्यादिदोषित्वरूपहेतूक्तिः । द्वितीये– तत्रैवाशरीरस्य कार्यकर्तृभावलक्षणसम्बन्धानुपपत्तिरूपान्तरहेतूक्तिः । तृतीये– ततोऽपि बहिरङ्गाधिष्ठानानुपपत्तिलक्षणहेत्वन्तरोक्तिः । चतुर्थे– द्वितीयतृतीयसूत्रोक्तहेत्वोरसिद्धिमाशङ्क्य तत्परिहारः । पञ्चमे– द्वितीयचतुर्थोक्तशरीराभावपक्षे दोषान्तरोक्तिरिति सूत्रक्रमः ।

## भावदीपः

**उक्तपक्षावेवेति** ॥ सम्बन्धानुपपत्तिसूत्रोक्तशरीराभावपक्षं करणवच्चेदित्युक्तशरीरवत्त्वपक्षं चेत्यर्थः ॥ **शरीरी न वेति** ॥ भावरूपत्वात्सूत्रे पूर्वं शरीरत्वपक्षदोषोक्तिरिति सूचितम् । पूर्वेणापौनरुक्त्यायांतवत्त्वशब्दार्थमाह ॥ **परिच्छिन्न इति** ॥ न च शरीरित्वेऽपि न्यायमते जीवात्मन इवापरिच्छिन्नत्वमिति वाच्यम् । तस्यैव दूष्यत्वात् । तन्मतेऽपि शरीरावच्छिन्नस्यैव कर्तृत्वेन तस्य परिच्छिन्नत्वात् । तादृशस्य सार्वदेशिकसर्वकर्तृत्वायोग इत्यर्थः । जीवाणुत्वमते देशान्तरकार्यस्य जीवकर्तृत्वाङ्गीकारेऽपि अदृष्टद्वारैव न साक्षादित्यभ्युपगमात् । इति च न जगत्कारणत्वमितीति शब्दो हेत्वर्थः । न केवलं सम्बन्धानुपपत्तिभोगादिप्राप्तिभ्याम् । किन्तु असार्वज्ञं परिच्छिन्नत्वरूपहेतुबलाच्चेत्यर्थः ॥ **अनेनेति** ॥ शरीरिण एव ज्ञानदर्शनभाषणेनेत्यर्थः ॥ **सूत्रकृतेति** ॥ 'आत्मनि चैवं विचित्राश्च हि' । 'सर्वोपेता च तद्दर्शनात्' । 'विकरणत्वान्नेति चेत्तदुक्तम्' इत्यादिसूत्रेष्विति भावः । तद्दर्शनादित्याद्युक्त्या प्रमाणैरपि परिहृतत्वादाह ॥ **प्रमाणविशेषैरिति** ॥ स्कन्दसूर्यगणेशादिमतानि न्यायतोऽमुतः । निराकृतान्यशेषेण सिद्धा तस्याविशेषत इत्यनुभाष्योक्तमाह ॥ **एवमिति** ॥ **तस्मादिति** ॥ पारतन्त्र्यादिना शिवकर्तृत्वानुपपत्तेरित्यर्थः ।

## वाक्यार्थमुक्तावली

ननु शरीराभावे सम्बन्धायोगः शरीवच्चेत् भोगादिप्राप्तिरिति शरीरवत्वतदभावपक्षयोर्दूषितत्वात् । किमिह पुनरुच्यत इत्यत आह ॥ **उक्तेति** ॥ सूत्रे पत्युरित्यस्ति । करणवच्चेत्यनुवर्तते । तच्चात्र मतुबन्तं भावप्रधानं च विवक्षितम् । पत्युः करणवत्वं शरीरवत्वं चेदसर्वज्ञता । वाशब्दो व्यवस्थितविकल्प इति भावेन भाष्याभिप्रायमाह ॥ **पशुपतिरित्यादिना** ॥ **परिच्छिन्नत्वमिति** ॥ देशतः परिच्छिन्नत्वमित्यर्थः । विनाशस्य भोगादिभ्य इत्यनेनैव लब्धत्वात् तत्र तदुक्तौ पौनरुक्त्यापत्तेरिति भावः ॥ **न कर्तृत्वमिति** ॥ सार्वदेशिककर्तृत्वेनेत्यर्थः । ज्ञानपदमिच्छोपलक्षणमिति भावेनाशङ्क्य निषेधति ॥ **न च वक्तव्यमिति** ॥ **अनेनेति** ॥ शरीराभावे ज्ञानस्यैवायोगेनेत्यर्थः ॥ **सूत्रकृतेति** ॥ विकरणत्वान्नेति चेत्तदुक्तम् । 'आत्मनि चैवं' 'सर्वोपेता च' इत्यादिना प्रमाणोदाहरणपूर्वकं सूत्रकृता निरस्तमपीत्यर्थः । अत्राद्ये शिवस्य क्रियास्वातन्त्र्यरूपकर्तृत्वान्तरङ्गविरोधिपारतन्त्र्यादिदोषस्य, ततोऽपि बहिरङ्गशरीराद्यभावस्य द्वितीये,

(वाक्यार्थमुक्तावली)
तृतीये ततोऽपि बहिरङ्गस्याधिष्ठानाभावस्योक्तिः । चतुर्थे सूत्रद्वयोक्तमाक्षिप्य समाधानम् । पञ्चमे चतुर्थोक्तदेहत्वपक्षे सम्बन्धेत्युक्ते तदभावपक्षे च दूषणान्तरोक्तिरिति सूत्रक्रमः ।

## तत्त्वसुबोधिनी

**उक्तपक्षावेवेति** ॥ सम्बन्धानुपपत्तेः करणवच्चेत्युक्तशरीराभावतद्वत्त्वपक्षावित्यर्थः ॥ **अनेनेति** ॥ शरीराभावे ज्ञानस्यैवायोगेनेत्यर्थः ॥ **सूत्रकृता निरस्तमिति** ॥ आत्मनि चैवं विचित्राश्चाहि सर्वोपेता च तद्दर्शनात् विकरणत्वान्नेति चेदुक्तमित्यादावित्यर्थः । प्रमाणविशेषैः श्रुतिरूपैरित्यर्थः । तथा चैते सम्बन्धानुपपत्त्यादयो दोषाः शिवस्य अनुमानेन शैवागमैश्च कारणत्वपक्षे आपद्यन्ते । विष्णोर्जगत्कारणत्वस्य तु वेदेनैवोक्तत्वात् वेदेनैव सर्वविरोधपरिहारात् शिवस्य तु न श्रुतिभिः जगत्कारणत्वम् । 'रुद्रो वाव लोकाधारः' इत्यादीनां तु विष्णावेव समन्वयस्योक्तत्वात् इति भावः । अत्राद्ये सूत्रे पशुपतेः कारणत्वाभावे पारतन्त्र्यादिरूपहेतूक्तिः । द्वितीये तत्रैव सम्बन्धानुपपत्यादिरूपहेतूक्तिः । तृतीये अधिष्ठानानुपपत्तिरूपहेतूक्तिः । चतुर्थे पूर्वोक्तहेत्वोरसिद्धिपरिहारः । पञ्चमे शरीराभावपक्षे दोषान्तरोक्तिरिति सूत्रक्रमः ।

## वाक्यार्थविवरणम्

**जननेति** ॥ परिच्छिन्नस्य सार्वत्रिकजगज्जननेत्यर्थः ॥ **कुत इति** ॥ सामान्याभावे विशेषस्याप्ययोगादिति भावः । तथा च 'ईश्वरो न जगत्कर्ता ज्ञानशून्यत्वात् । तदपि शरीर-शून्यत्वात्' इत्यनुमानं द्रष्टव्यम् । अन्तवत्वशब्दार्थः परिच्छिन्न इति । कालतः परिच्छिन्नो नित्य इत्यर्थः ॥ **व्यतिरेकेति** ॥ ज्ञानवान् यः स शरीरी दृष्ट इति व्यतिरेकव्याप्तिप्रदर्शने कर्तव्ये वन्हिमत्वादेव धूमवत्वमितिवत् शरीरिण एव ज्ञानोत्पत्तिर्दृष्टेत्युक्ते तथैव व्याप्तिरुक्ता भवतीति ज्ञेयम् ॥ **नान्तवत्त्वादिति** ॥ इच्छागृहीतविग्रहस्य तदहेतुत्वादिति भावः ॥ **अथोऽगादिति** ॥ तथा चेच्छागृहीतेत्युक्तमिति भावः । अनेन इच्छाऽयोगादिति दूषणेन ॥ **नित्यत्वादिति** ॥ अयं भावः । ज्ञानजन्मन्येव शरीरस्योपयोगः । ज्ञानस्येन्द्रियजन्यत्वात् । इन्द्रियाणां च शरीरसंयोग-नियमात् । 'नित्यज्ञानश्च भगवांच्छिव' इति किं तस्य शरीरेणेति शरीराभावेन ज्ञानाभावसाधने अप्रयोजकतेति । एतदप्यनेनैवेच्छाऽयोगप्रसङ्गेनैव निरस्तम् तथा हि । प्रयत्नजन्मन्येवेच्छोपयोगि-नीति नित्यप्रयत्नस्य भगवतः' शिवस्येच्छाऽपि नाङ्गीकार्या स्यात् । उपलक्षणमेतत् । इच्छो-

(वाक्यार्थविवरणम्)

त्यत्तावेव ज्ञानस्योपयुक्तत्वात् । नित्येच्छस्य ज्ञानमपि न स्यादिति दूषणं सुधोक्तरीत्या द्रष्टव्यम् ॥ **निरस्तमिति** ॥ 'विकरणत्वान्नेति चेत्' इत्यादिभिः सूत्रैः । प्रमाणविशेषैः । श्रुतिरूपैः भाष्ये बुद्धीतिश्रुतौ अंगं देह प्रत्यङ्गानि हस्तादीनि लक्षयामहे ज्ञापयामः । कथं बुद्धिमानित्यादि । यदात्मक इत्यत्र व्यक्तिर्देहः ॥ **सद्देहः** ॥ इत्यत्र तु सद्देहो जन्मादिदोषरहितदेहः ॥ **सुखगन्धः** ॥ सुखकरगन्धः सुगन्ध इति यावत् । ज्ञानभा न तु तैजसभाः । ज्ञानज्ञान इत्यादेरतिशयितज्ञान इत्यादिरर्थः । 'स्कन्दसूर्यगणेशादिमतानि न्यायतोऽमुतः । निराकृतान्यशेषेण सिद्धान्तस्या-विशेषतः' इत्यनुव्याख्यानं मनसि निधायाह ॥ **एवमिति** ॥ चत्वारः ॥ शाक्तेयसौर-स्कान्दगाणपत्याः ।

## वाक्यार्थमञ्जरी

**उक्तपक्षावेवेति** ॥ सम्बन्धानुपपत्तेः करणवच्चेदित्युक्तशरीराभावतद्वत्वपक्षावित्यर्थः । शिवस्य देहवत्वे अन्तवत्वं परिछिन्नत्वमशरीरत्वे सर्वज्ञताभावः स्यादित्यर्थः ॥ **इच्छाग्रहीतेति** ॥ यज्ञदत्तस्तु नैवमिति भावः ॥ **अनेनेति** ॥ शरीराभावे ज्ञानस्यैवायोगेनेत्यर्थः । ज्ञा[illegible]म् ईशस्य ॥ **सूत्रकृता निरस्तामिति** ॥ 'आत्मनि चैवं विचित्राश्च हि' । ॐ सर्वोपेता च तद्दर्शनात् ॐ । 'विकरणत्वान्नेति चेत्तदुक्तम्' इत्यादावित्यर्थः । **प्रमाणविशेषैरिति** । श्रुतिरूपैरित्यर्थः । श्रुतौ अङ्गं देहः प्रत्यङ्गं करादिलक्षयामहे जानीमः ॥ **देहस्येति** ॥ व्यक्तिशब्दोक्तस्येत्यर्थः ।

॥ इति पत्युरधिकरणम् ॥ ११ ॥

# १२. अथ उत्पत्त्यधिकरणम्

## सूत्रभाष्यम्

शक्तिपक्षं दूषयति–

**॥ ॐ उत्पत्त्यसम्भवात् ॐ ॥ ४२ ॥**

न हि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ।

## सत्तर्कदीपावली

पाशुपतपक्षनिराकरणन्यायेन स्कन्दसूर्यगणेशादिमतान्यपि निराकृतानि वेदितव्यानि । शाक्ते पक्षे तु दोषविशेषसम्भवात् तं दूषयति ॥ **शक्तिपक्ष इत्यादिना** ॥ त्रिपुरी भैरवीत्यादिनाभिधेया शक्तिः केवला शक्तिः न ब्रह्मादिजगदुत्पादिका पुरुषरहितत्वात् । न हि पुरुषाननुगृहीतस्त्रीभ्य उत्पत्तिर्दृश्यते ।

## तत्त्वप्रदीपिका

उक्तन्यायेन निरस्तेऽपि शाक्तेयसमयेऽधिकदूषणविवक्षया पुनरारम्भः । शक्तिस्सर्वज्ञा सर्वेश्वरी सर्वकर्त्री, सदाशिवप्रधानाः सर्वे तदधीना इति शाक्तेया मन्यन्ते । तेऽपि महान्तो मध्यमाः क्षुद्रा इति त्रिविधाः । तत्राऽद्ये पक्षे शक्तिरीषदपि पुरुषाकाङ्क्षिणी नेष्यते । अपरे तदङ्गभूतो दयितः शिवः । चरमे स एव सर्वज्ञादिगुणवान् सदृशो रमणः । तत्र प्रथमतः प्रथमं प्रतिक्षिपति । उत्पत्त्यसम्भवात् । पुरुषेभ्यः स्त्रीपुरुषेभ्यो वोत्पत्तिर्दृष्टा, न स्त्रीभ्य एव । अङ्गादीनामपि ह्यौचथ्यादिभ्यः स्पर्शनाद्यनुग्रहादेवोत्पत्तिः ।

## तत्त्वप्रकाशिका

अधिकरणार्थं दर्शयति ॥ **शक्तीति** ॥ पूर्वन्यायेन निरस्तमपि शक्तिमतमसाधारणदोषाविष्कारेण पुनर्दूषयतीति भावः । अत्र विष्णोर्जगत्कारणत्वे शक्तिमतविरोधपरिहारादस्ति शास्त्रादिसङ्गतिः । विष्णोर्जगत्कारणत्वमुक्तम् । तत्र शाक्तेयमतविरोधेऽनुपपत्तिशङ्का स्यादतस्तन्निरसनीयमेव । विष्णोर्जगत्कारणत्वं विषयः । युक्तमयुक्तं वेति सन्देहः । समयविवादः सन्देहबीजम् । न युक्तमिति पूर्वः पक्षः । शक्तिरेव खलु सार्वज्ञादिगुणशालिनी सकलजगज्जननी

(तत्त्वप्रकाशिका)

**श्रुतिस्मृतीतिहासपुराणेषु पठ्यते अतो न हरेर्जगत्कारणत्वलक्षणं सम्भवतीति प्राप्ते सिद्धान्तयत्सूत्रमुपन्यस्य व्याचष्टे ॥ उत्पत्तीति ॥ न शक्तेरेव जगत्कर्तृत्वं युक्तम् । पुरुषाननुगृहीतत्त्वात् । न हि पुरुषाननुगृहीतस्त्रीमात्रात् क्वचिदुत्पत्तिर्दृष्टेति भावः ।**

## गुर्वर्थदीपिका

असाधारणदोषेत्यत्र पुरुषरहितस्त्रीमात्रस्य उत्पादकत्वासम्भवाख्यदोषाविष्कारेणेत्यर्थः । अयं च दोषो न पुरुषेषु स्त्रीरहितपुरुषमात्रादपि द्रोणादीनामुत्पत्तिदर्शनादिति भावेनोक्तम् **असाधारणेति** ।

## भावबोधः

'निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथक् दूष्यते' इत्यनुव्याख्यानानुसारेणानन्तरसङ्गतिमाह– **पूर्वन्यायेनेति ॥ युक्तमिति ॥** अत्र विष्णोर्जगत्कारणत्वं किं न युक्तमुत युक्तमिति चिन्ता । तदर्थं शक्तिमतं श्रुत्युक्ततदपबाधनक्षमं भवत्युत नेति । तदर्थं तत्परिकल्पितं शक्तेः सर्वकर्तृत्वं सम्भवत्युत पुरुषाननुगृहीतस्त्रीभ्य अपत्योत्पत्त्यदर्शनेन न सम्भवतीति । अनुग्राहकपुरुषाङ्गीकारपक्षेऽपि तस्योत्पत्त्युपयोगिज्ञानादिसाधनं किमस्त्युत नास्तीति । तस्योत्पत्त्युप युक्तज्ञानाद्यङ्गीकारपक्षेऽपि शक्तेः कर्तृत्वाङ्गीकारे प्रयोजनं किमस्त्युत पाशुपतपक्ष इवानुग्राहक पुरुषस्यैव कर्तृत्वसम्भवान्नास्ति प्रयोजनमिति । 'तन्नोपपद्यते, तत उत्पत्त्यसम्भवात्' इत्यनुव्याख्यानेऽध्याहृतशक्तिमताऽयुक्तत्वे 'उत्पत्त्यसम्भवात्' इति सौत्रो हेतुरित्युक्तम् । तत्रासिद्धिपरिहारकतया भाष्यं व्याचष्टे– **न शक्तेरेवेति** ॥ व्याप्तिप्रदर्शनपरत्वेन भाष्यं व्याचष्टे– **न हीति** ॥ उत्पत्तिरपत्योत्पत्तिरित्यर्थः ।

## भावदीपः

पूर्वमेवास्य मतस्य तुल्यन्यायतया निराकृतत्वोक्तेरपौनरुक्त्याय निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथक् । दूष्यत इत्यनुभाष्योक्तं भाष्यस्य भावमाह ॥ **पूर्वेति** ॥ दशमस्कन्धेऽपि 'पाषण्डवामशैवाद्यैर्वेदमार्गाः कलौ यथा' इति वाममतस्य पृथगुक्तेरिति भावः । महावाममताद्यसूत्रनिरस्यमनुवदति ॥ **शक्तिरेवेति** ॥ **श्रुतिस्मृतीति** ॥ सर्वेषामपि तत्परत्वादिति भावः । अनुक्तोपालम्भभ्रान्तिनिरासाय महावाममतनिरासकत्वं स्फोरयन्ननुवृत्त्या साध्यसाधने आह

(भावदीपः)

॥ **न शक्तेरेवेति** ॥ पुरुषाननुगृहीतत्वेऽपि कुतो न कर्तृत्वमित्यतः सौत्रो हेतुरिति भावेन तदुपपादकं भाष्यमनुवदति ॥ **न हीति** ॥

## अभिनवचन्द्रिका

**पुरुषाननुगृहीतस्त्रीमात्रादिति** ॥ ननु पुरुषाननुगृहीतस्त्रीमात्रादुत्पत्तिः प्रमाणदृष्टा न भवति, आहोस्वित् प्रत्यक्षदृष्टा भवति । नाद्यः 'अजामेकां लोहितशुक्लकृष्णाम्' इति परोदाहृतबह्वागमसद्भावात् । न द्वितीयः प्रमाणविशेषाभावस्य प्रमेयाभावासम्पादकत्वात् । मा हि भूत् प्रत्यक्षाभावेन अतीन्द्रियार्थविलोपः, मा च भूत् आगमाभावेन ऐन्द्रियिकार्थविलोपः । किं च पुरुषाननुगृहीताभ्योऽपि स्त्रीभ्यः घटाद्युत्पत्तिर्दृश्यत इत्यसिद्धिः । अपत्योत्पत्तिर्न दृश्यत इति चेत्, मा दर्शि, न ह्यस्माभिः लौकिकस्त्रीवत् गर्भिणी भूत्वा जगज्जनयित्री शक्तिरित्यभ्युपगम्यते । येन पुरुषानुग्रहोऽपेक्षितः स्यात् । किं नाम सङ्कल्पादेव जगज्जनयित्री शक्तिरभ्युपगम्यते । अन्यथा पुरुषान्महदादिसृष्टिरदृष्टेति ईश्वरादपि जगत्सृष्टिर्न स्यात् । अथ तत्र प्रमाणबलादभ्युपेयं तर्हि इदमप्यभ्युपेयम्, विशेषादिति चेत्, मैवम् । शक्तिः सङ्कल्पमात्रेण जगज्जनयित्री इत्यस्यार्थस्य प्रमाणादृष्टत्वादित्याशयात् । यच्च परेणोदाह्रियते न तत् स्वातन्त्र्येण जगत्कर्तृत्वे मानम्, अपि तु ईश्वराधीनतया जगत्कर्तृत्वे मानमिति बोध्यम् ।

**पूर्वपक्षस्तु**– न विष्णोर्जगत्कारणत्वं युक्तम् । शाक्तेयमतविरुद्धत्वात् । शक्तिरेव खलु सार्वज्ञादिगुणशालिनी सकलजगज्जननी श्रुतिस्मृतीतिहासपुराणेषु पठ्यते । अतो लक्षणं हरेर्न युक्तमिति ।

**सिद्धान्तस्तु**– युक्तमेव हरेर्जगत्कारणत्वं शाक्तेयमतस्याप्रामाणिकत्वेनाविरोधकत्वात् । तथा हि यदुच्यते शक्तिरेव पुरुषाननुगृहीता जगत्कारणमिति न तद्युक्तं, शक्तिरेव पुरुषाननुगृहीता जगत्कारणमित्यस्यार्थस्य प्रमाणादृष्टत्वात् । परोदाहृतानां 'अजामेकाम्' इत्यादिप्रमाणानां तु ईश्वराधीनतयैव जगत्कारणत्वाभिधायित्वेनातत्परत्वात् । अपरे तु शाक्ता मन्यन्ते सार्वज्ञादिगुणविधुरः सदाशिवः शक्त्यनुग्राहकोऽस्ति । तदनुगृहीतायाः शक्तेः जगत्कारणत्वे 'अजामेकाम्' इत्यादिश्रुतेः प्रमाणत्वात् । सदाशिवानुगृहीता शक्तिः, जगत्कारणमिति । तन्न सदाशिवस्य ज्ञानादिवैधुर्येणाऽनुग्राहकत्वायोगात् । ये तु शाक्ताः सदाशिवस्य सार्वज्ञादिकं मन्यन्ते तेषां

(अभिनवचन्द्रिका)

शक्तिकारणत्वाङ्गीकारवैयर्थ्यात् तन्मतं पाशुपतमतेऽन्तर्भवतीति तन्निरासेनैव निरस्तम् । सर्वश्रुतिस्मृतिविरुद्धत्वाच्च सर्वमपि शाक्तेयमतमयुक्तमेवेति, युक्तं विष्णोर्जगज्जन्मादिकारणत्वलक्षणमिति सिद्धम् ।

॥ इति श्रीमत्सत्यनिधितीर्थश्रीचरणाराधकश्रीमत्सत्यनाथयतिविरचितायां तत्त्वप्रकाशिकाऽभिनवचन्द्रिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

## वाक्यार्थमुक्तावली

निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथग्दूष्यत इत्यनुव्याख्यानानुसारेण गतार्थतां परिहरन्ननन्तरसङ्गतिमाह ॥ **पूर्वन्यायेनेति** ॥ अत एव दशमस्कन्धे 'पाषण्डवामशैवाद्यैः वेदमार्गाः कलौ यथा' इति वाममतस्य पृथगुक्तिरिति ज्ञेयम् ॥ **युक्तमिति** ॥ शाक्तेयमतविरोधादयुक्तमुतयुक्तमिति चिन्ता । तदर्थं तत्प्रक्रिया प्रमाणवत्युत नेति । शाक्तेयास्त्रिविधा मताः । वामा मध्यमवामा अणुवामाश्चेति । तत्राद्यं सूत्रनिरस्यम् । महावाममतमनुवदति ॥ **शक्तेरेवेति** ॥ पुरुषानुग्रहरहिता शक्तिरेव सदाशिवाद्यखिलजगज्जननी । अतः सर्वज्ञादिगुणशालिनीत्यर्थः । तस्यास्सदाशिवाद्याश्च जायन्त इत्यनुव्याख्यानोक्तेरिति सूत्रे शक्तिमतमयुक्तम् । अध्याहृतसाध्येनोत्पत्त्यसम्भवादिति पञ्चम्यान्वयः । शक्तेः जगदुत्पत्त्यसम्भवादित्यर्थः । तदुक्तमनुव्याख्याने 'तन्नोपपद्यते । तत उत्पत्त्यसम्भवादिति ॥ ननूत्पत्त्यसम्भवस्त्वसिद्ध इत्यतो हेतुं साधयति ॥ **न शक्तेरेवेति** ॥ तत्र व्याप्तिप्रदर्शनपरतया भाष्यं योजयति ॥ **न हीति** ॥ एतेन पुरुषाननुगृहीतस्त्रीभ्यः कुत्राप्युत्पत्त्यसम्भवात् व्यभिचाराभावात् शक्तेरपि केवलाया उत्पत्त्यसम्भवात् तन्मतमयुक्तमिति सूत्रार्थ उक्तो भवति । ननु केवलायाः स्त्रियो घटाद्युत्पत्तिदर्शनात् व्यभिचार इति चेदपत्योत्पत्तेरिह विवक्षितत्वात् । उक्तं च सुधायाम् 'सृष्टिशब्देनापत्योत्पत्तिर्विवक्षिता न सृष्टिमात्रम् । केवलाभ्योऽपि स्त्रीभ्यो दर्शनात्' इति । एतेनैतदपि निरस्तम् । शक्तेः लौकिकस्त्रीवत् गर्भिणी भूत्वापत्योत्पादकत्वानङ्गीकारात् सङ्कल्पमात्रेणापत्योत्पादकत्वात् पुरुषानुपयोग इति पुरुषानुग्रहाभावे स्त्रीणामपत्योत्पादकत्वस्य कयापि विधयानुपपत्तेरिति ।

## तत्त्वसुबोधिनी

निराकृतौ विशेषस्य भावशक्तिमतं पृथक् दूष्यते इत्यनुव्याख्यानं मनसि निधायानन्तर-सङ्गतिमाह ॥ **पूर्वन्यायेनेति** ॥ उत्पत्त्यसम्भवादिति सौत्रहेतोरसिद्धिपरिहारकतया भाष्यं व्याचष्टे **न शक्तेरेव इति** ॥ व्याप्तिप्रदर्शनपरतया भाष्यं व्याचष्टे ॥ **न हीति** ॥ उत्पत्तिः अपत्योत्पत्तिः ।

## वाक्यार्थविवरणम्

ननु न दूषणीयोऽयं पक्षः । स्कन्दादिमतवदस्यापि पूर्वन्यायेन निरस्तत्वात् । यथा हि पत्युरित्यस्य स्थाने स्कन्दस्येत्यादि पठित्वा असामञ्जस्ये तदनुसारिण्यः श्रुतय उदाह्रियन्ते । सम्बन्धानुपपत्त्यादिकं तद्विषयं योज्यते, तथा शक्तावपि वक्तुं शक्यमेव । अन्यथा स्कन्दादिदर्शनमपि पृथगपाकरणीयं स्यात् । अथोच्यते । शाक्तमते पाशुपतादावाचारभेदादेः सत्त्वात् सिद्धान्ताविशेषो नास्तीति । तन्न । सौरादिमतेष्वपि तस्य सत्त्वात् । अथ किं तेन । देवतापरिग्रहमन्तरेणोक्तार्थविरुद्धो दूष्योऽर्थः सर्वत्र समान इति ब्रूषे । तच्छाक्तेऽपि समानमित्यतो नायं पक्षः पृथग्दूष्य इत्याशङ्कायां 'निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथग् । दूष्यत' इत्यनुव्याख्यानं हृदि निधायोत्तरमाह ॥ **पूर्वोक्तन्यायेनेति** ॥ **असाधारणेति** । उत्पत्त्यसम्भवो हि शाक्तस्यैवासाधारणो दोषो न पुरुषदैवतानामिति भावः ॥ **दूषयति** ॥ सूत्रकार इति शेषः । 'तस्याः सदाशिवाद्याश्च जायन्ते देवमानुषाः । भूतं भौतिकमप्येतत्' इत्येतदनुसन्धायाह ॥ **सकलजगज्जननीति** ॥ **इति प्राप्ते** ॥ महावाममते प्राप्ते सतीत्यर्थः । शक्तेरेव केवलाया इत्यर्थः ॥ **उत्पत्तिरिति** ॥ अत्रोत्पत्तिशब्देनापत्योत्पत्तिरिति सुधारीत्या व्याख्येया ।

## वाक्यार्थमञ्जरी

पूर्वोक्तन्यायेन असामञ्जस्यादित्यनेन महावाममतमाह ॥ **शक्तिरेवेति** ॥ न शक्ते-र्जगत्कारणत्वं कुतः उत्पत्त्यसम्भवात् स्त्रीमात्रादपत्योत्पत्त्यसम्भवादित्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ न च कर्तुः करणम् ॐ ॥ ४३ ॥**

**यदि पुरुषोऽङ्गीक्रियते तस्यापि करणाभावादनुपपत्तिः ।**

## सत्तर्कदीपावली

पुरुषो ज्ञानशक्त्यादिकरणरहितो न ब्रह्माद्युत्पादनाय शक्त्यापेक्ष्यते । असमर्थत्वेनानुपयुक्तत्वात् ।

## तत्त्वप्रदीपिका

द्वितीयं दूषयति ॐ न च कर्तुः करणम् ॐ । यदि पुरुषः सृष्ट्यङ्गमङ्गीक्रियते, तथाऽपि ज्ञानैश्वर्यादि- तत्साधनाभावात्तस्यानुपपत्तिः । न च शक्तिकरणैर्निर्वोढुं शक्यते । तेपामस्वातन्त्र्यात् ।

## तत्त्वप्रकाशिका

अस्त्येव शक्त्यनुग्राहकः पुरुषः सदाशिवोऽतस्तस्या जगदुत्पत्तिर्युक्तेति केषाञ्चिच्छाक्तेयानां मतं निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ **न चेति** ॥ यदि पुरुषोऽङ्गीक्रियते शक्त्यनुग्राहकस्तथापि तस्योत्पत्त्युपयोगिज्ञानादिसाधनाभावेनोत्पत्त्यनुपपत्तिरेवेत्यर्थः ।

## भावबोधः

'विज्ञानादिभावे वा' इत्युत्तरसूत्रानुरोधेन कारणाभावादित्येतद्व्याचष्टे– **उत्पत्त्युपयोगिसाधनाद्यभावेनेति** ॥

## भावदीपः

सौत्रश्चशब्दः कर्तुश्चेत्यन्वेतीति भावेन भाष्ये तस्यापीत्युक्तं तद्व्याचष्टे तथापीति ॥ **केषाञ्चिदिति** ॥ मध्यमवामानामित्यर्थः । करणशब्दार्थो **ज्ञानादिसाधनेति** । करणत्वोपपादकमुत्पत्त्युपयोगीति ।

## वाक्यार्थमुक्तावली

**अनुग्राहक इति** ॥ शक्तेः केवलत्वव्यावृत्यर्थं शिवोऽनुग्राहकमात्रम् । वस्तुतस्तु शक्तिरेव जगत्सृष्टौ स्वतन्त्रकारणम् । शिवस्तूपसर्जनमिति मध्यमवामानां मतमित्यर्थः । सूत्रे उत्पत्त्यसम्भव इत्यन्वेति । चोऽप्यर्थे यस्मादित्यर्थे च । करणमिति साधनं ज्ञानं तत्करणमिन्द्रियं तत्करणं शरीरं च विवक्षितम् । ततश्च कर्तुः शक्तेरनुग्रहकर्तुः शिवस्यापि यस्मात् करणं नास्ति तस्मा-

(वाक्यार्थमुक्तावली)

दुत्पत्त्यसम्भव इति सूत्रार्थं हृदि निधाय भाष्याक्षरार्थमाह ॥ **यदीति** ॥ देहवता हि शिवेनापत्योत्पत्तौ शक्तेः साचिव्यमाचरणीयम् । न च विना देहेन । तस्य प्रलीनवच्छरीरेन्द्रियविज्ञानादिविकलस्य तदनुपपत्तेः । न च शिवदेहोत्पत्तौ केवलायाः शक्तेः शक्तिरस्ति । अन्यत्रापि तथात्वापत्तेः । अजागरस्तनायितशिवाङ्गीकारवैयर्थ्यात् अत्राप्युत्पत्त्यसम्भव एवेति भावः ।

## तत्त्वसुबोधिनी

केषांचिच्छाक्तेयानामिति आद्यसूत्रनिरस्तमहावामातिरिक्तमध्यवामानामित्यर्थः । विज्ञानादिभावे वेत्युत्तरसूत्रानुरोधेन कारणाभावादित्येतत् व्याचष्टे ॥ **उत्पत्त्युपयोगीति** ॥

## वाक्यार्थविवरणम्

केषाञ्चित् । मध्यमवामानाम् ॥ **ज्ञानादिसाधनाभावेनेति** ॥ ननु तदभावेऽपि कुत इति शङ्कोत्तरत्वेनापि न च कर्तुःकरणमिति योज्यम् । कर्तुरीश्वरस्य ज्ञानादौ करणभूतेन्द्रियाभावाज्ज्ञानानुपपत्तिः । ननु तदभावोऽपि कुत इति चेन्न । शरीराभावादिति ध्येयम् । अयं भावः । देहवता हि शिवेनापत्योत्पत्तौ शक्तेः साचिव्यमाचरणीयम् । न विदेहेन । तस्य विप्रलीनवदिन्द्रियज्ञानादिविकलस्य तदनुपपत्तेः । न च शिवदेहोत्पत्तौ केवलायाः शक्तेः शक्तिरस्ति । प्रागुक्तदोषात् । अन्यत्रापि तथोपपत्तौ शिवाङ्गीकारवैय्यर्थ्यापत्तेश्च । न च शिवसहितायाः । विदेहस्य साहाय्यकरणानुपपत्तेः । अतोऽङ्गीकृतस्यापि शिवस्य अजागलस्तनायितत्वेन अत्राप्युत्पत्त्यसम्भव एवेति ।

## वाक्यार्थमञ्जरी

**केषाञ्चित्** मध्यमवामानाम् । कर्तुश्चानुग्राहकस्य शिवस्य करणं ज्ञानादिसाधनं नास्तीत्यर्थः ।

## सूत्रभाष्यम्

**॥ ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ ॥ ४४ ॥**

**यदि विज्ञानादिकरणं तस्याङ्गीक्रियते तदा तत एव सृष्ट्याद्युपपत्तेरीश्वरवादान्तर्भावः ।**

## सत्तर्कदीपावली

यदि सर्वविज्ञानसर्वशक्त्यादिमानीश्वरः शक्त्यापेक्षते इत्युच्यते । तर्हि तत एव जगत्सृष्ट्याद्युपपत्तेः पाशुपतपक्षान्तर्भूतत्वात् शक्तिपक्षो न तत्प्रतिषेधक इत्यर्थः ।

## तत्त्वप्रदीपिका

तृतीयं निरस्यति 'ॐ विज्ञानादिभावे वा तदप्रतिषेधः ॐ' । यदि चेतनेभ्यो विशिष्टं ज्ञानैश्वर्यादिकं तस्याङ्गीक्रियते, तदा कर्त्रन्तरमनपेक्ष्यैव सृष्ट्याद्युपपत्तेरीश्वरवादान्तर्भाव एव प्राप्नोति युष्माकम् । स च निरासि वेदविरोधी ।

## तत्त्वप्रकाशिका

शक्त्यनुग्राहकस्य पुंसः सार्वज्ञादिसद्भावेन युक्ततरा जगदुत्पत्तिरिति केचित् । तन्मतनिरासाय सूत्रं पठित्वा व्याचष्टे ।। विज्ञानेति ।। यदि शक्त्यनुग्राहकस्येश्वरस्य विज्ञानादिकरणमङ्गीक्रियते तदा तेनैव जगदुत्पत्तिसम्भवाद् व्यर्थं शक्तेरपि पृथक्कर्तृत्वाङ्गीकरणं स्यात् । तथा चानेन शाक्तेयमतेन प्रकृतपाशुपतमतस्याप्रतिषेधः कृतः स्यात् । अनुमतमेव स्यात् । तच्च निरस्तमिति भावः ।

## गुर्वर्थदीपिका

'विज्ञानादिभावे वा तदप्रतिषेध' इति सूत्रस्य शक्त्यनुग्राहकस्येश्वरस्य च विज्ञानादिकरणं यद्यङ्गीक्रियते तर्हि 'मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारत' इति गीतोक्तेरस्मदभिमतेश्वरवादान्तर्भावेनेश्वरादेव सृष्टिरित्युक्तं स्यात् । तच्चोक्तविधया श्रुतिस्मृत्यनुकूलत्वादुपपन्नतरम् । अतस्तदप्रतिषेधः ईदृशशक्तिमतस्याप्रतिषेध इति भाष्यस्थ-पदमहिम्नैव सम्भवदर्थान्तरमप्यनुसन्धेयम् । अन्यथा तत एव सृष्ट्याद्युपपत्तेरिति किमिति ब्रूयात् । टीकाकारास्तु ईदृशजगत्कर्तुः पशुपतित्वमेवेति परेण दुरभिमाने कृते त्वमपि पाशुपतमते प्रविष्टोऽसीति भावेन सूत्रयोजनिकान्तरमाहुः । यदि शक्त्यनुग्राहकस्येत्यादिना ।।

## भावबोधः

ननु शैवाः शिवमेकमेवाभ्युपयन्ति । शाक्तास्तु शिवं शक्तिं चेत्यस्ति महान् भेदः । तत्कथमीश्वरवादान्तर्भाव इत्यत आपादितदोषोऽयमित्याशयेन भाष्ये तत एव सृष्ट्याद्युपपत्ते-रित्युक्तमित्यभिप्रेत्य तद्भाष्यं सोपस्करं व्याचष्टे– **यदीत्यादिना** ॥ अनुमतमेव स्यादिति । तथा चापसिद्धान्त इति भावः । नन्वेतावता भवत्सिद्धान्तानवक्लृप्तिरेव शैवमतस्यापि भवत्सिद्धान्त-विरोधित्वादित्यतः 'उक्तदोषश्च तत्पक्ष' इति 'नैवात्र दूष्यते' इत्यनुव्याख्यानं मनसि निधायाह– **तच्च निरस्तमिति** ॥ आप्तो न पुनर्दूष्यत इति शेषः । 'तदप्रतिषेध' इति सूत्रांशः प्रकारान्तरेण व्याख्यातः ।

अत्राद्ये– शक्तिकर्तृत्वमतायुक्तत्वे उत्पत्त्यसम्भवरूपहेतूक्तिः । द्वितीये– तत्परिहारायानु-ग्राहकपुरुषाङ्गीकारे कर्तृत्वोपयुक्तज्ञानादिकरणाभावोक्तिः । तृतीये– अनुग्राहकपुरुषस्य ज्ञाना-द्यङ्गीकारे शक्तिकर्तृत्ववैयर्थ्यापत्त्या निराकृतपाशुपतमतप्रवेशोक्तिः । चतुर्थे– महावाममध्यम-वामाणुवामानां त्रयाणां मते श्रुत्यादिविरुद्धत्वरूपसाधारणदोषोक्तिरिति सूत्रक्रमः ।

अत्र पादे आद्यमधिकरणषट्कं हैतुकमतनिरासकतयैका महापेटिका । तत्राद्यं पञ्चकम् ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादिमतनिरासकत्वेनैका पेटिका । तत्र क्रमेणाचेतनप्रवृत्तिमत ईश्वरानु-गृहीताचेतनप्रवृत्तिमत देहकर्तृत्वमत पुरुषोपसर्जनप्रकृतिकर्तृत्वमत प्रकृत्युपसर्जनपुरुषकर्तृत्वमतानां निरासः । षष्ठे– हैतुककणादादिमतनिरासः । उत्तरमधिकरणषट्कं पाषण्डिनिरासकतयैका महा-पेटिका । तत्राद्यमधिकरणचतुष्टयम् अवैदिकपाषण्डिनिरासकतयैका पेटिका । तत्राद्यमधिकरण-त्रिकं बौद्धनिरासकत्वेनैका पेटिका । तत्र क्रमेण वैभाषिकसौत्रान्तिकमतमाध्यमिकमतयोगाचार-मतानां निरासः । चतुर्थे जैनमतनिरासः । उत्तरमधिकरणद्वयं वैदिकपाषण्डिनिरासकतयैका-वान्तरपेटिका । तत्राद्ये शैवमतस्य, द्वितीये शाक्तमतस्य च निरास इति ।

**॥ इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थपूज्यचरणविरचित तत्त्वप्रकाशिकाभावबोधे द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥**

## भावदीपः

**इति केचिदिति** ॥ अणुवामशब्दितशाक्तेया इत्यर्थः । विज्ञानादिभावे वेत्येतद्व्याख्यारूपं भाष्यं व्याचष्टे ॥ **यदीति** ॥ मध्ये भाष्योक्तं सूत्रशेषं काङ्क्षितं पूरयन्ननुवदति ॥ **तेनैवेति** ॥ ईश्वरवादान्तर्भाव इति भाष्यं तद्प्रतिषेध इति सूत्रांशस्य पर्यवसितव्याख्यानमिति भावेन सूत्रांशं व्याचष्टे ॥ **तथा चेति** ॥ अस्तु को दोष इत्यत आह ॥ **तच्चेति** ॥

## वाक्यार्थमुक्तावली

**सार्वज्ञादिति** ॥ स्वाभाविकसर्वज्ञतादिसद्भावेन देहेन्द्रियानपेक्षत्वात् लीलाविग्रहग्रहणेन शक्तिसम्भोगस्याप्युपपत्तेः शिवसहितया शक्त्या जगदुत्पत्तिरित्यणुवामा वदन्तीत्यर्थः । सूत्रे कर्तुरित्यस्ति । शक्त्यनुग्राहकस्येश्वरस्य स्वाभाविकविज्ञानादिभावेऽङ्गीक्रियमाणे तेन शाक्तमतेन तस्य पाशुपतस्याप्रतिषेधः कृतः स्यात् अनुमतं स्यात् । शाक्तमतस्य पाशुपतमतान्तर्भावः स्यादिति सूत्रार्थमभिप्रेत्य व्याचष्टे ॥ **यदीत्यादिना** ॥ ननु शैवाः सार्वज्ञाद्युपेतं शिवमेकमेवाभ्युपयन्ति । शाक्तास्तु शिवं शक्तिश्चेति अस्ति महान् सिद्धान्तभेदस्तत्कथं शाक्तानां शैवमतप्रवेश इत्यत उक्तम् ॥ **तेनैवेति** ॥ अवश्यं त्वयाऽप्यङ्गीकार्येण शिवेनैव जगदुत्पत्तिसम्भवात् उभयकल्पकाभावात् कल्पनागौरवात् अवश्यमेक एव कर्ताऽङ्गीकार्यः । तथा च तन्मतप्रवेश आपाद्यत इति भावः । नन्वस्तु मम तन्मतप्रवेशः एतावता कथं त्वन्मतस्य तद्विरोध इत्यत आह ॥ **तच्चेति** ॥ अतो न पुनर्दूष्यत इति भावः । अनेन तस्य पाशुपतस्य पुनर्न प्रतिषेधः कृत इति सूत्रखण्डस्य वृत्यन्तरमुक्तं भवति । उक्तं च 'उक्तश्च दोषस्तत्पक्ष इति नैवात्र दूष्यते' इत्यनुव्याख्याने । विप्रतिषेधाच्च शाक्तमतमसमञ्जसमिति शेषः । अत्र वैदिकमतविरोधप्राधान्यक्रमेण सूत्रत्रयम् । तुरीयं सर्वविषयमिति सूत्रक्रमः । अत्राद्यषट्के हैतुकानां पाषण्डिनां निरासः । द्वितीयषट्के अधिकरणचतुष्टये अवैदिकपाषण्डिनाम् अधिकरणद्वये वैदिकपाषण्डिनो निरासः इति पेटिका ज्ञेया ।

**॥ इति श्रीमद्विठ्ठलाचार्यतनूजेन श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां तत्त्वप्रकाशिका वाक्यार्थमुक्तावल्यां द्वितीयाध्यायस्य द्वितीयः पादः ॥**

## तत्त्वसुबोधिनी

केचिदिति अणुवामा इत्यर्थः । ननु शैवा शिवमेकमभ्युपयन्ति शाक्तास्तु शिवं शक्तिश्चेत्यस्ति महान् भेदः । तत्कथम् ईश्वरवादान्तर्भाव इत्यतः आपादितदोषोऽयमित्याशयेन भाष्ये तत एव सृष्ट्याद्युपपत्तेरित्युक्तमित्यभिप्रेत्य तद्भाष्यं सोपस्करम् व्याचष्टे ॥ **यदीत्यादिना** ॥ अत्र निषेधः स्यादित्यस्यैवार्थमाह **अनुमतमेव स्यात् इति** ॥ तथा चापसिद्धान्तः स्यादिति भावः । नन्वेतावता भवत्सिद्धान्तानवक्लृप्तिरेव शैवमतस्यापि भवत्सिद्धान्तविरोधित्वादित्यतः आह ॥ **तच्च निरस्तमिति** ॥ अतो न पुनः दूष्यते इति शेषः । तेन तदप्रतिषेध इति सूत्रांशः प्रकारान्तरेण व्याख्यातः । अत्राद्ये शक्तेः कर्तृत्वाभावे उत्पत्त्यसम्भवरूपहेतूक्तिः । द्वितीयेऽनुग्राहकपुरुषाङ्गीकारे कर्तृत्वोपयुक्तज्ञानादिकारणाभावोक्तिः । तृतीये पाशुपतमतप्रवेशोक्तिः चतुर्थे मतत्रयसाधारणदोषोक्तिरिति सूत्रक्रमः ।

**॥ इति पाण्डुरङ्गि श्रीनिवासाचार्यकृतायां तत्त्वसुबोधिन्याम् द्वितीयाध्यायस्य द्वितीयः पादः ॥**

## वाक्यार्थविवरणम्

**सार्वज्ञादीति** ॥ तदुपयुक्तं देहेन्द्रियादिकमादिशब्देन ग्राह्यम् ॥ **केषाञ्चिदिति** ॥ अणुवामानामित्यर्थः ॥ **तेनैव** ॥ विज्ञानादिकरणवतेश्वरेणैव । तस्यैवार्थमाह ॥ **अनुमतमेवेति** ॥ शाक्तानां शैवमतानुप्रवेशः स्यादिति यावत् । ननु कथमेतत् । शैवा हि सार्वज्ञादिगुणोपेतं शिवमेकमेवाभ्युपयन्ति । शाक्तास्तु शिवं शक्तिं चेत्यस्ति महान् सिद्धान्तभेदः । अतः कथं शैवमतानुप्रवेशः शाक्तानामिति चेत् । उच्यते । अयमभिप्रायः । सत्यम् । शाक्तैः सार्वज्ञादिगुणैर्युक्तं शिवशक्त्याख्यं द्वयमभ्युपगतमिति । तत्तु न युज्यते । कल्पनागौरवात् । तथा हि । न तावत् सार्वज्ञाद्युपेतं वस्तु प्रत्यक्षेण सिद्धम् । परचित्तवृत्तीनां परं प्रति अतीन्द्रियत्वात् । नाप्यागमेन । शाक्तागमस्य प्रामाण्यसन्देहात् । अपौरुषेयस्य परेण प्रामाण्यादेरनादरणात् । आदरे वा तत एव स्वमतहतेः । अतः प्रपञ्चरचनान्यथानुपपत्त्यैव सार्वज्ञादिविशिष्टं वस्तु कल्पनीयम् । सति चैवमेकेनैव सार्वज्ञादिमता सर्वं निर्वहत्येव । तथा च वृथा तथाभूतवस्तुद्वयकल्पनागौरवमेव । अत एकमेव

(वाक्यार्थविवरणम्)

तादृशं वस्त्वङ्गीकार्यम् । तत्र केवलं शक्तेस्तदङ्गीकृतावुत्पत्त्यसम्भवप्रसङ्गात् ईश एव सार्वज्ञाद्युपेतः प्रपञ्चरचनायाः कर्ताऽङ्गीकार्यः स्यात् । एवं च कथं न शैवमतानुप्रवेशः शाक्तमतस्येति । यथोक्तम् । 'सार्वज्ञादिगुणैर्युक्तं गुरुकल्पनयोर्द्वयम् । न युज्यते ह्यतस्त्वीश एक एव प्रयोजकः' इति । ननु किमतो यद्येवं शाक्तमतस्य शैवमते प्रवेशः । शाक्तस्यापसिद्धान्तेन पराजय इति चेत् । सत्यम् । तथापि भवत्सिद्धान्तानवक्लृप्तिरेव । शैवमतस्यापि भवत्सिद्धान्तविरोधित्वेन निराकर्तव्यत्वादिति शङ्कायां तद्प्रतिषेध इति सूत्रखण्डस्यार्थान्तरम् । 'उक्तदोषश्च तत्पक्ष इति नैवात्र दूष्यते' इत्यनुव्याख्यानानुसारेणाह ॥ **तच्च निरस्तमिति** ॥ पाशुपतमतमित्यर्थः । एवं च निरस्तमतीताधिकरणे पाशुपतमतं यस्मात् प्रतिषिद्धमतोऽत्र तद्प्रतिषेधः तन्मतनिराकरणं पुनरत्र न क्रियते । पुनरुक्तिदोषभयादिति भावः ।

**॥ इति श्रीमद्यदुपत्याचार्यपूज्यपादशिष्येण श्रीनिवासेन विरचिते तत्त्वप्रकाशिकावाक्यार्थविवरणे द्वितीयाध्यायस्य द्वितीयः पादः ॥**

## वाक्यार्थमञ्जरी

केचित्तु अणुवामाः । कर्तुः विज्ञानादिसद्भावेऽङ्गीकृते तद्प्रतिषेधः तस्य शैवमतस्याप्रतिषेधो न कृत इत्यर्थः । अनुमतमेव स्यादिति । तथा चापसिद्धान्त इति भावः । ननु तदपि त्वन्मतविरोधीत्यत आह ॥ **तच्चेति** ॥

## सूत्रभाष्यम्

**॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४९ ॥**

**सकलश्रुत्यादिविरुद्धत्वाच्चासमञ्जसम् ।**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥**

## सत्तर्कदीपावली

उपसंहरति । विप्रतिषेधादित्यादिना । सकलश्रुतिस्मृतिसदाचारविप्रतिषिद्धत्वाच्छाक्तेय-मतमशोभनमित्यर्थः ।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यकृतब्रह्मसूत्रभाष्यटीकायां
सत्तर्कदीपावल्यां श्रीपद्मनाभतीर्थभट्टारकविरचितायां द्वितीयाध्यायस्य द्वितीयः पादः ।।

## तत्त्वप्रदीपिका

सकलश्रुतिस्मृतिविरुद्धत्वाज्जुगुप्सितत्वाच्छिष्टजनैरसमञ्जसमिदं शाक्तेयदर्शनम् । यत्तु पञ्चरात्रनिषेधकमेतदधिकरणमाशासते मायिनः शाक्तेयपक्षपातात् । तदपि न वैदिकपदवीपाथेयतां धत्ते । प्रागेव प्रतिपादनात्पञ्चरात्रप्रामाण्यस्य । अप्रामाण्ये प्रतिषेध्यत्वं स्यात् । ऊन्मूलितं चैतन्मूल-सम्प्रदायाचार्येणोन्मीलयतासूत्रहृदयममुनैवान्यत्र च । अहो एतेषां तेषु प्रथीयसी प्रमाणविप्रकृष्टेषु सज्जनवर्जनीयसङ्गेषु निर्मत्सरागूढमैत्री । लौकिकानामपि हि प्रसिद्धप्रतिषेध्यात् प्रतिषेधाधिकरणे न प्रतिषेधन्ति । अहो अपि भागवतेषु विशदवैदिकवर्त्मविवृतिविधृतपरिश्रमेषु वैशेषिको विद्वेषः । यदिमान्निर्णयपञ्चरात्रात्मकेषु सूत्रेषु श्रुतिस्मृतियुक्तिपरिगृहीतानिह बहिष्कर्तुमीहन्ते । भवत्वे-तदेवातिशोभनमशुभानां, यत्सज्जनचिह्नदर्शका दुर्जनानन्तरावृण्वन्तः साधूनपध्वंसयितुमिच्छन्ति ।

> 'पञ्चरात्रं च वेदाश्च मूलरामायणं तथा ।
> पुराणं भागवतं चैव भारतं च न भिद्यते ।।
> एतेष्वपि यथा विष्णोराधिक्यप्रतिपादनम् ।
> तद्भक्तानां च क्रमशः स एवार्थो न चापरः' ।। इति ब्रह्माण्डे ।

> 'जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे ।
> पाषाण्डवामशैवाद्यैर्वेदमार्गाः कलौ यथा' इति च भागवते ।।

अतस्साधितविशेषणो नारायणस्सर्वकारणमिति विशदमशेषम् ।

।। इति तत्त्वप्रदीपिकायां द्वितीयाध्यायस्य द्वितीयः पादः ।।

## तत्त्वप्रकाशिका

एवं शाक्तेयमतत्रयं पृथङ् निरस्य समुदितदूषणेनापि निराकुर्वत्सूत्रमुपन्यस्य व्याचष्टे ॥ ॐ **विप्रतिषेधाच्चेति** ॐ ॥ असमञ्जसं शक्तिमतमिति शेषः । अतोऽयुक्तत्वाच्छाक्तेयमतस्याविरोधकत्वेनोपपन्नमेव विष्णोर्जगत्कारणत्वलक्षणमिति सिद्धम् ।

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमद्ब्रह्मसूत्रभाष्यस्य टीकायां श्रीमज्जयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

## गुर्वर्थदीपिका

यद्यपि **विप्रतिषेधाच्चेति** पादान्तिमसूत्रेणैव सूचकत्वात्सूत्रस्य सकलमतानामपि श्रुतिस्मृतिविरुद्धत्वेनानपेक्षितत्वं लभ्यते । तथापि स्वस्य श्रुतिस्मृत्यादिष्वतिभरं ज्ञापयितुं 'विप्रतिषेधाच्चासमञ्जसम्, 'अपरिग्रहाच्चात्यन्तमनपेक्षा' 'सर्वथानुपपत्तेश्च' इत्यादिना तत्र तत्र सूत्ररचना । अत एव वेद व्यासाभिधा सूत्रकारस्येति द्रष्टव्यम् ।

॥ इति श्रीमद्वादिराजमुनिविरचितायां तत्त्वप्रकाशिकाव्याख्यायां गुर्वर्थदीपिकायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

## भावदीपः

**अत इति** ॥ केवलशक्तितो जगज्जननायोगादिदोषादित्यर्थः । उपपन्नमेवेत्यादिफलोक्तिः ।

॥ इति श्रीमद्भाष्यटीकाभावदीपे श्रीराघवेन्द्रयतिकृते द्वितीयाध्यायस्य द्वितीयः पादः ॥

## वाक्यार्थमञ्जरी

सकलश्रुत्यादिविरुद्धत्वाच्चासमञ्जसं शाक्तेयमतमित्यर्थः ।

॥ इति उत्पत्त्यधिकरणम् ॥ ११ ॥

॥ इति श्रीमत्तत्त्वप्रकाशिकावाक्यार्थमञ्जर्यां शर्कराश्रीनिवासविरचितायां द्वितीयाध्यायस्य द्वितीयः पादः ॥

श्रीविजयीन्द्रतीर्थविरचितः

# ब्रह्मसूत्रन्यायसङ्ग्रहः द्वितीयोऽध्यायः

विरोधो युक्तिसमयश्रुतियुक्तियुतागमैः ।
समन्वयेऽपाक्रियते द्वितीयेऽङ्घ्रिषु च क्रमात् ॥ १ ॥

उक्ते समन्वयेऽत्राविरोधोक्तेस्तस्य हेतुता ।
समन्वयस्य सिध्यैवाऽविरोध इति हेतुता ॥ २ ॥

पत्त्यादेरिव भङ्गेऽश्वगजादीनां प्रवर्तनम् ।
भङ्गे दुर्बलयुक्त्यादेः समयादेरतिक्रमः ॥ ३ ॥

द्वितीये बहिरङ्गत्वात्तद्विरोधोऽथवा हृतः ।
स्मृतीनां चतुरात्मत्वात्सर्वादौ तन्निराकृतिः ॥ ४ ॥

नान्यस्मृतिस्तद्विरोधान्मानं नित्या श्रुतिस्तु मा ।
मृदुक्त्याद्यभिमान्यर्थं प्रागभावेन कर्तृता ॥ ५ ॥

न जीवैक्यं वाक्यबलाज्ज्ञेयाऽनन्यस्वतन्त्रता ।
जीवोऽकर्ताऽहितकृतेर्नान्यसाम्यं श्रुतेर्हरेः ॥ ६ ॥

न फलार्थेशितुस्सृष्टिर्न वैषम्याद्यपेक्षणात् ।
स्वातन्त्र्यात्सर्वगुणयुग्द्वितीयाऽऽद्ये नयाः पयाः ॥७॥

(ॐ) नाऽचेतनं जगत्कर्तृ नेशोऽनुग्रहमात्रकृत् ।
फलाभावान्न सिद्धान्तोऽकर्तृजीवान्वितं जडम् ॥८॥

प्रधानयुङ् न जीवो वारम्भोऽणुत्वादितो न किम् ।
नाणुपुञ्जोऽप्यतत्प्राप्तेर्ना सद्धेतुरदर्शनात् ॥ ९ ॥

न ज्ञानता स्याद्दृष्टत्वान्न दृष्टेस्सप्तभङ्गिता ।
रुद्रो न कर्ता दोषित्वान्न शक्तिः पुरुषाऽयुता ॥१०॥

(ॐ)वियदुत्पत्तिमत् श्रुत्या वायुश्चाजन्यसम्भवात् ।
स्वातन्त्र्यान्नेश्वरोत्पत्तिर्वायोर्वा तेजसो जनिः ॥११॥

आपोऽग्निद्वारतो जन्या अन्नं भूर्बहुयुक्तितः ।
लय ईशादेव लिङ्गाद्व्युत्क्रमाद्युज्यते लयः ॥ १२ ॥

विज्ञानमनसोश्चैवं नाश्रुतेर्ब्रह्मणो लयः ।
ब्रह्मजन्यः श्रुतेर्जीव उत्क्रान्त्यादेरणुश्च सः ॥ १३ ॥

जीवोऽभिन्नांशः पार्थक्यः ब्रह्मान्यश्चोपदेशतः ।
नित्योपाधित्वतो नित्योऽभिव्यक्तेर्धीसुखात्मकः ॥

कर्ता शास्त्रस्यार्थवत्त्वादंशोऽभेदभिदा श्रुतेः ।
वियादिभेदाद्देवादिनया एकोनविंशतिः ॥ १५ ॥

(ॐ) श्रुतेरेवेन्द्रियोत्पत्तिर्विशिष्य श्रवणान्मनः ।
मनोजन्या श्रुतेर्वाक्च धीन्द्रियेष्वेव सप्तता ॥ १६ ॥

व्याप्ते प्रकाशतोऽणुत्वं मुख्यश्चोत्पत्तिमान् श्रुतेः ।
प्राणवच्चेशवशगो मनोवत्पञ्चरूपवान् ॥ १७ ॥

वहिर्व्याप्नोति देहेऽगुर्न प्राणा जीवसाधनम् ।
श्रुत्यानिन्द्रियता मुख्ये संज्ञामूर्तिकृदीश्वरः ॥ १८ ॥

आत्मदेहेऽधिकं त्वेकं नयास्तुर्ये त्रयोदश ॥ १९ ॥

इति श्रीब्रह्मसूत्रन्यायसङ्ग्रहे श्रीविजयीन्द्रयतिविरचिते
द्वितीयोऽध्यायः ।

श्रीधीरेन्द्रतीर्थविरचितः

## विषयवाक्यसङ्ग्रहः

अथ द्वितीयोऽध्यायः

प्रथमः पादः

यतो वा स हि सर्वस्य कर्तेत्यादि स्मृतेर्नये ।
सर्वे वेदा इति वचो नविलक्षणतानये ॥ १ ॥

मृदब्रवीदाप इतीत्यभिमानिनये वचः ।
यतो वा असदेवेदमित्याद्यं चाप्यसन्नये ॥ २ ॥

स हि सर्वस्य कर्तेति भोक्त्रापत्तिनयस्य तु ।
स इदं सर्वमसृजतेत्यारम्भणके नये ॥ ३ ॥

यतो वेत्युक्तमितरव्यपदेशनयस्य च ।
श्रुतेस्तु शब्दमूलत्वादित्यत्रापि तदेव हि ॥ ४ ॥

प्रयोजनाधिकरणे वैषम्यादिनये च तत् ।
गुणाः श्रुता इति वचः सर्वधर्मोपपत्तिके ॥ ५ ॥

द्वितीयः पादः

स हि सर्वस्य कर्तेति नये साङ्ख्ये त्वनीश्वरे ।
एको वशी यतो वेति सेश्वरे साङ्ख्यके नये ॥ १ ॥

यतो वेत्यदिकं लोकायतिकादि नयत्रये ।
गुणाः श्रुतानन्तगुणाः इति वैशेषिके नये ॥ २ ॥

अणुपुञ्जवादादिष्वापादान्तनयेष्वपि ।
यतो वेत्यादि कर्तृत्वबोधकं विषयार्पकम् ॥ ३ ॥

तृतीयः पादः

वियन्नयस्य चाकाशः सम्भूत इति तद्वचः ।
आकाशाद्वायुरित्येतन्मातरिश्वनये स्फुटम् ॥ १ ॥

असम्भवस्त्विति नये तद्ब्रह्मेत्युक्तमत्र च ।
तेजोऽत इत्यधिकृतेर्वायोरग्निरितीरितम् ॥ २ ॥

अग्नेराप इति ह्येतत् आप इत्युदिते नये ।
पृथिव्यधिकाररूपनयेऽद्भिः(भ्यः)पृथिवीति च ॥३॥

यत्प्रयन्तीत्यादिवाक्यं तदभिध्यानके नये ।
विपर्ययेणेतिनये भूतानीति क्रमादिति ॥ ४ ॥

तयच्छेद्ज्ञानं इत्याद्यमन्तरेत्यादिके नये ।
नाऽऽत्मा श्रुतेरिति नये नित्यानां नित्यतावचः ॥

सर्वे एते चिदात्मानः इति ज्ञोऽत नये वचः ।
वागणुर्ह्येष आत्मेति ह्युत्क्रान्त्यादिनयस्य तु ॥६॥

स पञ्चधेत्यादिवाक्यं व्यतिरेकनयस्य हि ।
द्वा सुपर्णेत्यादिवाक्यं पृथगुपदेशाह्वये नये ॥ ७ ॥

यावदात्मेत्यधिकृतौ स नित्य इति तद्वचः ।
विज्ञानात्मेति पुंस्त्वादिवत्त्वस्येति नयस्य हि ॥८॥

यत्कर्म कुरुतेत्यादि जीवकर्तृत्वसन्नये ।
वस्तुतो ज्ञोतएवेत्याद्यापादान्तनयेऽपि सः ॥ ९ ॥

चतुर्थः पादः

स इदं सर्वमित्याद्यं तथा प्राणा इतीरिते ।
सर्वेन्द्रियाणीति वचः नये तत्प्राक्श्रुतेरिति ॥ १ ॥

वागुत्पत्तिनये प्राणसङ्ख्याव्याप्तिनये च तत् ।
स प्राणमात्मत इति श्रेष्ठश्चेति नयस्य तत् ॥ २ ॥

चक्षुरादिवदित्यत्र प्राणः परवशेति वाक् ।
प्राणो वावेत्यादिवाक्यं पञ्चवृत्त्याह्वये नये ॥ ३ ॥

अणुश्चेति नये वाक्ये प्राचीन प्राणवाचकम् ।
तानीह्वेति वा ज्योतिराद्यधिष्ठानके नये ॥ ४ ॥

त इन्द्रियाणीति नये प्राप्यो वेत्यादिकं वचः ।
संज्ञामूर्तेः क्लृप्तिनये नामरूपादिसृष्टिवाक् ॥ ५ ॥

मांसादिभौममित्यत्र तासां त्रिवृतमित्यदः ।
टीकायां विषयवाक्यानि सङ्गृहीतानि तानि वै ॥६॥

## द्वितीयाध्यायस्य प्रथम–द्वितीयपादयोः भाष्योदाहृतप्रमाणवचनानि

### प्रथमः पादः

| सूत्रसङ्ख्या | | |
|---|---|---|
| 4 | न चक्षुर्न श्रोत्रं न तर्को | भाल्लवेयश्रुतिः |
| | वाचाविरूपनित्यया | ऋक्संहिता (8-64-6) |
| 5 | ऋग्यजुः सामाथर्वाश्च | भविष्यत्पुराणम् |
| | पुराणानि च यानीह | भविष्यत्पुराणम् |
| | इतः प्रामाण्यमन्येषां | भविष्यत्पुराणम् |
| 6 | मृदब्रवीत् | शतपथ ब्राह्मणम् (6-2-3) |
| | आपोऽब्रुवन् | श.ब्रा. (6-1-3) |
| 7 | पृथिव्याद्यभिमानिन्यः | भविष्यत्पुराणम् |
| 8 | असदेवेदमग्र आसीत् | छां.उ. (6-2-1) |
| | असतः सदजायत | (ऋ.सं.10-72-3) |
| 12 | यावदेव प्रमाणेन सिद्धम् | वामनपुराणम् |
| 14 | कर्माणि विज्ञानमयश्च आत्मा | (मुं.उ.3-2-7) |
| | यथोदकं शुद्धे शुद्धमासिक्तं | (का.3-4-15) |
| | उदकं तूदके सिक्तं | स्कान्द.पु. |
| | ब्रह्मेशानादिभिर्देवैः | स्कान्द.पु. |
| 15 | किं स्विदासीदधिष्ठानम् | ऋ.सं.10-81-2 |
| 16 | अनुक्तं पञ्चभिर्वेदैः | स्कान्द.पु. |
| 17 | अभ्द्यः सम्भूतः | तै.आ.3-13 |
| | काल आसीत् | काषायण श्रुतिः |
| 18 | नासदासीन्नोसदासीत् | ऋ.सं.10-129-1 |
| | तम आसीत् | ऋ.सं.10-129-3 |
| | अजो ह्येको जुषमाणः | म.ना.3-10-4 |
| | असत्यमप्रतिष्ठं ते | भ.गीता 16-7 |
| | यच्चिकेत सत्यमित्तन्न | ऋ.सं.10-55-6 |
| | परस्परविरोधे तु | बृहत्संहिता |
| | विरुद्धवत्प्रतीयन्त | भागवततन्त्रम् |
| | शास्त्रार्थयुक्तोऽनुभवः | पुरुषोत्तमतन्त्रम् |
| 19 | अद्भ्यः सम्भूतः | म.ना.उ. |
| 21 | प्रकृतिं पुरुषं चैव | कौर्म.पु. |
| 23 | श्रोता मन्ता द्रष्टा | ऐ.आ.3-2-4 |
| 24 | यथा दारुमयी | महाभारतम् |

| | | |
|---|---|---|
| 25 | य आत्मानमन्तरो | बृ.उ.माध्वंदिनपाठः |
| 26 | न युक्तियोगात् | बृहत्संहिता |
| 27 | अथ यः स जीवः | भाल्लवेयश्रुतिः |
| 28 | यद्वाक्योक्तं न तद्युक्तिः | पुरुषोत्तमतन्त्रम् |
| 29 | विचित्रशक्तिः पुरुषः | श्वेताश्वतरश्रुतिः |
| 30 | अथ यस्य दोषः साञ्जनः | काषायणश्रुतिः |
| 31 | सर्वैर्युक्ता शक्तिभिर्देवता | चतुर्वेदशिखा |
| 32 | अपाणिपादो जवनो | श्वे.उ.3-19 |
| | न तस्य कार्यं करणं | श्वे.उ.6-8 |
| 33 | अथैष परमः आनन्दः | बृ.उ.6-3-33 |
| 34 | सृष्ट्यादिकं हरिर्नैव | नारायणसंहिता |
| | देवस्यैष स्वभावोऽयम् | ऋग्वेदखिलभागः |
| 36 | एष ह्येवैनं साधुकर्म | कौ.उ.3-8 |
| | पुण्यपापादिकं विष्णुः | भविष्यत् पु. |
| 37 | द्रव्यं कर्म च कालश्च | श्रुतिः |
| | स कारयेत्पुण्यमथापि | चतुर्वेदशिखा |

## द्वितीयः पादः

| | | |
|---|---|---|
| 3 | एतस्य वा अक्षरस्य | बृ.उ.5-8-9 |
| 4 | न ऋते त्वत्क्रियते | ऋ.सं.10-113-9 |
| 5 | यच्च किञ्चिज्जगत्सर्वं | म.ना.उ. |
| | ब्रह्मैवेदं सर्वम् | बृ.उ.4-5-1 |
| | स एव भूयो निजवीर्यचोदितां | भागवतम् |
| 10 | श्रुतयः स्मृतयश्चैव | पद्मपुराणम् |
| 37 | यं कामये तं तमुग्रं कृष्णोमि | ऋ.सं.10-125 |
| | विदे हि रुद्रो महित्वं | ऋ.सं.7-40-5 |
| | एको नारायण आसीत् | म.ना.उ.9 |

—